आचार्यभर्तृहरिप्रणीतं

# वाक्यपदीयम्

## [पदकाण्डम्]

व्याख्याद्वयोपेतम्

सम्पादकः

'पद्मश्रीः' पण्डितरघुनाथशर्मा

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 91 ]

# VĀKYAPADĪYAM

## [ Part-III ]

## ( PADA-KAṆḌA )

( Jāti, Dravya and Saṁbandha Samuddeśa )

With the Commentaries

**'PRAKĀŚA'**

BY

ŚRĪ HELĀRĀJA

&

**'AMBĀKARTRĪ'**

BY

'PADMAŚRĪ' PT. RAGHUNĀTHA ŚARMĀ




VARANASI

1991

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

□

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

□

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi–221 002.

□

Second Edition, 1000 Copies
Price Rs. 100·00

□

Printed by—
Anand Printing Press
Jagatganj, Varanasi.

सरस्वतीभवन–ग्रन्थमाला

[ ९१ ]

आचार्यभर्तृहरिप्रणीतं

# वा क्य प दी य म्

## [ तृतीयो भागः ]

## ( पदकाण्डम् )

( जाति-द्रव्य-सम्बन्धसमुद्देशत्रयात्मकम् )

श्रीहेलाराजविरचितया

'प्रकाश'व्याख्यया

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षचरेण

'पद्मश्री'पण्डितरघुनाथशर्मणा

विरचितया

'अम्बाकर्त्री'-व्याख्यया

श्री को० अ० सुब्रह्मण्य-अय्यर-

लिखितोपोद्घातेन च समलङ्कृतम्



वाराणस्याम्

२०४७ तमे वैक्रमाब्दे    १९१२ तमे शकाब्दे    १९९१ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

द्वितीयं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— १००=०० रूप्यकाणि

□

मुद्रकः—
**आनन्द प्रिंटिंग प्रेस,**
जगतगंज, वाराणसी ।

# प्ररोचना

श्रीमद्भिः शिवसायुज्यंप्राप्तैः पण्डितवर्यैः **'पद्मश्री'-रघुनाथशर्मभी** रचितया **अम्बाकर्त्री** टीकया संवलितस्य पदकाण्डपरिमितस्य **वाक्यपदीय**तृतीयकाण्डस्य द्वितीयसंस्करणतां नीयत इति परितोषाय। संस्करणेऽस्मिन् एषामात्मजेनायुष्मता **श्रीनरेन्द्रनाथपाण्डेयेन** वैदुष्यमयी भूमिका संयोजिता। कारिकानुक्रमण्यपि ग्रन्थ-समाप्तौ संयोजिता।

तृतीयः काण्डः पूर्वं न स्पष्टं व्याख्यातः, न च सम्यङ् मथितः। अस्य काण्डस्योपरि हेलाराजकृत-**'प्रकीर्णप्रकाशः'** स्थलेषु स्थलेषु बहु विवृतिमपेक्ष्यते स्म। पण्डितवर्यैः श्रीशर्ममहोदयैः सा सा अपेक्षा पूरिता। अत एवायं ग्रन्थो विद्वत्सु बहु समादृतः, बहु प्रशंसितश्च। श्रीनरेन्द्रनाथपाण्डेयेनास्य ग्रन्थस्य प्रकाशने यदध्यवसितम्, तदर्थं ते आशीर्वादार्हाः।

**वाराणस्याम्,**
महाशिवरात्रिपर्वणि
वि० सं० २०४७
(१२-२-१९९१ खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भूमिका

## ( द्वितीयसंस्करणस्य )

**वाक्यपदीयस्य तृतीयकाण्डं** पदकाण्डनाम्ना व्यवह्रियमाणं जाति-द्रव्य-सम्बन्धादि-विषये वैयाकरणानामन्येषाञ्च दार्शनिकानां मतानि प्रतिपादयति। अस्यैव पदकाण्डस्य तृतीयो भागः **अम्बाकर्त्रीसनाथः** इदानीं द्वितीयावृत्तौ प्रकाश्यते। अत्र जातेः द्रव्यस्य सम्बन्धस्य च विषये विभिन्नदार्शनिकविचारा विवृत्ताः सन्ति। व्याकरणं हि सर्ववेद-पारिषदं शास्त्रम्, अतः प्रायः सर्वाणि दर्शनान्यधिकृत्य पदार्थानां स्वरूपादिविषये चिन्तितमत्र संक्षेपतो निष्कृष्य प्रस्तूयते जातिद्रव्यसम्बन्धविषयकं किञ्चित्।

कः शब्दार्थः ? इति विचारप्रसङ्गे जातेः, द्रव्यस्य, जातिविशिष्टद्रव्यस्य वा पदार्थ-त्वमिति मतत्रयं वर्तते। एतच्च—**'पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा'** ( जा० स०का० २ ) इति कारिकायां प्रतिपादितम्। अत्र पाणिनिदर्शने प्राधान्येन जातिद्रव्ये भिन्नविषयतया सर्वविधेन शब्देन नामाख्यातादिस्वभावेनाभिधीयेते। क्वचित्प्रदेशे प्राधान्येन जात्यभिधानम्, क्वचिच्च प्राधान्येन द्रव्याभिधानम्, अत एव जातिपदार्थवादे "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" (पा० सू० १।२।५८) इति सूत्रमारभ्यते। द्रव्यपदार्थवादे तु सरूपाणामेकशेष एकविभक्ताविति। वाजप्यायनाचार्यो जातिपदार्थ-वादी, व्याडिस्तु द्रव्यपदार्थवादी इति हेलाराजीये द्वितीयकारिकाव्याख्याने स्पष्टम्। महाभाष्ये च "सरूपाणामेकशेष एकविभक्तौ" (पा०सू० १।२।६४) इत्यत्र "आकृत्य-भिधानाद्वेकं विभक्तौ वाजप्यायनः", "द्रव्याभिधानं व्याडिः", "द्रव्याभिधानं व्याडिरा-चार्यो न्याय्यं मन्यते" इत्युक्तम्।

अत्र कारिकायां नित्यावेवोपवर्णिताविति कथनेन उभयोर्जातिद्रव्ययोर्नित्यत्वं स्वीक्रियते हरिणा। तत्र जातेर्नित्यत्वं न्यायशास्त्रे नित्यमेकमनेकानुगतं सामान्यमिति लक्षणेन स्पष्टतयाऽभिधीयते। व्याकरणमहाभाष्ये च "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिक-व्याख्यानावसरे शब्दार्थसम्बन्धानां नित्यत्वं उद्घुष्यते।

शब्दार्थस्य द्रव्यस्य नित्यत्वम् आत्मनि स्वरूपतः प्रसिद्धम्, घटादौ तु प्रवाहाना-दितया। अत एवोक्तं भाष्यकृद्भिः—"यस्मिंस्तत्त्वं न विहन्यते, तदपि नित्यम्" (अ० १-पा० १, पस्पशा०)। व्याख्यातञ्च नागोजिभट्टैः 'यस्मिन्विहतेऽपि तद्वृत्तिधर्मो न विहन्यते' इत्यर्थः। प्रवाहनित्यता चानेनोक्ता, तन्नाशेऽपि तद्वृत्तिधर्मो न नश्यति, आश्रय-प्रवाहाविच्छेदादिति भावः। कैय्यटोपाध्यायैस्तु अद्वैतदर्शनमाश्रित्य 'द्रव्यपक्षेऽपि सर्व-शब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यता' इति वदद्भिः सर्वपदार्थानां ब्रह्मरूपत्वमङ्गीकृत्य नित्यत्वं स्वीकृतम्। व्याख्यातञ्चैतद् नागेशभट्टैः—'शुक्तिरजता-दिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम्, विशेष्यमेव च

द्रव्यम्' इति भावः। इदन्त्वत्रावधेयम्—अस्मिन्नद्वैतमते जातिरप्याविद्यको धर्मविशेष एव 'अतोऽन्यदार्तम्' अत एतस्मादशनायाद्यतीतात्मस्वरूपान्नित्यतृप्तादन्यदविद्याविषयमेषणालक्षणं वस्त्वन्तरमार्तं विनाशि ( बृ० उ० ३।५ ) इति श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्यैव विनाशित्वस्वीकारात्। एवं जातिद्रव्ययोरुभयोर्नित्यत्वं समर्थितम्।

वैयाकरणमते च उभयोः पदार्थत्वस्वीकार आवश्यको लक्ष्यानुरोधात्। अत एव भाष्यकृता—"किं पुनराकृतिः पदार्थः, आहोस्विद् द्रव्यम् ? उभयमित्याह" इति वदता उभयं स्वीकृतम्। केवलमाकृतिपक्षे स्वक्रियमाणे "सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव" इति परिभाषा नोपपद्यते। 'पुनः प्रसङ्गविज्ञानात् सिद्धमिति' च भवति। अत्र पक्षे द्वयोः विध्योः परस्परपरिहारेण तत्तज्जात्याक्रान्तव्यक्तिविशेषे चरितार्थयोः क्वचिदेकत्र प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तिरेव स्यात्, सत्प्रतिपक्षन्यायात्। यथा साध्याभावसाधकं हेत्वन्तरं यस्य विद्यते, स हेतुः स्वसाध्यं साधयितुं क्षमो न भवति, तथैव उभे शास्त्रे स्वार्थप्रतिपादने असमर्थे भवतः, परस्परविरुद्धकार्यस्य एकत्र लक्ष्ये युगपदसम्भवात्। तत्र विप्रतिषेधसूत्रं विधायकं भवति परं तावद् भवति। तस्मिन्सति यदि पूर्वस्य निमित्तं भवति, तर्हि भवत्येव तत्। यथा 'भिन्धकि' इत्यत्र 'भिनद् हि' इत्यवस्थायां परत्वाद्धिभावे कृते पुनः अकज् भवति। अतः जातिपक्षे पुनः प्रसङ्गविज्ञानात् सिद्धम् इति सिद्ध्यति, सकृद्गतौ च न सिद्ध्यति। व्यक्तिपदार्थपक्षे तु शास्त्रयोस्तत्तद् व्यक्तिविषययोश्चारितार्थ्यात् एकत्र पर्यायेणोभयप्राप्तौ विप्रतिषेधे परमिति नियमार्थमिति पुनः प्रसङ्गविज्ञानं न सिद्ध्यति। अत उभयोः पदार्थत्वमावश्यकम्।

जातिपदार्थवादिनां मते जातौ शब्दानां सम्बन्धः सुग्रहः, व्यक्तौ पदार्थे तु व्यक्तीनामानन्त्यात् सम्बन्धग्रहासम्भवः। सा च जातिः सर्वशब्देषु 'अयं गौः, अयं गौः' इति एकाकारप्रत्ययदर्शनादवसीयते। यद्यपि चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, संज्ञाशब्दा इति रूपेण कृतं चातुर्विध्यं सर्वेषां जातिवाचित्वे नोपपद्येत। तथापि चतुर्विधा अपि शब्दा संज्ञादिगतां जातिमेवाभिदधति इति कृत्वा दोषाभावः। स्पष्टञ्चैतद् द्वादशकारिकायाम्। गवादिशब्दैः अनेकगोव्यक्तिसमवेता जातिः अभिधीयते। तस्यां प्रतीतायां तदावेशाद् ( तद्वैशिष्ट्यात् ) जात्यवच्छिन्नं द्रव्यं प्रतीयते। अत एव 'गाम्पश्य' इत्यत्र जातेः स्वरूपेण क्रियायामन्वयः, 'गामानय' इत्यादौ तु जात्याश्रयद्रव्यद्वारा, जातेरानयनासम्भवात्। शुक्लादयो गुणशब्दा अपि गुणसमवेतां शुक्लत्वादिजातिमाचक्षते। 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशात् शुक्लादिशब्दानां गुणगुणिवाचकत्वं तु जातिसम्बन्धाद् ( गुणे ) जातिसम्बन्धिगुणसम्बन्धाच्च द्रव्ये बोद्धव्यम्। संज्ञाशब्दानामपि डित्थादीनाम् उत्पत्तिप्रभृत्याविनाशात् कौमारयौवनाद्यवस्थाभेदेऽपि "स एवायम्" इत्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या, क्रियास्वपि जातिर्वर्तते, सैव धातुवाच्या।

व्यक्तिशक्तिवादिनस्तु एवं मन्यन्ते अनुपपत्तिं विनाऽपि व्यक्तिप्रतीतेरनुभवसिद्धतया व्यक्तिः ( पदार्थः ) एव शब्दानामर्थः। त्वतलादिभावप्रत्ययं विना जातेः प्राधान्येनाप्रतीतेः

तस्या उपलक्षणभावेन आश्रयणं न प्राधान्येन। व्यक्तीनामानन्त्यात् तत्र शक्तिग्रहो न सम्भवति इति तु न वाच्यम्, जातेः शक्यतावच्छेदिकाया ऐक्यात्। अतएवोक्तम्—

आनन्त्येऽपीहभावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥

महाभाष्ये च सरूपसूत्र एव उभयोः पक्षयोः (द्रव्यपदार्थाकृतिपदार्थपक्षयोः) युक्तयः प्रदर्शिताः। 'प्रख्याविशेषात्', 'अव्यपवर्गगतेश्च', 'ज्ञायते चैकोपदिष्टम्' इति वार्तिकेषु एकस्या जातेः वाच्यत्वं समर्थितम्। धर्मशास्त्रं च तथा' इति उपर्युक्ततथ्योपोद्बलक-वार्तिकव्याख्याने च 'एवं च कृत्वा धर्मशास्त्रं प्रवृत्तं ब्राह्मणो न हन्तव्यः, सुरा न पेयेति, ब्राह्मणमात्रं न हन्यते सुरामात्रं च न पीयते। यदि द्रव्यं पदार्थः स्यात्, एकं ब्राह्मणमहत्वैकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात्'। 'तथा च लिंगवचनसिद्धिः' 'द्रव्याभिधान-पक्षेलिङ्गवचनसिद्धिर्भवति ब्रह्मणी ब्राह्मणः ब्राह्मणौ इत्यादि 'चोदनासु च तस्यारम्भात्' इति वार्तिके चोदनासु च तस्यारम्भान्मन्यामहे द्रव्यमभिधीयत इति गौरनुबन्ध्योऽजोऽग्निसोमीय इति आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्त इत्युक्तम्। अग्रे च "विनाशे प्रादुर्भावे च सर्वं तथा स्यात्" इति वदता भाष्यकृता आकृत्यभिधानपक्ष एकस्य मरणे तज्जातिमतः सर्वस्य मरणरूपमपरं दूषणमाशङ्क्य द्रव्यपक्षः समर्थितः।

आकृत्यभिधानपक्षे वचनपरिहारस्योपपत्तये 'न ह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थिकस्य वा आकृतिर्न पदार्थः, उभयोरुभयं पदार्थः, कस्यचित्तु किञ्चित् प्रधानभूतं किञ्चिद्गुणभूतम्। आकृतिपदार्थिकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्, द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता' इति सिद्धान्तयन् भाष्यकारः उभयपक्षे उभयोर्वाच्यत्वं गुणप्रधानभावेनोक्तवान्।

इदन्त्ववधेयम्—अत्र भाष्ये द्रव्यपदार्थवादे आकृतेर्विशेषणत्वोक्त्या तत्तज्जात्यानुगतीकृतानाम् अनेकव्यक्तीनाम् एकस्मादेव शब्दाद् बोधसम्भवे नानाशब्दप्रयोगाप्राप्त्या जातिपक्षवद् अस्मिन् पक्षेऽपि एकशेषानारम्भः सूच्यते। अयमेव तृतीयः पक्षः द्वितीयकारिकायां वाशब्देन संगृहीतः भर्तृहरिणा।

**जातिरेवाभिधेयेति मीमांसकाः—**

"आकृतिस्तु क्रियार्थत्वात्" ( जै० सू० १।३।३३ ) इति सूत्रे जैमिनिना आकृतेरभिधेयत्वं प्रतिपादितम्। "जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया" इत्याकृतिवादे तन्त्रवार्तिके वदता भट्टपादेन जातेराकृतिरूपत्वं प्रतिपादितम्, न तु प्रतिपिण्डभिन्नस्य संस्थानस्य। पार्थसारथिमिश्रेण च शास्त्रदीपिकायाम्—

आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः।
सन्देहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।
आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता॥(आकृत्यधिकरणे)अ.१-३ पादे

इति कारिकाभ्याम् आकृतेरभिधेयत्वं द्रव्याभिधेयत्वपक्षनिराकरणपूर्वकं समर्थितम्। तथा हि—न ह्यनन्तासु व्यक्तिषु वाच्यत्वं शक्यमवगन्तुम्, वाच्यत्वावगमाभावे च या गोशब्दपूर्विका अभिधानक्रिया, सा सर्वगोव्यक्तिकर्मिकेति नियमे व्यभिचारः। किञ्च, जातिम् उपलक्षणीकृत्य सर्वव्यक्तिषु शक्तिग्रहे जातेऽपि अभिधानकाले जातेरुपलक्षणत्वाभावः, प्रातिस्विकेन रूपेण व्यक्तीनामभिधानात्। अतो 'व्यक्तिर्वाच्या' इत्यस्यायमर्थो विशेषाकारेण वस्तुवाच्यम्। विशेषाकाराणाञ्च आनन्त्यात् शक्तेरानन्त्यम्। गोशब्द उच्चरिते व्यक्तिषु संशयो भवति, न कस्यांचिन्निर्णयः। यत्र संशयो न तस्याभिधेयता शब्दस्य निश्चायकत्वात्, अत एव सामान्यस्य वाच्यत्वं शब्दश्रवणानन्तरं तस्य निर्णयात्। यदि व्यक्तेः वाच्यत्वं स्याद् गोशब्दोच्चारणे, विचित्रा बुद्धिः स्यात्, व्यक्तीनां खण्डमुण्डादिरूपाणां भिन्नत्वात्। अनुभूयते च एकाकारा बुद्धिः, अतो जातिर्वाच्या।

इदन्त्ववधेयम्—न जातिर्नाम व्यक्तितो भिन्ना, अपि तु एकमेव वस्तूभयात्मकं व्यावृत्त्यनुगतरूपतया बुध्यते। तत्र सामान्यं शब्दार्थः, व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते। एवं मीमांसकैः जातेः प्राधान्यतया वाच्यत्वं स्वीक्रियते; किन्तु मीमांसकमते जातेर्वाच्यत्वं स्वीकृत्य जात्याधारस्य द्रव्यस्य क्रियान्वयित्वञ्चाङ्गीकृत्य व्यवहारोपपादने कृतेऽपि प्रतिनिध्यनुपपत्तिरिति विचारितमग्रे तृतीयकारिकायां जातिसमुद्देशे। तथा हि वाक्यार्थे प्रधानीभूतया आख्यातपदवाच्यया क्रियया साकं साधनस्य द्रव्यस्य अन्वयसिद्धये जात्याधारस्य द्रव्यस्यैव प्रतिपत्तिर्न तु तत्प्रतिनिधेरन्यजातीयस्य। एवं जातिपदार्थवादे सर्वथा प्रतिनिध्यनुपपत्तिः। सिद्धान्ते तु क्वचित् कर्मणि प्रतिनिधिः क्वचिन्नेति उभयं स्वीकर्तव्यम्। यथा नित्ये कर्मणि न प्रतिनिधिः, नित्यत्वेन यथाचोदितमवश्यानुष्ठेयत्वात्, अकरणेऽन्यथाकरणे वा प्रत्यवायस्मरणात्, प्रतिनिध्यस्मरणाच्च। काम्ये तु कादाचित्कत्वेन प्रतिनिधिसम्भवः। अकरणेऽन्यथाकरणे वा फलासिद्धिरेव, न तु प्रत्यवायः, प्रतिनिधिस्मरणञ्च। जातिपदार्थवादे तु क्वचित्कर्मणि प्रतिनिधिः, क्वचिन्नेति न सम्भवति, द्रव्यपदार्थवादे सम्भवति, अतः जातिपदार्थवादे प्रतिनिध्युपपत्तिः कर्तव्या। तदर्थं जातिसमुद्देशस्य ३, ४, ५ कारिकासु बहु चिन्तितम्। मतभेदाश्चात्र चर्चिताः। तथा हि तृतीयकारिकायामित्थं विचारितम्—केषाञ्चित् जातिवादिनां मते, अथवा केषाञ्चिच्छब्दानां (कारिकास्थ-केषाञ्चित्पदस्योभयमर्थः) पदार्थभूता जातिः सामानाधिकरण्यसम्बन्धेन शक्त्युपलक्षणं कर्माङ्गमुख्यपदार्थनिष्ठायाः शक्तेर्लक्षणया प्रतिपादने उपायः। लक्षणाप्रवृत्तिर्हि मुख्यार्थप्रतिपत्तिपूर्वकं भवतीति भवत्युपायत्वं पदार्थभूतायाः जातेः। अतः खदिरादावसन्निहिते दुर्लभत्वे वा तेषां कर्मशेषतायास्तत्राभावात् सन्निहिते कदरे कर्मशेषत्वमभ्युपगम्य कदरः प्रतिनिधीयते। प्रतिनिधिश्च चोदितः सदृशश्च भवति, अतो न सर्वत्र प्रतिनिधित्वप्रसङ्गः। अत एवोक्तं हेलाराजेन—'खादिरे बध्नाति', 'पालाशे बध्नाति' इत्यादौ खदिरादेर्बन्धनसमर्थस्यालाभे तत्सदृशकदरादिशक्तसाधनपरिग्रहो युज्यते। 'जातिर्हि शक्त्युपलक्षणम्, न कार्ययोगिनीति तदाश्रयस्याशक्तत्वे तमन्तरेण द्रव्यान्तर्गताऽपि शक्तिर्गृह्यते'।

येषां मते जातिः तात्पर्येणाभिधेया न शक्त्युपलक्षणम्, तेषां कथं प्रतिनिध्युपपत्तिरिति चतुर्थकारिकया विचारितम्, तथा हि 'खादिरे बध्नाति', 'पालाशे बध्नाति' इत्यादौ अस्वातन्त्र्यफलस्य बन्धेः प्रमाणादेरिव विधानं भवति। प्रमाणम् = हिंसा। अन्यथा पशोर्यूपे बन्धनेऽसति तस्य प्रमाणाद्यनुपपत्तौ (हिंसाद्यभावे) यागे अवदानग्रहाभावात् = हविषो मांसरूपस्य ग्रहणाभावाद् यागस्य स्वर्गफलकस्यासिद्धिरेव स्यादिति प्रमाणाद्यनुरोधात् प्रमाणाद्यङ्गस्य बन्धेरपि सिद्ध्यर्थं बन्धनसमर्थस्यैव साधनस्य खादिरादिपदैर्बोधः लक्षणया। वाक्यार्थभूता बन्धिक्रिया प्रधानं च वर्तत इति प्रधानानुरोधेन बन्धनसम्पादनसमर्थस्यैव पदार्थस्य परिग्रहो न्याय्यः। एवञ्च खदिरपदं न खदिरमात्रबोधकमपि तु बन्धनसमर्थसाधनमात्रबोधकमिति अलाभे कदरादिपरिग्रहो न्याय्यः। पञ्चमकारिकायां लिङ्गेनापि प्रतिनिधिरुपपादितः। यदि संश्लेषमात्रम्—यूपे पशोर्योजनमात्रं बध्नात्यर्थस्तदा खदिरलतयाऽपि सम्पाद्यत्वसम्भवात् कदरोपादाने सामर्थ्यं नास्ति; किन्तु संश्लेषादुत्तरकालं विहितानां 'पशुमालभेत्, 'हृदयेऽवद्यति' अथ वक्षसि' इत्यादिवचनेन क्रियमाणमनुशासनं समर्थद्रव्योपादाने लिङ्गम्। एवं जातिपदार्थवादे प्रतिनिध्यनुपपत्तिः परिहृता।

जातिपक्षे प्रबलतमं दूषणम् आयाति यदि जातिः शब्देन प्रतिपाद्यते, तर्हि तत्र जात्यन्तराभावाद् निर्निमित्ता शब्दस्य प्रवृत्तिः स्यात्, तद् वारणाय 'न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययः' इति वार्तिकाशयमाधृत्य समाहितम्, 'स्वाजातिः' इत्यादि कारिकया। नास्ति निर्निमित्ता शब्दस्य प्रवृत्तिः, शब्दजातिपुरस्कारेणैवार्थजातेः भानस्वीकारात्। शब्दजातिश्च गोशब्दादिषूच्चारितेषु असाधारणी गोशब्दत्वादिका एव, न तु शब्दत्वजातिः, तस्याः सर्वशब्दसाधारण्यात्। शब्दजातिप्रत्यायनादनन्तरम् अर्थजातीनां गोत्वादीनां स्वरूपेषु शब्दजातेरध्यारोपस्य कल्पना भवति। शब्दानुविद्धस्यैवार्थावबोधस्यानुभवादेवमुक्तिः सङ्गच्छते। एवञ्च तत्तदर्थजात्यवबोधाय शब्दप्रयोगे शब्दगता जातिरेवार्थजातावध्यारोपिता शब्दानां प्रवृत्तौ निमित्तम्।

कालाकाशदिशामेकत्वाद् नित्यत्वेनावस्थाभेदाभावाच्च कथं जातिवाचकत्वम् तद्वाचकशब्दानां तत्र जातेरभावात्, इति चेत्, तत्र घटाद्युपाधिकृतभेदमादायाकाशे नानात्वं परिकल्प्याकाशत्वस्य जातित्वं समर्थ्यते वैयाकरणैः। एवं कालदिशोरपि संयोगि धर्मभेदेन प्रदेशं परिकल्प्यानेकत्वकल्पनया कालत्वदिक्त्वरूपे सामान्य उपवर्णनीये। नैयायिका आकाशत्वस्य जातित्वं न स्वीकुर्वन्ति, तदुक्तं दिनकरेण—'व्यक्तेरभेद एकव्यक्तिकत्वम् आकाशत्वादेर्जातित्वे बाधकम्' (न्यायसि० मु० प्रत्यक्षखण्डः)। एवं जातिः पदार्थं इति मीमांसकमतानुसारि वाजप्यायनदर्शनेन व्यवस्थापितम्। द्रव्यसमुद्देशे तु व्याडिमतानुसारं द्रव्यस्य पदार्थत्वं व्यवस्थापितम्।

द्रव्यपदार्थवादिनश्च एवं सङ्गिरन्ते—अर्थक्रियायां द्रव्यस्यैवोपयोगात् तदेव प्रवर्तकमर्थिनाम्, तदेव च शब्दवाच्यम्, जातेश्चामूर्ताया नास्ति क्रियायामन्वयः, मूर्त-

वृत्तित्वात् क्रियायाः। जातिस्तु द्रव्ये उपलक्षणीभूता इतरव्यावृत्तत्वेन तत्परिज्ञानायोपयुज्यते।

वाक्यपदीये द्रव्यमधिकृत्य समुद्देशद्वयम्—द्रव्यसमुद्देशः, भूयो द्रव्यसमुद्देशश्चेति प्रसिद्धम्। तत्र समुद्देशद्वये उद्दिष्टयोः द्रव्ययोः कश्चन भेदोऽवश्यं वर्ततेऽन्यथा प्रकरणविभागो नोपपद्येत। भूयोऽव्ययस्याधिक्यवाचित्वाद् भूयो द्रव्यसमुद्देशे बहूनां द्रव्यत्वेन परिग्रह इति प्रकरणनाम्नैव ज्ञायते, अत्र द्रव्यसमुद्देशे च एकस्यैव तत्त्वस्य द्रव्यत्वेन परिग्रह इत्यपि लक्षणतोऽवसीयते।

द्रव्यं द्विविधम्—सांव्यावहारिकम्, पारमार्थिकञ्च। तत्र प्रथमम्—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ (भूयो द्र० समु० ३)

इत्यादिना गुणसमुद्देशे उक्तम्। पारमार्थिकद्रव्यपक्षे विभिन्नानि दर्शनानि एवमेकं तत्त्वं नामभेदेन भिन्नतया वर्णयन्ति, तेषाञ्च मतानि अत्र कारिकायां संगृहीतानि—

आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि।
द्रव्यमित्यस्य पर्याया तच्च नित्यमिति स्मृतम्॥ (द्रव्य समु० का० १)

**१. आत्मा द्रव्यमित्यद्वैतिनः**—अद्वैतवादिमतानुसारमात्मैव ह्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थः। अयमेव चाद्वैतपक्षः स्वपक्षतयोपन्यस्तः 'सत्यं वस्तुतदाकारैः' इत्यादि द्वितीयकारिकया।

**२. वस्तु द्रव्यमिति बौद्धाः**—द्रव्यविषये बौद्धमतं प्रतिपादयता हेलाराजेनोक्तम्—'वस्तु स्वलक्षणमर्थक्रियाकारिद्रव्यमिति शाक्यैरुक्तम्'। अत्र वस्तु स्वलक्षणं व्यक्तिमात्रस्वरूपम्, तत्तद्धर्मैरविकल्पितम्, तत्तद्धर्मैर्विकल्पागोचरम्, तत्तत्पदैरभिधीयमानं द्रव्यम् इति शाक्या बौद्धाः। 'स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः' इति अमरकोशात् शाक्यसिंह इत्यस्यैकदेशस्य शाक्यशब्दस्य बुद्धवाचित्वात् तदनुयायिनः शाक्या बौद्धाः।

**३. स्वभावो द्रव्यमिति सत्ताद्वैतवादिनः**—स्वभावो द्रव्यमिति सत्ताद्वैतवादिनः। स्वस्य भावः स्वभावः सत्ता, सैव सर्वभावेषु अनुगता आत्मभूता सत्ता। सा सत्ता कार्यवस्तुनः साध्यत्वदशायां जायमानस्य क्रमस्य उपसंहारे सति स्थितिरूपा स्वसम्बन्धिभिः द्रव्यैः स्वाश्रयभूतैरुपाधिभिः एकाऽपि सम्पादितभेदा सती द्रव्यं घटपटादिपदाभिधेयं भवति। इदमत्र तत्त्वम्—क्रमोपसंहारे ( उत्पत्त्यनुकुलव्यापारपरिसमाप्तौ ) एव जायमानं घटादिकं घटादिपदाभिधेयं भवति तदानीमेव क्रमोपसंहारो भवति तदानीमेव घटोऽस्ति इति व्यवहारो भवति अतः सत्तैव कम्बुग्रीवादिमदाकृत्या व्यवच्छिन्ना घटपदाभिधेयेति सैव द्रव्यम्।

**४. शरीरं द्रव्यमिति शरीरात्मवादिनः**-सांख्यसयूथ्या इति अम्बाकर्त्री। तत्र हेलाराजेनोक्तम्—'प्रकृतेरेकदेशः चेतनः पुरुषः तद्द्वारेण शरीरशरीरिणोरव्यतिरेकात् शरीरं

द्रव्यं प्रधानमेवेति प्राकृतिकैः शरीरमेवैक आत्मा येषां तैः शरीरात्मभिरुच्यते'। प्रधानं प्रकृतिः, शरीरं पुरुषः, शरीरी उभौ सम्भूय जगत उपादानं कारणम् इति प्राकृतिकाः प्रकृतिचिन्तका वदन्ति। तयोः पुरुषः चेतनः, तद्द्वारा च प्रकृतिपुरुषयोरभेदाच्छरीरं प्रधानमेव द्रव्यम्। तेषां मते शरीरमेव एक आत्मा, अतस्ते शरीरात्मवादिनः।

५. **तत्त्वं द्रव्यमिति चतुर्भूततत्त्ववादिनश्चार्वाकाः**—एवमेतैः पर्यायैः द्रव्यमेवाभिधीयते। द्रव्यं नाम यः कोऽपि पदार्थः, तस्य एत एव पर्यायाः, एतेषामेव पारमार्थिकरूपाभिधायित्वात्। घटपटादिशब्दास्तु न पारमार्थिकरूपाभिधायिनः। अत एव घटपटादिषु सर्वत्रात्मशब्दस्याव्याहतः प्रसरः। अत एव भाष्ये पस्पशायमुक्तम्—'एकोऽयमात्मा उदकं नाम'। वापीकूपतडागादिरूपेण प्रत्येकं भेदेऽपि एकमिदं द्रव्यम् उदकं नाम इति तदर्थः। आकृतिमभिधाय तद्द्वारा घटपटादिशब्दाः लक्षणया द्रव्येषु वर्तन्ते, इमे त्वात्मा वस्त्वित्यादयः शब्दा मुख्यया वृत्त्या द्रव्यमेवाभिदधति। एतादृशस्य च द्रव्यस्य नित्यत्वं 'तच्च नित्यमिति स्थितमिति' कारिकांशेन प्रतिपादितम्। अत एव 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिकव्याख्यानावसरे भाष्यकृता 'द्रव्यं नित्यमाकृतिरन्या चान्या च भवति' इत्युक्तम्।

यद्यपि शाक्तदर्शने चार्वाकदर्शने च द्रव्यस्य नित्यत्वं न भवति, तथा च सर्वमतोपसंहारे कारिकायां नित्यत्वप्रतिपादनं नास्ति समीचीनम्, तथापि वैयाकरणैः तन्मतस्यानादरणात् स्वमतेन नित्यत्वव्यवस्थापनम्। यद्वा, तत्तदाकारवत्परिणामकृतविकारभेदेऽपि स्वरूपान्यथात्वानापत्तिरूपनित्यत्वं विवक्षितमिति न दोषः। अग्रे च एतस्यैवात्मनः द्रव्यत्वं विभिन्नाशङ्कापरिहारपुरस्सरं व्यवस्थापितम्। भूयो द्रव्यसमुद्देशे च सांव्यावहारिकं द्रव्यं वर्णितम्—

'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थः भेद्यत्वेन विवक्षितः'॥ इति कारिकया

अत्र द्रव्यस्य लक्षणद्वयमुक्तम्—'इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यम्'। तत्र इदमिति प्रत्यक्षार्थस्य वाचकम्, तदिति परोक्षार्थस्य वाचकम्। द्विविधा एव पदप्रत्याय्या अर्थाः प्रत्यक्षाः परोक्षाश्च। तथा च वस्तुमात्रं द्रव्यमिति लक्षितं भवति। अत एव निरुक्तकारेणाप्युक्तम्–'अद इति यत् प्रतीयते तद् द्रव्यम्'। इदञ्च वस्तुभूतार्थस्य लक्षणम्। 'भेद्यत्वेन विवक्षितः' इति द्वितीयं द्रव्यस्य लक्षणमुच्यते। सामान्यादिभिरुपाधिभिर्भेद्यत्वेन-अवच्छेद्यत्वेन-विशेष्यत्वेन वक्तुमभिप्रेतं द्रव्यम्। 'विवक्षितग्रहणेन च नेदं वस्त्वर्थस्य लक्षणम्; अपि तु शब्दार्थस्य' इति हेलाराजः; किन्त्वनया पङ्क्त्या इदं प्रतीयते यद् वस्त्वर्थः शब्दार्थाद् भिद्यते, तर्हि कः शब्दार्थः ? इति समाधानमुक्तम् अम्बाकर्त्र्याम्—'इदं लक्षणं न वस्तुभूतस्य बहिस्थस्य द्रव्यरूपस्यार्थस्य; किन्तु शब्दार्थस्य बौद्धस्य असद्रूपस्य विकल्पगोचरस्य द्रव्यस्येति विवक्षितग्रहणंनात्राभिप्रेतम्'। तथा च जात्यादयः प्रकारभूता धर्मा अपि यदा विशेष्यत्वेन विवक्षिताः, तदा तेऽपि द्रव्यपदाभि-

धेया भवन्ति। एवमनेन द्रव्यपदार्थव्यवस्थापनेन व्याडिदर्शने सार्वत्रिकी द्रव्यपदार्थ-व्यवस्था सिद्धा भवति। सार्वत्रिकी द्रव्यपदार्थव्यवस्था इति कथनेन नामाख्यातयो-रुभयोरपि द्रव्यवाचकत्वं सिद्धं भवतीत्युच्यते। तत्र नाम्नां द्रव्यवाचकत्वं सिद्धम्; किन्तु आख्यातस्यापि (तिङोऽपि) द्रव्यमेव वाच्यं साधनस्वभावमिति विचार्यते।

यद्यपि 'भावप्रधानमाख्यातम्' इति यास्कवचनाद् वैय्याकरणैः क्रियामुख्य-विशेष्यको बोधः स्वीक्रियते, तथा च प्राधान्यात् तस्या आख्यातार्थत्वमुचितम्, तथापि गुणभूतस्य साधनस्य द्रव्यस्यैव प्राधान्यं स्वीक्रियते यदपेक्षं प्राधान्यं क्रियायां गच्छति। तथा च व्यापाराविष्टम् आख्यतार्थभूतं साधनमेव शब्दतोऽप्रधानमपि आर्थिकं प्राधान्य-मादाय आख्यातवाच्यमस्तु। किमास्यते ? किं स्थीयते ? इति किमादिभिः सर्वनामभिः परामर्शात् सुखमास्यते सुखं स्थीयत इति सुखादिभिः विशेष्यत्वात् आख्यातार्थभाव-स्यापि द्रव्यत्वम्। विवेचितञ्चैतद् अत्रैव हेलाराजीये अस्माकञ्च। एवं यथादर्शनं सर्वस्य शब्दस्य द्रव्यवाचित्वं जातिवाचित्वञ्च समर्थितम्। इदानीं सम्बन्धविषये किञ्चित् चिन्त्यते।

शब्दार्थयोः कः सम्बन्धः ? इति तृतीयसमुद्देशे विचारितम्। शब्दस्तु 'येनोच्चा-रितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः' इति वदता महाभाष्यकृता स्फोटात्मको गृहीतः। 'उच्चारितेन' इत्यस्य प्रकाशितेन इत्यर्थं इति कैय्यटः। यथाऽद्वैतिनां मते प्रकाशस्वरूपं सर्वावभासनक्षममपि ब्रह्म वृत्त्युपारूढमेवार्थान् प्रकाशयति, तथा स्फोटात्मकब्रह्मस्वरूपं शब्दतत्त्वं ध्वनिरूपरूषितमेवार्थान् बोधयति, नान्यथेति उच्चरितः शब्दः प्रत्यायको नानुच्चरित इति भाष्यसिद्धान्तादवगम्यते। शब्दादर्थावबोधो भवति इत्यत्र विवादो नास्ति; किन्तु स्वसम्बद्धमर्थं शब्दः प्रकाशयति, असम्बद्धं वेति विचारणीयं भवति। स्वसम्बद्धार्थप्रकाशकत्वं शब्दस्य इति पक्षे शब्दार्थयोः कः सम्बन्धः ? तस्य किं स्वरूपम् ? तस्य जन्यत्वमजन्यत्वं वा ? इत्यादयः पक्षा विचारणीया भवन्ति। असम्बद्धार्थप्रकाशकत्वे कथं नानियतार्थप्रकाशनं शब्देनेति विचारणीयं भवति। अयं पक्षः शब्दान्नियतार्थबोधस्वीकाराद् निरस्तप्राय एवेति शब्दार्थसम्बन्धस्वरूपादिविषयेऽत्र विविधाः पक्षा विचारिताः।

तत्र 'सिद्धे शब्दार्थसम्बन्धे', 'लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते' इति पस्पशायां वार्तिके शब्दार्थसम्बन्धस्य नित्यत्वं स्वीकृतम्। हरिणा च सम्बन्धसमुद्देशे प्रथमकारिकायाम्–'सम्बन्धः समवस्थितः' इति वदता तदेवाङ्गीकृतम्। तदुक्तं हेलाराजेन–'स्वभावत एव निरूढो न तु पुरुषेण निवेशितः' इत्यर्थः। अत एव प्रथमकारिकायां स्फोट-रूपैरान्तरैः शब्दैः शब्दस्य स्वरूपम्, शब्दार्थः फलस्य साधनीभूतः, प्रयोक्तुः शब्दप्रयोग-हेतुभूतं ज्ञानम्, एतत् त्रितयं प्रतिपाद्यत इति स्फुटमभिदधता ग्रन्थकर्त्रा प्रतिनियतानामेषां बोधमङ्गीकृत्य सम्बन्धस्यानादित्वं नित्यत्वञ्च स्वीकृतम्। शब्दस्य स्वरूपम् अर्थश्च उभयं वाच्यम् इति तु "स्वं रूपं शब्दस्यशब्दसंज्ञा" ( पा० सू० १।१।६८ ) इति सूत्रयता

महर्षिणाऽपि स्वीकृतम्। प्रथमं स्वरूपं प्रतीयत इति न वा 'शब्दपूर्वके ह्यर्थे सम्प्रत्ययः' इति वार्तिकेन स्फुटमुक्तम्। "स्वाजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते" (जाति समु० का० ६) इति कारिकया च प्रतिपादितम्। अनन्तरमर्थस्य प्रतीतिः। भवतु अक्रमा सक्रमा वाऽर्थप्रतीतिः सम्बन्धं विना नियमतो नोपपद्यत इति स सिद्ध्यति। स च सम्बन्धः अनादित्वाद् नित्यः। अर्थस्वरूपाभ्यां शब्दस्य सम्बन्धो वाच्यवाचकभावरूपः। शब्दस्वरूपस्यान्तरङ्गस्याभिधेयतया तत्र प्रथमं शाब्दी प्रतिपत्तिः, अनन्तरं शब्दाध्यस्त-स्वरूपे अर्थं इति आभ्यां अर्थस्वरूपाभ्यां सह शब्दस्य वाच्यवाचकभावलक्षणः सम्बन्धः। 'ज्ञानं प्रयोक्तुर्बाह्योऽर्थः' इति कारिकायां ज्ञानपदं कार्यकारणभावरूपमपरं सम्बन्धमपि स्मारयति। तथा हि येषां मते वक्त्रभिप्रायारूढो मानस एव शब्दार्थो न तु बाह्यः, तेषां कार्यकारणभावः सम्बन्धः शब्दार्थयोः। तदुक्तम्—

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम्॥

अयं भावः—अवबोद्धुः प्रवृत्तये निवृत्तये वा शब्दप्रयोगो वक्त्रा क्रियते। अर्थश्च प्रवृत्तिनिवृत्त्यन्यतररूपस्य फलस्य साधनीभूत इति वक्तुर्व्यापारस्याभिप्रायरूपस्य विषयो योऽर्थः बुद्धौ प्रकाशते, तत्रैव शब्दस्य प्रामाण्यम्। अर्थस्य सत्यता वर्तते, न वेति नास्ति तत्रापेक्षा। अत एवोक्तं नार्थतत्त्वनिबन्धम्। अर्थसत्यत्वप्रयुक्तं शब्दस्य प्रामाण्यं नास्ति। एवमर्थस्य शब्दव्यवहारकारणत्वं सिद्ध्यति। तथा च शब्दार्थयोः कार्य-कारणभाव आयाति।

'अत एव द्विविधः सम्बन्धपदार्थो व्यवतिष्ठते, योग्यता, कार्यकारणभावश्च। अध्यासस्तु द्वयोरपि परमार्थ एव न पृथग्रूपः' इति वदता हेलाराजेन, वाच्यवाचक-भावस्य द्विविधपदार्थमध्ये गणना न कृता। अध्यासश्च कश्चन अपरसम्बन्ध इत्यपि सूचयतीति प्रतीयते। तत्रेदं वक्तव्यमस्ति—अनादेः वाच्यवाचकभावलक्षणस्य सम्बन्धस्य अनादिः प्रयोजकः योग्यतालक्षणः सम्बन्धः। कार्यकारणभावरूपसम्बन्धस्तु पूर्वमुक्त एव।

अध्यासरूपः सम्बन्धस्तु न द्वाभ्यां पृथक्; अपि तु द्वयोः मूलभूतो नियामकतया तिष्ठति, न ताभ्यां पृथक्। कथमध्यासस्य सम्बन्धमूलत्वमिति विचार्यमाणे महाभाष्यस्य-कश्चन अंशः पुरतः परिस्फुरति—"अथ गौरित्यत्र कः शब्दः"? इत्यादिः, "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति, स शब्दः" इत्यन्तः प्रश्नोत्तररूपः। कः शब्दः ? इति प्रश्नस्य क आशयः ? यदि गौः इति शब्दे, अर्थे, ज्ञाने च सामान्येन न प्रयुज्यते, तर्हि शब्दस्वरूपावधारणाय प्रश्नानुपपत्तिः। बहूनां उपस्थितिस्तु अग्रे 'नेत्याह' इति असकृद् निषेधेन ज्ञायते। अतः शब्दार्थप्रत्ययानामितरेतराध्यासादेव प्रश्नः, अन्यथा सन्देहानवतारे प्रश्नानवतारः। अतोऽर्थे शब्दाभेदप्रत्ययोऽध्यासरूपः स्वीकर्तव्यः। अयञ्च अध्यासोऽगृहीतसङ्केतस्य बालस्यापि अस्त्येव। अत एव 'अयं गौः' इति सङ्केतवाक्येन

तस्य बोधो भवति। अत एवोक्तं हेलाराजेन—"एवं च कृत्वा तात्पर्यदृशा अध्यास एव योग्यतायां कार्यकारणभावे च फलतः सम्बन्धोऽवतिष्ठत इति स एव मुख्यः" इति।

एवं समुद्देशत्रये विवेचितानां विषयाणां दिङ्मात्रमिह प्रदर्शितम्। अत्र ग्रन्थे स्वमतस्थापनात्पूर्वं बहुत्र मीमांसकमतानि, अद्वैतमतानि च विस्तरेण चर्चितानि। जातिसमुद्देशस्य प्रारम्भ एव प्रतिनिध्यनुपपत्तिविचारः प्रक्रान्तः। द्रव्यसमुद्देशे च 'न तत्त्वातत्त्वयोर्भेदः', 'विकल्परूपं भजते' इत्यादि ( का० ७, ८ ) कारिकासु अद्वैतदर्शनस्य स्फुटतरं निरूपणमस्ति। अन्यानि च दर्शनानि शून्यवादप्रभृतीनि यथावसरं विवेचितानि इति तत्तत्स्थलेषु अम्बाकर्त्र्यां मूले च द्रष्टुं शक्यानि। जातिद्रव्यसम्बन्धादिविषये यत्किञ्चिदुक्तं तत्सर्वं मूलग्रन्थमम्बाकर्त्रीञ्चाधृत्य विवेचितम्, अधिकन्तु तत एव ज्ञेयम्।

अम्बाकर्त्र्या वैशिष्ट्यविषये किं वक्तव्यम्, हेलाराजीयप्रकाशमाधृत्य अर्थान् प्रकटयन्ती अपि क्वचित् क्वचित् 'तच्चिन्त्यम्' इत्यादिना तत्खण्डनपरा टीकाकर्त्तुः वैशिष्ट्यं द्योतयति। न केवलं खण्डने, विषयस्फोरणेऽपीयं वैशद्यम्, वर्णनचातुरीञ्चादधती विदुषामध्येतॄणाञ्च महते उपकाराय कल्पयिष्यतीति विश्वसिति।

वाराणस्याम्
विजयादशम्याम्
वि०सं० २०४७
( २९-९-९० )

नरेन्द्रनाथपाण्डेयः
प्राध्यापकः, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

# प्रास्ताविकम्

## ( प्रथमसंस्करणस्य )

सुप्रथितं पातञ्जलं महाभाष्यं व्याकरणरत्नाकरतया। महाभाष्ये समाश्रुता व्याकरणनिकायस्य सर्ववेदपारिषदरूपतेति तत्रात्मसात्कृताः पूर्ववर्तिनां वैयाकरणानां दर्शनान्तराणां च राद्धान्ताः। ततो निर्मथितं भर्तृहरिणा वाक्यपदीयं नाम व्याकरण-दर्शनरत्नोत्तमम्। अनाविले शब्दानुशासनमहाबिले विरोचन इव विरोचते निकामम् अद्वितीयं साम्प्रतं तत्। षट्सु दर्शनेषु व्याकरणदर्शनस्याप्रसिद्धत्वाद् दर्शनान्तरनदीष्णै-र्यथेष्टं पर्यालोचितानि वाक्यपदीयस्य दर्शनतत्त्वानि। पर्यालोचनास्ताः सिद्धा निकषा-त्मिकाः। ततो विश्रुतं व्याकरणस्य स्वतन्त्रं दर्शनत्वम्।

ग्रन्थस्यास्य कारिकाणां दुरूहतां सूत्ररूपतां व्याख्येयतां चाकलय्य ग्रन्थकृद्भिः स्वयं स्वोपज्ञवृत्तिः प्रणीताऽऽसीत्। सा काण्डद्वयं यावदुपलभ्यते स्म। तदाधारेण व्याख्याकृद्भी रचिता व्याख्याः; किन्तु परीक्षासु विद्वत्सु च सामान्यतः सर्वस्यास्य ग्रन्थस्या-ध्ययनाध्यापनाभावात् तत्रांशतः स्वोपज्ञवृत्तेस्तदाधारकाणामन्यासां च व्याख्यानां विलोपो जातः। क्वचिदंशे पुण्यराजकृता, क्वचिच्च हेलाराजकृता व्याख्या यद्यपि सम्प्रत्युप-लभ्यते, तथापि तयोरप्यप्रचलितत्वात् पाठभेदानां भ्रष्टपाठानां चास्ति बाहुल्यम्।

वाराणसेयसंस्कृतविश्वविद्यालयस्य स्थापनानन्तरमिह केषाञ्चिच्छास्त्राणां व्याख्येय-तया, केषाञ्चिच्च दुर्लभानां ग्रन्थानां सम्पादनीयतया समुद्धाराय सङ्कल्पितम्। तत्रादौ नानाशास्त्रविचक्षणाः पण्डितप्रवराः श्रीरघुनाथशर्माणो वाक्यपदीयस्य व्याख्यापूर्वकं सम्पादनाय प्रार्थिताः। तैः 'अम्बाकर्त्री' इत्यभिधा व्याख्या प्रणेतुमुपक्रान्ता। सा यथा यथा रच्यते, विश्वविद्यालयेन तथा तथा प्रकाश्यते। इत्थं १९६३ तमे खैस्ताब्दे ब्रह्म-काण्डात्मकं वाक्यपदीयम् अम्बाकर्त्रीव्याख्यासहितं सरस्वतीभवनग्रन्थमालाया एकनवति-तमपुष्पत्वेन प्रकाशमुपयातम्। जिज्ञासुभिर्विद्वद्भिश्च तत् तथाहमहमिकया समादृतं यद् अनल्प एवानेहसि तस्य सर्वाः प्रतिकृतयो मुद्रणातीताः सञ्जाताः।

ततः १९६८ तमे खैस्ताब्दे पुण्यराजीयव्याख्यामग्रे कृत्वा 'अम्बाकर्त्री' इत्याख्य-व्याख्यासहितं वाक्यपदीयस्य द्वितीयं काण्डं विश्वविद्यालयस्य प्रकाशनविभागेन प्रकाशितम्।

द्वितीयकाण्डे वाक्यपरीक्षानन्तरं पदपरीक्षार्थमारब्धस्यास्य तृतीयस्य प्रकीर्णा-ख्यस्य पदकाण्डस्य व्याख्यानं वृत्तिसंश्रयाभावात् प्रकाशकारेण हेलाराजेन स्वप्रतिभया कृतम्। यद्यपि द्वितीये काण्डे हेलाराजकृतं व्याख्यानं नोपलभ्यते, तथापि जातिसमुद्देशे तत्कृतमङ्गलाचरणश्लोकतो वृत्त्याधारेण कृता तद्रचना विज्ञायते—

काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः ।
प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः ॥

तच्छेषभूते काण्डेऽस्मिन् सप्रपञ्चे स्वरूपतः ।
श्लोकार्थद्योतनपरः प्रकाशोऽयं विधीयते ॥ इति ।

यद्यप्यम्बाकर्त्रीटीकाकृद्भिस्तृतीयकाण्डे हेलाराजव्याख्यानमाश्रित्य टीकिता टीका—

येन काण्डद्वयं पूर्वं विवृतं वृत्तिसंश्रयात् ।
तृतीयं स्वप्रतिभया हेलाराजः स मे गतिः ॥

इति तैः स्वयमूरीकृतम्, तथापि स्थले स्थले स्वोपज्ञत्वमपि प्रस्तुतम् । समुपन्यस्तं हेलाराजतो भिन्नमपि मतमम्बाकर्त्रीकारैः । तादृशानीह प्रदर्श्यन्ते कानिचन स्थलानि, यानि क्वचित् प्रकाशानुसारीण्यपि सन्ति स्वोपज्ञताप्रकाशकानि । कानिचित् तु प्रकाशप्रत्याख्यानात्मकानि, कानिचिच्चसन्ति सर्वथा स्वोपज्ञानि ।

"अत्र पद्ये ( जा० ६१ ) द्वितोयपादे 'न ग्रहे क्वचिदाश्रितः' इति पाठः क्वचिद् दृश्यते, स तु न युक्तः, 'तस्य चिह्नभूतः कश्चिद् विशेषो निरपेक्ष्यत' इत्यत्र हेलाराजीयव्याख्यानुरोधादिति" इत्यत्र प्रकाशटीकोद्धृतस्य पाठान्तरस्यायुक्तत्वमसाधि हेलाराजीयवचनानुसारेणाम्बाकर्त्र्याम् ।

'अत एव संख्यायाः क्वचिद् व्यापारलक्षणो धर्मस्तेन लिङ्गेन गम्यते—इत्यकारप्रश्लेषं केचिद् व्याचक्षते किल' इति प्रकाशटीकोद्धृतस्य ( जा० ६८) केषाञ्चिदाचार्याणां मतस्यायुक्तत्वमम्बाकर्त्र्यामित्थमसाधि—'वस्तुतस्तु नेदं व्याख्यानं युक्तम्, क्वचिल्लिङ्गाभावे इत्यध्याहारे क्लेशात् प्रतिपत्तिगौरवाच्च' इति ।

सांख्यादिनयेन जातेः समर्थनस्थले ( जा० ९६ ) प्रकाशटीकाकारेण हेलाराजेन नाधिकं व्यवेचि । अम्बाकर्त्र्यां तु सविस्तरम् असत्कार्यवादस्य नैयायिकवैशेषिकयोरभिमतस्यायुक्तत्वं प्रदर्शितम् ।

जातिसमुद्देशस्य प्रथमे श्लोके हेलाराजेन 'अन्ते तु......वर्णयन्ति' इति समुद्धृतं कस्यचिन्मतम् । अम्बाकर्त्र्यां तु कारणप्रदर्शनपूर्वकं तस्यायुक्तत्वमित्थं स्थापितम्—'इदं तु न युक्तम्, प्रवर्तनप्रतीक्षणयोः स्मृतिपूर्वकत्वेन यस्माद् मातृविषये प्रवर्ततेऽवतिष्ठते वा तस्माद् मातृसम्बन्धीदं स्मरणमित्युक्तेरनौचित्यादिति' इति ।

जातिसमुद्देश एव ( ५७ ) प्रकाशटीकायाम्—'अत्र केचित्.........योजितवन्तः' इति दर्शितं कस्यचिन्मतम् । अम्बाकर्त्रीकारैस्तु पशोरङ्गभावस्यार्थत्वेनाश्रुतत्वेन चाविधेयत्वाद् योजना साऽयुक्ता साधिता ।

जातिसमुद्देशे ( ७–८ ) शब्दसमवायिन्या जातेरर्थजात्या सहाभेदव्यपदेशवर्णन-प्रसङ्गे हेलाराजेन 'व्यपदिश्यते' इत्यस्य 'व्यपदेशाय कल्पते' इति कर्मप्रत्ययान्तस्य कर्तृप्रत्ययान्तत्वेन व्याख्यानं कृतम्। अम्बाकर्त्रीकारेण तस्यार्थिकार्थपरतया कथञ्चिन्नेयत्वमुक्तम्।

जातिसमुद्देश एकोनचत्वारिंशकारिकाव्याख्याने हेलाराजेन 'तत्रापि वृद्धौ वर्धत इत्येवं जन्मविशेषा एवैतेन पृथगुपात्ताः। तदयमानुलोम्यपरिणामः' इत्यभिहितम्। अम्बाकर्त्र्यां स्थितेर्जन्मत्वासम्भवाद् हेलाराजोक्तस्य चिन्त्यत्वमुदीरितम्। स्वमतपुष्ट्यर्थं च 'जन्माद्यस्य यतः' इति वेदान्तसूत्रीयं श्रीशङ्कराचार्यभगवत्पादकृतं भाष्यं प्रमाणतया समुद्धृतम्।

तत्रैवैकचत्वारिंशकारिकायां हेलाराजकृतस्य व्याख्यानद्वयस्यापि चिन्त्यत्वमुदितमम्बाकर्त्रीटीकाकारैः। एकनवतितमकारिकाव्याख्याने तु विद्वद्वरैः श्रीशर्मभिः—'इदं तु प्रयोजनमितरेतरयोगद्वन्द्वेऽपि सम्भवतीति व्यर्थः सुदूरानुधावनप्रयासः श्रीहेलाराजस्येत्यवधेयम्' इत्याख्याय सर्वथा प्रत्युक्तो हेलाराजः।

जातिसमुद्देशे पञ्चोत्तरशततमकारिकाया विषयस्य स्पष्टीकरणार्थं हेलाराजेन विस्तृतमवतरणं निबद्धम्। अम्बाकर्त्रीटीकाकृद्भिर्हेलाराजकृतस्यावतरणस्य न्यायमतानुगामित्वाद् अद्वैतदर्शनस्य च प्रागुक्तस्यासमर्थकत्वादयुक्तत्वमुक्त्वाऽवतरणान्तरं चोपन्यस्य प्रदर्शिता स्वोपज्ञत्वात्मिका प्रतिभा प्रकामम्।

सम्बन्धसमुद्देशस्य पञ्चविंशकारिकायां हेलाराजेन दर्शिता व्याख्याऽपरापि। अम्बाकर्त्रीटीकाकृद्भिस्तु तस्या अयुक्तिसङ्गतत्वमाख्यातम्। तत्रैवैकोनविंशकारिकायां 'यत्तूक्तं हेलाराजेन' इत्यारभ्य पर्यालोचना कृता हेलाराजस्याम्बाकर्त्र्याम्।

इत्थमम्बाकर्त्रीटीकायां हेलाराजकृतव्याख्यानमनुवर्त्यापि समालोचितमन्वाख्यातं च तदनेकत्रेति हेलाराजस्य प्रतिभां प्रशंसद्भिरम्बाकर्त्रीटीकाकृद्भिः स्वप्रतिभाऽपि प्रदर्शिता पदे पदे। जातिसमुद्देशे ( १, ३५, ४३, ८०, १०४ ) संख्याकासु कारिकासु भर्तृहरेः सिद्धान्ताः प्रकाशविवरणाधारेणानुसृताः। शब्दप्रयोगे विषयवर्णने च तत्र प्रकाशटीकाया एवानुसरणं विहितम्।

तृतीयकाण्डीये हेलाराजकृतव्याख्यानेऽनेकत्र न्यूनताः, क्वचिच्च संक्षेपा दृश्यन्ते। अम्बाकर्त्र्यां तत्र तत्र न्यूनतापूरणेन विस्तरेण च स्पष्टीकृतो विषयः। एतदर्थं जातिसमुद्देशस्य २, ३, ६, ३४, ३९, ४०, ४५, १०४ संख्याकानाम्, सम्बन्धसमुद्देशस्य च ३०, ४०, ४१, ६३, संख्याकानां कारिकाणाम् अम्बाकर्त्रीव्याख्याऽवश्यं पर्यालोचनीया सुधीभिः।

गुणलुब्धा विद्वज्जना जिज्ञासवश्चोक्तव्याख्यामृतसमलङ्कृतस्य प्रकीर्णाख्यस्य तृतीयकाण्डस्य प्रकाशनं तूर्णं द्रष्टुमुत्सुका मुहुर्मुहुः प्रणोदितवन्त इति तदर्धो जातिद्रव्य-

सम्बन्धेति समुद्देशत्रयात्मक एवायं ग्रन्थो व्याख्याद्वयविराजितो लघु प्रकाशमानीयमानो विद्वत्तल्लजानां जिज्ञासूनां च समुपह्रियते पाणिपल्लवपुटे। अवशिष्टेनापरेणापि भागेन सपद्येव प्रकाशमानेष्यमाणेनानुसन्धित्सवो जिज्ञासवश्च ध्रुवमुपकृता भविष्यन्तीति मन्यते।

श्रीजगदीशरथयात्रायाम्
२०३१ तमे वैक्रमाब्दे, शुक्रवासरे
२१-६-१९७४ तमे खैस्ताब्दे

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
गवेषणालय-सञ्चालकः
वाराणसेयसंस्कृतविश्वविद्यालये।

# उपोद्घातः
## ( प्रथमसंस्करणस्य )

महदिदं सौभाग्यं विद्वज्जनानां यद्विद्वद्वरश्रीरघुनाथशर्ममहाभागैर्विरचिताया वाक्यपदीयतृतीयकाण्डगताम्बाकर्त्रीव्याख्याया जाति-द्रव्य-सम्बन्धेति समुद्देशत्रयविषयकोऽयं प्रथमो भागोऽधुना प्रकाश्यत इति। प्रथमद्वितीयकाण्डगताम्बाकर्त्र्याः परिशीलनेन समुद्बोधिताग्रिमभागपठनाभिलाषाणां विदुषां मनसि प्रकाशनेनानेन महानानन्दः प्रादुर्भविष्यतीत्यत्र नास्ति मे मनसि सन्देहलेशोऽपि। वाक्यपदीयतृतीयकाण्डस्य महत्त्वं तत्रभवान् भर्तृहरिः स्वयमित्थं विशदीकरोति—

> "वर्त्मनामत्र केषाञ्चिद् वस्तुमात्रमुदाहृतम्।
> काण्डे तृतीये न्यक्षेण भविष्यति विचारणा" ॥ इति ( वा० २।४८३ )

अयमभिप्रायः—प्रथमद्वितीययोः काण्डयोः संक्षेपेण ये केचिन्न्यायमार्गा निर्दिष्टास्तेषां तृतीये काण्डे न्यक्षेण=आदरविशेषेण, अर्थात् कात्स्न्र्येन विचार्य प्रतिपादनं भविष्यतीति। तत्रभवतो भर्तृहरेर्गुरुणा सम्भवतो वसुरातनाम्ना व्याकरणागमानां संग्रहः कृतः। तेषु केषाञ्चिदेव वाक्यपदीयप्रथमद्वितीयकाण्डयोः प्रतिपादनं सञ्जातम्, तदपि संक्षेपेणैव। अतस्तृतीयकाण्डे सर्वेषामागमानां विस्तरेण प्रतिपादनं भविष्यतीति प्रतिजानाति ग्रन्थकारो व्याख्यातृवर्यो हेलाराजोऽपि स्वकीयप्रकाशव्याख्याया अन्ते—

> "निराकाङ्क्षेण वपुषा गता विश्वजनीनताम्।
> तृतीया वागवस्थेयं प्रतिष्ठामुपयात्वितः" ॥

इति वदन् ब्रह्मकाण्डस्य प्रथमा वागवस्था पश्यन्ती, वाक्यकाण्डस्य द्वितीया वागवस्था मध्यमा, तृतीयस्य पदकाण्डस्य तृतीया वागवस्था वैखरी च प्रतिपाद्यविषय इति बोद्धव्यमिति ध्वनयतीव। अस्य च वैखरीरूपतृतीयवागवस्थाविषयकस्य तृतीयकाण्डस्य स्वप्रकाशाख्यव्याख्यासुगमस्य प्रतिष्ठामाशंसमानो हेलाराजस्तस्य महत्त्वमपि द्योतयति। स्वकीये च प्रकीर्णकप्रकाशे बहुषु स्थलेषु—

(१) "तन्त्रेण हि शक्तिद्रव्यमप्यभिदधाति प्रत्यय इति वाक्यपदीये निर्णीतम्"।

(२) "अत एव स्वातन्त्र्यशक्तिः काल इति वाक्यपदीये सिद्धान्तितम्"।

(३) "स्वतन्त्रस्य चिदात्मन एव जीवात्मगतेयमिति शक्तिः कालाख्या युक्ता। तथा ह्युक्तं वाक्यपदीयेऽस्माभिः"।

(४) "अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्तीति कृतनिर्णयं वाक्यपदीये शब्दप्रभायामस्माभिः" इत्यादिषु वाक्य-

पदीयसंज्ञायाः काण्डद्वयनियतत्वं तृतीयकाण्डस्य च प्रकीर्णकसंज्ञकस्य पृथक्कृतित्वमिव च वदता हेलाराजेनेदमेव महत्त्वमुपोद्बलितम्। चतुर्दशसमुद्देशात्मकत्वाद्विपुलकलेवरोऽप्ययं काण्डोऽसम्पूर्ण एव समुपलभ्यते। चिरात् किलासम्पूर्ण एवोपलभ्यते काण्डोऽयम्, यत इतोऽष्टशतवर्षेभ्यः प्राग् द्वितीयकाण्डव्याख्यां विरचितवता पुण्यराजेन तत्रभवता भर्तृहरिणा स्वोपज्ञवृत्तौ समुल्लिखितो लक्षणसमुद्देश आगमभ्रंशाल्लेखकप्रमादाद्वा स्वसमये नोपलभ्यत इत्युक्तम्। पुण्यराजेन बाधासमुद्देशोपमासमुद्देशावपि नामग्राहं स्मृतौ। तावपि नोपलभ्येते समयेऽस्मिन्निति तृतीयकाण्डगतास्त्रयः समुद्देशा लुप्ता इति सखेदं वक्तव्यं भवति। एवं स्थितेऽपि तृतीयकाण्डस्योपलभ्यमानो भागो विपुलकलेवरः किञ्चिदूनशतत्रयाधिकैकसहस्रकारिकात्मकः। हेलाराजीयव्याख्यासहितो बिपुलतरो भवतीति सम्पूर्णोऽम्बाकर्त्र्या परिवर्द्धितो नैकस्मिन् मुद्रिते ग्रन्थेऽन्तर्भावयितुं शक्य इति भागशोऽस्य प्रकाशनं क्रियते। प्रस्तुते चास्मिन् भागे प्रकाशाम्बाकर्त्रीसहिता जाति-द्रव्य-सम्बन्धेति-समुद्देशास्त्रय एव सन्निवेशिताः। व्याख्याकारो हेलाराजो व्याकरणशास्त्रस्य सिद्धान्तांश इव प्रक्रियांशेऽप्यत्यन्तं व्युत्पन्न आसीदिति प्रकाशव्याख्यां पठतां मनसि पदे पदे स्पष्टं भवति, तथापि न सर्वत्र सुगमेयं व्याख्या। अम्बाकर्त्रीकारैश्च प्रथमद्वितीयकाण्डयोरिवास्य काण्डस्यापि प्राचीनव्याख्यामवलम्ब्यैव स्वव्याख्या विरचिता। उक्तं च स्वयमेव व्याख्यातृवर्यैः—

येन काण्डद्वयं पूर्वं विवृतं वृत्तिसंश्रयात्।
तृतीयं स्वप्रतिभया हेलाराजः स मे गतिः॥ इति (पृ० २)।

बहुषु स्थलेषु प्राचीनव्याख्यायाः शब्दा अन्यशब्दैः सहाम्बाकर्त्र्यां यथातथमन्तर्भाविताः। अनेन कारिकार्थो हेलाराजव्याख्यार्थश्च विशदौ भवत इत्यम्बाकर्त्रीं पठतो ममानुभवः। यत्र प्रकाशव्याख्यासाहाय्येनापि कारिकार्थः स्पष्टो न भवति, तत्राम्बाकर्त्र्या कारिकाप्रकाशयोरुभयोरप्यर्थावबोधनं सुकरं भवति। द्वित्रैरुदाहरणैरत्र स्वाभिप्रायो विशदीक्रियते।

सर्वेषां शब्दानां जातिरेव वाच्येति जातिसमुद्देशस्य मुख्यः प्रतिपाद्यविषयः। यथा घटशब्दः सर्वेषु घटेषु विद्यमानं घटो घट इति प्रत्ययानुवृत्तिजनकं तथा घटो घट इति शब्दानुवृत्तिजनकं च जात्यपरपर्यायं घटत्वरूपं सामान्यमभिधत्ते। एतावदेव न, घटवृक्षादिभिः सर्वैरपि शब्दैः स्वासाधारण्यो घटशब्दत्ववृक्षशब्दत्वादिजातयोऽप्यभिधीयन्ते। स्वजातिप्रत्यायनानन्तरं घटत्ववृक्षत्वादीनामर्थजातीनामात्मसु शब्दजातीनामध्यारोपस्य कल्पनाऽपि क्रियते। यथोक्तं वाक्यपदीये भर्तृहरिणा—

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना॥ इति (३, जा० ६)।

शब्दजात्यर्थजात्योरभेदाध्यारोपस्य कल्पनं क्रियते। घटोऽयमर्थं इत्यस्य घटशब्दत्वाभिन्नेयं घटत्वरूपा जातिरित्यर्थः। एवं घटत्वरूपा जातिः, घटोऽयमर्थं इति

व्यपदेशाय कल्पते। अत्रेयं शङ्का भवति—"निःसामान्यानि सामान्यानि" इति वैशेषिकै-रभ्युपगमात् शब्दगतजातीनामर्थगतजातीनां च स्वतो जातिरहितत्वात् कथमर्थजाति-शब्दानां शब्दजातिशब्दानां वा जातिकार्यं सिद्ध्यति? इति। अत्रेत्थं समाधीयते भर्तृहरिणा—

"जातिशब्दैकशेषे सा जातीनां जातिरिष्यते।
शब्दजातय इत्यत्र तज्जातिश्शब्दजातिषु"॥ इति (वा० ३, जा० ९)

एतत्कारिकागतः प्रकाशो यद्यपि सुष्ठु लिखितस्तथापि न तेन ग्रन्थकर्तुरभिप्रायः सम्यगवगम्यते। अम्बाकर्त्रीसाहाय्येन तु ग्रन्थकर्तुः समाधानं सुगमं भवति। अतोऽम्बा-कर्त्रीतो निम्नलिखितः सन्दर्भ उद्ध्रियते—

"अस्यार्थः सा जातिः=शब्दजातिर्विशेषरूपा गोशब्दत्वादिः, सामान्यरूपा वा शब्दत्वम्। जातिशब्दैकशेषे=एकशेषस्य जातिपक्षे प्रत्याख्यानाल्लक्षणया=सहविवक्षया एकप्रयोगे, यद्वा प्रसक्ते इति पदमध्याहार्य योजनीयम्। गाव इमाः, वृक्षा इमे, जातय इमा इति वा एकप्रयोगे जातीनाम्=अर्थजातीनां गोत्वादीनामभिन्नप्रत्ययनिबन्धनभूता जातिः=गोशब्दत्ववृक्षशब्दत्वादिरूपा जातिशब्दत्वरूपा वा इष्यते। अतो गावो वृक्षा जातय इत्यभिन्नमभिधानम्, अभिन्नः प्रत्ययो वा उपपद्यते। यदि तु गोशब्दत्वादिरूपाः शब्दजातयोऽपि शब्दजातय इमा इत्येवं शब्दजातिशब्देन प्रत्याय्यास्तदा तज्जातिः शब्द-जातिः जातिशब्दगतं सामान्यं जातिशब्दरूपं शब्दजातिषु गोशब्दत्वादिकासु व्यक्ति-स्थानीयासु प्रतिपाद्यासु अभिन्नप्रयोगे निबन्धनम्" इति (पृ० ३७)। अतीव सरलया भाषया ग्रथितोऽयमम्बाकर्त्रीसन्दर्भो ग्रन्थकर्तुरभिप्रायं सम्यक् स्पष्टीकरोति।

अत्र प्रकाशितेषु त्रिषु समुद्देशेषु सम्बन्धसमुद्देशस्यैव विषयगौरवादधिकं महत्त्वं भवति। तद्विषयस्य न केवलं गौरवम्; अपि तु बहुत्र तस्य दुर्गमत्वमप्यनुभूयते पाठकैः। कामं हेलाराजकृतः प्रकाशो विद्वद्भिरचितः पाठकस्य बहूपकरोति, तथापि विषयस्य स्वाभाविकदुरूहत्वात् कुत्रचित् स व्याख्यामपेक्षते। सा चापेक्षाऽम्बाकर्त्र्या सुष्ठु पूर्यत इति पाठकानामिदं महत् सौभाग्यम्। तत्रोदाहरणरूपेणेदमुपन्यस्यते।

सम्बन्धसमुद्देशस्य द्वितीयकारिकागतप्रकाशे प्रतीतिजनकानामिन्द्रियलिङ्गशब्दा-दीनां मध्ये शब्दस्य वैशिष्ट्यमित्थं प्रतिपादितम्—

"शब्दस्तु न जनकतामात्रेणार्थप्रतीतौ सम्बन्धमनुभवति, अपि तु तत्रार्थः शब्द्य-मानः शब्दमय एवावभाति। तादृश एव हि स प्रतीतिस्वभावः, रूढत्वाच्च न भ्रमः" इति (पृ० २२४)।

अत्र हेलाराजस्याभिप्रायो यद्यपि स्पष्ट एव, तथापि संक्षिप्ता तस्योक्तिः। अतस्त-मेवार्थं परिवर्द्धितैः शब्दैरित्थं प्रतिपादयत्यम्बाकर्त्री—

"शब्दस्तु द्वयीमपि जनकत्वमर्यादामतिशेते। यतः स न जनकतामात्रेणार्थ-प्रतीतौ विषयत्वरूपं सम्बन्धमनुभवति; अपि तु शब्दजन्यायामर्थप्रतीतावर्थः शब्द्यमानः शब्दात् प्रतीयमानः शब्दमय एव शब्दस्वरूपभूत एव शब्दालिङ्गित एवावभाति। स

च शब्दाभिन्नार्थप्रत्ययाल्लोकेऽत्यन्तं रूढः=प्रसिद्ध इति देहादिष्वात्मप्रत्ययवद् यावद्व्यवहारमबाधितत्वान्न भ्रमः। तदुक्तमद्वैतमतनायकैः—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" ॥ इति।

यावद्व्यवहारमबाधितत्वेऽपि शब्दार्थयोरभेदो न वस्तुभूतः किन्त्वाध्यासिक एव" इति (पृ० २२४)।

अत्र पाठकैरिदं द्रष्टव्यं यत् प्रकाशगताः प्रायः सर्वेऽपि शब्दा अम्बाकर्त्र्यामायाताः परं तु न यथातथम्; अपि तु व्याख्यासहिता इति वाक्यान्यन्यानि सञ्जातानि, अर्थश्चात्यन्तं विशदः सञ्जातः।

अत्र प्रदर्शितस्य शब्दवैशिष्ट्यस्य मुग्धेन केनचिद् 'ननु न वर्णमालार्थे समुपलभ्यते (पृ० २२५) इत्याक्षेपे कृते प्रकाशे तस्य शब्दाद्वैतस्य केषाञ्चिन्मूलतत्त्वानामुपवर्णनेन समाधानं कृतम्। एतत्कृतं किल सम्बन्धसमुद्देशस्थद्वितीयकारिकागतप्रकाशस्य महत्त्वम्। एतेषु मूलतत्त्वेष्ववगतेषु अवशिष्टस्य सम्बन्धसमुद्देशस्य हेलाराजकृता व्याख्याऽधिकायासं विनाऽवगन्तुं शक्यते। अम्बाकर्त्रीसहिते द्वितीयकारिकाप्रकाशे किलाधोलिखितानां मूलतत्त्वानां वैशद्येन प्रतिपादनं दृश्यते—(१) पश्यन्तीमध्यमावैखरीरूपे वाचोऽवस्थात्रये शब्दस्य व्याप्तिः, (२) ज्ञानशब्दप्रदीपास्त्रयो हि प्रकाशा येनैव प्रकाशेन परं प्रकाशयन्ति तेनैवात्मानमपि प्रकाशयन्ति, (३) वाचकः शब्दोऽर्थमभिधीयमानतया प्रकाशयन्नात्मानमभिधयैव प्रकाशयति, (४) लोलीभूतानि परस्पराध्यस्तानि शब्दार्थज्ञानानि घट इत्येवमवगमयन्ति, (५) एवं च कृत्वा तात्पर्यदृशाऽध्यास एव योग्यतायां कार्यकारणभावे च फलतः सम्बन्धोऽवतिष्ठत इति स एव मुख्यः, (६) शब्देन स्वरूपाध्यस्तं वक्तृज्ञानमपि श्रोतरि प्रतिपाद्यत इति वक्तृज्ञानमपि शब्दस्यार्थवदभिधयैव प्रतिपाद्यमुपपद्यते, (७) शब्दपूर्वकत्वं चार्थप्रत्ययस्य शब्देऽर्थप्रत्यययोरध्यासादेवोपपद्यते, अन्यथा सर्वेभ्यः शब्देभ्योऽविशेषात् सर्वार्थप्रत्ययप्रसङ्गः स्यात्, (८) एवं परवागात्मनः स्फोटस्य शब्दनात्मकेन व्यापारेण व्यवहारे प्रवृत्ते शब्दार्थयोरभेदाख्यसम्बन्धविषयतोभयोः सिद्धा, अविभागदशायां तु पश्यन्त्यभिधानायां वाच्यवाचकभेदानुल्लासाद् नाध्यासचिन्ता काचित्, (९) एवमर्थशब्दस्वरूपयोरुभयोः शब्दाभिधेयत्वेऽपि अर्थापेक्षया स्वरूपस्यान्तरङ्गत्वाद् अहेयत्वादसाधारणत्वाच्च शब्दस्वरूपं मुख्यम् इति।

अस्त्यस्मिन् सम्बन्धसमुद्देशेऽपरो विषयो यस्य विशदीकरणेनाम्बाकर्त्र्या महानुपकारः कृतः। "ननूक्त एव संयोगसमवायलक्षणः सम्बन्धो वैशेषिकैरित्यत्र समुद्देशे शब्दार्थयोः सम्बन्धप्रतिपादने को विशेष इति शङ्कामुद्भाव्यात्र विषये विंशत्यधिकाः कारिकास्तत्रभवता भर्तृहरिणा समुपन्यस्ताः। प्रकाशसहितानामपि तासामर्थो न सर्वत्र सुगमः। अम्बाकर्त्र्याः साहाय्येन तु प्रतीयते तासामर्थः। अतोऽत्राम्बाकर्त्रीगतो मुख्यः सन्दर्भ उद्ध्रियते।

"पारतन्त्र्यं सम्बन्धधर्मं इति संयोगसमवाययोर्द्रव्यगुणादिषु पारतन्त्र्यसत्वाद्

गौण्या वृत्त्या तत्र सम्बन्धशब्दप्रवृत्तिः। केवलेन पारतन्त्र्येण संयोगसमवायौ सम्बन्धमनुकुरुतः, न तु नित्यपारतन्त्र्यलक्षणेनासाधारणेन धर्मेण। तथा च तयोः संयोगसमवाययोः सम्बन्धशब्दो गौणः, न तु वस्तुगत्या संयोगसमवायावेव सम्बन्धः। सम्बन्धसदृशौ तौ न तु सम्बन्धौ। अतः संयोगसमवायावेव सम्बन्धौ इति वैशेषिकाणामिव न वैयाकरणानां दर्शनम्। वैशेषिकैर्हि पदार्थीकृत एव संयोगः समवायो वाऽभ्युपगम्यते, तेन च शब्दार्थः प्रविभक्तुं न शक्यते। "तत्तच्छब्दस्य तत्तदर्थेन सह संयोगः समवायो वा सम्बन्ध इति स्वीकारे सर्वैः शब्दैः सर्वोऽप्यर्थः प्रतीयेत इति रीत्याऽतिव्याप्तिः स्यात्, संयोगसमवाययोः सर्वत्राविशेषात्। अदृष्टवशात्तु कस्यचिदेव शब्दस्य केनचिदर्थेन सह संयोग- समवायो वेति परिहारः। यदि तु संयोगसमवायान्यतरलक्षणसम्बन्धाविशेषेऽप्यर्थान्तरस्य न वाच्यत्वं तदा स्वार्थस्यापि न वाच्यत्वमित्यव्याप्तिः स्यात्। सोऽप्यदृष्टवशादेवातिव्याप्तिवत् परिहृता। यदि तु समवायसम्बन्धस्य न समवायशब्दवाच्यत्वम्, नापि घटादिशब्दवाच्यत्वमिति रीत्याऽवाच्यस्य तस्य क्वचिदपि वृत्त्याऽनुपस्थितत्वान्न सम्बन्धिनोर्योजकतया वाक्यार्थबोधगोचरत्वमिति रीत्या स्वार्थस्य स्वशब्दतोऽबोधेऽव्याप्तिरुच्यते, तदापि साक्षात् समवायसम्बन्धत्वेन रूपेण समवायसम्बन्धस्य समवायशब्दावाच्यत्वम्, कल्पितेन तु समवायत्वेन रूपेण समवायशब्दसम्बन्धितया वाच्यत्वमिति नास्ति अव्याप्तिः। यदि तु तटस्थस्य = शब्दार्थयोः सम्बन्धिनोः संयोजने निरपेक्षस्य समवायशब्देनाभिमुखीकृतस्य वाच्यतया श्रोतुरभिमुखीकृतस्य समवायस्य समवायत्वेन रूपेणापि समवायशब्दावाच्यत्वमुच्यते, तदा प्रतीतिविरोधः, समवायशब्दात् समवायत्वेन रूपेण समवायप्रतीतेरनुभवसिद्धत्वादिति रीत्या प्रौढिवादितया शास्त्रान्तरसिद्धसम्बन्धाश्रयेणापि शब्दार्थनियम एतावता सन्दर्भेण व्यवस्थापित" इति।

एवं संयोगसमवाययोर्वैशेषिकदर्शनप्रसिद्धयोः शब्दार्थविषयेऽपर्याप्तत्वं समर्थ्य अवशिष्टे समुद्देशे वैयाकरणनिकायसिद्धं सम्बन्धमुपपादयति तत्रभवान् भर्तृहरिः। विद्वद्वरेण हेलाराजेन च सुष्ठु व्याख्यातोऽयमंशः। शब्दार्थसम्बन्धसम्बन्धीनि बहूनि मूलतत्त्वान्यवान्तरतत्त्वानि च तत्र प्रतिपादितानि। तानि चाम्बाकर्त्र्यां वैशद्येन व्याख्यातानि। त्रयमपि पठता मया यथा तान्यवगतानि, तथा संक्षेपत इत्थं वर्ण्यन्ते।

इन्द्रियाणां स्वविषयेष्विव शब्दानामर्थैरनादिः सम्बन्धो योग्यतारूपः। योग्यताया अनादित्वम्, अकृत्रिमत्वम्, असङ्केतजनितत्वं स्वभावसिद्धत्वं च। इन्द्रियं कारकहेतुः, शब्दस्तु ज्ञापकहेतुः। योग्यतैव वाच्यवाचकभावः, प्रकाश्यप्रकाशकभावश्च। यद्यपि न सा सङ्केतकृता तथापि वृद्धव्यवहारदर्शनरूपात् समयाद्योग्यतासंविद् भवति। डित्थादिशब्दानामपि स्वार्थैर्नित्यः सम्बन्धः। अपभ्रंशानामर्थबोधकत्वेऽपि न वाचकत्वम्। साधुशब्दा एव वाचकाः। साधुशब्दाः प्रत्यक्षपक्षेणार्थं बोधयन्ति, अपभ्रंशास्तु अनुमानपक्षेण। शब्दानामर्थप्रत्यायनशक्तिरन्या दृष्टादृष्टप्रयोजनसाधनशक्तिरन्या। शब्दार्थयोः कार्यकारणभावोऽपि तत्र भवद्भर्तृहरिसम्मतः। उभयथा कार्यकारणभावो वर्णितः। धूमाग्निवैलक्षण्येनाभेदोऽध्यासः शब्दार्थयोः सम्बन्धः। विवक्षितोऽर्थः शब्दसम्भेदशून्यो नास्ति। अर्थ-

संवलितः शब्दः स्वरूपाच्छुरणयार्थं बोधयति । शब्दार्थो बुद्ध्युपारूढः । अत एव सम्बन्धस्य नित्यत्वम् । इदमेव शब्दार्थसम्बन्धस्य प्रवाहनित्यत्वम् । बौद्धार्थ एव शब्दस्य वाच्यः कार्यश्च । स बाह्यार्थसदृशः । असत्यपि बाह्यार्थे शब्दार्थप्रतीतिर्भवति । अर्थस्य बाह्यसत्तैव मुख्यसत्ताऽथवा सम्प्रतिसत्ता । बुद्धिसत्ता त्वौपचारिकी बुद्ध्या निरूपितार्थविषया । अवधीरितबहिर्गतभावाः शब्दाः । सतोऽसतो वाऽर्थस्य बुद्धौ प्रतिभानमपि सत्ताया एव प्रकारः । सर्वे शब्दा अस्यामुपचारसत्तायां व्यवस्थिताः । उपचारसत्ता अभ्युपगन्तव्या । अन्यथा 'अङ्कुरो जायते, अस्ति, नास्ति' इत्यादिव्यवहाराणामनुपपत्तिः । अभ्युपगतायामुपचारसत्तायां तु कर्तृकल्पनया कर्मकल्पनया क्रियाकल्पनया च 'अङ्कुरो जायते' इत्यस्योपपत्तिः । 'अस्ति' इति व्यवहारस्यापि तस्यामेवोपपत्तिः । उपचारसत्तासमाविष्टस्य बाह्यसत्ताप्रतिपादनाय 'अस्ति' इति प्रयोगः । येषामर्थानां बाह्यो विरोधस्तेषां बुद्धिसत्तायां न विरोधः । बुद्ध्या निरूप्य शब्दप्रयोगः क्रियते । विद्यमानमपि बुद्ध्यगृहीतं न व्यवहारविषयः । पूर्वोक्तस्य तत्त्वस्याऽऽनुषङ्गिकं तत्त्वमिदं यदस्माकमर्वाग्दर्शनानां शाब्दो व्यवहारो न यथातत्त्वं प्रवर्तते । व्यवहारे त्रितयमवतरति–शब्दोऽर्थो ज्ञानं च । त्रयाणामप्यशुद्धिः । पूर्णं तत्त्वं स्प्रष्टुमसक्त इति शब्दस्याशुद्धिः । जात्याद्युपहितोऽर्थो व्यवहारविषयः । सोपाधिश्चार्थः स्वरूपविप्रकृष्ट इति अर्थाशुद्धिः । ज्ञानं च विषयोपरक्तमिति ज्ञानाशुद्धिः । भावाभावौ परोपाधिकरूपाविति तयोः समकक्ष्यता । तयोर्भेदाभ्युपगम इयं स्थितिः । वस्तुतो भावाभावयोरभेदः । भावस्यैव पूर्वोत्तरयोरवस्थयोरभावव्यवहारः । परमार्थतया सर्वव्यवहारातीततत्त्वं भावाभावतया प्रतिभासमानरूपं जगत् सांवृतेन रूपेणाविचारितसिद्धम् । यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम्, तस्यैवार्थस्य सत्यत्वम्; परन्तु शाब्दो व्यवहारो भेदेष्वेवोपप्लवते ।

शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः (वा० सं०७२) इति ह्युक्तेः ।

अस्य प्रकरणस्य हेलाराजशब्दैरयं निष्कर्षः—

सर्वपरिकल्पातीतं तत्त्वं समाविष्टं सर्वाभिः शक्तिभिर्ब्रह्म यथायथं व्यवहारे भावाभावरूपतया तत्तदुपाधिखचितं शब्दाः प्रतिपादयन्तीति अभावाभिधायिनामपि भावशब्दैस्तुल्यः सम्बन्धोऽविशेषाच्छब्दानाम् इति प्रकरणतात्पर्यमुपसंहृतम् इति । यानीमान्यत्र वैयाकरणनिकायसिद्धानि शब्दार्थसम्बन्धविषयकाणि तत्त्वान्यतिसंक्षेपेण वर्णितानि, तत्कारिकाप्रकाशगताम्बाकर्त्रीं पठित्वा यथाशक्त्यवबोधनेन । विस्तरस्तु पाठकैरम्बाकर्त्र्याः स्वयं परिशीलनेनावगन्तव्यः ।

अम्बाकर्त्र्याः सौष्ठवमधिकृत्य कियद्वोच्यताम् । सर्वैरपि विद्वज्जनैरधुनेदमेवाशाऽऽस्यते यत् सकलजगदन्तर्यामी भगवान् काशीविश्वनाथो विद्वन्मूर्धन्यश्रीरघुनाथशर्ममहाभागेभ्यः स्वास्थ्यं दीर्घमायुश्च प्रददातु येनावशिष्टप्रकाशसहितवाक्यपदीयतृतीयकाण्डगताम्बाकर्त्र्यपि विलम्बं विना प्रकाशिता भवेद् इति शम् ।

लक्ष्मणपुरी–५-१२-७३ कोे० अ० सुब्रह्मण्य अय्यरः

# विषयानुक्रमणिका

## द्रव्यसमुद्देशः



## सम्बन्धसमुद्देशः

॥ श्रीगणेशाम्बिकाभ्यां नमः ॥

# वाक्यपदीयम्

श्रीहेलाराजविरचित'प्रकाश'-
श्रीरघुनाथशर्मविरचित'अम्बाकर्त्री'-
टीकाद्वयोपेतम्

## अथ तृतीयकाण्डः

### जातिसमुद्देशः

#### प्रकाशः

यस्मिन् सम्मुखतां प्रयाति रुचिरः कोऽप्यन्तरुज्जृम्भते
नेदीयान् महिमा मनस्यभिनवः पुंसः प्रकाशात्मनः ।
तृप्तिं यत्परमां तनोति विषयास्वादं विना शाश्वतीं
धामानन्दसुधामयोर्जितवपुस्तत्प्रातिभं संस्तुमः ॥१॥
काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः ।
प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः ॥२॥
तच्छेषभूते काण्डेऽस्मिन् सप्रपञ्चे स्वरूपतः ।
श्लोकार्थद्योतनपरः प्रकाशोऽयं विधीयते ॥३॥

---

॥ ॐ नमः श्रीभगवत्पाणिनिकात्यायनपतञ्जलिभ्यः ॥

#### अम्बाकर्त्री

शुण्डादण्डं कुण्डलीकृत्य कूले क्रीडन् देवो देवनद्याः प्रतीतः ।
आखुं खात्वा भूमिगर्ते विशन्तं कर्षन् दोर्भ्यां मङ्गलं संतनोतु ॥१॥
बद्धश्रद्धाश्चरणयुगले वत्सलाश्चाङ्कपाल्यो-
र्ग्लानिम्लाना उरसि महति व्याप्तमुण्डेऽतिभीताः ।
कण्ठे मालीकृतफणिपतौ सस्पृहाश्चारुवक्त्रे
पत्युर्मूर्ध्नि प्रसरपरुषा दृष्टयः पान्तु मातुः ॥२॥
सुप्तिङन्ते पदे यस्याः प्रियमेव महच्छिरः ।
मोदस्तु दक्षिणः पक्षः प्रमोदश्चोत्तरः श्रुतः ॥३॥
संदेहो बहुलो यस्या रयिर्जलभृतो यतः ।
ब्रह्म पुच्छं प्रतिष्ठा च तां चितिं पक्षिणीं नुमः ॥४॥

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥१॥**

इह पदार्थाष्टकविचारपरत्वाद् वाक्यपदीयस्य प्रथमकाण्डेन प्रयोजनादिपदार्थ निर्णीतेऽनन्तरकाण्डोपपादितोपपत्तिभिर्वाक्यतदर्थयोरन्वाख्येयस्थितलक्षणयोः पदार्थयोर्निर्णीतत्वात् तदौपयिकापोद्धाररूपपदविचारः प्रक्रम्यते । तत्रानियतविकल्पो यथाभिप्रायमपोद्धार इति यथासम्भवं पदभेदानुद्दिशति—

वाक्यस्यैव निरंशस्य वाचकत्वादन्तरा पदप्रतिपत्तिर्विभ्रम इति किमसत्येन पदेन व्युत्पादितेनेत्याशङ्क्य 'अपोद्धृत्यैव वाक्येभ्यः' इत्याह । अपोद्धृत्य कल्पना बुद्ध्या पृथक् पदं निष्कृष्य । अखण्डवाक्यव्युत्पत्तावुपायः पदव्युत्पत्तिर्वाक्यवादिनाम्, अखण्डपदव्युत्पत्ताविव परिकल्पितरूपप्रकृतिप्रत्ययागमादेशादिव्युत्पत्तिः

याऽशेषप्राणिवर्गस्य व्याहारव्यवहारयोः ।
कारणं प्रतिभा सा मे समुदेतु सदा हृदि ॥५॥
यस्यां समुदितायां सा विषयास्वादवर्जिता ।
तृप्तिः परमिका नित्या प्रतिभा सा प्रसीदतु ॥६॥
याऽसङ्गस्य प्रकाशस्य पुंसः परतमात्मनः ।
शब्दानुविद्धं चिद्रूपं वपुः सा मे प्रसीदतु ॥७॥
यस्मिन् स्वान्ते समुद्भूते चिद्रूपस्य परात्मनः ।
नैकट्यमेति महिमा प्रातिभं धाम तत् स्तुमः ॥८॥
येन काण्डद्वयं पूर्वं विवृतं वृत्तिसंश्रयात् ।
तृतीयं स्वप्रतिभया हेलराजः स मे गतिः ॥९॥

इदं हि वाक्यपदीयं पदार्थाष्टकविचारपरम् । पदार्थाष्टकं च—"अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः" इत्यादिना कारिकाकलापेन प्रथमकाण्डे प्रदर्शितम् । तत्र प्रथमेन ब्रह्मकाण्डेनास्य ग्रन्थस्य विषयप्रयोजनसंबन्धाधिकारिरूपानुबन्धचतुष्टये निर्णीय प्रदर्शिते द्वितीयकाण्डे समुपस्थापितयुक्तिभिर्वाक्यतदर्थान्तर्गतयोरन्वाख्येय-स्थितलक्षणयोः पदतदर्थयोर्निर्णीतत्वात् तत्रापयुक्तोऽपोद्धाररूपपदविचारः प्रारभ्यते । तत्र यद्यपि "मुण्डे मुण्डे मतिर्भिन्ना" इति न्यायेन प्रयोक्तॄणां बोद्धॄणाञ्चाभिप्रायभेदेनानियतो वाक्यतदर्थेभ्यः पदतदर्थानामपोद्धारस्य विकल्पः, तथापि स्वयमुत्प्रेक्ष्य यथासम्भवं पदभेदान् उद्दिशति—द्विधा कैश्चित् पदमिति ।

अयमर्थः—कैश्चित् = आचार्यैः, वाक्येभ्यः पदानि अपोद्धृत्यैव = कल्पनया पृथक्कृत्यैव, न तु वस्तुस्थितिमनुरुध्य, पदं द्विधा = द्वाभ्यां प्रकाराभ्याम्, भिन्नम् = भेदेनाभ्युपगतम्, वस्तुतोऽखण्डाद् वाक्यादपोद्धृत्यैव नामाख्यातभेदेन पदं द्विधा स्वीकृतमिति यावत् । उपसर्गकर्मप्रवचनीयानामाख्यात एवान्तर्भावः, क्रियागतविशेषद्योतकत्वात् ।

पदवादिनाम् । आनन्त्याद्धि वाक्यानां स्वालक्षण्येनाशक्या व्युत्पत्तिः कर्तुमिति सदृशपदद्वारा तदुपपत्तिरित्यर्थः ।

उभयोरपि चापोद्धृतस्यासत्यत्वं समानम् । तथा हि—अनियतानुपूर्वीको यथार्थं परिकल्पितान्वयव्यतिरेकनिबन्धनो वाक्यवादिनां पदापोद्धारः । एवं पदवादिनां शास्त्रीयान्वयव्यतिरेकनिमित्तार्थापोद्धारवशः प्रकृतिप्रत्ययाद्यपोद्धारः । यदाह वाक्यकारः—

'सिद्धं त्वन्वयव्यतिरेकाभ्याम्' इति ।

तत्र भिन्नत्वं सामान्यम्, द्विधा-इत्यादिको विशेष इति विधार्थे धाप्रत्ययोपपत्तिः । प्रकारो हि विधार्थः, स च सामान्यस्य भेदको विशेषः,सादृश्यमेव सर्वत्र प्रकारः

---

निपातानां तु = सत्त्वप्रधानानां स्वरादीनां नाम्नि, क्रियाप्रधानानां तु हिरुगादीनामाख्यातेऽन्तर्भाव इति भावः ।

कैश्चित्तु नामाख्यातोपसर्गनिपातभेदेन पदं चतुर्धा भिन्नम् । नामाख्याते हि साक्षादर्थं वदतः, उपसर्गनिपातौ तु = तदर्थगतविशेषद्योतकाविति पृथक् कृतौ, कर्मप्रवचनीयानां तु क्रियाविशेषप्रकाशनादुपसर्गेष्वेवान्तर्भाव इति । वा = अथवा कैश्चित्पदं नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदेन पञ्चधापि भिन्नम् । कर्मप्रवचनीयानामुपसर्गवत् साक्षात् क्रियाविशेषप्रकाशकत्वाभावादुपसर्गेष्वन्तर्भावासम्भवात् । तथाहि—शाकल्यस्य संहितामनु प्रावर्षत् इत्यत्र संहितानिशमनपूर्वकत्वरूपः प्रवर्षणक्रियागतो विशेषोऽनुना न साक्षाद् द्योत्यते । निशमनक्रियाया अश्रुतत्वात्, किन्तु संहिताप्रवर्षणयोर्हेतुहेतुमद्भावावद्योतनपुरस्सरं स द्योत्यत इति न साक्षात् क्रियाविशेषप्रकाशकेषूपसर्गेषु तेषामन्तर्भाव इति कर्मप्रवचनीयानामुपसर्गतः पृथक् क्रियया पञ्चधापि कैश्चित्पदं कल्पितमिति । प्रकृतिप्रत्ययादिवत्—यथा पदवादिनां मते पदार्थेभ्यः शास्त्रीयान्वयव्यतिरेकनिमित्तकः प्रकृत्यर्थप्रत्ययार्थादीनामपोद्धारस्तन्निमित्तकश्च प्रकृतिप्रत्ययाद्यपोद्धार इति । अत्रादिपदेनागमा विकाराश्च गृह्यन्ते । तेषामपि हि भावाभावाभ्यामर्थभेदोऽवसीयत इति । तत्र विकारस्योदाहरणम्—"रञ्जेर्णौ मृगरमणे नलोपो वाच्यः" इति । आगमस्योदाहरणम्—'भवती, भवन्ती' इति । तत्राद्ये स्त्रीत्वपूज्यत्वोभयविशिष्टसंबोध्यार्थावगतिः, द्वितीये तु स्त्रीत्वविशिष्टवर्तमानकालिकभवनकर्तृरूपार्थावगतिरिति । अयं तु कारिकायाः परमोऽर्थनिष्कर्षः ।

अखण्डं वाक्यमेव वस्तुतो वाचकम्—वाक्यवाक्यार्थयोरन्तराले पदपदार्थयोरवबोधस्तु विभ्रम इति महता संरम्भेण द्वितीयकाण्डे व्यवस्थापितम् । एवं चासत्यानां पदानां व्युत्पादनाय व्याकरणारम्भो न युक्तः, वाक्यानामेव वाऽन्वाख्यानं युक्तमित्याशङ्क्य अपोद्धृत्यैव वाक्येभ्य इति तत्समाधानमाह ।

अयमर्थः—अखण्डवाक्यवादिनां मते कल्पनारूपया बुद्ध्या वाक्येभ्यः पदानि पृथग् निष्कृष्यैव व्युत्पादितानि, न तु परमार्थानि पदानि मत्वा । तत्र दृष्टान्तमाह—प्रकृतिप्रत्ययादिवदिति ।

कैश्चिदिष्यत इत्येकीयमतम्, कैश्चिद् इति वचनात् । भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते इत्युक्तेः । यदि वा अत्र बुद्धिरूपप्रकल्पितम् सादृश्यमेव विधार्थः । ज्ञानप्रतिबिम्बितस्य हि बाह्यानुकारित्वेन सादृश्यं सर्वत्र प्रकारार्थः, संकल्पितसादृश्यस्य बाह्यस्य निवर्तनात् वाक्याच्चापोद्ध्रियमाणस्य पदस्य वाक्यार्थांशपरिकल्पनया अर्थवत एवापोद्धारो युक्तः । अर्थापोद्धार एव हि पदापोद्धारस्य निमित्तम् । अनिमित्ते हि तस्मिन् वर्णापोद्धारस्यापि प्रसङ्गात् तेषामपि व्युत्पाद्यता स्यात् ।

वाक्यार्थश्च स्थितलक्षणो निरंशः कारकोत्कलितशरीरक्रियास्वभावः । तत्र चांशांशिकल्पनया अपोद्धारे कारकात्मा क्रियात्मा चांशो विभागार्ह इति सिद्धसाध्य-

---

अयं भावः—यथा अखण्डपदवादिनां मते परिकल्पितरूपाणां प्रकृतिप्रत्ययागमादेशादीनां व्युत्पत्तिरखण्डपदव्युत्पत्तावुपाय इति असत्त्या एव प्रकृतिप्रत्ययादयो वस्तुभूतेभ्यः पदेभ्यः कल्पनया पृथक्कृत्य व्याकरणेन व्युत्पादिताः । एवं वाक्यवादिनां मते पदव्युत्पत्तिरखण्डवाक्यव्युत्पत्तावुपाय इति कृत्वा असत्यान्येव पदानि कल्पनया वाक्येभ्योऽपोद्धृत्य व्याकरणेन व्युत्पादितानीति । वाक्यवादिनां मते प्रतिव्यक्तिवाक्यव्युत्पत्तिस्तु व्याकरणेन कर्तुमशक्या, वाक्यानामानन्त्यादिति वाक्यघटकत्वेन कल्पितानां पदानां सदृशानि यानि वाक्येभ्यः पृथग्भूतानि स्वतन्त्राणि पदानि 'प्रविश पिण्डीम्' इत्यादीनि, तद्व्युत्पादनद्वारा व्याकरणेनाखण्डवाक्यव्युत्पादनं युक्तमेवेति । उभयोरपि च वाक्यवादिपदवादिनोर्मते कल्पनयाऽपोद्धृतस्य पदस्य प्रकृतिप्रत्ययादेर्वाऽसत्यत्वं समानमेव ।

तथा हि—वाक्यवादिनां मते वाक्यात् पदापोद्धारोऽनियतानुपूर्वीकः, यतोऽर्थानुसारेण परिकल्पितौ यावन्वयव्यतिरेकौ तत्प्रयुक्तः । यथा—'सत्यप्रीतिविधानदक्षः' (का० प्र० श्लिष्टमालारूपके) इत्यादौ 'सत्यामप्रीतिविधाने दक्षः 'सत्ये प्रीतिविधाने दक्षः' इत्यर्थद्वयानुसारेण परिकल्पितान्वयव्यतिरेकल्पितः पदापोद्धारोऽनियतानुपूर्वीकः । एवं पदसत्यत्ववादिनां मते प्रकृतिप्रत्ययापोद्धारोऽनियतानुपूर्वीकः । यतो लोके प्रकृतिप्रत्ययादीनामप्रयुक्तत्वात् शास्त्रीयान्वयव्यतिरेकनिमित्तको योऽर्थापोद्धारस्तत्प्रयुक्तः सः । यथा—'हंसायते' ( सा० द० रसनोपमा ) इत्यादौ केचित् ( पाणिन्यादयः ) क्यङ्प्रत्ययम्, केचित्तु ( कातन्त्रे ) आयप्रत्ययमाहुरिति । तदुक्तं वार्त्तिककृता—'सिद्धन्त्वन्वयव्यतिरेकाभ्यामिति' ।

अस्यार्थः—वाक्यात् पदानामपोद्धरणम्, पदाद्वा प्रकृतिप्रत्ययादीनामपोद्धरणम्, लौकिकाभ्यां शास्त्रीयाभ्यां वा परिकल्पिताभ्यामन्वयव्यतिरेकाभ्यां सिद्धमिति । 'द्विधा कैश्चित् पदं भिन्नम्' इत्यत्र भिन्नत्वम् = भेदः, सामान्यम् = व्यापको धर्मः । द्वित्वादिकं तु तस्य विशेषः = व्याप्यो धर्म इति. द्विधा-इत्यादौ विधार्थे धाप्रत्यय उपपद्यते । यतः प्रकार एव विधार्थः । प्रकारश्च सामान्यस्य = साधारणधर्मस्य, भेदकः = सामानाधिकरण्यसम्बन्धेन स्वं विशेषणीकृत्य व्यावर्तकः, विशेषः । प्रकृते च द्वित्वं भेदे सामानाधिकरण्यसम्बन्धेन स्वं विशेषणीकृत्य तं त्रित्वादिसमानाधिकरणाद् भेदाद् व्यावर्तयति ।

लक्षणांशद्वयविषयः। पदापोद्धारो द्विविधो नामाख्यातरूपः प्राथमकल्पिकः, शक्तिशक्तिमतोरभेदात् कारकात्मा सिद्धरूपोंऽशः। यद्यपि च नामपदानां प्रत्ययार्थस्य संख्यादेः शाब्दं प्राधान्यम्, तथाप्यर्थतः प्रातिपदिकार्थस्य जात्याच्छुरितस्य द्रव्यस्यैव प्राधान्यं सिद्धरूपस्य, संख्याकारकशक्तीनां तदाश्रयत्वात्। अनयोरेव च नामाख्यातयोर्विशेषणत्वान्निपातोपसर्गकर्मप्रवचनीयलक्षणः पदभेदोऽन्तर्भवति।

तथा हि—सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन्निपातस्तत्रैवान्तर्भवति। सिद्धं ह्यर्थं साक्षाद् वाभिदधातु, तद्गतं विशेषं वा प्रकाशयतु, नेयता भेदः। स्वरादयस्तु केचित् सत्त्वप्रधाना एवेति तेऽपि नामपदमेव। ये तु हिरुगादयः क्रियाप्रधानाः, तेषामाख्यातेऽन्तर्भावः। न हि तिङन्तमेवाख्यातम्, क्रियाप्रधानस्य सर्वस्यैव तल्लक्षणत्वात्। अत एवोपसर्गकर्मप्रवचनीयपदान्यप्याख्यातपदमेव, साध्यार्थगतविशेषद्योतनात्। एवं निपातोऽपि। तद्गतभेदान्तरविवक्षायान्तु निपातोपसर्गयोरपि

---

यत्तु—'सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते' ( वा० वृत्ति ६२१ ) इत्युक्तम्, तदेकीयमतम्, कैश्चिदिति वचनात्। 'भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते' ( वा० वृत्ति० ६२१ ) इत्युक्तेस्तु भेदविशेषरूपः प्रकारार्थः प्रागुक्तः। सादृश्यरूपप्रकारार्थवादिमते तु, अत्र = द्विधा इत्यादौ, बुद्धिरूपप्रकल्पितम् = बुद्धिरूपे, ज्ञानस्वरूपे प्रतिबिम्बस्य आन्तरस्य बाह्यानुकारित्वेन प्रकल्पितं सादृश्यमेव विधार्थः। एवं चात्र 'द्विधा इत्यस्य द्वयोर्नामाख्यातपदयोर्बाह्ययोरनुकारित्वेन सदृशमान्तरं ज्ञाने प्रतिबिम्बरूपमान्तराद् वाक्याद् बाह्यवाक्यसदृशाद् अपोद्धृतं नामाख्यातरूपं पदद्वयं भेदेन कल्पितं कैश्चिदित्यर्थः।

अत्र चैकीयमते ज्ञानप्रतिबिम्बितस्य बाह्यानुकारित्वेन सादृश्यमेव सर्वत्र प्रकारपदार्थः, सङ्कल्पितसादृश्यस्य बाह्यस्य निवर्तनात्। सम्यक् कल्पितं स्वसादृश्यमान्तरे येन, तादृशस्य बाह्यस्य निवर्तनात् = विधेयान्वयनिवर्तनात्। तद्यथा प्रकृते 'द्विधा भिन्नम्' इत्यत्र द्वयोर्बाह्ययोर्नामाख्यातयोः सदृशमान्तरमेव नामाख्यातरूपं पदद्वयं भिन्नत्वरूपे विधेयेऽन्वेति, न बाह्यमिति वाक्यार्थस्य च वस्तुतोऽखण्डस्यापोद्धारेण पदार्थरूपांशपरिकल्पनया कल्पिताभ्यां तदन्वयव्यतिरेकाभ्यां च वाक्यादपोद्ध्रियमाणस्य पदस्यार्थवत एवापोद्धारो युक्तः; यतः पदार्थापोद्धार एव पदापोद्धारस्य निमित्तम्। अन्यथाऽनिमित्ते पदापोद्धारे स्वीक्रियमाणे वर्णापोद्धारस्यापि प्रसङ्गाद् वर्णानामपि व्याकरणेन व्युत्पाद्यता स्यादिति। पदार्थापोद्धारावधिर्वाक्यार्थश्च वस्तुतः स्थितलक्षणः = पदार्थैरभावितस्वरूपः—पदार्थाघटितः—अकृत्रिम इति यावत्। अत एव नित्यत्वान्निरंशः। कारकोत्कलितक्रियास्वभावः = कारकैरुत्कलितमनुविद्धमनुस्यूतं शरीरं यस्याः सा तथाभूता क्रिया, स्वभावः = स्वरूपं यस्य वाक्यार्थस्य, स तादृशः। इदं च प्रतीतितो न वस्तुतः। तत्र च निरंशे वाक्यार्थेऽशांशिकल्पनयाऽपोद्धारे क्रियमाणे कारकात्मा क्रियात्मा च पदार्थरूपोंऽशो विभागार्ह इति सिद्धसाध्यस्वभावांशद्वयविषयको द्विविधः—पदापोद्धारो नामाख्यातरूप इति प्रथमः कल्पः।

**कैश्चित् पृथक्करणम्। तथा हि—अस्त्येवापोद्धारेऽर्थमात्राविशेषोऽनयोः। न ह्येतौ साक्षादर्थं वदतः; अपि तु तद्गतविशेषद्योतकाविति वाचकाभ्यां नामाख्याताभ्यां प्रविभक्तौ। सिद्धसाध्यार्थविषयविशेषद्योतकत्वान्निपातानां साध्यैकनियतत्वाच्चोपसर्गाणां परस्परतो भेदः। कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसंबन्धावच्छेदहेतव इति संबन्धविशेषद्योतनद्वारेण क्रियाविशेषप्रकाशनादुपसर्गेष्वेवान्तर्भवन्तीति चतुर्धा एव कैश्चित् पदं भिन्नम्।**

**साक्षात्क्रियाविशेषप्रकाशनाभावात्तदपि पञ्चमं पदमिति कैश्चित्। तथा हि—कर्म प्रोक्तवन्तः कर्मप्रवचनीया इत्यतिक्रान्तक्रियाख्यानलक्षणस्य व्यापारस्यात्र संभवः, न तु वर्तमानस्येत्युपसर्गेभ्यो भेदः। क्रियागतविशेषद्योतनपूर्वकं हि संबन्धावच्छेदनमत्र वर्तमानम्। तथा हि सर्वः संबन्धः क्रियाकृतः, उपकारप्रभावितत्वात् तस्य, क्रिया-**

---

तत्र यद्यपि कारकं शक्तिरूपम्, तथापि शक्तिशक्तिमतोरभेदोपचारात् कारकात्मा सिद्धरूपोंऽशो द्रव्यस्वभावः, शक्तेस्तु स्वरूपेण न द्रव्यस्वभावतेति विवेकः। यद्यपि च नाम-प्रकृतिकेषु सुबन्तलक्षणेषु पदेषु प्रत्ययार्थस्य संख्यायाः कारकशक्तेश्च शाब्दं प्राधान्यम्, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति न्यायात्, तथापि प्रातिपदिकार्थस्य जात्याच्छुरितस्य = तत्तज्जातिविशिष्टस्य, सिद्धरूपस्य द्रव्यस्यैवार्थतः प्राधान्यं तत्तद्विधेयान्वययोग्यस्य, संख्याकारकशक्तीनां तदाश्रितत्वात्। निपातोपसर्गकर्मप्रवचनीयानां नामाख्यातार्थविशेषावद्योतकत्वाच्च तदर्थस्याभेदेन नामाख्यातार्थविशेषणत्वादनयोरेव नामाख्यातपदयोर्निपातोपसर्गकर्मप्रवचनोयलक्षणानि पदान्यन्तर्भवन्ति।

तथा हि—लिङ्गसंख्यान्वितं द्रव्यस्वभावं सिद्धमर्थमभिदधाति नामपदमिति तदर्थगतं विशेषं द्योतयन् निपातस्तत्रैवान्तर्भवति। नहि साक्षात् सिद्धार्थाभिधायकत्वं नामपदत्वप्रयोजकम्, न तु नामार्थगतविशेषावबोधकत्वमित्यत्र किञ्चिन्मानमस्ति। यथाकथञ्चिन्नामार्थविबोधकत्वस्यैव नामपदत्वे प्रयोजकत्वात् संकोचे मानाभावात्। यानि त्वव्ययानि निपातातिरिक्तानि, तेषु केचित् स्वरादयः सत्त्वप्रधाना एव, स्वर्गादिरूपार्थवाचित्वादिति तेऽपि नामपदमेव। ये तु तेषु हिरुगादयः क्रियाविशेषावद्योतकत्वेन क्रियाप्रधानास्तेषामाख्यातेऽन्तर्भावः। नहि तिङन्तमेवाख्यातम्, 'भावप्रधानमाख्यातम्' (निरुक्त १।१) इति लक्षणेन क्रियाप्रधानस्य सर्वस्यैवाख्यातत्वात्। अत एवोपसर्गकर्मप्रवचनीयपदान्यप्याख्यातपदमेव, भावार्थगतविशेषद्योतकत्वात्। एवं निपातोऽपि क्रियागतविशेषद्योतक आख्यातपदमेव। नामाख्यातगतविशेषान्तरविवक्षायान्तु निपातोपसर्गयोरपि कैश्चिन्नामाख्याताभ्यां पृथक्करणम्।

तथा हि—अस्त्येव नामाख्याताभ्यां पृथग् निपातोपसर्गयोर्वाक्यादपोद्धारे निमित्तभूतोऽनयोरर्थस्वरूपे विशेषः। न ह्युपसर्गनिपातौ साक्षादर्थं वदतः; किन्तु नामाख्यातार्थगतविशेषद्योतकाविति वाचकाभ्यां नामाख्याताभ्यां द्योतकत्वेन प्रविभक्तौ। निपातोपसर्गयोरपि च परस्परं भेदः। सिद्धसाध्यार्थगतविशेषद्योतकत्वाद् निपातानाम्, उप-

**मन्तरेणोपकाराभावात्। तत्र क्वचित् क्रियाशब्दः श्रूयते, क्वचिन्न। यत्र श्रूयते, तत्र श्रौत एव संबन्धविशेषावसायः, तद्यथा मातुः स्मरति, मातुः स्मृतम्, सर्पिषो जानीत इत्यादौ। क्रिया हि स्वभावादेव क्रियान्तरव्यवधानमन्तरेण द्रव्यैः संयुज्यते। अन्ये तु यस्मान्मातृविषये प्रवर्ततेऽवतिष्ठते वा, तस्मान्मातृसम्बन्धीदं स्मरणमिति क्रियाकारकभावपूर्वक एवायमपि संबन्ध इति वर्णयन्ति।**

**अश्रुते तु क्रियापदे द्वयी गतिः। क्वचित् संबन्धिस्वरूपमहिम्नैव नियतक्रियाक्षेपसिद्धेः प्रतिनियतक्रियाकारकभावपूर्वकत्वं शेषसंबन्धस्य विनैव कर्मप्रवचनीयमवगम्यते। तद्यथा—उपगोरपत्यम्, वृक्षस्य शाखेत्यादावपत्यापत्यवत्संबन्धो जनिक्रियानिमित्तोऽवयवावयविसंबन्धश्च स्थितिक्रियानिमित्त इत्यादि। क्वचित्तु संबन्धानां प्रतिनियतक्रियापूर्वकत्वावधारणे नास्ति सामर्थ्यम्। तद्यथा—राज्ञ पुरुष इत्यत्र स्वस्वामिभावो भरणा-**

---

सर्गाणां च साध्यार्थमात्रगतविशेषावद्योतकत्वात्। 'उपसर्गाः क्रियायोगे' (१।४।५९) इति पाणिनिसूत्रात्। कर्मप्रवचनीयास्तूपसर्गेष्वेवान्तर्भवन्ति।

तथा हि—कर्मप्रवचनीयाः क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतवः = क्रियाविशेषेणोपजनितो यः सम्बन्धस्तस्य योऽवच्छेदो निर्णयस्तद्धेतव इति सम्बन्धविशेषद्योतनद्वारेण क्रियाविशेषप्रकाशनादुपसर्गेष्वेवान्तर्भवन्ति। तद्यथा शाकल्यस्य संहितामनुप्रावर्षदित्यत्र संहिताप्रवर्षणयोर्हेतुहेतुमद्भावरूपः सम्बन्धो निशमनक्रिययोपजनितः। अन्यथा तयोर्हेतुहेतुमद्भावासम्भवात्, तस्य च सम्बन्धस्य परिच्छेदहेतुरत्रानुः कर्मप्रवचनीय इति चतुर्धा कैश्चित्पदं भिन्नमिति। प्रागुक्तोदाहरणे कर्मप्रवचनीयस्यानोः सम्बन्धावद्योतनद्वारेण प्रवर्षणक्रियागतस्य निशमनक्रियापूर्वकत्वरूपस्य विशेषस्य प्रकाशकत्वेन साक्षात् क्रियाविशेषप्रकाशनाभावात् कर्मप्रवचनीयोऽपि पृथक् पञ्चमं पदमिति कैश्चित्पदं पञ्चधाऽपि भिन्नम्।

तथा हि—कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इत्यतिक्रान्तस्य क्रियाख्यानरूपस्य व्यापारस्यात्र कर्मप्रवचनीयेषु सम्भवः, न तु वर्तमानस्येत्युपसर्गेभ्यो वर्तमानक्रियाख्यानरूपव्यापारवद्भ्यो भेदस्तेषाम्। कर्मप्रवचनीयेषु हि क्रियागतविशेषावद्योतनं प्राक्, सम्बन्धविशेषपरिच्छेदनं तु तदुत्तरमित्येवं क्रियाविशेषाख्यानस्यातिक्रान्तत्वम्, सम्बन्धविशेषपरिच्छेदनस्य च वर्तमानत्वम्।

तद्यथा—शाकल्यस्य संहितामनु प्रावर्षदित्यत्र प्रवर्षणे निशमनक्रियापूर्वकत्वमनुना प्रागवद्योत्यते, पश्चात्तु संहिताप्रवर्षणयोर्हेतुहेतुमद्भावरूपः सम्बन्धः। तथा हि—सर्वोऽपि सम्बन्धः क्रियाकृतो भवति, संबन्धस्योपकारकृतत्वात्, उपकारस्य च क्रियैकसाध्यत्वात्। तत्र क्वचित् क्रियाशब्दः श्रूयते, क्वचिन्न। एवं च यत्र मातुः स्मरति, मातुः स्मृतम्, सर्पिषो जानीत इत्यादौ क्रियापदं श्रूयते, तत्र श्रूयमाणक्रियाकृत एव सम्बन्धविशेषपरिच्छेदः। यतः क्रियाया एष स्वभावः क्रियान्तरमद्वारीकृत्यैव द्रव्यैः सह संयोग इति। तत्राद्ययोर्विषयविषयिभावरूपः सम्बन्धः। तृतीये तूपायोपेयभावरूप इति।

ह्यनेकक्रियानिमित्त इत्येवावगम्यते। क्रियाविशेषस्तु नावधार्यते तन्निमित्तभूतः। तथा च भाष्यम्—

'यदेतत् स्वं नाम तच्चतुर्भिः प्रकारैर्भवति, भरणादपहरणात् क्रयणाद् याच्ञया'। ( म. भा. २,३,१० ) इति। दानादीनां त्वन्यतमाविनाभावात् क्रिया अनुमीयत एव। क्वचित्त्वविनाभाविनी क्रियापि न प्रतीयते। तथा चैवंजातीयके विषये कर्मप्रवचनीयो नियतविशिष्टक्रियाकृतत्वं सम्बन्धस्य विशेषमवगमयति। तदुक्तम्—

---

अन्ये तु यस्मान् मातृविषये प्रवर्ततेऽवतिष्ठते वा = मातरि प्रवर्तते, मातरं प्रतीक्षते वा, तस्माद् मातृसम्बन्धीदं स्मरणमिति मातुः प्रवर्तनप्रतीक्षणक्रिययोरश्रूयमाणयोः कारकत्वादत्र मातृस्मरणयोर्विषयविषयिभावलक्षणः सम्बन्धोऽप्यश्रूयमाणक्रियाकृत एवेति वदन्ति।

इदं न युक्तम्। प्रवर्तनप्रतीक्षणयोः स्मृतिपूर्वकत्वेन 'यस्माद् मातृविषये प्रवर्ततेऽवतिष्ठते वा तस्माद् मातृसम्बन्धीदं स्मरणमित्युक्तेरनौचित्यादिति। यत्र तु क्रियापदं न श्रूयते, तत्र द्वयी गतिः। क्वचित् सम्बन्धिस्वरूपान्यथाऽनुपपत्त्यैव तदुपपादकनियतक्रियाक्षेपसिद्धेः। शेषपदार्थस्य सम्बन्धस्य प्रतिनियतक्रियाकारकभावपूर्वकत्वं कर्मप्रवचनीयं विनैवावगम्यते। तद्यथा—उपगोरपत्यमित्यत्रापत्यापत्यवद्भावरूपः सम्बन्धः क्रियानिमित्तकः। 'वृक्षस्य शाखा' इत्यादौ अवयवावयविभावरूपः सम्बन्धश्च वृक्षाधिकरणकस्थितिक्रियानिमित्तकः तत्तत्क्रियां विना तत्तत्सम्बन्धिसम्बन्धोभयस्वरूपानुपपत्तेः।

वस्तुतस्तूपगोरपत्यमित्यत्रापत्यापत्यवद्भावरूपः सम्बन्धो जनि-प्रतिग्रह-पालनाद्यनेकक्रियानिमित्तक इति नास्ति तस्य जनिक्रियाक्षेपकत्वे सामर्थ्यम्, जनिक्रियाया अनियतत्वात्। राज्ञः पुरुष इत्यत्र स्वस्वामिभावसम्बन्धस्य क्रियाविशेषाक्षेपकत्वाभाववत्। तथा हि क्वचित् सम्बन्धानां स्वस्य प्रतिनियतक्रियापूर्वकत्वावधारणे सामर्थ्यं नास्ति। तद्यथा—राज्ञः पुरुष इत्यत्र भरणाद्यनेकक्रियानिमित्तक इत्येवावगम्यते। तेषु क्रियाविशेषस्तु तत्सम्बन्धनिमित्तभूतो नावधार्यतेऽनियत्वात्। तथा च भाष्यम्—'यदेतत् स्वं नाम तच्चतुर्भिः प्रकारैर्भवति—भरणात्, अपहरणात्, क्रयणात्, याच्ञया" ( म. भा. २. ३. ५. ) इति। अस्यार्थः। यदेतत् स्वं नाम लोके प्रसिद्धम्, एतस्येदं स्वमिति। तदेतच्चतुर्भिर्हेतुभिर्भरणादिभिर्भवति। तत्र पितृपत्यादेः पुत्रकलत्रादिः स्वं भरणात्। क्षत्रियस्य राज्ञः स्वं विजयेनापहरणात् प्रतिभूपराज्यम्। वैश्यस्य क्रयणात् स्वं भाण्डधान्यपश्वादि। ब्राह्मणस्य याच्ञया स्वं गोभूहिरण्यादि। दानप्रतिग्रहादीनां याच्ञादानादिपूर्वकत्वं त्वनुमीयत एव, तेषां तदविनाभावात्। क्वचित्त्वविनाभाविन्यपि क्रिया न प्रतीयते। तद्यथा शाकल्यस्य 'संहितामनु प्रावर्षत्' इत्यत्र प्रवर्षणाविनाभाविन्यपि = निशमनाव्यवहितोत्तरकालिकप्रवर्षणव्यापिकाऽपि निशमनक्रियाऽनुना विना न प्रतीयते। तथा चैवंजातीयके विषये कर्मप्रवचनीयो नियतविशिष्टक्रियाकृतत्वं संबन्धस्य विशेषमवगमयति।

**जनयित्वा क्रिया काचित् संबन्धं विनिवर्तते।**
**श्रूयमाणे क्रियाशब्दे संबन्धो जायते क्वचित्॥**
(वा. का. २।१९७)
**स चोपजातः संबन्धो विनिवृत्ते क्रियापदे।**
**कर्मप्रवचनीयेन तत्र तत्र नियम्यते॥ इति।**
(वा. का. २।१९९)

**नियमस्तस्य नियतक्रियाजनितत्वम्। तथा हि—शाकल्यस्य संहितामनुप्रावर्षदिति योऽयं संहिताप्रवर्षणयोर्हेतुहेतुमद्भावलक्षणः सम्बन्धः स नियतक्रियाजनित इत्यनुना वेद्यते। अनुनिशम्येत्यत्रानोर्निशमयतिक्रियासाहचर्योपलब्धेरिह संपाठरूपत्वात् संहितायास्तदनुमानस्यौचित्यात् तत्र क्रियावचनत्वमस्यान्यत्रादृष्टशक्तेर्न कल्प्यम्।**

---

यथा प्रकृते संहिताप्रवर्षणयोर्हेतुहेतुमद्भावरूपसंबन्धस्य निशमनक्रियाकृतत्वरूपं विशेषं कर्मप्रवचनोयोऽनुरवद्योतयति। तदुक्तं हरिणा—

जनयित्वा क्रिया काचित् संबन्धं विनिवर्तते।
श्रूयमाणे क्रियाशब्दे संबन्धो जायते क्वचित्॥
( वा. प. २।१९७ )
स चोपजातः संबन्धो विनिवृत्ते क्रियापदे।
कर्मप्रवचनीयेन तत्र तत्र नियम्यते॥इति॥
( वा. प. २।१९९ )

आद्यपद्यस्यार्थः—अश्रूयमाणा काचित् क्रिया संबन्धं जनयित्वा विनिवर्तते। यथा उपगोरपत्यमित्यत्राश्रूयमाणा जनिक्रियाऽपत्यापत्यवद्भावरूपं सम्बन्धं जनयित्वा विनिवर्तते, अतः शाब्दबोधे सा न भासते। क्वचित् क्रियाशब्दे श्रूयमाणे सति तत्क्रियातः संबन्धो जायते—यथा मातुः स्मरति, सर्पिषो जानीत इत्यादौ।

द्वितीयपद्यस्यार्थः—स चाश्रूयमाणक्रियात उपजातः संबन्धः स्वं जनयित्वा क्रियापदे विनिवृत्ते सति व्यापारान्तरादुपरते सति तत्र तत्र वाक्ये प्रयुक्तेन कर्मप्रवचनीयेन नियम्यते, नियतक्रियाजनितत्वेन बोध्यते। नियम्यत इत्यत्र सम्बन्धस्य नियमो नियतक्रियाजनितत्वम्।

तथाहि—शाकल्यस्य संहितामनुप्रावर्षत्, इत्यत्र योऽयं संहिताप्रवर्षणयोर्हेतुहेतुमद्भावरूपः संबन्धः, स निशमनरूपया नियतक्रियया जनित इत्यनुना कर्मप्रवचनीयेन बोध्यते। शाकल्यस्य संहितामनु निशम्य प्रावर्षद् इत्यत्र निशमनक्रियापदे श्रूयमाणे सत्यनोर्निशमयति क्रियासाहचर्योपलब्धेः। 'शाकल्यस्य संहितामनुप्रावर्षत्' इत्यत्र संहितायाः संपाठरूपत्वेनानुना निशमनक्रियाऽनुमानस्यौचित्यात्। उक्तोदाहरणेऽनोर्निशमनक्रियावचनत्वन्तु न कल्प्यम्, अन्यस्मिन् प्रयोगे तस्य तत्रादृष्टशक्तिकत्वात्। निरूप-

**द्योत्यार्थनिष्ठं च द्योतकत्वमिति तदपि क्रियापदाप्रयोगादत्र नास्ति। न च क्रिया पदाक्षेपकत्वम्, यथा प्रादेशं विपरिलिखतीति। अत्र वेर्लेखने (ना) समन्वयानुपपत्तेर्विमा (र्निर्मा) तिक्रियाक्षेपकत्वम्। कारकविभक्तिर्ह्यत्र प्रादेशमिति द्वितीयेति युक्तस्तत्समुचित क्रियाक्षेपः। इह तु संहितामिति शैषिकीयं विभक्तिरिति कथं क्रियाक्षेपः। क्रिया-कारकयोरेव परस्परमाक्षेप्याक्षेपकभावस्याविनाभावेन न्याय्यत्वात्। तद्यथा प्रविश, पिण्डीमित्यादौ। नापि सम्बन्धवाचत्वमत्रानोः, विभक्त्यैव तदभिधानादिति सम्बन्धावच्छेदस्य प्रत्यायको नान्यः सम्भवतीति पारिशेष्यादनोरत्र सामर्थ्यमध्यवसीयते। तदुक्तम्—**

**क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥ इति।**

(वा. प. २।२०४)

---

कत्वसंबन्धेन द्योत्यार्थनिष्ठञ्चद्योतकत्वमित्युक्तोदाहरणेऽनोर्निशमनक्रियाद्योतकत्वमपि नास्ति, अत्र निशमनक्रियावाचकपदाप्रयोगात्। यत्र हि द्योत्यार्थाभिधानसमर्थस्य क्रिया-पदस्य प्रयोगस्तत्रैव तदुपश्लिष्टस्योपसर्गस्य कर्मप्रवचनीयस्य वा तदर्थद्योतकत्वमित्यस्यैव प्रभवति, साक्षात् क्रियते इत्यादौ दृष्टत्वात्। अत्र च 'प्रवर्षति' इत्यस्य निशमनपूर्वके प्रवर्षणेऽशक्तत्वाद्। उक्तोदाहरणे भवति करोत्योस्तु क्रियासामान्यवाचिनोः प्रभवसाक्षा-त्काररूपयोः क्रियाविशेषयोः शक्तिसम्भवात्, निर्विशेषं न सामान्यमितिन्यायात्।

नाऽपि निशम्येति क्रियापदाक्षेपकत्वमत्रानोः, यथा 'प्रादेशं विपरिलिखति' इत्यत्र वेर्विमायेति क्रियापदाक्षेपकत्वम्। दृष्टान्ते प्रादेशमित्यस्य लेखनक्रियायां कर्मतया समन्वया-नुपपत्तेस्तदर्थं विमातिक्रियाक्षेपकत्वं सम्भवति। अत्र हि प्रादेशमिति द्वितीयाकारक-विभक्तिरिति युक्तः, तदन्वययोग्यक्रियापदाक्षेपः। अत्र तु शैषिकषष्ठ्यपवादभूता संहिता-मिति द्वितीयाऽपि शैषिकी (संबन्धार्थिका) विभक्तिरिति कथं तया निशम्येति क्रिया-पदाक्षेपः सम्बन्धिक्रिययोरविनाभावाभावात्। क्रियाकारकयोरेवाविनाभूतयोः परस्पर-माक्षेप्याक्षेपकभावस्य न्याय्यत्वात्। तद् यथा—प्रविश, इत्यत्र गेहमिति कारकपदस्य, पिण्डीमित्यत्र च भुङ्क्ष्वेति क्रियापदस्याध्याहारः। नापि प्रकृतेऽनोर्हेतुहेतुमद्भावरूप-संबन्धवाचकत्वम्, शेषे षष्ठ्यपवादभूतया संहितामिति द्वितीययैव तस्याभिधानादिति। एवञ्च हेतुहेतुमद्भावरूपसंबन्धविशेषावच्छेदस्य = तादृशसम्बन्धनिर्णयस्य प्रत्यायकः = कारकः प्रकृतवाक्येऽनोरन्यो न संभवतीति पारिशेष्यात् तत्संबन्धपरिच्छेदेऽनोः सामर्थ्यं निश्चीयते तदुक्तम्—

क्रियाया द्योतको नाऽयं सम्बन्धस्य न वाचकः।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥ इति। (वा. प. २।२०४)

**भेदको विशेषद्योतक इत्यर्थः। अयमत्र भावः। यदनन्यथासिद्धं तत्रानोर्व्यापारकल्पना युक्ता। यत्पुनरन्यथा अर्थसामर्थ्यादिना निमित्तेन सिध्यति न तत्र तस्य शक्तिः कल्पयितुं पार्यत इति पदान्तराणामर्थान्तरनिवेशात् सम्बन्धविशेषस्य ततोऽनवगतस्य कर्मप्रवचनीयविषयता सिद्धा।**

**ननु च 'यदत्राधिक्यं वाक्यार्थस्सः' ( म. भा. २।३।४६ )**

**इति क्रियाविशेषजनितत्वलक्षणः संबन्धस्यावच्छेदो वाक्यार्थः किमिति न कथ्यते। अनोस्तु पश्चाद्भावमात्रवृत्तित्वमेवेति।**

**अत्रोच्यते—इहाधिक्यं वाक्यार्थत्वेनोच्यमानं पदार्थपृष्ठपातित्वेनैवानुसरणीयम्, न तु पदार्थोल्लङ्घनेन। तत्तद्वाक्योपात्तस्य हि साध्यस्य वा विशेष्यस्य वोपात्तैरेव साधनैर्विशेषणैश्च संसर्गस्तत्राधिक्यम्। तद्यथा—गां शुक्लामानय, नीलोत्पलमिति च। अत एवोच्यते—**

**आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ॥ इति।**

---

अस्यार्थः—अयमनुः प्रकृतवाक्ये निशमनक्रियावाचकपदाप्रयोगान्निशमनक्रियाया द्योतको न, संहितामिति द्वितीययैव संहिताप्रवर्षणयोर्हेतुहेतुमद्भावरूपसम्बन्धाभिधानात् तस्य सम्बन्धस्य वाचको न, सम्बन्धिक्रिययोः कारकक्रिययोरिवाविनाभावाभावात्। प्रादेशं विपरिलिखतीत्यत्रेव निशम्येति क्रियापदाक्षेप्यपि न, तु = किन्तु सम्बन्धस्य संहितामिति द्वितीयाभिधेयस्य संबन्धसामान्यस्य भेदकः = विशेषकः, हेतुहेतुमद्भावरूपसम्बन्धविशेषद्योतक इत्यर्थः।

अयं भावः। प्रकृत उदाहरणवाक्ये योऽर्थः पदान्तरादधिगतः अर्थसामर्थ्यादिना वा, तत्रानोर्वाचकत्वद्योतकत्वान्यतरव्यापारकल्पना न युक्ता, अन्यलभ्यत्वात्, 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायात्। एवञ्च योऽर्थोऽनन्यथासिद्धस्तत्रानोर्व्यापारकल्पना युक्तेति प्रकृतवाक्ये पदान्तराणामर्थान्तरेषु बोधकत्वेनाभिनिविष्टत्वात् तेभ्योऽनवगतस्य हेतुहेतुमद्भावरूपसंबन्धविशेषस्यैव प्रकृते कर्मप्रवचनीयेनानुना द्योत्यता सिद्धा।

नन्वस्ति "यदत्राधिक्यं वाक्यार्थः सः" इति युक्तियुक्तं विद्वद्वचः। अस्यार्थः—अत्र वाक्ये यदाधिक्यं पदेभ्यो नाधिगतमर्थाधिक्यम्, धर्मधर्मिणोरभेदोपचारात्, अधिकोऽर्थः संसर्गरूपः, स वाक्यार्थ इति। एवञ्चानेनैव न्यायेन प्रकृतवाक्ये निशमनक्रियाजनितत्वलक्षणो यो हेतुहेतुमद्भावरूपस्य संबन्धस्यावच्छेदः = विशेषः, स पदेभ्योऽनधिगतत्वाद् वाक्यार्थः किमिति नोच्यते, अनोश्च पश्चाद्भावरूपार्थमात्राभिधायित्वमेवास्तु यदन्यत्र दृष्टमिति चेदत्रोच्यते, इह विद्वद्वाक्ये यदर्थाधिक्यं वाक्यार्थत्वेनोच्यते तत् पदार्थपृष्ठपातित्वेनैव = पदार्थानुविद्धप्रतीतिविषयत्वेनैवानुसरणीयम्, न तु पदार्थोल्लङ्घनेन = पदार्थाननुविद्धस्वमात्रविषयकप्रतीतिविषयत्वेन। यतस्तत्तद्वाक्योपात्तस्य साध्यस्य, क्रियारूपस्य विशेष्यस्य वा तत्तद्वाक्योपात्तस्य यथाक्रमं तत्तद्वाक्योपात्तैरेव साधनैर्विशेषणैश्च संसर्गस्तत्राधिक्यम्। तद् यथा—गां शुक्लामानय, नीलोत्पलमिति च।

इत्थं चानुपात्तस्यैव पदार्थस्य वाक्यात् प्रतीतिर्नास्तीति न संबन्धावच्छेदोऽत्रा-पदार्थो वाक्यार्थः शक्यते कल्पयितुमिति कर्मप्रवचनीयविषय एवायम्। यद्वक्ष्यति—

निमित्तनियमः शब्दात् संबन्धस्य न गृह्यते।
कर्मप्रवचनीयैस्तु स विशेषेऽवरुध्यते॥ इति।

अत्र च दर्शनद्वयम्—स्वरूपेणैव संबन्धान्तरविलक्षणः कर्मप्रवचनीयेन संबन्धोऽवच्छिद्यते, क्रियाविशेषजनितत्वेन वेति। तत्र स्वरूपेणावच्छेदे विशिष्टक्रियाजनितत्वप्रतीतिः सम्बन्धिविशेषपर्यालोचनालभ्या। तथा हि—अधि ब्रह्मदत्ते पञ्चालाः इति स्वस्वामिभावोऽयं सम्बन्ध इत्यधिना वेद्यते। ब्रह्मदत्तश्च स्वामी ईश्वरः,

---

अत एवोच्यते—"आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते" इति।

अस्यार्थः—यद्यपि साध्यसाधनयोर्विशेष्यविशेषणयोर्वा आश्रयाश्रयिणोः संबन्धसामान्यमर्थसिद्धमन्विताभिधानवादनये, तथापि वाक्यात्तु तयोः संबन्धविशेषनियमः = नियतः संबन्धविशेषोऽवतिष्ठते = व्यवस्थया ज्ञातो भवतीति। एवञ्च पदानुपात्तस्य कस्यापि पदार्थस्य वाक्यात् प्रतीतिर्न भवतीति न निशमनक्रियाजनितत्वरूपेण विशेषेण हेतुहेतुमद्भावरूपस्य संबन्धस्यावच्छेदोऽपदार्थो वाक्यार्थः कल्पयितुं शक्यत इति कर्मप्रवचनीयस्यानोरेव स विषय इति स्थितम्। इदञ्च स्वयमेव वक्ष्यति मूले—

निमित्तनियमः शब्दात् संबन्धस्य न गृह्यते।
कर्मप्रवचनीयैस्तु स विशेषेऽवरुध्यते॥ इति।

अस्यार्थः—यत्र संबन्धस्य क्रियाविशेषजनितत्वरूपो निमित्तनियमः शब्दात् पदान्तरात् न गृह्यते। तत्र सः = निमित्तनियमः कर्मप्रवचनीयैस्तु = कर्मप्रवचनीयैरैव विशेषे = क्रियाविशेषेऽवरुध्यते = व्यवस्थाप्यत इति। अस्मिन्नत्र विषयेऽस्ति मतद्वयम्। संबन्धान्तरविलक्षणः संबन्धः कर्मप्रवचनीयेन स्वरूपेणैवावच्छिद्यते = परिच्छिद्य बोध्यत इत्येकम्, क्रियाविशेषजनितत्वेन वेति द्वितीयम्।

तत्र सम्बन्धविशेषस्य कर्मप्रवचनीयेन स्वरूपेणावच्छेदे तस्य क्रियाविशेषजनितत्वप्रतीतिः सम्बन्धिविशेषपर्यालोचनमहिम्ना। तद्यथा—अधि ब्रह्मदत्ते पञ्चाला इत्यत्र ब्रह्मदत्तस्य पञ्चालानाञ्च स्वस्वामिभावरूप एवाऽत्र सम्बन्ध इत्यधिना कर्मप्रवचनीयेन बोध्यते। तस्य सम्बन्धस्य परिपालन-करादानादिक्रियाप्रभावितत्वञ्च तादृशस्वस्वामिरूपसम्बन्धिविशेषमहिम्नैव प्रतीयमानेन प्रतीयते। एवमभिमन्युरर्जुनतः प्रतीत्यत्र प्रतिना कर्मप्रवचनीयेन सादृश्यलक्षणोऽत्र सम्बन्ध इति द्योत्यते। स च सम्बन्धः संप्रहरणादि क्रियाकृत इति द्वयोः सम्बन्धिनोः स्वरूपपर्यालोचनमहिम्नाऽवगम्यते। एवञ्च शाकल्यस्य संहितामनुप्रावर्षत् इत्यत्रापि हेतुहेतुमद्भावरूप एवात्र सम्बन्ध इत्येतावन्मात्रमनुना द्योत्यते, तस्य निशमनक्रियाकृतत्वन्तु संहितायाः पाठविशेषरूपत्वादवगम्यते।

पञ्चालाश्च जनपदः स्वमिति तयोः सम्बन्धिनोः परिपालनकरादानादिक्रियाप्रभावित एवायं सम्बन्धो न्याय्य इत्यवगम्यते। एवमभिमन्युरर्जुनतः प्रतीति प्रतिना सादृश्यलक्षणोऽयं सम्बन्ध इति द्योत्यते। स पुनः सम्बन्धिस्वरूपपर्यालोचनादत्र संप्रहरणादिक्रियाकृत इत्यवगम्यते। इत्थं च शाकल्यस्य संहितामनु प्रावर्षदित्यत्रापि हेतुफलभावो नामायं सम्बन्ध इत्येतावत्येवायमनुर्विश्राम्यति। पाठविशेषरूपत्वात् संहिताया निशमनक्रियावगतिः। शब्दश्रवणेन हि देवोऽवर्षदिति सम्बन्धिमहिम्ना विशिष्टक्रियाप्रभावितत्वमवसीयते। केचिदियाननोरेव व्यापार इत्याहुः।

स्वरूपावच्छेदेऽपि च क्रियायाः कार्यभूतसम्बन्धापेक्षया अतीतत्वात्कर्मप्रोक्तवन्त इत्यर्थस्समन्वेत्येव। वस्तुतः क्रियाफलस्यैव सम्बन्धस्य प्रकाशनात्। यथा तु तत्रभवद्भर्तृहरेस्तत्र तत्राभिप्रायो लक्ष्यते, तथा निमित्तविशेषावच्छेद एव कर्मप्रवचनीयकृत इति राद्धान्तः। अधि ब्रह्मदत्ते पञ्चाला इति परिपालनक्रियाहितत्वं स्वस्वामिभावस्याधिना व्यज्यते। अभिमन्युरर्जुनतः प्रतीत्यमित्रपराजयादिकृतोऽनुकार्यानु-

---

संहिताशब्दश्रवणेन हि देवोऽवर्षदिति सम्बन्धिमहिम्ना निशमनक्रियाप्रभावितत्वं तस्य सम्बन्धस्यावसीयते। केचित्तु प्रकृते हेतुहेतुमद्भावरूपस्य सम्बन्धस्य निशमनक्रियाप्रभावित्वपर्यन्तमप्यनोरेव व्यापार इत्याहुः।

वस्तुतस्तु अत्रानोर्न निशमनक्रियाद्योतकत्वम्। अत्र निशमनक्रियावाचकपदस्याप्रयोगादित्यवधेयम्। न च यत्र सम्बन्धान्तरविलक्षणः सम्बन्धः कर्मप्रवचनीयेन स्वरूपेणैवावच्छिद्यते, न तु क्रियाविशेषजनितत्वेन, तत्र कथं कर्म प्रोक्तवन्त इति व्युत्पत्तिनिमितोपपत्तिरिति वाच्यम्। तत्रापि क्रियायाः स्वकार्यभूतसम्बन्धापेक्षया अतीतत्वात्, कारणस्य कार्यप्राग्भावित्वनियमात्। न चैवमपि तेषां सम्बन्धप्रवचनमेव, न तु कर्मप्रवचनमिति वाच्यम्। वस्तुगत्या क्रियाफलस्यैव सम्बन्धस्य प्रवचनात्, अतीतकालिककर्मप्रवचनकर्तृत्वस्य तेषूपचारसम्भवात्।

वस्तुतस्तु तत्रभवतो भर्तृहरेस्तत्तत्स्थलेष्वभिप्रायो यथा लक्ष्यते, तथा तु क्रियाविशेषरूपनिमित्तविशेषावच्छेद एव कर्मप्रवचनीयेन क्रियते। सम्बन्धविशेषावच्छेदस्तूपपदविभक्त्येतिराद्धान्त इति न पूर्वोक्तशङ्कायाः समुत्थानसम्भवः। तथा हि—अधि ब्रह्मदत्ते पञ्चाला इत्यत्र स्वस्वामिभावसम्बन्धस्य परिपालनक्रियाकृतत्वमधिना व्यज्यते। स्वस्वामिभावसम्बन्धस्तु षष्ठ्यपवादभूतया सप्तमीविभक्त्याऽभिधीयते। अभिमन्युरर्जुनतः प्रति, इत्यत्रानुकार्यानुकरणभावरूपः सम्बन्धः, तस्यामित्रपराजयादिकृतत्वञ्चैतदुभयं प्रतिना प्रकाश्यत इति हेलाराजेनोक्तम्।

वस्तुतस्त्वनुकार्यानुकरणभावरूपः सम्बन्धः षष्ठ्यपवादभूतया पञ्चम्याऽभिधीयते, तस्यामित्रपराजयादिकृतत्वन्तु प्रतिना व्यज्यत इत्येव युक्तम्। 'सम्बन्धस्यान्यलभ्यत्वाद्' अनयैव दिशा सम्बन्धस्य तत्तत्क्रियाविशेषकृतत्वं सर्वत्रैव कर्मप्रवचनीयव्यङ्ग्यमिति स्थितम्।

करणभावः प्रतिना प्रकाश्यते इत्यादि सर्वत्र योज्यम्। सुस्तुतम्, अतिस्तुतमित्यादौ तु—

'सुः पूजायाम्' (पा० १।४।९४) 'अतिरतिक्रमणे च' (पा० १।४।९५)

इत्यादिना कर्मप्रवचनीयसंज्ञाधिकारिकी स्वार्थनिरपेक्षैवोपसर्गसंज्ञाबाधनाय प्रवर्तते। यथोक्तम्—

कर्मप्रवचनीयत्वं क्रियायोगे विधीयते।
षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् ॥ इति। (वा० का० २।२०२)

आर्थेन तु रूपेण विभागे प्रस्तुते क्रियाविशेषावद्योतकत्वादुपसर्गपदे स्वत्यादिरन्तर्भवतीति नाव्याप्तिः तदेवं वाक्यादपोद्ध्रियमाणस्य पदस्यापोद्धारार्थविशेषाश्रयेण यथासम्भवं भेदो निरंशकवाक्यव्युत्पत्त्युपायभूतः प्रदर्शितः। अत एव स्वादिपदं वाक्यव्युत्पत्त्यनङ्गत्वाच्छास्त्रे सङ्केतितं सुबन्तपदव्युत्पत्त्युपायभूतं नेह गणनार्हं प्रकृतिप्रत्ययवदिति दृष्टान्तपक्षनिक्षिप्तमिति नाव्याप्तिः, पदात् किलासावपोद्धारो न वाक्यात् ॥१॥

तदित्थं पदापोद्धारे प्रदर्शिते तदर्थस्यापोद्धृतस्य सिद्धसाध्यरूपद्वययोगिनो मतभेदेन स्वरूपोपदर्शनार्थमाह—

---

ननु सुस्तुतम्, अतिस्तुतमित्यादौ षत्वादिविनिवृत्यर्थमुपसर्गसंज्ञाबाधनाय कर्मप्रवचनीयसंज्ञा प्रवर्तते, 'सुः पूजायाम्' (पा० सू० १।४।९४) 'अतिरतिक्रमणे च' (पा० सू० १।४।९५) इत्यादिना। तथा च प्रकृते वर्तमानक्रियायोगे कर्मप्रवचनीयसंज्ञाया व्युत्पत्तिनिमित्ताभावेन कथमत्र कर्मप्रवचनीयसंज्ञाप्रवृत्तिरिति चेन्न। व्युत्पत्तिनिमित्ताभावेऽपि "सुः पूजायाम्" (पा० सू० १।४।९४) इत्यादौ कर्मप्रवचनीयसंज्ञाधिकारबलादेव तत्र तस्याः प्रवृत्तिसम्भवात्। यथोक्तम्—

कर्मप्रवचनीयत्वं क्रियायोगे विधीयते।
षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् ॥

इति। (वा० प० २।२०२)

अस्यार्थः—स्वत्यादीनां विधर्मणाम् = अतीतकालिकप्रवचनक्रियाकर्तृत्वरूपधर्मशून्यानां क्रियायोगे = उपसर्गवद्वर्तमानक्रियायोगेऽपि सुस्तुतमतिस्तुतमित्यादौ षत्वादिविनिवृत्त्यर्थं कर्मप्रवचनीयत्वं व्युत्पत्तिनिमित्ताभावेऽपि "सुः पूजायाम्" (पा० स० १।४।९४) "अतिरतिक्रमणे च" (पा० सू० १।४।९५) इत्यादौ कर्मप्रवचनीयसंज्ञाधिकारबलाद् विधीयत इति।

तदेवं तत्तत्संज्ञामाश्रित्य पदविभागे क्रियमाणे स्वत्यादीनां कर्मप्रवचनीयेष्वन्तर्भावः। तत्तत्संज्ञाप्रवृत्तिनिमित्ततत्तदर्थमाश्रित्य तु पदविभागे क्रियमाणे वर्तमानक्रियाविशेषावद्योतकत्वात् स्वत्यादीनामपि प्रकृत उपसर्गपद एवान्तर्भाव इति नाव्याप्तिः। तदेवं

**पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा ।**
**पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ ॥२॥**

---

**अर्थद्वारेण पदं परीक्ष्यत इति दर्शनभेदेन प्रथममपोद्धारपदार्थविचारः । तथा हि—सर्वेषामपि शब्दानां पदरूपाणां नामाख्यातादिस्वभावानां जातिवादिमते जातिरेवार्थो न द्रव्यम् । द्रव्यवादिमते तु द्रव्यमेव न जातिः । द्वितीयेन वाशब्देन**

---

वाक्यार्थादपोद्ध्रियमाणपदार्थविशेषान्वयव्यतिरेकरूपनिमित्तसमाश्रयेण वाक्यादपोद्ध्रियमाणस्य पदस्य भेदो वस्तुतो निरंशकवाक्यव्युत्पत्त्युपायभूतो यथासम्भवं द्विधा चतुर्धा पञ्चधेत्येवं प्रदर्शितः । अत एव स्वौजसादिपदं सुबन्तपदव्युत्पत्त्युपायभूतमिति शास्त्रे सङ्केतितमपि सङ्केतेन प्रतिपादितमपि वाक्यव्युत्पत्तेरनुपकारिकत्वान्नेह पदविभागे गणनार्हमिति प्रकृतिप्रत्ययादिवदित्युक्त्या दृष्टान्तपक्षे निक्षिप्तमिति न स्वौजसादिषु पदविभागस्याव्याप्तिः । पदात् किलासावपोद्धारो न वाक्यादिति ॥१॥

तदित्थं पदार्थापोद्धारनिमित्तके पदापोद्धारे प्रदर्शितेऽपोद्धृतस्य तदर्थस्य क्रियाकारकभेदेन सिद्धसाध्यरूपद्वययोगिनो मतभेदेन स्वरूपोपदर्शनार्थमाह पदार्थानामपोद्धार इति ।

अस्यार्थः—वाक्यार्थात् पदार्थानामपोद्धारे क्रियमाणे सर्वशब्दानां जातिः पदार्थः, द्रव्यमेव वा पदार्थः, जातिर्द्रव्यमित्युभौ वा पदार्थौ नित्यावेवोपवर्णितौ । तत्र जातेर्नित्यत्वं न्यायशास्त्रे सिद्धे शब्दार्थसम्बन्धे, इत्यादिवार्तिकभाष्ये च प्रसिद्धम् । द्रव्यस्य तु नित्यत्वं स्वरूपेण कस्यचित्, तद्यथा आत्मादेः । कस्यचित्तु प्रवाहानादितया, यथा घटादेः । तत्तदर्थावच्छिन्नं ब्रह्मैव सर्वशब्दवाच्यमिति मते तु सर्वशब्दानामर्थो ब्रह्मस्वरूपेणैव नित्यमिति ।

अयं भावः—अर्थपरीक्षाद्वारिकैव पदपरीक्षा, अर्थवत एव पदत्वात् । एवं स्थिते मतभेदेन प्रथममपोद्धारपदार्थविचार एव क्रियते । तथाहि—सर्वेषामपि शब्दानां नामाख्यातोपसर्गादिपदरूपाणां जातिवादिमते आकृत्यधिकरणन्यायेन जातिरेवार्थो न द्रव्यम् । व्यक्तिवादिमते तु द्रव्यमेवार्थो न जातिरिति । कारिकायां द्वितीयेन वाशब्देन जातिविशिष्टद्रव्यरूपं पदार्थान्तरं सूचितम् । न चैवं सति 'पदार्थौ' इति द्विवचनं नोपपद्यते, विशिष्टस्यैकत्वादिति वाच्यम् । विशिष्टान्तर्गतस्य विशेषणस्य विशेष्यस्य च पृथक् संकलनया तथोक्तेः । अन्यथा = पूर्वरीत्या पक्षत्रयमाश्रित्य विकल्पद्वयानङ्गीकारे वाशब्दार्थे विकल्पे उपक्रान्ते द्वितीयस्य वाशब्दस्यापि विकल्पार्थकत्वस्यैवौचित्येन चार्थकत्वेन उपसंहारो नोपपद्येतेति । तद्वदभिधाने तु जातिमद्द्रव्याभिधाने तु = शब्दस्याभिधानरूपो व्यापारस्तु द्वयोरपि = जातिद्रव्ययोरपि समानम् = एकम्, शब्दस्य विरम्य व्यापाराभावात् । अतो द्वे अपि जातिद्रव्ये एकेनैव शब्दस्याभिधानाख्यव्यापारेण युगपद् बोध्येत इत्यवधेयम् ।

**पदार्थान्तरं सूचितं जातिविशिष्टद्रव्याभिधानमिति। अत एव तदेव संकलनारूपं पदार्थविति स्फुटीकृतम्। अन्यथा वार्थे प्रक्रान्ते चार्थोपसंहारोऽयं नोपपद्यते। तद्वदभिधाने त्वभिधानं तावद् द्वयोरपि समानम्, विरम्य व्यापाराभावाच्छब्दस्य। आर्थस्तु जातिद्रव्ययोर्गुणप्रधानभावः। यद्वा प्राधान्येनैव भिन्नविषयतया पाणिनिदर्शने जातिद्रव्ये शब्देनाभिधीयेते इत्ययमत्र पक्षः 'पदार्थौ' इत्युक्तः। तत्र नामपदस्य गौरित्यादेः गोत्वादिजातिः नियतक्रियाविषयसाधनैकार्थसमवेतसंख्या (ख्यया) जातिविशेषभावमपन्ना अभिधेया, अनाश्रयाया जातेरनुपपत्तेः। सामर्थ्यात् प्रतीतं द्रव्यम्।**

**एवमाख्यातपदस्यापि विभिन्नक्रियाक्षणसमवेताभिन्नाभिधानप्रत्ययहेतुक्रिया जातिविषया साक्षाद्वाचकशक्तिः। कारकादिजातिस्त्वत्र गुणभूता। नामपदगतया च**

---

एवं शब्दशक्त्या पृथगुपस्थितयोर्जातिद्रव्ययोर्गुणप्रधानभावरूपं वैशिष्ट्यन्तु आर्थम् = अर्थसामर्थ्यवशाल्लभ्यते। यद्वा पाणिनिदर्शने जातिद्रव्ये शब्देन गुणप्रधानभावापन्ने वाभिधीयेते, किन्तु भिन्नविषयतया = भिन्नदेशतया प्राधान्येनैवाभिधीयेते। क्वचित् प्रदेशे जात्यभिधानम्, क्वचिद् द्रव्याभिधानमिति यावत्, अयमेव पक्षोऽत्र पदार्थौ इत्यनेनोक्तः। तत्र गौरित्यादेर्नामपदस्य गोत्वादिजातिः सामान्यभूताऽपि नियतक्रियाविषयसाधनैकार्थसमवेतसंख्यया = नियतं यत् क्रियाविषयकं साधनं साधनशक्तिः, तेन सहैकस्मिन्नर्थे गवादौ द्रव्ये समवेता या संख्या तया जातिविशेषभावमापन्ना = स्वसमानाधिकरणाभ्यां तत्तत्साधनशक्तितत्तत्संख्याभ्यामाश्रयान्तराद् व्यावर्तिता जातिविशेषभावं भजन्ती अभिधेया।

जातिपदार्थवादिमते द्रव्यं तु जातेराश्रयं विनाऽनुपपत्तेः सामर्थ्यात् प्रतीयते। एवमाख्यातपदस्यापि विभिन्नक्रियाक्षणसमवेता भिन्नाभिधानप्रत्ययहेतुक्रियाजातिविषया = विभिन्ना ये क्रियाक्षणाः क्षणिकाः क्रियाः, तत्समवेता या अभिन्नाभिधानप्रत्ययहेतुः सर्वासु क्षणिकासु पाकादिक्रियास्वभिन्नयोः पचतीत्याद्यभिधानज्ञानयोर्निमित्तं पाकादिक्रियागता जातिरतद्विषयिका साक्षाद् वाचकत्वशक्तिः। कारकादिजातिरत्वत्र = प्रागुक्तरूपायां क्रियाजातौ गुणीभूता। स्ववाचकतत्तद्विभक्तिनिष्ठविधेयतानिरूपितोद्देश्यतासम्बन्धेन नामपदगतया च कारकजात्या सह स्ववाचकधातुघटितत्वसम्बन्धेन आख्यातपदगता = तिङन्तपदगता क्रियाजातिः स्वव्यक्तिसम्बन्धमनुभूयैव समन्वयमेति। द्वयोरपि जात्योः स्वस्वव्यक्तिद्वारक एव सम्बन्ध इति यावत्। घटादिपदवाच्या घटत्वादिरूपा द्रव्यगता जातिस्तु साधनशक्त्या = कारकशक्त्या सहैकार्थसमवायात् = सामानाधिकरण्यात् तद्द्वारेण सामानाधिकरण्येन तत्र सम्बन्धमनुभूय क्रियायोगमनुभवति। संख्यागता जातिरपि साधनशक्त्या सहैकार्थसमवायात् स्वाश्रयव्यक्तिरूपेण साधनशक्तेरपिमुखैनैव = क्रियायोगद्वारेणैव क्रियान्वयिनीति रीत्या सर्वेषां वाक्यगतपदार्थानां परस्परं समन्वयोपपत्तौ वाक्यार्थोऽप्रत्यूहः प्रकल्पते। यथा च क्षणिकैरुत्क्षे-

**कारकजात्या क्रियाजातिराख्यातपदगता व्यक्तिद्वारेण समन्वयमेति। द्रव्यजातिस्त्वेकार्थसमवायात् साधनशक्तिद्वारेण क्रियायोगमनुभवति। संख्याजातिरप्येकार्थसमवायात् स्वव्यक्त्यात्मना शक्तिमुखेनैव क्रियान्वयिनीति सर्वपदार्थसमन्वयोपपत्तौ कल्पते वाक्यार्थः। यथा चोत्क्षेपणादिक्षणै रसमसमयभाविभिरप्यावृत्त्योत्क्षेपणत्वादिजातिरभिव्यज्यते, तथाऽधिश्रयणादिभिः क्रियाक्षणैः पचत्यादिक्रियाजातिरिति विचारयिष्यते। व्यक्तिद्वारकं चास्या नित्याया अपि साध्यत्वमुपपद्यते।**

**उपसर्गादिरप्यत्र दर्शने नामाख्यातसहभावी तदर्थस्य विशेषावद्योतकत्वाज्जातिपदार्थ एव। विशेषस्य विशिष्टविश्रान्तस्यैवावसायात् कर्मप्रवचनीयोऽपि सम्बन्धजातिनिष्ठ एव। गुणशब्दानामपि शुक्लादीनां गुणजातिर्वाच्या। संज्ञाशब्दानामपि डित्थादिशब्दानां जातिवाचित्वं समर्थयिष्यते।**

**तदित्थं वाजप्यायनाचार्यमतेन सार्वत्रिकी जातिपदार्थव्यवस्थोपपद्यते। व्याडिमते तु सर्वशब्दानां द्रव्यमर्थः, तस्यैव साक्षात्क्रियासमन्वयोपपत्तेर्वाक्यार्थाङ्गतया चोदनाविषयत्वात्। यथाह—**

**'चोदनासु च तस्यारम्भात्' इति** ( वा० १।२।६४ )

**एकजातिसमन्वयवशेन चात्र संकेतोपपत्तिः। अनभिधीयमानापि जातिरुपलक्षणीक्रियते शब्दार्थे, यथा गृहादौ काकादिः। आख्यातेऽपि च साधनाधारद्रव्यप्राधान्यं व्याडिमते। देवदत्तः पचतीति द्रव्येणैव साक्षात्सामानाधिकरण्योपपत्तेः। क्रिया तु गुणभूतात्र, व्यापाराविष्टं हि द्रव्यमाख्यातार्थः, इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं चात्र द्रव्यमिति सार्वत्रिकीयं व्यवस्था। तथा च वक्ष्यति—**

---

पणादिभिरयुगपद्भाविभिरपि उत्क्षेपणत्वादिजातिरावृत्त्याऽभिव्यज्यते, तथा क्षणिकाभिरधिश्रयणादिक्रियाभिः पचत्यादिक्रियागता जातिरावृत्त्याऽभिव्यज्यत इत्यग्रे विचारयिष्यते।

यद्यपि पचत्यादिक्रियागता जातिर्नित्या, तथापि तदाश्रयव्यक्तेः साध्यत्वेन तद्द्वारकमस्याः साध्यत्वमुपपद्यत इति। अत्र दर्शने = जातिःपदार्थ इति मते नामाख्यातसहभावी उपसर्गादिरपि तदर्थस्य = नामार्थस्याख्यातार्थस्य च विशेषावद्योतकत्वाज्जातिपदार्थक एव। विशेषस्य विशिष्टविश्रान्तस्यैवोपसर्गादिभिरवसायात् = परिच्छेदात् तस्य जातित्वम्। कर्मप्रवचनीयोऽपि वाचकत्वेन सम्बन्धगतजातिनिष्ठ एव। अत्र च निष्ठत्वं पर्यवसानं वृत्तिर्वा। शुक्लादीनां गुणशब्दानामपि शुक्लादिगुणगता शुक्लत्वादिजातिर्वाच्या। डित्थादिशब्दानां संज्ञाशब्दानामपि जातिवाचित्वमग्रे समर्थयिष्यते।

तदित्थं वाजप्यायनाचार्यमतेन सर्वेषां शब्दानां जातिपदार्थकत्वव्यवस्थोपपद्यते। व्याडिमते तु सर्वेषां शब्दानां द्रव्यमेवार्थः, तस्यैव साक्षात् क्रियायामन्वयोपपत्तेर्वाक्यार्थशेषतया चोदनाविषयत्वात् = विधिविषयत्वात्। जातेः साक्षात् क्रियायामन्वयायोग्यतया सर्वत्रैव वाक्यार्थविधिविषयत्वानुपपत्तेः।

**'द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते' इति** । वा० का० ३ जाति० १४ )
**अत एव शुक्लादीनामपि द्रव्यपदार्थता सिद्धा। तत्तदुपाधिव्यवच्छिन्नं वा ब्रह्म द्रव्यशब्दवाच्यं सर्वशब्दानां विषय इति वक्ष्यत एव। व्यक्तिपर्यायो वा द्रव्यशब्द इति जातिव्यक्तिविकल्पेन सर्वशब्दविषयः। तथा च सर्वशब्दानामित्यभिधानात् पदादप्यपोद्धारे प्रकृतिप्रत्ययरूपस्यापि शब्दस्य यथायोगं क्रियाकारकसंख्यादिरपोद्धारपदार्थो जातिव्यक्तिभेदेन समाम्नातः। उभयस्यापि वा शब्दात् प्रतीतेरुभयं पदार्थः। गुणप्रधानभावभेदाश्रयस्तु मतविकल्पः। नित्यत्वोपवर्णनं च —**

**'सिद्धे शब्दार्थसंबन्धे'** ( म० भा० पस्पश० १।६ )

**इत्यत्र भाष्ये—**

**'यस्मिंस्तत्त्वं न विहन्यते'** ( म० भा० १।७ )

**इति द्रव्यस्यापि नित्यत्वम्, प्रवाहनित्यतया शब्दात् सदैव प्रतीतेः ॥ २ ॥**

**तदेवं दर्शनभेदेन जातिर्द्रव्यं वा पदार्थ इत्युक्ते जातिपदार्थविषयशास्त्रोपयोगी विचारोऽत्र समुद्देशे। पदस्य हि परीक्षार्थमिदं काण्डम्, अर्थद्वारेण च पदपरीक्षा, वाक्यार्थौपयिकत्वेन च तद्विचार इति जातिपदार्थनये वाक्यार्थभूतया आख्यातपदवाच्यया क्रियया कथं समन्वयः, साधनेन हि क्रिया अन्वेति, न च जातिः साधनम्, तदाश्रयः साधनमिति चेत्, एवमपि जातेः साक्षाच्छब्देन चोदितत्वात् सामर्थ्यात् तदाधारप्रतिपत्तौ यथाचोदितानुषङ्ग इति।**

**'असंभवे प्रतिनिधिर्मा भून्नित्यस्य कर्मणः।**
**काम्यस्य वा प्रवृत्तस्य लोप इत्यपदिश्यते ॥'** (वा० का० २।७०)

**इति प्रतिनिध्यनुपपत्तिरित्याशङ्क्य तत्समर्थनमाह—**

---

यथाह—चोदनासु च तस्यारम्भादिति ।

अस्यार्थः—चोदनासु = विधिसु तस्य द्रव्यस्य आरम्भाच्च = संबन्धादपीति । आरम्भणम् = आलम्भनम्, संबन्ध इति यावत् । यद्यप्यनन्तानि द्रव्याणि, तथाप्येष्वेकजात्यनुगमेनानुगतीकृत्य संकेतग्रह उपपद्यते ।

द्रव्यपदार्थवादिमते शब्देनानभिधीयमानाऽपि जातिः शब्दार्थे द्रव्ये स्वाश्रय उपलक्षणीक्रियते । यथा—काकवन्तो देवदत्तस्य गृहा इत्यादिस्थले गृहादौ काकादिः । आख्यातेऽपि च व्याडिमते साधनशक्त्याधारभूतस्य द्रव्यस्यैव प्राधान्यम् । देवदत्तः पचतीत्यत्र पचतीत्यस्य द्रव्येणैव साक्षात् सामानाधिकरण्योपपत्तेः । अत्र मते धातुवाच्या क्रिया त्वाख्यातार्थे कर्तरि गुणभूता । यतो व्यापाराविष्टं कर्तृरूपं द्रव्यमाख्यातार्थः । अत्र च मते आख्यातार्थभूतं द्रव्यं व्यापाराविष्टत्वादिदं तदिति सर्वनामपदाभिलप्यस्य सविकल्पकपरामर्शस्य विषयत्वयोग्यम्, न तु स्वलक्षणत्वेन निर्विकल्पकप्रत्ययमात्रवेद्यम्, इतीयं व्याडिमते सार्वत्रिकी = सर्वशब्देषु व्यवस्था । तथा च वक्ष्यति मूले समयैव—

**केषाञ्चित् साहचर्येण जातिः शक्त्युपलक्षणम् ।**
**खदिरादिष्वशक्तेषु शक्तः प्रतिनिधीयते ॥ ३ ॥**

**इह केषाञ्चित् जातिवादिनामेकार्थसमवायाच्छक्तेः प्रतिपादने जातिः उपलक्षणम् = उपायः, इति मतम् । अन्येषां पुनस्तात्पर्येण जातिरेव शब्देन प्रतिपाद्यते, कार्ययोगस्तु तस्याः क्वचित् साक्षात्, क्वचिद्व्यक्तिद्वारेणेति मतम् । अथवा 'केषाञ्चित्' इति शब्दानाम् । ये साधनाभिधायिनस्तत्र शक्तितात्पर्येण जातेरुपलक्षणत्वान्नान्तरीयकमुपादानम्, शक्तिवाचिन्या विभक्तेः केवलाया अप्रयोगार्हत्वात् । ततश्च प्रातिपदिकस्यावश्यमुपादानमिति तद्वाच्यया जात्या शक्तिरवच्छिद्यते सति संभवे ।**

---

'द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थं उच्यते' इति । (वा० का० ३, जाति० १३)

अस्यार्थः—द्रव्ये तु = द्रव्येऽपि पदार्थे सर्वोऽर्थो द्रव्यधर्मा उच्यते, अतो द्रव्यं सर्वेषां शब्दानामर्थ इष्यत इति । अत एव शुक्लादिशब्दानामपि द्रव्यपदार्थवाचकता सिद्धा । जातिगुणक्रियादिरूपतत्तच्छब्दप्रयोगोपाधिविशिष्टं ब्रह्मैव वा द्रव्यशब्दवाच्यं सर्वशब्दानां वाच्यतया विषय इत्यपि वक्ष्यत एव । व्यक्तिपर्यायो वा द्रव्यशब्द इति स्वीकारे तु गुणक्रियादिशब्दानामपि द्रव्यवाचकत्वमुपपद्यत एव ।

जातिगुणक्रियासमूह एव द्रव्यमिति सांख्यमतेऽपि तेषां तदुपपद्यत एव । अस्मिंश्च व्याडिमते प्रथमान्तार्थमुख्यविशेष्यक एव वाक्यार्थबोधो नैयायिकमत इवेत्यवधेयम् । इत्येवं जातिव्यक्तिविकल्पेन सर्वेषां शब्दानां विषयो मूलोक्त उपपादितः ।

किञ्च मूले सर्वशब्दानामित्यभिधानात् पदादपोद्धारे क्रियमाणे प्रकृतिप्रत्ययरूपस्यापि शब्दस्य यथासम्भवं क्रियाकारकसंख्यादिरपोद्धारपदार्थोऽत्र जातिव्यक्तिभेदेन समाम्नातः । कारिकायां द्वितीयस्माद् वा शब्दाद् जातिव्यक्त्युभयस्यापि पदार्थत्वाप्रतीतेः । केषाञ्चिन्मते तदुभयं पदार्थः । जातिव्यक्त्योर्गुणप्रधानभावविशेषकृतस्त्वयं मतविकल्पः । जातिव्यक्त्योर्नित्यत्वोपवर्णनञ्च "सिद्धेशब्दार्थसंबन्धे" इति वार्तिकेऽत्रत्यभाष्ये च 'यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यम्', इति । शब्दार्थयोः प्रवाहस्य नित्यतया च द्रव्यस्यापि नित्यत्वम्, शब्दात् तस्य सदैव प्रतीतेरिति ॥ २ ॥

तदेवं मतभेदेन जातिर्वा द्रव्यं वा पदार्थ इति प्राङ्निरूपिते सत्यत्र समुद्देशे क्रमानुरोधेन जातिपदार्थविषयकसूत्रोपयुक्तो विचारः प्रसक्त इति स आरभ्यते । यतोऽत्र वाक्यपदीये ग्रन्थे पूर्वकाण्डे वाक्यपरीक्षानन्तरं पदस्य परीक्षार्थमिदं पदकाण्डमारभ्यते । अर्थद्वारेणैव च पदपरीक्षा कर्तुं शक्या, अर्थवत एव पदत्वात् । अन्यथा वर्णापोद्धारस्य वर्णपरीक्षाया अपि च प्रसक्तेः । तदेवं प्राधान्येन पदपरीक्षापरेऽत्र काण्डे पदार्थविचारः प्रागावश्यकः । किञ्च पदार्थविचारस्य वाक्यार्थविचारोपायभूतत्वादप्यत्र पदार्थविचार आवश्यक इति कृत्वा प्राग् जातिपदार्थे व्यवस्थापिते सति तन्नये कथं वाक्यार्थभूतया = वाक्यार्थे प्रधानीभूतया आख्यातपदवाच्यया क्रियया साकं जातिपदार्थस्य संबन्धः ।

**तदभावे तु तत्सदृशापरजातिसहचरितापि शक्तिर्गृह्यते, तात्पर्येण चोदनात्। वाक्यार्थभूतया हि क्रियया साधनमात्रस्याक्षेपे सिद्धे विशिष्टजातीयप्रतिपत्त्यर्थं साधनश्रुत्युपादानेऽपि जातिविशेषस्यासंभवे क्रियासाधनशक्त्यावेदनपरतया जातेः प्रयोगान्मा**

---

कारकेण हि क्रियाऽन्वेति। न च जातिः कारकम्, अमूर्तत्वेन क्रियाधामयोग्यत्वात्। तदाधारस्य कारकत्वेऽपि जातेः शब्देन साक्षादभिहितत्वात्, तदाधारस्य च अर्थसामर्थ्यात् प्रतिपत्तेर्यथाभिधानं जात्याधारस्य द्रव्यस्यैव क्रियायामनुषङ्गः=संबन्धः स्यात्, न तु तत्प्रतिनिधेः। तदुक्तम्--

असम्भवे प्रतिनिधिर्मा भून्नित्यस्य कर्मणः।
काम्यस्य वा प्रवृत्तस्य लोप इत्यपदिश्यते॥ इति।
( वा० प० २।७० )

अस्यार्थः—असम्भवे = जातेरयोग्यतया कर्मशेषत्वासम्भवे मुख्यस्य गौणस्य वा तदाधारस्य कर्मशेषत्वेन परिग्रहे नित्यस्यापि कर्मणोऽग्निहोत्रादेरङ्गभूतस्य द्रव्यस्यालाभे प्रतिनिधिर्मा भूदित्येतदर्थं द्रव्यं पदार्थ इत्यपदिश्यते। वा = अथवा गौणमुख्यन्यायेन मुख्यस्यैव नित्यकर्माङ्गद्रव्यस्य परिग्रहेण तत्र प्रतिनिध्यभावे तद्रीत्या काम्यकर्माङ्गद्रव्यस्यापि प्रतिनिध्यभावे प्रवृत्तस्य काम्यस्य कर्मणो मुख्यद्रव्यालाभे लोपो मा भूदिति कृत्वा द्रव्यं पदार्थ इत्यपदिश्यते = व्यवह्रियते। द्रव्यपदार्थवादे तु क्वचित् कर्मणि प्रतिनिधिः, क्वचिन्नेति सम्भवति। तद्यथा--याज्यकुले याजनकर्मणि शिष्यो गुरोः प्रतिनिधिः दीक्षाप्रदानकर्मणि तु न प्रतिनिधिः। एवं नित्ये कर्मणि न प्रतिनिधिः, नित्यत्वेन यथाचोदितमवश्यानुष्ठेयत्वाद् अकरणेऽन्यथाकरणे वा प्रत्यवायस्मरणात्, प्रतिनिध्यस्मरणाच्च। काम्ये तु कादाचित्कत्वेन प्रतिनिधिसंभवः, अकरणेऽन्यथाकरणे वा फलासिद्धिरेव, न तु प्रत्यवायः। प्रतिनिधिस्मरणञ्चेति। तदेवं जातिपदार्थवादे प्रतिनिध्यनुपत्तिरित्याशङ्क्य तत्समर्थनायाह—केषाञ्चित् साहचर्येणेति।

अस्यार्थः—केषाञ्चित् = जातिवादिनां मते शब्दानामिति वा, पदार्थभूता जातिः साहचर्येण =एकार्थसमवायरूपेण सामानाधिकरण्यसंबन्धेन शक्त्युपलक्षणं कर्माङ्गमुख्यपदार्थनिष्ठायाः शक्तेर्लक्षणया प्रतिपादने उपायः। अतो विप्रकृष्टत्वदुर्लभत्वादिना कर्मशेषतामभ्युपेतुमशक्तेषु खदिरादिषु सन्निधानादिना तत्र शक्तेः कदरादिः प्रतिनिधीयत इति।

अयं भावः—इह केषाञ्चिज्जातिवादिनामेकार्थसमवायात् = सामानाधिकरण्यरूपात् सम्बन्धात्, वाच्यार्थगतकार्यानुकूलशक्तेर्लक्षणया प्रतिपादने शक्यार्थभूता जातिः प्रतीयमाना उपलक्षणम् = उपायः। लक्षणाप्रवृत्तेर्वाच्यार्थप्रतिपत्तिपूर्वकत्वादिति मतम्। अन्येषां मते तु शब्देन तात्पर्येण जातिरेव प्रतिपाद्यते। कार्ययोगस्तु = विधेयान्वयस्तु तस्याः क्वचित् साक्षात्, गां पश्य इत्यादौ; क्वचिदाक्षिप्तव्यक्तिद्वारेण गामानयेत्यादा-

भूत् प्रधानभूतायाः शक्तेरपि त्यागे क्रियाया असंपत्तिरिति शिष्टसमाचारादन्यजातीयद्रव्यगतापि शक्तिः परिगृह्यते। न चैवमतिप्रसङ्गः, चोदितप्रतिनिधिविषय एवैतस्य न्यायस्येष्टत्वात्। तथा च गोदोहादिचोदनासु तदसामर्थ्ये न महिष्याद्याक्षेपप्रसङ्गः।

उपलक्षणत्वाच्च जातिर्नियमं न विधत्ते। तद्यथा—उपघातकनिवारणपरे वाक्ये काकादिरिति सदृशोपादाने श्रौतार्थत्यागो न भवति। यत्र च संभवश्चोदितस्य श्रौतस्यार्थस्य, तत्र श्रुतिः सफला। तस्मात् 'खादिरे बध्नाति, पालाशे बध्नाति' इत्यादौ खदिरादेर्बन्धनसमर्थस्यालाभे तत्सदृशकदरादिशक्तसाधनपरिग्रहो युज्यते। अनाधारायाः शक्तेरसंभवाद् नान्तरीयकत्वेन जातेरुपादानम्, नियमस्याविधानात्। जातिर्हि शक्त्युपलक्षणम्, न कार्ययोगिनीति तदाश्रयस्याशक्तत्वे तमन्तरेण द्रव्यान्तरगतापि शक्तिर्गृह्यते। यदि तु तज्जातीयमेव शक्तं स्यात्, तदा सन्निहितपरित्यागे

---

विति। अथवा केषाञ्चिदित्यस्य क्वचित् सूत्रप्रदेशे स्थितानां शब्दानामित्यर्थः। प्रतिपाद्यप्रतिपादकभावश्च जात्या सह सम्बन्धः।

ये तु साधनाभिधायिनः कर्तृकर्मादिशब्दाः तेषां साधनशक्तावेव तात्पर्येण तत्र कर्तृत्वकर्मत्वादिजातेरुपादानं शक्त्युपलक्षणत्वान्नान्तरीयकम्। साधनशक्तिवाचिन्या विभक्तेः केवलाया अप्रयोगार्हत्वात्। ततश्च प्रातिपदिकस्यावश्यमुपादानमिति कर्तृकर्मादि प्रातिपदिकवाच्यया सामानाधिकरण्येन घटत्वादिजात्युपलक्षितया कर्तृत्वकर्मत्वादिजात्या विशेषभूतया सामान्यभूता कर्तृकर्मादिसाधनशक्तिरभेदेनावच्छिद्यते, सम्भवात्। यथा 'कर्तृकर्मणोः कृति' (पा० सू० २।३।६५) इत्यादौ, तद्रीत्या परिच्छेदासम्भवे तु "कर्मण्यण्" (पा० सू० ३।२।१) इत्यादौ तत्सदृशापरजातिसहचरिताऽपि = कर्मत्वादिजातिसदृशघटत्वादिरूपतद्व्याप्यजातिसमानाधिकरणापि, घटत्वादिजातौ कर्मत्वादिजातिसादृश्यञ्च व्याप्यव्यापकभावेन, एकार्थसमवायेन, जातित्वेन च त्रितयेन समुदितेन, कर्मादिशक्तिर्लक्षणया गृह्यते तात्पर्येण "कर्मण्यण्" (पा० सू० ३।३।२) इत्यादिचोदनात्। नह्यस्त्यत्र सम्भवः, कर्म कारकं करोतीति कर्मकार इति द्वितीयाया असम्भवात्। व्युत्पादितश्चैतद् व्युत्पत्तिवादे आदावेवेति।

एवं वेदेऽपि 'खादिरे यूपे पशुं बध्नाति' पालाशे पशुं बध्नाति' इत्यादौ विशिष्टे वाक्यार्थे प्रधानीभूतया बन्धनक्रिययाऽविनाभावेनाधिकरणसामान्याक्षेपे सिद्धे विशिष्टजातीयसाधनप्रतिपत्त्यर्थं खादिरे, पालाशे इति साधनविशेषवाचकशब्दोपादनेऽपि विप्रकृष्टत्वादिना विशिष्टजातीयस्य साधनस्य खदिरादेरसम्भवे सति जातिवाचकशब्दस्य क्रियासाधनशक्त्यावेदनपरतया प्रयोगान्मा भूत् प्रधानभूतायाः शक्तेरपि त्यागे बन्धनक्रियाया असम्पत्तिरिति खदिरान्यकदरादिद्रव्यगताऽपि शक्तिः शिष्टसमाचारात् परिगृह्यते।

कारणाभावात् तज्जातीयमेवोपादीयेत। तदशक्तत्वे तूपलक्षणस्योपलक्षणे चरितार्थत्वाद् अन्यस्यापि तत्कार्ययोगे तदुपलक्षिता शक्तिः शास्त्रचोदितेत्यर्थान्तरगताप्यपर्युदस्तत्वादुपादीयत इति नियमो नास्ति। सदृशार्थान्तरगता च शक्तिर्गृह्यत इति नातिप्रसङ्गः ॥ ३ ॥

अथ येषां जातिवादिनां मते तात्पर्येण जातिरभिधेया न शक्त्युपलक्षणम्, तेषां कथं प्रतिनिधिरुपपद्यत इत्याशङ्क्याह—

---

न चैवं विल्वाम्रादिगताऽपि बन्धनशक्तिः परिगृह्येत इत्यतिप्रसङ्ग इति वाच्यम्, चोदितप्रतिनिधिविषये एवैतस्य न्यायस्येष्टत्वात्। कदरादीनाञ्च खदिरादिप्रतिनिधित्वेन चोदितत्वात्, अचोदितत्वाच्चेतरेषाम्। तथा च गोदोहनादि चोदनासु गवां विप्रकृष्टत्वादिना दोहनेऽसामर्थ्येन महिष्याद्याक्षेपप्रसङ्गः, अचोदितत्वात्। शक्तेरुपलक्षणत्वाच्च प्रकृतिवाच्या जातिः शक्तिनियमं नियतद्रव्यशक्तिपरिग्रहरूपं न विधत्ते शक्तिविशेषणस्यैव शक्तिनियामकत्वात्। तद्यथा—'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ दध्युपघातकनिवारणपरे वाक्ये लक्ष्यार्थे उपलक्षणीभूतः काकादिर्लक्ष्यार्थस्य स्वसदृशस्य नियामको न भवतीति सदृशोपादानेऽपि काकरूपस्य श्रौतार्थस्य त्यागो न भवति। एवञ्च यत्र चोदितस्य श्रौतस्यार्थस्य सन्निकर्षेण सम्भवस्तत्रापि प्रवर्तमाना श्रुतिः श्रौतार्थोपादाने सफला भवति। तस्मात् खादिरे बध्नाति, पालाशे बध्नाति इत्यादौ खदिरादेर्बन्धनसमर्थस्यालाभे तत्सदृशकदरादिशक्तसाधनपरिग्रहो युज्यत एव। तथाहि—जातेरयोग्यतया कार्ययोगित्वाभावेन शब्दतात्पर्यविषयीभूतायाः शक्तेरनाधाराया असम्भवाद् नान्तरीयकत्वेन जातेरुपादानमिति तया शक्तिनियमस्याविधानम्।

किञ्चायोग्यतया कार्ययोगित्वाभावेन जातिः शक्त्युपलक्षणमिति प्रागुक्तरीत्या तस्याः शक्तिनियामकत्वाभावेन तदाश्रयस्य विप्रकर्षादिनाऽशक्तत्वे तज्जात्याश्रयमन्तरेण सन्निहितसुलभद्रव्यान्तरगताऽपि शक्तिः परिगृह्यते। यदि तु श्रुतार्थजातीयमेव शक्तं स्यात् तदा श्रुतिसन्निहिततज्जातीयार्थपरित्यागे कारणाभावात् तज्जातीयमेवोपादीयेत। तज्जातीयस्य श्रुतार्थस्य विप्रकर्षादिनाऽशक्तत्वे तु शक्त्युपलक्षणस्य जातिरूपस्यार्थस्य शक्त्युपलक्षणक्रियायां चरितार्थत्वात् प्रागुक्तरीत्या शक्तिनियामकत्वाभावेन अन्यस्यापि द्रव्यस्य कदरादेर्बन्धनादिकार्ययोगे श्रुतजात्युपलक्षिता शक्तिः शास्त्रेण बोधितेति कृत्वा कदरादिगताऽपि शक्तिः शास्त्रेणापर्युदस्तत्वादुपादीयत इति कृत्वा शक्तिनियमाभावे खदिरादिश्रौतद्रव्यसदृशकदरादिद्रव्यगताऽपि शक्तिर्गृह्यत इति नाम्रविल्वादौ बन्धनक्रियाप्राप्तिरूपोऽतिप्रसङ्ग इति ॥ ३ ॥

**अस्वातन्त्र्यफलो बन्धिः प्रमाणादीव शिष्यते ।**
**अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ।। ४ ।।**

अत इति । अस्वातन्त्र्यफलस्य बन्धेर्विधानाच्चोदनाज्जातेः प्रतिपाद्यत्वेऽप्युपलक्षणत्वाभावेऽप्यस्वातन्त्र्यप्रयोजनबन्धिविधिसामर्थ्याच्छक्तिहीनस्य खदिरादेस्त्यागे शक्तं कदरादि प्रतिनिधीयते । वाक्यार्थभूता हि बन्धिक्रिया प्रधानमिति तत्संपादनशक्तस्य पदार्थस्य परिग्रहो न्याय्यः । ननु च दृष्टफले बन्धौ कोऽनुरोध इत्याशङ्क्योक्तम् प्रमाणादीव शिष्यते इति । यथा दृष्टफलं प्रमाणादि चोदितम्, तथा तदङ्गभूतोऽपि बन्धिरिति सर्वथासावनुरोध्यः । तथा हि—असति पशोयू पे बन्धने प्रमाणाद्यनुपपत्तावदानग्रहाभावात् स्वर्गफलस्य यजेरेवासंपत्तिः स्यादिति तदनुरोधात् तदङ्गसम्पत्त्यर्थं तत्समुचितसाधनाक्षेपः । तत्र प्रमाणं हिंसाप्रारम्भः । मीञो हिंसार्थस्य ल्युटचेज्विषये रूपम्, आत्वे च कृते मानम् तस्यारम्भः प्रशब्देन

---

ननु येषां जातिवादिनां मते शब्दानां तात्पर्येण जातिरभिधेया, न तु सा शक्त्युपलक्षणम्, तेषां मते जातेर्विशेषणतया स्वाश्रयनियामकत्वेन कथं प्रतिनिधिरुपपद्यत इत्याशङ्क्याह—अस्वातन्त्र्यफल इति ।

अस्यार्थः—प्रमाणादीव । यथा दृष्टमवदानग्रहरूपं फलं यस्य तथा भूतं प्रमाणादि, अत्र प्रमाणं हिंसायाः प्रारम्भः । मीञो हिंसार्थस्य ल्युटचेज्विषये रुपम्, आत्वे कृते मानम्, तस्यारम्भः प्रशब्देन द्योत्यते । आदिग्रहणाद् आलम्भनादेरवदानग्रहणपर्यन्तस्य प्रमाणोत्तरस्य प्राकरणिकस्याङ्गकलापस्य परिग्रहः । शिष्यते = शास्त्रेण विधीयते, तथाऽस्वातन्त्र्यरूपं दृष्टं फलं यस्य तथाभूतो बन्धिरपि = बन्धनमपि तदङ्गभूतः शिष्यते । एवञ्च यथा दृष्टफलकप्रमाणाद्यनुरोधात्, तदङ्गसंपत्त्यर्थं तत्समुचितस्य साधनस्याक्षेपः, तथा दृष्टफलार्थं चोदितेन बन्धनेनाऽपि स्वस्मिन् शक्तस्यैव साधनस्य कदरादेः प्रतिनिधित्वेन परिग्रहः । अतो जात्यभिधानेऽपि = खदिरत्वादिजात्यभिधानेऽपि, शक्तिहीनं विप्रकर्षादिना बन्धनानुकूलशक्तिहीनं खदिरादि न गृह्यते = बन्धनसाधनत्वेन न गृह्यत इति । अत्रोत्तरार्धे 'अतः' इत्युपादानात् पूर्वार्धे यतः' इति श्लोकादावध्याहर्त्तव्यम् ।

अयं भावः—अस्वातन्त्र्यफलकस्य बन्धेः प्रमाणादेरिव शिष्यमाणत्वाद् विधानात् चोदनात्, जात्यभिघानेऽपि=श्रौतैः खदिरादिपदैः खदिरत्वादिजातेः प्रतिपाद्यत्वेऽपि, तस्याः शक्त्युपलक्षणत्वाभावपक्षेऽपि पशोः स्वप्रमोचनेऽस्वातन्त्र्यरूपफलवतो बन्धेर्विधिसामर्थ्याद् असन्निधानादिना तादृशबन्धनानुकूलशक्तिहीनस्य खदिरादेस्त्यागे खदिरादिपदस्य बन्ध-

**द्योत्यते। आदिग्रहणादालम्भनादेरवदानग्रहणपर्यन्तस्य तदुत्तरस्य प्राकरणिकस्याङ्ग-कलापस्यानुरोधः। अयमत्र पक्षद्वयेऽप्याशयः। यदि नाम जातेः प्रकृत्यर्थभूतायाः शक्त्यवच्छेदकत्वेनोपात्ताया असंभवः, तज्जात्यवच्छिन्नस्याशक्तत्वात्, तथापि प्रत्ययार्थस्य शक्तेरवच्छेद्याया अपि त्यागो न युक्तः, अपि त्वन्यगतापि सा गृह्यते। मा भूत् तद्वाचिनः पदस्यानर्थक्यम्, वाक्यार्थस्य च क्रियाया असंपत्तिरिति गामालभेतेत्यादौ च सर्वत्र योग्यव्यक्तिविषयैव क्रियावतिष्ठत इति प्रतिनिधावपि किमिति संभ्रमः॥ ४॥**

**इदानीमत्रैव लिङ्गेनापि प्रतिनिधिमुपपादयति—**

---

नानुकूलशक्तिमति लक्षणया तत्र शक्तं कदरादि प्रतिनिधीयते। दधि रक्ष्यतामित्यत्रेवाजहल्लणास्वीकारेण च सन्निधानादिना शक्तः खदिरोऽपि गृह्यत एव। यतः प्रायेण वैयाकरणैः क्रियामुख्यविशेष्यको वाक्यार्थबोधः स्वोक्रियत इति वाक्यार्थभूता बन्धिक्रिया प्रधानमिति प्रधानानुरोधेन तत्संपादनशक्तस्यैव पदार्थस्य परिग्रहो न्यायः।

नन्वास्वातन्त्र्यरूपं दृष्टं फलं प्रतिबन्धेः साधनत्वमन्वयव्यतिरेकाभ्यामेव सिद्धमित्यन्यतः प्राप्तत्वाद् बन्धेर्न विधानम्, किन्त्वनुवादः। एवञ्चाविधेयत्वेन श्रुतितात्पर्यविषयत्वाभावाद् बन्धेः कोऽनुरोध इत्याशङ्क्योक्तम्-प्रमाणादीव शिष्यत इति।

अयमर्थः—यथा दृष्टफलं प्रमाणादि चोदितम्, तथा तदङ्गभूतो बन्धिरपीति यथा प्रमाणादिदृष्टफलकमप्यनुरोद्धव्यं भवति, तथा तादृशो बन्धिरपि सर्वथाऽनुरोद्धव्य एव। तथाहि—पशोर्यूपे बन्धनेऽसति तस्य प्रमाणाद्यनुपपत्तौ यागेऽवदानग्रहाभावात् = अवत्तस्य मांसरूपस्य हविषो ग्रहणाभावात् स्वर्गफलकस्य यागस्यासिद्धिरेव स्यादिति प्रमाणाद्यनुरोधात् तदङ्गस्य बन्धेरपि सिद्धयर्थं तच्छक्तस्यैव साधनस्याक्षेपः = लक्षणया अवबोध इति। सर्वेषां शब्दानां जातिस्तात्पर्येणाभिधेयेति, जातिःशक्त्युपलक्षणमिति च जातिवादिनां पक्षद्वयेऽपि। अयमत्राशयः—यदि नाम खदिरत्वादिजातेः प्रकृत्यर्थभूताया विशेषणत्वोपलक्षणत्वयोरन्यतररूपेण प्रत्ययार्थकारकशक्त्यवच्छेदकत्वेनोपात्तायाः क्वचिदसम्भवः, तज्जात्यवच्छिन्नस्य विप्रकर्षादिनाऽशक्तत्वात्। तथा च प्रकृत्यर्थत्वेनाप्रधानीभूतायास्तस्यास्तत्र त्यागेऽपि प्रत्ययार्थत्वेन प्रधानीभूतायास्तदवच्छेद्यायाः शक्तेरपि त्यागो न युक्तः, अपितु प्रकृत्यर्थान्यगताऽपि सा गृह्यते मा भूत्तद्वाचिनः प्रत्ययपदस्यानर्थक्यम्, मा भूच्च वाक्यार्थस्य क्रियाया असंपत्तिः = असिद्धिः, इति रीत्या 'गामालभेत' इत्यादौ सर्वत्रैव शक्तव्यक्तिविषयैव क्रिया व्यवतिष्ठत इति तत्र तत्र प्रकृत्यर्थप्रतिनिधावपि गृह्यमाणे किमिति सम्भ्रमः = संक्षोभः समाश्रीयत इति॥ ४॥

**संश्लेषमात्रं बध्नातिर्यदि स्यात्तु विवक्षितः।**
**शक्त्याश्रये ततो लिङ्गं प्रमाणाद्यनुशासनम् ॥ ५ ॥**

**बध्नात्यर्थं उपचाराद् बध्नातिरित्युक्तः। संश्लेषो यूपे पशोर्योजनम तदेवास्वातन्त्र्यलक्षणफलानपेक्षं तन्मात्रम्। तद्यदि बध्नात्यर्थोऽभिमतः, तदा तस्य खदिरलतयापि संपाद्यत्वसंभवे कदरोपादाने सामार्थ्यं नास्तीति ततः संश्लेषादुत्तरकालं प्रमाणादीनां 'पशुमालभेत', 'हृदयेऽवद्यति, अथ वक्षसि' इत्यादिवचनेन यदनुशासनम् तदत्र समर्थद्रव्योपादाने लिङ्गम् अनुमानम्। अथवा पूर्वं बन्धिरेव लिङ्गमासीत्, इदानीं यदि संश्लेषमात्रं बध्नातिस्ततः प्रमाणाद्यनुशासनं लिङ्गमित्यर्थः। पशुविशसनाङ्गस्य हि बन्ध्यर्थस्यात्रोपादानं युक्तम्। असमर्थश्च विशसने बध्नात्यर्थो न तदङ्गमित्येकप्रकरणोपात्तप्रमाणाद्यर्थपर्यालोचनालभ्यः प्रतिनिधिः। पूर्वं पदार्थसामर्थ्यादनन्तरं वाक्यार्थ-**

---

एवं खदिरे बध्नातीत्यादौ सति सम्भवे प्रकृतिप्रत्ययार्थयोरुभयोः परिग्रहः असम्भवे तु कारकशक्तेरेव प्रत्यार्थस्येति रीत्या प्रतिनिधिमुपपाद्य इदानीमत्रैव लिङ्गेनापि=अनुमानेनाऽपि प्रतिनिधिमुपपादयितुमाह—संश्लेषमात्रमिति।

अस्यार्थः—यदि तु संश्लेषमात्रम्=संश्लेषो यूपे पशोर्योजनम्, तदेव अस्वातन्त्र्यरूपफलानपेक्षम्, बध्नातिः, बध्नातीत्यर्थः=अत्र बध्नात्यर्थो लक्षणया बध्नातिपदेनोक्तः। विवक्षितः=तात्पर्यविषयीभूतोऽभिमतः स्यात्, तदा तस्य खदिरलतयाऽपि=लताकारेण, लघुनाऽपि खदिरेण संपाद्यत्वसंभवान्नास्ति कदररूपप्रतिनिध्युपादाने सामर्थ्यमिति। ततः=यूपे पशोः संश्लेषरूपाद् बन्धनादुत्तरकालिकं यत् 'पशुमालभेत', 'हृदयेऽवद्यति' 'अथ वक्षसि' इत्यादिवचनैः प्रमाणादीनामनुशासनम्, तदेवात्र शक्त्याश्रये कदरादिरूपबन्धनसमर्थद्रव्योपादाने लिङ्गमनुमानम्। अथवा पूर्वं बन्धिरेव=अस्वातन्त्र्यरूपफलसापेक्षो बध्नात्यर्थ एव समर्थद्रव्योपादाने लिङ्गमासीत्। इदानीं संश्लेषमात्रमस्वातन्त्र्यरूपफलनिरपेक्षं यदि बध्नात्यर्थस्ततः प्रमाणाद्यनुशासनं लिङ्गमित्यर्थः। तथा चाद्यपक्षेऽपमत्रानुमानप्रयोगः—'खदिरे पशुं बध्नाति' इति वाक्यस्थं खदिरपदम्, बन्धनसमर्थद्रव्यपरम्, अस्वातन्त्र्यफलकबन्धनक्रियाधिकरणत्वात्, यन्नैवं तन्नैवं, यथा यूपं पश्येति वाक्यस्थं खदिरपदमिति। द्वितीयपक्षे त्वेवमनुमानप्रयोगः—पक्षसाध्ये पूर्वे एव। अनुशिष्यमाणप्रमाणादिक्रियासबन्धिपश्वधिकरणत्वात्—इति हेतुः। खदिरपदेन समर्थद्रव्यस्योपादाने तृतीयोऽपि प्रकारोऽत्र संभवति। तथाहि—अत्र बध्नातिपदेन पशुविशसनाङ्गस्य बन्ध्यर्थस्योपादानं युक्तम्, विशसनेऽसमर्थश्च बध्नात्यर्थो न विशसनाङ्गमित्येकप्रकरणोपात्तप्रमाणाद्यर्थपर्यालोचनालभ्यः प्रतिनिधिः। एवञ्च अयमत्र तृतीयोऽनुमानप्रयोगः। पक्षसाध्ये त एव। एकप्रकरणोपात्तप्रमाणाद्यर्थोपयुक्तबन्धनाधिकरणत्वादिति हेतुः। व्यतिरेको दृष्टान्तोऽपि प्रथमपक्षोक्त एव। अयन्तु पक्षत्रयेऽपि शेषः। पूर्वं बन्धिपदार्थसामर्थ्यात्, अनन्तरन्तु प्रमाणादिरूपवाक्यार्थसामर्थ्यात्। तृतीये तु प्रकरण-

**सामर्थ्यात् प्रतिनिधिरुक्तः, संप्रति प्रकरणसामर्थ्यादिति पक्षत्रये विशेषः। शक्तेराश्रयः कदरद्रव्यं तत्रोपादीयमाने लिङ्गमिति संबन्धः। यद्वा शक्तिः कार्यस्य निर्वर्तको द्रव्यस्यात्मातिशयः, तदाश्रये तदभ्युपगम इत्यर्थः**

तदेवं यदुक्तं वाक्यकाण्डे—
**'यश्च जातिसमुद्देशे प्रतिनिधिं प्रत्यपरो दर्शनभेदः'। इति**
सोऽयमिह व्याख्यातः।

**तत्र पुनरन्यो दर्शनभेदः प्रतिपादितः—असंभवनियमत्यागो नियममात्रबाधश्चेति। तथा हि—व्रीहिभिर्यजेतेति देवतोद्देशेन द्रव्यत्यागस्य यज्यर्थत्वाद्यजतिक्रियैकदेशभावापन्नं द्रव्यमात्रं यजेतेत्येव सामर्थ्यात् प्राप्तम्। एतावानेव हि यज्यर्थ इति श्रुतिप्राप्तसन्निधानमेव द्रव्यमात्रम्। द्रव्यदेवतारहितस्य त्यागमात्रस्य यज्यर्थत्वायोगात् प्रतीते तस्मिन्नर्थसामर्थ्यादनन्तरं द्रव्याक्षेपस्यायोगात्। इत्थं च क्रियाप्रधानत्वेऽप्याख्यातस्य तदेकदेशभूतं साधनाधारमपि द्रव्यसामान्यं श्रुतिप्राप्तसन्निधानं शाब्दमेव। तत्र व्रीहिभिरिति व्रीहित्वेनाविरुद्धैकार्थसमवायेन विशेषेण परिपोषः, निर्विशेषस्य सामान्यस्याभावात्। अध्यावापार्था हि व्रीहिश्रुतिः शब्दसामर्थ्यप्राप्तं द्रव्यत्वमात्रमविरोधान्न बाधते। तद्धि श्रुतिसामर्थ्यप्राप्तम्, व्रीहित्वं पुनरर्थसामर्थ्यायातम्, निर्विशेषस्य**

---

सामर्थ्यात् प्रतिनिधिरुक्त इति। कारिकायां—शक्त्याश्रय इत्यस्य लिङ्गमित्यनेनान्वयः। बन्धनानुकूलशक्तेराश्रयः कदरद्रव्यम्, तत्रोपादीयमाने लिङ्गमिति तदर्थः। यद्वा शक्तिः कार्यस्य निर्वर्तको द्रव्यस्य आत्माशितयः। तदाश्रये तदभ्युपगम इत्यर्थः।

तदेवं यदुक्तं वाक्यकाण्डे 'यश्च जातिसमुद्देशे प्रतिनिधिं प्रत्यपरो दर्शनभेदः' इति सोऽयमिह व्याख्यातः। वाक्यकाण्डे पुनरन्यः प्रतिनिधिविषये दर्शनभेदः प्रतिपादितः। असम्भवनियमत्यागो नियममात्रबाधश्चेति। तत्राद्यो यथा—व्रीहिभिर्यजेतेति देवतोद्देशेन द्रव्यत्यागस्य यज्यर्थत्वाद् यागक्रियैकदेशभावापन्नं द्रव्यसामान्यं यजेतेति शब्दसामर्थ्यादेव लब्धम्। प्रागुक्त एव हि यज्यर्थ इति श्रुतिप्राप्तसन्निधानमेव द्रव्यसामान्यम्। अतः श्रुतिपदेन स्वार्थबोधनेऽन्यानपेक्षः शब्दः परिगृह्यते। द्रव्यदेवतारहितस्य त्यागसामान्यस्य यज्यर्थत्वासम्भवाद् यजिनैव प्रतीते द्रव्यसामान्येऽनन्तरं यज्यर्थसामर्थ्याद् द्रव्याक्षेपस्य योगात्। एवञ्चाख्यातस्य क्रियाप्रधानत्वेऽपि प्रागुक्तरीत्या तदेकदेशभूतं साधनशक्त्याधारमपि द्रव्यसामान्यं यजेतेति श्रुतिप्राप्तसन्निधानं शाब्दमेव। तत्र च व्रीहिभिरिति प्राप्तेन व्रीहित्वेन द्रव्यत्वाविरुद्धैकार्थसमवायेन विशेषेण = व्याप्येन द्रव्यत्वसामान्यस्य परिपोषः = व्रीहिरूपे द्रव्ये व्यवस्थापनम् भवति, निर्विशेषस्य सामान्यस्याभावात्। एवञ्च द्रव्यत्वसामान्यस्य यजेतेति श्रुत्या यागाङ्गत्वं चोदितम्, न तु विशेषस्य व्रीहित्वस्येति द्रव्यत्वसामान्यस्य यागाङ्गत्वासम्भवे विशेषान्तरेण = व्रीहिपदबोधितेन, व्रीहित्वेन द्रव्यत्वसामान्यस्य परिपोषेऽपि = द्रव्यविशेषे व्यवस्थापनेन यागाङ्गत्वसंपादनेऽपि यवरूपप्रतिनिधि-

**सामान्यस्याभावात्। एवं च द्रव्यत्वमात्रस्य श्रुत्या अङ्गभावश्चोदितो न व्रीहित्वस्य विशेषस्येति तदसम्भवेऽपि विशेषान्तरेण सामान्यमात्रस्य परिपोषे प्रतिनिधिविषये चोदितस्य बाधा न भवति।**

**ननु चाध्यावापे व्रीहिभिर्द्रव्यत्वस्याबाधितत्वाद् विकल्पः प्राप्नोति सर्वत्र व्रीहिभिर्यवैर्वेत्यादि। अविशिष्टं हि द्रव्यत्वं श्रुतिसामर्थ्यप्राप्तम्, तस्य चेद् व्रीहिश्रुत्या विशेषान्तरादवच्छेदो न क्रियते, तदा तदपि विशेषान्तरं तेन स्वीकृतं प्राप्तसन्निध्येवेति विकल्पप्रसङ्गः, तथा च व्रीहिश्रुतेरानर्थक्यम्। अत्रोच्यते–इह व्रीहित्वेन द्रव्यत्वे विशेषिते वस्तुसामर्थ्याद्यवत्वादीनामसम्भवः। न हि यत्र व्रीहित्वैकार्थसमवायि द्रव्यत्वं तत्रैव यवत्वैकार्थसमवायि संभवति। ततश्चासंभवनियमो नामायम्।**

**द्विप्रकारो हि नियमः—कश्चिच्छब्दसामर्थ्यायातो भवति, यत्र पक्षे प्राप्तौ सत्यां श्रुतिः। यथा व्यक्तौ पदार्थे 'विप्रतिषेधे परम्' इति। कश्चित् पुनरसत्यपि शब्दव्यापारे पदार्थानामितरेतररूपसाङ्कर्याभावादेकचोदना तदन्यनिवृत्तिफलेति पदार्थस्वरूपविमर्शायातोऽसंभवनियम इत्युच्यते। तथा चेह शब्दसामर्थ्यायातं द्रव्यत्वमिति,**

---

रूपे यागस्य विषयेऽभ्युपगतेऽपि यागाङ्गतया चोदितस्य द्रव्यत्वसामान्यस्य काऽपि बाधा न भवति यवत्वस्यापि द्रव्यत्वैकार्थसमवायित्वेन तेन सहाविरोधात्।

ननु व्रीहिभिर्यजेत इत्यत्र प्रागुक्तरीत्या यजिश्रुतिचोदिते द्रव्यत्वसामान्येऽधिकस्य तदेकार्थसमवायिनो व्रीहित्वस्य आवापे = विशेषणत्वेन प्रक्षेपे व्रीहित्वेन द्रव्यत्वस्याबाधाद् द्रव्यत्वसामान्यविशेषस्य यवत्वस्य व्रीहिसन्निधानेऽपि विकल्पकः प्राप्नोति, व्रीहिभिर्यवैर्वा इति। यजिश्रुतिसामर्थ्यप्राप्तं हि द्रव्यत्वमविशिष्टं व्रीहिषु यवेषु च, तस्य चेद् विशेषान्तराद् = यवाद् अवच्छेदः = व्यावृत्तिः, व्रीहिश्रुत्या न क्रियते, तदा यवरूपमपि विशेषान्तरं द्रव्यत्वेन यागाङ्गतया गृहीतं यजिश्रुत्या प्राप्तसन्निधानमेवेति व्रीहिसम्भवेऽपि व्रीहियवयोः विकल्पप्रसङ्गः। तथा च व्रीहिश्रुतेरानर्थक्यं प्राप्नोतीति चेदत्रोच्यते—

इह व्रीहित्वेन द्रव्यत्वे विशेषिते वस्तुसामर्थ्याद् = विशेषणीभूतवस्तुस्वभावाद् यवत्वादीनां व्यावृत्त्या तेषामसम्भवः नहि यत्र व्रीहित्वैकार्थसमवायिद्रव्यत्वं तत्रैव यवत्वैकार्थसमवायि संभवति। अत एव चाऽयं व्रीहित्वादिना यवत्वादीनां व्यावृत्तिरूपोऽसम्भवनियमः। अत्रासंभवरूपो नियम इति कर्मधारयः। अयञ्च नियमो द्विप्रकारः। क्वचित् शब्दसामर्थ्यायातो भवति, क्वचित्तु पदार्थस्वरूपविमर्शायात इति। तत्राद्यः—यत्र पक्षे प्राप्तौ सत्यां श्रुतिरभ्यस्ति। अस्योदाहरणानि सर्वाणि नियमसूत्राणि। यथा व्यक्तौ पदार्थे 'विप्रतिषेधे परं कार्यम्' इति। द्वितीयस्त्वसत्यपि शब्दव्यापारे पदार्थानां परस्परं रूपसाङ्कर्याभावादेकपदार्थचोदना तदन्यपदार्थनिवृत्तिफला इति। अस्य च सर्वाणि विधिसूत्राण्युदाहरणानि। एवञ्चेह यजेतेति शब्दसामर्थ्यायातं द्रव्यत्वमिति तत्र व्रीहित्वस्याध्यावापो व्रीहिभिरिति शब्दव्यापारः। यद्यप्यखण्डो वाक्यार्थ इति नये नेदं सर्वं संभवति, तथापि

व्रीहिभिरिति तत्राध्यावापः शब्दव्यापारः। अखण्डेऽपि हि वाक्यार्थनयेऽपोद्धारदशागतो भेदसंसर्गादिविकल्पः। तत्र व्याडिमते भेदो वाक्यार्थः, पदवाच्यानां द्रव्याणां द्रव्यान्तरनिवृत्तितात्पर्येणाभिधेयत्वात्। जातिवादिनो वाजप्यायनस्य तु मते संसर्गो वाक्यार्थः, सामान्यानां पदार्थानां संश्लेषमात्ररूपत्वाद् वाक्यार्थस्य। इयति चरितार्थे व्रीहिशब्दे व्रीहित्वस्य यवत्वादिभिर्विरुद्ध एकस्मिन्नर्थे समवाय इति तत्र तानि निवर्तन्ते। ततश्च प्रतिनिधौ वस्तुसामर्थ्यायातस्य नियमस्य बाधेऽपि शाब्दस्य द्रव्यत्वमात्रस्याबाधितत्वान्न चोदितार्थत्यागः।

ननु च निर्विशेषस्य सामान्यस्यासम्भवाद् यजिना विशेषनिष्ठमेव द्रव्यत्वमाक्षिप्तमिति सर्वविशेषाणां श्रुतिसामर्थ्यप्राप्तत्वाद् व्रीहिभिरिति पुनः श्रुतिर्नियमफलैव श्रौतेनापि रूपेण संजातेति कथं न श्रौतार्थत्यागः प्रतिनिधौ। नैतन्न्याय्यम्। न हि शब्दोऽवस्तुचिन्तामनुसरति, कस्यचिदेव वस्तुभागस्य शब्दव्यापारविषयत्वात्। तथा च यजतिशब्दस्येयत्येव सामर्थ्यं द्रव्यमात्राक्षेपे, न तु तद्विशेषे। अन्यथा निर्गुणस्य च द्रव्यस्यासंभवाद् गुणस्याप्याक्षेपकोऽसौ किमिति न वर्ण्यते। तस्माद् द्रव्यत्वमात्रस्यैवाक्षेपः शाब्द इति तत्परिपोषाय विशेषान्तरावापो न नियमफल इति शास्त्रेणापर्युदस्तानां विशेषान्तराणां प्रतिनिधित्वसिद्धिः। तदित्थमसंभवनियमत्यागो वर्णितः। नियममात्रबाधश्चाप्युच्यते।

---

तन्नयेऽप्यपोद्धारदशागतो भेदसंसर्गादिरूपवाक्यार्थविकल्प इति सर्वसंभवः। तथाहि— व्याडिमते भेदो वाक्यार्थः, द्रव्यान्तरनिवृत्तितात्पर्येण पदवाच्यानां द्रव्याणामभिधेयत्वात्। जातिपदार्थवादिनो वाजप्यायनस्य तु मते संसर्गो वाक्यार्थः, सामान्यानां पदार्थानां संश्लेषमात्रत्वाद् वाक्यार्थस्य। एवञ्च यज्यर्थेन संश्लेषमात्रमनुभूय चरितार्थे व्रीहिशब्दे यवादिनिवर्तनसामर्थ्याभावेऽपि व्रीहित्वस्य यवत्वादिभिः सहैकस्मिन्नर्थे समवायो विरुद्ध इति कृत्वा व्रीहिश्रुतौ सत्यां यवादीनि निवर्तन्ते। ततश्च प्रकृते यवरूपे प्रतिनिधौ परिगृह्यमाणे सति व्रीहिवस्तुसामर्थ्यायातस्यासंभवनियमस्य बाधेऽपि=बाधेन त्यागेऽपि, शाब्दस्य द्रव्यत्वसामान्यस्याबाधितत्वान्न चोदितार्थस्य त्यागो भवति।

ननु निर्विशेषस्य सामान्यस्यासंभवाद् यजिना विशेषनिष्ठमेव द्रव्यत्वमाक्षिप्तमिति सर्वविशेषाणां यजेतेति श्रुतिसामर्थ्यप्राप्तत्वाद् व्रीहिभिरिति पुनर्विशेषश्रुतिः श्रौतेनाऽपि रूपेण नियमार्थैव संजातेति प्रतिनिधिपरिग्रहे कथन्न श्रौतार्थत्याग इति चेत्, नैतन्न्याय्यम्। यतः शब्दोऽवस्तुचिन्तां=स्वाशक्यपदार्थस्मृतिं नानुसरति, कस्यचिदेव वस्तुभागस्य स्वशक्यस्य शब्दव्यापारविषयत्वात्। तथा च यजति-शब्दस्येयत्येव = द्रव्यमात्राक्षेपे सामर्थ्यम्, न तु द्रव्यविशेषे व्रीहियवादौ। अन्यथाऽनयैव रीत्या निर्गुणस्यापि द्रव्यस्यासंभवाद् गुणस्याप्याक्षेपकोऽसौ यजतिशब्दः किमिति न वर्ण्यते।

तस्माद् द्रव्यत्वसामान्यस्यैव यजतिनाऽऽक्षेपः शाब्द इति तत्परिपोषाय =द्रव्यत्व-

**इह सर्वत्रैव क्रियाप्रधानं वाक्यार्थः। तया च स्वसिद्ध्यर्थं योग्यद्रव्यमाक्षिप्यते साधनम्। तदेव च पदान्तरेण विशिष्टं कथ्यते। इत्थं स्थिते यत्र श्रुतस्य साधनस्यासंभवस्तत्र प्रधानभूतक्रियासंपत्त्यर्थं साधनान्तरं प्रतिनिधीयते। क्रिया हि न प्रतिनिधीयते प्राधान्यात्। क्रियान्तराश्रयणे च कर्मान्तिरस्याचोदितस्यानुष्ठानाच्छास्त्रार्थोल्लङ्घनं स्यादिति गुणभूतस्य साधनस्यैव प्रतिनिधिराचरितः शिष्टैः। तत्र च प्रधानभूतक्रियापदार्थाक्षिप्तस्य शास्त्रचोदितस्य साधनमात्रस्य न त्यागः, अपि तु व्रीह्यादिपदोपात्तस्य द्रव्यविषयस्य नियममात्रस्य बाधः। स च न दोषाय, शक्तिमात्रस्य साधनरूपस्य क्रियासामर्थ्याक्षिप्तस्य प्राधान्याच्छास्त्रचोदितस्योपात्ताधाररूपद्रव्याभावे तदपरतदाधारभूतद्रव्योपादानेऽपि तस्यापरित्यागाच्चोदितार्थोल्लङ्घनाभावात्॥ ५॥**

**तदेवमेतदनन्तरकाण्डे दर्शनद्वयमुपपादितमिति यथासंभवं प्रतिनिधिश्च चिन्तितः। इदानीं जातौ शब्देनाभिधीयमानायां तत्र जात्यन्तराभावान्निर्निमित्ता शब्दस्य प्रवृत्तिरायातेत्याशङ्कयोपपादयितुमाह—**

---

सामान्यस्य व्रीहिरूपे विशेषेऽर्थे व्यवस्थापनाय व्रीहिभिरिति श्रुत्या व्रीहिरूपस्य विशेषान्तरस्य द्रव्यत्वे विशेषणतया आवापः=प्रक्षेपः न नियमार्थ इति व्रीह्यादिशास्त्रस्य नियमत्वाभावेन तेनाप्रतिषिद्धानां यवादीनां प्रतिनिधित्वसिद्धिः।

तदित्थं प्रतिनिधावसंभवनियमत्यागो वर्णितः। नियममात्रबाधोऽपि साम्प्रतमुच्यते। तथाहि—वाक्ये सर्वत्रैव क्रियाप्रधानं वाक्यार्थः। क्रियया च साधनरूपं स्वयोग्यद्रव्यं स्वसिद्ध्यर्थमाक्षिप्यते। तदेव च क्रियाऽऽक्षिप्तं साधनसामान्यं साधनविशेषवाचिना व्रीहिभिर्यजेतेत्यादौ व्रीह्यादिपदेन विशिष्टं=विशेषरूपमभिधीयते। एवं स्थिते यत्र श्रुतस्य साधनस्य व्रीह्यादेर्विप्रकर्षादिनाऽसंभवस्तत्र प्रधानीभूतयागक्रियासंपत्त्यर्थं साधनान्तरं यवादि प्रतिनिधिः क्रियते। क्रियायास्तु क्रियान्तरं न प्रतिनिधिः क्रियते, तस्याः प्राधान्यात्। गुणे त्वन्याय्यकल्पनेति न्यायात्। किञ्च प्रतिनिधिरूपस्य क्रियान्तरस्याश्रयणे तस्याचोदितस्यानुष्ठाने शास्त्रार्थोल्लंघनं स्यादिति गुणभूतस्य साधनस्यैव प्रतिनिधिः शिष्टैः कृतो न तु प्रधानीभूतायाः क्रियायाः। तत्र च प्रधानीभूतक्रियापदार्थाक्षिप्तत्वेन शास्त्रचोदितस्य साधनसामान्यस्य न त्यागो भवति, अपि तु प्रागुक्तरीत्या व्रीह्यादिपदबोधितस्य द्रव्यविषयकस्य नियममात्रस्य बाधो भवति। स च न दोषाय। तथाहि—साधनरूपस्य शक्तिसामान्यस्य प्रधानीभूतक्रियासामार्थ्याक्षिप्तत्वेन प्राधान्याच्छास्त्रचोदितस्य तस्य व्रीह्यादिपदोपात्ताधाररूपव्रीह्यादिद्रव्याभावे व्रीह्यादिभिन्नतदाधारद्रव्यस्य यवादेः प्रतिनिधित्वेन परिग्रहेऽपि चोदितस्य साधनशक्तिसामान्यस्यापरित्यागाच्चोदितस्य शास्त्रार्थस्योल्लंघनाभावादिति॥५॥

**स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।**
**ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ॥ ६ ॥**

**स्वा = असाधारणी आत्मीया गोशब्दत्वादिका, न तु सकलशब्दसाधारणी शब्दत्वादिः । एवं चासाधारणत्वेन विशेषणात् तया संबन्धाव्यभिचारः शब्दस्यार्थजात्या संबन्धव्यभिचारेऽपीति 'स्वा जातिः' एव मुख्यमभिधेयमित्युक्तं भवति । तथा च वाक्यकारः—**

---

तदेवमेतत्काण्डसमनन्तरपूर्वकाण्डे जातिपक्षे प्रतिनिधिविषयेऽसंभवनियमत्यागो नियममात्रबाधश्चेति दर्शनद्वयमुपपादितमित्यत्रापि तत्पक्षे यथासंभवं दर्शनभेदः, प्रतिनिधिश्च चिन्तितः। इदानीं जातौ शब्देनाभिधीयमानायामनवस्थात्माश्रय-परस्पराश्रयदोषैर्जातौ जात्यनभ्युपगमात्, निर्निमित्ता शब्दस्य प्रवृत्तिरायातेति जातिपक्षेऽपि शब्दप्रवृत्तेः सनिमित्तकत्वमुपपादयितुमाह—स्वा जातिरिति ।

अस्यार्थः—सर्वैरेव शब्दैः व्याकरणे स्वरूपपरैः, लोके चार्थपरैः, प्रथमम् = अर्थजात्यभिधानात् प्राक्, स्वा जातिः आत्मीया, असाधारणी, गोशब्दत्वादिका, जातिरभिधीयते । ततः = स्वजातिप्रत्यायनादनन्तरमर्थजातिरूपेषु = अर्थजातीनां गोत्वादीनां स्वरूपेषु, तदध्यारोपकल्पना = तस्याः शब्दजातेरध्यारोपस्य समारोपस्य कल्पना न परमार्थः। अर्थस्यशब्दविवर्तत्वेन शब्दाद्वस्तुतो भेदाभावात् । शब्दानुविद्धस्यैवार्थावबोधस्यानुभवादभ्युपगमाच्चैवमुक्तिरुपपद्यत इति । एवञ्च ततऽर्थजात्यवबोधाय शब्दप्रयोगे शब्दगता जातिरेवार्थजातावध्यारोपिता शब्दानां प्रवृत्तौ निमित्तमित्युक्तं भवतीति ।

अयं भावः—स्वा जातिरित्यत्र स्वपदेनात्मीया असाधारणी जातिर्गोशब्दत्वादिका गृह्यते, न तु सकलशब्दसाधारणी शब्दत्वादिजातिः । एवञ्च स्वजातेरसाधारणत्वेन विशेषणाच्छब्दस्यार्थजात्या सहानेकत्वेन संबन्धव्यभिचारेऽपि स्वजात्या सह सम्बन्धाव्यभिचार इति स्वा जातिरेव शब्दस्य मुख्यमभिधेयमित्युक्तं भवति । तथा च वार्तिककारः—'न शब्दपूर्वको ह्यर्थे संप्रत्ययः' इति दर्शनभेदेन शब्दसंप्रत्ययपूर्वकस्तत्तच्छब्दत्वव्याप्यजातिसंप्रत्ययपूर्वको वाऽर्थे तद्गतजातौ वा संप्रत्यय इति तदर्थः । अत एव—एतद्वार्तिकाशयमाश्रित्यैव शब्दस्यार्थजात्यभिधाने जायमाने = शब्दकर्तृकेऽर्थजात्यभिधाने जायमाने शब्दाव्यभिचारिण्याः स्वरूपजातेः = गोशब्दत्वादिजातेरभिधानान्नान्तरीयकमिति मत्वा कारिकायां 'प्रथमम्' इत्याह । यदभेदेन यत्प्रतिपत्तिस्तदवश्यं तत्र प्रतिपत्तव्यमित्येतदूरूपं नान्तरीयकत्वमेव स्वरूपजातेरभिधानप्राथम्ये प्रयोजकम् न तु क्रमेणाभिधानम् । तथा हि—सर्वत्रैव स्वरूपजात्यभेदेनैवार्थजातिप्रतिपत्तिरिति स्वरूपजातिः शब्दादवश्यं प्रतिपत्तव्येति स्वरूपजात्यर्थजात्योरभेदेन प्रतीयमानयोर्युगपदभिधानमेव, न तु क्रमेणाभिधानमिति प्रतिपत्तिक्रमो नात्र स्वरूपजातेरभिधानप्राथम्ये प्रयोजकमिति ।

**'न वा शब्दपूर्वको ह्यर्थे संप्रत्ययः' इति। ( वा० १।१६७ )**

**अत एवाव्यभिचारिण्याः स्वरूपजातेरर्थजात्यभिधाने शब्दस्य नान्तरीयकमभिधानमिति प्रथमम् इत्याह। यदभेदेन यत्प्रतिपत्तिः तदवश्यं तत्र प्रतिपत्तव्यमित्येतावतात्र प्राथम्यम्, न तु क्रमेणाभिधानात्। यद्वा सम्बन्धव्युत्पत्तिकालापेक्षं प्राथम्यम्। तथा हि—सम्बन्धव्युत्पत्तिकालेऽर्थजात्या नास्ति सम्बन्धः। तथात्वे वाचकत्वेन तत्र विनियोगोऽनर्थकः स्यात्, अर्थस्य प्रतिपन्नत्वादिति सोऽर्थस्तावत् तेन शब्देन न प्रतिपन्नः। यदि च स्वजात्यभिधानं तदानीं न स्यात्, तदानर्थकत्वाद् विभक्तियोगो न स्यादिति।**

**'प्राक् संज्ञिनाभिसम्बन्धात् संज्ञा रूपपदार्थिका'। (वा० का० १।६६) इत्युक्तम्। रूपं हि स्वरूपं स्वा जातिर्वेति दर्शनभेदेन कथ्यते। सर्वैः इति। इतिस्वरूपपरैरर्थपरैश्च, तस्या एव स्वरूपतया व्यवहारात्। तथाऽव्युत्पन्नैरपि शब्दैरविनाभावा-**

---

यद्वा संबन्धव्युत्पत्तिकालापेक्षं = शब्दस्यार्थजातेश्च यः परस्परं संबन्धग्रहस्तत्कालापेक्षम्, स्वरूपजात्यभिधानस्य प्राथम्यम्। तथा हि—संबन्धस्य कृतकत्वपक्षे संज्ञाविधिषु संबन्धग्रहकाले शब्दस्यार्थजात्या सह नास्ति संबन्धः। तथात्वे = इदानीं तयोः संबन्धसत्त्वे, वाचकत्वेनार्थजातौ संज्ञाशब्दानां विनियोगः संज्ञासूत्रैः क्रियमाणोऽनर्थकः स्यात्, अर्थस्य प्रतिपन्नत्वादिति हेतोस्तावत्कालं सोऽर्थस्तेन शब्देन न प्रतिपन्न इति ज्ञायते। यदि चार्थजात्यभिधानमिव स्वजात्यभिधानमपि तदानीं = संज्ञासूत्रस्य वाक्यार्थबोधकाले न स्यात्, तदा तत्र संज्ञाशब्दानामनर्थकत्वाद् विभक्तियोगो न स्यादिति। एतदेवोक्तं प्रथमकाण्डे—

'प्राक् संज्ञिनाऽभिसंबन्धात् संज्ञा रूपपदार्थिका' इति। (वा० का० १।६६)

रूपपदार्थिका-इत्यत्र रूपपदेन शब्दस्य स्वरूप शब्दगता गोशब्दत्वादिरूपा स्वा जातिर्वेति व्यक्तिः शब्दार्थो जातिर्वेति दर्शनभेदेन कथ्यते। सर्वैः = व्याकरणे स्वरूपपरैः, लोके चार्थपरैः शब्दैः स्वा जातिरभिधियत इति, स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यत्र तस्या एव स्वरूपतया व्यवहारात्।

ननु व्युत्पत्तिपक्षे सर्वेषां शब्दानां प्रकृतिप्रत्ययादिभिर्व्युत्पादनात् सखण्डत्वेन नास्ति तेषु गोशब्दत्वादिरूपाऽखण्डा जातिरिति कथं तस्याः शब्दैः प्राथम्येनाभिधानमिति चेन्न; यथाऽव्युत्पत्तिपक्षे तथा व्युत्पत्तिपक्षेऽपि व्युत्पन्नैरपि शब्दैः स्वस्मिन् स्वरूपजातेरविनाभावात् शब्दस्वरूपेण = शब्दस्यासाधारणरूपेण अवस्थिता जातिर्गोशब्दत्वादिरूपा प्रतिपाद्यते, प्रकृतिप्रत्ययादिकल्पनयाऽखण्डशब्दप्रतिपत्त्युपायत्वेनापरमार्थत्वात्।

नन्वर्थजातेः शब्दस्वरूपाभेदेनावबोधे क्रमो नास्ति, किन्तु तदवबोधयोर्यौगपद्यमेवेति कथं शब्दस्वरूपाभिधानस्य प्राथम्यमुच्यत इति चेन्न। अर्थस्य = अर्थजातेः झटित्येव शब्दस्वरूपाभेदेनावबोधेऽपि उत्पलशतपत्रव्यतिभेदेष्विव अस्ति दुर्लक्षः क्रम इति यथाप्रति-

**च्छब्दस्वरूपेणावस्थिता जातिः प्रतिपाद्यते। अर्थस्य झटित्येव शब्दस्वरूपाभेदेनाव-बोधेऽपि यथाप्रतिपादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादनन्तरमर्थजातीनां गोत्वा-दीनामात्मसु तस्याः शब्दजातेः समारोपस्य कल्पना न परमार्थः, शब्दविवर्तत्वेनार्थस्य शब्दात् तत्त्वतो भेदाभावात्।**

**यद्वा सम्बन्धव्युत्पत्तिकाले गौरयमर्थ इत्यर्थजात्या शब्दजातेरत्यन्तभेदात् सामानाधिकरण्यान्यथानुपपत्त्या अभेदाध्यारोपः कल्प्यते। यथा गौर्वाहीक इति। अन्यथा सङ्केतस्यैव कर्तुमशक्यत्वात्। यथा चायमनादिरपौरुषेयो वाच्यवाचकभावः, तथाध्यारोपोऽपि। अन्यथा वाच्यवाचकभाव एव न घटेत, यथा बौद्धस्य दृश्य-विकल्पार्थैकीकारो भेदानध्यवसायलक्षणः, न तु यथा गौर्वाहीक इत्यत्र पुरुषेच्छया अध्यारोपः। व्यवहारे शब्दार्थयोः सदैवाभेदावसायात्। कथमियं प्रतिवर्णमनभि-व्यक्ताऽसाधारणी जातिरसमसमग्रभाविभिर्वर्णैरभिव्यज्यत इति चेद् यथोत्क्षेपणत्वा-दिजातिरिति ब्रूमः। तथा हि—प्रत्येकं कर्मक्षणानामुपव्यञ्जकत्वेऽपि यः प्रथम उत्क्षेपण-**

---

पादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादनन्तरमर्थजातीनां गोत्वादीनामात्मसु स्वरूपेषु तस्याः शब्दजातेः समारोपस्य कल्पना, न परमार्थः, अर्थस्य शब्दविवर्त्तत्वेन शब्दात् तत्त्वतो = वस्तुतो भेदाभावात्।

यद्वा संबन्धग्रहकाले "गौरयमर्थः" इत्यर्थजात्या सह शब्दजातेरत्यन्तभेदमाश्रित्य सामानाधिकरण्यान्यथानुपपत्त्या अर्थजातौ शब्दजातेरभेदाध्यारोपः कल्प्यते। यथा 'गौर्वाहीकः' इत्यत्रार्थजात्योरेव परस्परमभेदाध्यारोप इति। अन्यथा=अभेदाध्यारोपाभावे सङ्केतस्यैव कर्तुमशक्यत्वात्। यथा चायमनादिरपौरुषेयो वाच्यवाचकभावः, तथा शब्दार्थजात्योः परस्परमध्यारोपोऽपि। अन्यथा सङ्केतस्य कर्तुमशक्यत्वेन वाच्यवाचकभाव एव नोपपद्येत। अयञ्च शब्दार्थजात्योर्वाच्यवाचकभावनियामकः, शब्दजातेरर्थजातावध्या-रोपो यथा बौद्धस्य विज्ञानवादिनो मते दृश्यविकल्पार्थैकीकारः = दृश्या ये विकल्पा विवि-धैर्नीलपीतादिरूपैः कल्प्यमानाः, अर्था विज्ञानस्यैव परिणामभूता विज्ञानाकारास्तै सह विज्ञानस्यैकीकारः = एकत्वकरणम्, अभेदबुद्धिः, भेदानध्यवसायलक्षणा=भेदानवभासरूपा, यत्र भासो न भासते, केवला भेदबुद्धिरेवेति यावत्। यस्तु भेदावभासे सत्यपि पुरुषेच्छया अभेदाध्यारोप आहार्यः। यथा गौर्वाहीक इत्यत्र। स तु न गोशब्दवाहीकत्वयोर्वाच्य-वाचकभावस्य नियामक इति गोशब्दस्य तत्र लक्षणैवेति। इदञ्च सर्वं व्यवहारानुसारि-णावन्वयव्यतिरेकौ समाश्रित्योक्तम्। व्यवहारे शब्दार्थयोः सदैव = वाच्यवाचकभावाव-बोधकाले, लक्ष्यलक्षकभावावबोधकाले च अभेदावसायात्।

ननु कथमियमनुभवाभावात् प्रतिवर्णमनभिव्यक्ताऽसाधारणी गोशब्दत्वादिरूपा जातिः क्षणिकत्वेनायुगपद्भाविभिर्वर्णैरभिव्यज्यत इति चेद्; यथोत्क्षेपणत्वादिजातिः प्रति-क्षणमनभिव्यक्ता क्षणिकैरयुगपद्भाविभिरुत्क्षेपणादिकर्मभिरभिव्यज्यते, तथेति ब्रूमः। तथाहि—यद्यपि प्रत्येकमुत्क्षेपणक्षणाः = क्षणिकान्युत्क्षेपणकर्माणि, उत्क्षेपणत्वजातेरुप-

क्षणः, स परमाणुमात्रदेशाक्रमणमात्ररूपत्वाद् भ्रमणक्षणात् सारूप्यवशादनवधार्यमाणभेद एकैकोऽसमर्थो नियतजात्यभिव्यञ्जने इति क्षणान्तरमपेक्षते। न च तस्य भ्रमणक्षणाद् विशेषो नास्ति, उपक्रम एवोत्क्षिपामीत्येवंप्रयत्नजनितत्वात्। एवं गोशब्दमुच्चारयामीत्ययं प्रयत्नो यद्यपि गानगगनशब्दजनकात् प्रयत्नादन्य एव, हेतुभेदाच्च गकारयोरपि भेद एव, तथापि सादृश्यादसौ दुरवधार इति व्यञ्जकोऽपि सन् प्रथमो ध्वनिरस्फुटमभिव्यनक्तीत्यावर्तमानोऽपि न विशदतरसामान्यविशेषाभिव्यक्तौ हेतुः। यदा त्ववयवप्रबन्धः क्रमेणोपलब्धो भवति, अथ शब्दजातिविशेषोपाधियुक्ता व्यवहारा अवतिष्ठन्ते। तदानीं साहचर्यात् परस्परावच्छेदवशेन विलक्षणतया प्रतिभासनात्। यथा च श्लोकः सकृत् पठ्यमानो नावधार्यते, अभ्यासेन तु स्फुटावभासः, तथा चरमचेतसि चकास्ति रत्नतत्त्ववत् स्फोटतत्त्वम्। प्रथमाक्षरेण हि जातेराभासमात्रं जन्यते, तदुत्तरोत्तरवर्णकलापेन तु स्फुटतरस्फुटतमपरिच्छेदाधानम्। संस्कारविशेषोत्पादनद्वारेणाभिव्यक्तिविशेषस्य रत्नतत्त्वादौ दृष्टेः। तस्माच्छब्दादर्थं प्रतिपद्यामहे इति व्यवहाराद् वर्णानामर्थावसायजनकत्वानुपपत्तः प्रक्रियाभङ्गस्य प्रथमकाण्ड एव विहितत्वान्निरवयवं प्रत्यायकं शब्दतत्त्वं जातिव्यक्तिभेदेन भिन्नं स्फोटस्वभावमेवाङ्गीकार्यम्। गौरयमर्थ इति च वाचकाभेदेन वाच्यप्रतीतेस्तदध्यासखचितवपुर्व्यवहार्योऽर्थः तत्र च स्वरूपस्य वाच्यता प्रथमकाण्ड एव निर्णीता, इह तु संबन्धसमुद्देशेऽपि निर्णेष्यते ॥ ६ ॥

तत्रैतत् स्यात्—शब्दसमवायि सामान्यं व्यधिकरणत्वात् कथमर्थजातिभेदेन व्यपदिशेदित्याशङ्क्य निदर्शनेनैतद्व्युत्पादयति—

---

व्यञ्जकाः, तथापि यः प्रथम उत्क्षेपणक्षणः स परमाणुमात्रदेशाक्रमणमात्रस्वरूपत्वेन सादृश्यवशाद् भ्रमणक्षणात्=क्षणिकाद् भ्रमणकर्मण अनवधार्यमाणभेद एकैको न समर्थो नियतजात्यभिव्यञ्जने=उत्क्षेपणत्वजात्यभिव्यञ्जने, इति क्षणिकमुत्क्षेपणकर्मान्तरमपेक्षते। न चोत्क्षेपणक्षणस्य भ्रमणक्षणाद् विशेषो नास्त्येवेति कथमुच्यत अनवधार्यमाणभेद इति, इति वाच्यम्। उपक्रम एव उत्क्षिपामीत्येवंरूपसंकल्पपुरस्सरजायमानप्रयत्नजनितत्वात् प्रयत्नरूपहेतुभेदेन कार्यस्य कर्मणोऽपि भेदात्। एवं गोशब्दमुच्चारयामीत्याकारकसंकल्पपुरस्सरं जायमानः प्रयत्नोऽपि यद्यपि गानगगनशब्दजनकात् प्रयत्नादन्य एव, प्रयत्नरूपहेतुभेदाच्च गकारयोरपि भेद एव; तथापि सादृश्यादसौ दुरवधार इति प्रथमो ध्वनिर्व्यञ्जकोऽपि सन् स्फोटमस्फुटं व्यनक्तीति केवलमितरनैरपेक्ष्येण आवर्तमानोऽपि स न विशदतरस्फोटजातिविशेषाभिव्यक्तौ हेतुः। यदा त्वितरोऽप्यवयवसन्तानः क्रमेणोपलब्धो भवति, तदा संस्कारद्वारा परस्परसहकारेण शब्दजातिविशेषाभिव्यक्तौ सत्यां तदुपाधिकाः सर्वे शब्दविशेषव्यवहारास्तत्प्रयुक्ताश्च सर्वेऽर्थव्यवहारा अपि व्यवतिष्ठन्ते। तदानीं=अवयवसन्तानस्य क्रमेणोपलब्धेर्निष्पत्त्युत्तरकाले ध्वनीनां संस्कारवशेन परस्परसाहचर्यात् परस्परस्य पौर्वापर्यरूपस्य क्रमस्यावच्छेदवशाद् अभिव्यङ्ग्यजाति-

**यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते।**
**संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते ॥ ७ ॥**
**तथा शब्दार्थसंबन्धाच्छब्दे जातिरवस्थिता।**
**व्यपदेशेऽर्थजातीनां जातिकार्याय कल्पते ॥ ८ ॥**

**रक्ते गुणे तत्त्वम्। तस्य रक्तस्य गुणस्य भावो रक्तत्वं लौहित्यसामान्यं गुण-व्यक्तिसमवेतमुच्यते। तत्समवेतसमवायात् कषाये रक्तगुणाधारे द्रव्ये व्यपदिश्यते**

---

विशेषस्य गोशब्दत्वादेर्गगनादिशब्दजात्यपेक्षया विलक्षणतया प्रतिभासनात्। यथा च श्लोकः सकृत् पठ्यमानो नावधार्यते, अभ्यासेन पठ्यमानस्तु स्फुटावभासो भवति, तथा चरमवर्णबुद्धौ शब्दजातिविशेषरूपं स्फोटतत्त्वं चरमबुद्धौ रत्नतत्त्वमिव चकास्ति। तदुक्तं वाक्यपदीये प्रथमकाण्डे—

यथाऽनुवाकः श्लोको वा सोढत्वमुपगच्छति।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति विभाव्यते॥
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥ इति
(वा. का. १।८२-८३)

प्रथमाक्षरेण हि शब्दजातेराभासमात्रम्=ज्ञानसामान्यं जन्यते, तदुत्तरोत्तरवर्ण-कलापेन तु स्फुटतरस्फुटतमजातिविशेषपरिच्छेदाधानम्। पूर्वपूर्वानुभवानां संस्कार-विशेषोत्पादनद्वारेण जातिविशेषाभिव्यक्तिविशेषे हेतुत्वस्य रत्नतत्त्वादौ दर्शनात्। तस्मा-च्छब्दादर्थं प्रतिपद्यामह इति व्यवहाराद् वर्णेषु तादृशव्यवहाराभावेन वर्णानामर्थावसाय-जनकत्वानुपपत्तेः, पदेषु प्रकृतिप्रत्ययादिकल्पनारूपप्रक्रियाप्रत्याख्यानस्य प्रथमकाण्ड एव विहितत्वाच्च, अखण्डं जातिव्यक्तिभेदेन भिन्नं शब्दतत्त्वं प्रत्यायकं स्फोटस्वभाव-मेवाङ्गीकार्यम्। गौरयमर्थः=गोशब्दाभिन्नोऽयमर्थ; इति च वाचकाभेदेन वाच्यप्रतीतेः शब्दाध्यासखचितवपुः=शब्दाभेदाध्यारोपगोचरीकृतस्वरूपोऽर्थो व्यवहार्यः। शब्दानु-विद्ध एवार्थे व्यवहारगोचरत्वस्यानुभवसिद्धत्वात्। तत्र च शब्दस्वरूपस्य व्यक्तिरूपस्य जातिरूपस्य वा वाच्यता प्रथमकाण्ड एव निर्णीता, 'स्वं रूपमिति जातिस्तु कैश्चित् संज्ञोपदिश्यते इत्यत्र, पदकाण्डेऽपि संबन्धसमुद्देशे निर्णेष्यत इति ॥ ६ ॥

तदेवं गवादिशब्दो गोशब्दत्वादिरूपशब्दगतजात्यभेदेन गोत्वादिरूपामर्थजाति-मभिधत्ते इत्युक्तम्। तत्रैतच्चोद्यं सम्भाव्यते। शब्दनिष्ठं गोशब्दत्वादिरूपं सामान्यं गोत्वादिरूपार्थजातिव्यधिकरणत्वात् कथं तामभेदेन व्यपदिशेत्=विशिंष्यात्, इत्याशङ्क्य नहि दृष्टेऽनुपपन्नं नाम किञ्चिदिति सार्वलौकिकन्यायाभ्युपगमेन व्यधिकरणस्यापि विशेष-कत्वं दृष्टान्तेन साधयति युग्मेन—यथा रक्ते गुणे इति। तथा शब्दार्थसंबन्धादिति च।

**व्यपदेशाय कल्पते। तद्विशेषणभूतं हि तत्कषायद्रव्यमभिधीयते लोहिता लाक्षेति। तेन संयोगिनो वस्त्रादयस्तयोः संयोगिनोः कषायवस्त्रयोः संनिकर्षः संभेदः, तस्मान्निमित्तात्तत्रापि तल्लौहित्यं गृह्यते। संयुक्तसमवेतसमवायाद् वस्त्रादिष्वपि लौहित्यनिमित्तो व्यपदेशः, लोहितं वस्त्रमित्यर्थः। तथा शब्दार्थसंबन्धात् इति। लोहितगुणकषायद्रव्यसंबन्धस्थानीयात् समानाधिकरणतयावस्थितात् स्वाभाविकात् तथा केवलं व्युत्पत्तिकालेनिर्ज्ञातात् तदन्यथानुपपत्त्यैवाध्यारोपस्य कल्पनात् संबन्धादेव शब्दजात्या व्यपदेशः। अर्थोऽत्रार्थजातिः, तस्या एव वाच्यत्वप्रक्रमात्। व्यपदेशे कल्पते स्वरूपाभेदेन, जातिकार्याय कल्पते = जात्यादिशब्दे जातिषु वाचकत्वेन प्रवर्तमाना स्थिता जातिर्न केवलं व्यपदेशाय कल्पते यावज्जातिकार्याय च। अथवा व्यपदेशे सति जातिकार्याय कल्पत इत्यर्थः। निःसामान्यानि सामान्यानीत्यर्थजातीनां स्वतो**

---

अनयोरर्थः—यथा रक्ते गुणे रूपे समवेतं तत्त्वम्, तस्य रक्तस्य गुणस्य भावो रक्तत्वं लौहित्यजातिरूपम्, रक्तरूपात्मकगुणव्यक्तिसमवेतस्वाश्रयसमवायिनि कषाये खदिरादिक्वाथरूपे द्रव्ये रक्तरूपाधारे स्वसमवेतसमवायाद् व्यपदिश्यते, अभेदेन विशेषणत्वेन व्यवह्रियते, लोहितः, खदिरकषायःलोहितालाक्षेति। हेलाराजेन तु व्यपदिश्यते—इत्यस्य व्यपदेशाय कल्पत इति कर्मप्रत्ययान्तस्य कर्तृप्रत्ययान्तेन व्याख्यानं कृतम् तत्तु आर्थिकार्थपरतया कथञ्चिन्नेयम्। यत्त्वत्रैव हेलाराजीये कषाये—इत्यस्य व्याख्यानं रक्तगुणाधारे द्रव्ये इति, तत्तु लक्षणया। यदप्युक्तमत्रैव तेनैव "तद्विशेषणभूतं हि तत् कषायद्रव्यमभिधीयते" इति। अत्र 'तद्विशेषणभूतम्' इति बहुव्रीहिः। तद्—रक्तत्वम्, अभेदेन विशेषणभूतं यत्र कषायद्रव्ये तत्तथेति। संयोगिसन्निकर्षाच्च, तेन कषायद्रव्येण संयोगिनो वस्त्रादयः, तयोः संयोगिनोः, कषायवस्त्रयोः सन्निकर्षः = सम्भेदस्तयोः परस्परमैक्याध्यासः, तस्मान्निमित्तात्, च = तु, वस्त्रादिष्वपि कषायगुणस्य सामान्यं लौहित्यं गृह्यते। वस्त्रसंयुक्तकषायद्रव्यसमवेतरक्तगुणसमवायाद् वस्त्रादिष्वपि लौहित्यनिमित्तको व्यपदेशः, लोहितं वस्त्रमिति। तथा शब्दार्थसंबन्धात् = लोहितगुणकषायद्रव्यसंबन्धसदृशात्, गोशब्दत्वादिजातिसामानाधिकरण्येनावस्थितात्, स्वाभाविकात् = अकृत्रिमात्, अनादेः केवलं व्युत्पत्तिकाले शक्तिग्रहकाले निर्ज्ञातात्, शब्दार्थजात्योः संबन्धात्, वाच्यवाचकभावरूपाद् योग्यतारूपाद् वा एवार्थजातेः शब्दजात्या व्यपदेशः। गौरयमर्थ इति गोशब्दत्वाभिन्ना इयं गोत्वरूपा जातिरित्येतद्व्यपदेशवाक्यार्थः। जातेरेव शब्दार्थत्वात्। कारिकायां 'शब्दार्थसंबन्धात्' इत्यत्रार्थपदं जातिपरम्, तस्या एवात्र वाच्यत्वोपक्रमात्। शब्दार्थजात्योर्वाच्यवाचकभावसंबन्धान्यथाऽनुपपत्त्यैव च शब्दार्थजात्योः शब्दजात्यर्थजात्योश्चाभेदाध्यारोपस्य कल्पनम्। एवञ्च द्वितीयकारिकाया इयमक्षरयोजना। तथा रक्तादिगुणेऽवस्थिता लौहित्यादिजातिः प्रागुक्तरीत्या संयोगिसन्निकर्षाद् वस्त्रादिष्विव, गवादिशब्दे स्फोटात्मके नित्येऽवस्थिता गोशब्दत्वादिरूपा जातिः, नतु वर्णसमुदायेऽवस्थिता, वर्णानां क्षणिकत्वेन समुदायानुपपत्तेः। शब्दार्थसंबन्धात्=शब्दार्थ-

**जातिरहितत्वे तत्कार्यं शब्दप्रत्ययानुवृत्तिलक्षणं शब्दार्थयोः सोऽयमित्यभेदेन संबन्धाच्छब्दसमवायिनी जातिरर्थेनाध्यारोपिताभेदा संपादयन्ती तदात्मना संपद्यत इत्युपचर्यते। व्यक्तिरूपे च शब्दे जातेस्समवायो न तु वर्णेष्विति अवस्थिता इत्युपपद्यते। वर्णानां हि यौगपद्याभावादवाचकत्वमिति कथं तत्र शब्दजातेः समवायः स्यात्। केवलं स्फोटस्य जातिव्यक्तिभेदेन दर्शनद्वयमिति व्यक्तिस्फोटे जातिः समवेता। अर्थभेदेन हि भिन्नस्य नित्यस्य शब्दस्याभिन्नाभिधानप्रत्ययहेतुर्जातिरवश्याभ्युपगन्तव्या। अत एव जात्याच्छुरिताया व्यक्तेरेव वाचकत्वम्। उपलक्षणभूता तु जातिराश्रीयत इति कथमत्राननुयायिन्या व्यक्तेर्वाचकत्वमिति न चोदनीयम्।**

**शब्दार्थसंबंधश्चात्र योग्यतालक्षणोऽभिप्रेतः। सर्वो हि शब्दः संज्ञात्वेन नियुज्यमानः सर्वत्रार्थे योग्यतालक्षणेन संबन्धेन संबद्धः। केवलं शक्त्यवच्छेदमात्रे संज्ञाकर्तुर्व्यापारो न त्वपूर्वसंकेतकरणे, अर्थसंबन्धस्यापौरुषेयत्वात्। एवं चादैक्षु वृद्धिशब्दो नापूर्व एव संकेतित इति सर्वेषामनेकार्थत्वाद् वक्तृभेदाद् वानेकत्वे समाना-**

---

जात्योः संबन्धाद्, अर्थजातीनां गोत्वादिजातीनाम्, व्यपदेशे गौरयमर्थ इत्यादिरूपे स्वस्वरूपाभेदेन व्यपदेशे कल्पते = समर्था भवति।

किञ्च जातिसामान्यादिशब्दे स्थिता जातिशब्दत्वसामान्यशब्दत्वादिरूपा जातिवाचकत्वेन प्रवर्तमाना जातिर्न केवलं जातिरयमर्थ इति व्यपदेशायैव कल्पते, किन्तु, 'वा बहूनां जातिपरिप्रश्ने डतमच्' (५।३।९३) 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (पा.सू. १।२।५८) इत्यादिसूत्रविहितकार्योत्पादायापि कल्पते। निःसामान्यानि सामान्यानि इत्यभ्युपगमादर्थगतजातीनां स्वतो जातिरहितत्वेन जातिकार्यम्। जातिर्जातिरिति शब्दानुवृत्तिलक्षणमेतादृशप्रत्ययानुवृत्तिलक्षणञ्च जातिसामान्यादिशब्दसमवायिनी जातिशब्दत्वादिरूपा जातिः शब्दार्थयोः सोऽयमित्यभेदेन संबन्धादर्थजात्या सहाध्यारोपिताभेदा सती संपादयन्ती अर्थजात्यात्मना संपद्यत इत्युपचर्यत इति। अथवा जातिरयमर्थ इति व्यपदेशे सति प्रागुक्तजातिकार्याय कल्पत इत्यर्थः। अयमेवार्थो न्याय्यः। अस्मिन्नर्थे एकवाक्यत्वात्, कारिकायां चकाराध्याहाराभावाच्च। व्यक्तिरूपे चाखण्डे नित्ये स्फोटात्मके गवादिशब्दे गोशब्दत्वादिरूपा जातिः समवेता, न तु वर्णेषु क्षणिकेष्विति 'शब्दे जातिरवस्थिता' इत्युक्तिरुपपद्यते। वर्णानां हि यौगपद्याभावेनावाचकत्वमिति कथं तत्र गोशब्दत्वादिजातेः शब्दत्वजातेर्वा समवायः स्यात्। जातिव्यक्तिभेदेन च स्फोटस्य केवलं प्राधान्येन दर्शनद्वयमिति व्यक्तिस्फोटे योग्यतया शब्दजातिः समवेता। व्यक्तिस्फोटस्य नित्यस्यैकत्वेऽप्यर्थभेदेन भेदारोपाद् अभिन्नाभिधानप्रत्ययहेतुर्जातिस्तत्रावश्यमभ्युपगन्तव्या। अत एव जात्याच्छुरितायाः = जात्युपलक्षितायाः स्फोटात्मकशब्दव्यक्तेरेव वाचकत्वम्। अर्थभेदेन भिन्नाया अननुगतायाः शब्दव्यक्तेरर्थव्यभिचारात् कथं वाचकत्वमिति तु न चोदनीयम्। व्यक्तावुपलक्षणीभूताया जातेरनुगमकत्वेनाश्रयणादिति। शब्दार्थसंबन्धश्चात्र तयोर्वाच्यवाचकभावनियामको योग्यतालक्षणोऽभिप्रेतः। सर्वो हि

**कारप्रत्ययनिबन्धनजातिरेषणीया। तद्यथाकाशस्य संयोगिभेदेन कल्पितभेदस्याने-कत्वे सत्याकाशत्वं लक्ष्यते। न चैवं सर्वस्मात् सर्वार्थप्रतीतिप्रसङ्गः, प्रसिद्धिवशेनार्थ-प्रतीतेः कुत्रचित् कस्यचित् प्रसिद्धत्वात्। प्रसिद्धानां चार्थानामर्थप्रकरणादयो विभाग-हेतव उक्ताः। तद्यथा गोशब्देन नवस्वर्थेषु सन्निहितेष्वपि प्रकरणादेः प्रतिनियता-र्थावसायः। तदेवं शब्दजात्या शब्दव्यक्तिर्वाचिका प्रथममभेदेन व्यपदिश्यते, ततोऽ-र्थजातिः, ततस्तद्व्यक्तिरित्ययं वास्तवः क्रमः, प्रत्यायने त्वक्रमतैव। शब्दाच्छुरि-तत्वेऽपि चार्थस्य न स्वरूपव्यपगमः। यथा ह्यालोकाच्छुरितोऽपि घटो न स्वरूपेण तिरोभवति, एवं शब्दस्वरूपोपरक्तोऽर्थः। स्वरूपारोपेण शब्दालोकयोरर्थप्रकाशकत्व-स्यैवंविधस्य दृष्टेः। यथा च गौर्वाहीक इत्यत्र न गोत्वमात्रं प्रतीयते, अपि त्वध्या-रोपितगोरूपो वाहीकः, एवमिहापि, न तु स्फटिकमणाविवार्थे शब्दजातेः समावेशो विवक्षितः, तस्यैव वाहीकवत् प्रत्याय्यत्वात्। स्वाभाविकश्चायमर्थप्रत्यायने शब्दा-नामभेदसंबन्धोऽभ्युपाय इति प्रतिपाद्योऽपि तथैव प्रतिपद्यते। न हि पुरुषाधीन-मेतत्। अनादौ संसारेऽनेनैव प्रकारेण संबन्धव्युत्पत्तेः कोऽत्र नियतोऽध्यारोपयिता**

---

शब्दः क्वचिद् अर्थे संज्ञात्वेन नियुज्यमानः सर्वत्रार्थे योग्यतारूपेण संबन्धेन सम्बद्धः। संज्ञाकर्तुर्हि पाणिन्यादेर्व्यापारः केवलं शब्दस्य शक्त्यवच्छेदमात्रे = शक्तिनियमनमात्रे, नत्वपूर्वशक्तिकरणे, शब्दार्थयोः संबन्धस्यापौरुषेयत्वात्। तदुक्तम्—'औत्पत्तिकश्च शब्द-स्यार्थेन संबन्धः' इति। एवञ्चादैक्षु वृद्धिशब्दो नापूर्व एव सङ्केतितः। किन्तु तस्यादैक्षु स्थित एव सङ्केतोऽनेन सूत्रेण ज्ञाप्यत इति सर्वेषां शब्दानामनेकार्थकत्वात्=सर्वार्थकत्वाद् वक्तृभेदाद्वा उच्चारणक्रियाभेदेनानेकत्वे समानाकारप्रत्ययनिबन्धनीभूता जातिरेषितव्या। तद्यथाऽऽकाशस्य स्वसंयोगिघटादिभेदेन चन्द्रस्य वाक्षिनिकोचादिभेदेन कल्पितभेदस्याने-कत्वे सत्याकाशत्वं चन्द्रत्वञ्च सामान्यरूपं लक्ष्यते।

न चैवं सर्वस्मात् शब्दात् सर्वार्थप्रतीतिप्रसङ्गः। सङ्केतप्रसिद्धिवशेनार्थप्रतीतेः कुत्र-चिदेवार्थे कस्यचिदेव शब्दस्य प्रसिद्धसङ्केतत्वात्। प्रसिद्धानामपि चार्थानां प्रत्ययप्रवि-भागहेतवोऽर्थप्रकरणादय उक्ता इति न तत्राप्येकत्र सर्वप्रसिद्धार्थसंप्रत्ययः। तद्यथा गोशब्देन धेनुक्षितिवाक्किरणादिरूपेषु नवष्वर्थेषूपस्थितेष्वपि प्रकरणादिवशादेकैकार्थावसायः। तदेवं वाचिका शब्दव्यक्तिः प्रथमं शब्दजात्या सममभेदेन व्यपदिश्यते। ततोऽर्थजातिः शब्दजात्या सममभेदेन ततोऽर्थव्यक्तिरर्थजात्या सममभेदेनेति, अयं वास्तवो व्यपदेश-क्रमः। शब्दस्यार्थप्रत्यायने तु अक्रमतैव = क्रमप्रतीत्यभाव एव। अर्थस्य च तदभिन्ना-भिन्नस्येति न्यायेन प्रागुक्तरीत्याऽभेदेन शब्दाच्छुरितत्वेऽपि = शब्दानुविद्धत्वेऽपि न स्वरूपव्यपगमः = स्वरूपलोपः। यथा ह्यालोकाच्छुरितोऽपि = आलोकव्याप्तोऽपि घटो न स्वरूपेण तिरोभवति। एवं प्रागुक्तरीत्या शब्दस्वरूपोपरक्तोऽप्यर्थः। शब्दालोकयोरर्थे स्वरूपारोपेण अर्थप्रकाशकत्वस्यैवंविधस्य दर्शनात्। यथा च गौर्वाहीक इत्यत्र न वाहीके गोत्वमात्रं प्रतीयत अपि तु अभेदेनाध्यारोपितगोरूपो वाहीकः इति स्वश्रयाभेदद्वारा

**कल्प्यताम्। अव्युत्पन्नसंकेतस्यापि चाभिन्नप्रत्ययोत्पत्तेरर्थजातिरप्यस्तीति न शब्द जातिरेवाध्यारोपितास्त्विति वाच्यम्। शाब्दी चेयमेवंविधा प्रतीतिरिति चाक्षुषेण रक्तादिप्रत्ययेन निदर्शनभूतेन व्युत्पादिता। वस्तुसन्निवेशित्वाभावेऽपि च शब्दजातेरयमनादिरध्यारोपो रूढः। सदैव व्यवहारे शब्दार्थयोरभेदावसायाद्, भेदस्यापि च गौर्वाहीक इतिवत् प्रतिभानान् मिथ्याज्ञानमिदं न भवति। प्राक् च संबन्धसंवेदनसमयादर्थजातयो भेदेनावभान्त्येव। अव्युत्पन्नसंकेतस्य बालकस्य पुरोऽवस्थितेषु सास्नादिमत्सु पिण्डेष्वभिन्नः प्रत्यय उत्पद्यते, तदा वाचकसन्निधानाभावादभिन्नप्रत्ययहेतुरर्थजातिरवधार्यते। अत एव कथं भेदेनानिर्धारितायामर्थजातौ शब्दजातिः समारोप्यते इत्यादि न चोदनीयम्॥ ७, ८॥**

**जातिकार्याय कल्पत इत्युक्तमेवार्थमभिव्यनक्ति—**

---

गोत्वस्य वाहीके प्रतीतिः। एवमिहापि न गवाद्यर्थे गोशब्दत्वादिमात्रं सामान्यं प्रतीयते, किन्तु स्वाश्रयाभेदद्वारा गोशब्दत्वादिरूपसामान्यस्य गवाद्यर्थे प्रतीतिः न तु लौहित्यस्य स्फटिकमणाविव अर्थे शब्दजातेः समावेशो विवक्षितः, अर्थस्यैव वाहीकवत् प्रत्याय्यत्वात्। स्वाभाविकश्चायं शब्दानामर्थप्रत्यायनेऽभेदसंबन्धोऽभ्युपाय इति। प्रतिपाद्योऽपि = बोद्धाऽपि शब्दाभेदेनैवार्थं प्रतिपद्यते। नह्यर्थे शब्दाध्यारोपणं पुरुषाधीनम् अनादौ हि संसारेऽधुना, यथा तथैव प्रागपि शब्दार्थयोर्योग्यतालक्षणसंबन्धग्रहणात् कोऽत्र नियतः पुरुषोऽर्थे शब्दाभेदस्याध्यारोपयिता कल्प्यताम्।

न च गवाद्यर्थे गोशब्दत्वादिरूपा शब्दजातिरेवाध्यारोपिताऽस्तु, किमिति तत्र गोत्वादिरूपार्थजातिरभ्युपेयत इति वाच्यम्। येन पुरुषेण गोशब्दस्य गोरूपेऽर्थे शक्तिर्न गृहीता तस्यापि भिन्नेषु गोरूपेष्वर्थेषु गौरित्यभिन्नप्रत्ययोत्पत्तिदर्शनादर्थजातिरप्यस्तीत्यभ्युपगमात्। ननु शब्दाज्जायमानाया अर्थजातिप्रतीतेश्चाक्षुषो रक्तादिप्रत्ययो निदर्शनं प्रकृतकारिकोक्तं न युज्यते, उभयोः प्रत्ययत्वाविशेषात्, सति हि केनचिद् रूपेण वैजात्ये सादृश्ये च केनचिद् रूपेण निदर्शनत्वं युज्यते, नान्यथेति चेन्न; शाब्दत्वचाक्षुषत्वाभ्यां वैजात्यात् शब्दसन्निवेशिन्याः शब्दजातेरर्थसन्निवेशित्वाभावेऽपि चायमर्थे शब्दजातेरध्यारोपोऽनादी रूढश्च, सदैव व्यवहारे शब्दार्थयोरभेदावसायात्। अत एव तयोः प्रविभागे संयमात् सर्वभूतरुतज्ञानं फलमुक्तं योगसूत्रे। अस्यार्थस्य वाचको गोशब्द इति शब्दार्थयोर्भेदस्यापि प्रतिभानाद् गौरयमितीदं शब्दार्थयोरभेदविषयकं ज्ञानं मिथ्या न भवति। किन्तु गौर्वाहीक इतिवद् गौणमेव। गोत्वादिजातिषु गवादिशब्दानां शक्तिग्रहसमयात् प्राग्गोत्वादिजातयो गवादिशब्देभ्यो भेदेनावभान्त्येव।

नन्वध्यारोपरूपः प्रत्ययो द्विधा, मिथ्याप्रत्ययो गौणप्रत्ययश्च। तत्राद्योऽधिष्ठानारोप्ययोर्भेदप्रत्ययं स्वनिमित्तत्वेन नापेक्षते। यथा देहात्मनोस्तादात्म्याध्यासः। द्वितीयस्तु तयोर्भेदप्रत्ययपुरस्सर एव, गौर्वाहीक इत्यादौ गौणप्रत्यये तथा दृष्टत्वात्। एवञ्चार्थजातौ शब्दजातेर्भेदेनानिर्धारितायां कथमर्थजातौ शब्दजातेः समारोप इति चेन्न। अगृहीतशक्ति-

**जातिशब्दैकशेषे सा जातीनां जातिरिष्यते ।**
**शब्दजातय इत्यत्र तज्जातिश्शब्दजातिषु ॥ ९ ॥**

**"आकृत्यभिधानाद्वैकविभक्तौ वाजप्यायनः" ( वा. १।२६४ )**

**इति जातिपक्षे प्रत्याख्यानादेकशेषस्य तत्फलमेकशब्दप्रयोगोऽत्रैकशेष उक्तः । सहविवक्षा चैकशेषेण लक्ष्यते । जातिशब्दैकशेषे प्रसक्त इति वा योजनीयम् । सा इति शब्द-जातिः । अर्थजातीनामभेदेन प्रत्यवस्यमाना जातिशब्दगता जातिरेकशब्दत्वं संपादयति जातिकार्यम् । तद्यथा गावो वृक्षा इत्यादिरभिन्नसामान्यनिबन्धनस्तदेकार्थ-समवायात् समाश्रितविशिष्टसङ्ख्य एकशब्दप्रयोगः । तथा जातय इमा इत्ययमपि जात्याश्रयापरजात्यभावाद् वाचकजात्यध्यासाश्रय उपपद्यते । शब्दगतं च सामान्यं जातिकार्यमुपचरतीत्युच्यते, न त्वर्थजातिष्वेवेति नियमः केनचित् क्रियत इति । यदा शब्दजातयोऽपि प्रत्याख्याः, तदा आस्वप्यभिधानगतं जातिकार्याय कल्पत एवेत्याह शब्दजातय इत्यत्र इति । तज्जातिः शब्दजातिः, शब्दगतं सामान्यम् । शब्दजातय इमा इत्यत्रैकपदप्रयोगे तस्योच्चरितस्य शब्दजातिशब्दस्य या जातिः सा शब्द-**

---

कस्य बालस्य पुरोऽस्थितेषु सास्नादिमत्सु पिण्डेष्वभिन्नः प्रत्यय उत्पद्यते तदा च वाचक-सन्निधानाभावादभिन्नप्रत्ययहेतुरर्थजातिः शब्दजातेर्भेदेनावधार्यत इत्युपपद्यत एव तत्र तस्या समारोप इति हेलाराजः ।

वस्तुतस्त्वगृहीतशक्तिकस्य बालस्य सन्निहितेषु पिण्डेष्वभिन्नः प्रत्ययो नैवोत्पद्यते शब्दानुविद्धस्यैव प्रत्ययस्याभ्युपगमात् । अतस्तत्र तत्तद्व्यक्तिविषयकाणि भिन्नान्येव ज्ञानानि ।

यदि तु तदानीं सांकेतिकशब्दानुबिद्धं तत्तत्पिण्डज्ञानमभिन्नमेव तस्येत्युच्यते, तदा तच्छब्दगता जातिरेव तेषां पिण्डानामनुगमिका तेषामभिन्नप्रत्ययहेतुः, शब्दार्थ-योरभेदारोपस्यानादित्वात् । अतोऽस्यायं वाचक इत्येव शब्दार्थयोर्भेदप्रत्ययो द्रष्टव्यः प्राङ्मयोक्त इत्यवधेयम् ॥ ७-८ ॥

'जातिकार्याय कल्पते' इति पूर्वकारिकोक्तमेवार्थमभिद्योतयितुमाह—जातिशब्दै-कशेषे इति ।

अस्यार्थः—सा जातिः = शब्दजातिः, विशेषरूपा गोशब्दत्वादिः, सामान्यरूपा वा शब्दत्वम् । जातिशब्दैकशेषे = जातिशब्दानां गोवृक्षादिशब्दानां जातिशब्दानां वा एकशेषे = एकशेषस्य जातिपक्षे प्रत्याख्यानात् लक्षणया = सहविवक्षया एकप्रयोगे; यद्वा प्रसक्ते इति पदमध्याहार्य योजनीयम् । गाव इमाः, वृक्षा इमे, जातय इमा इति वा एक-प्रयोगे जातीनाम् = अर्थजातीनां गोत्वादीनामभिन्नप्रत्ययनिबन्धनभूताजातिः=गोशब्दत्व-वृक्षशब्दत्वादिरूपा जातिशब्दत्वरूपा वा इष्यते । अतो गावः, वृक्षाः, जातय इत्यभिन्न-मभिधानम्, अभिन्नः प्रत्ययो वा उपपद्यते । यदि तु गोशब्दत्वादिरूपाः शब्दजातयोऽपि =

**जातिषु गोशब्दत्वादिकासु व्यक्तिस्थानीयासु प्रतिपाद्यास्वभिन्नशब्दप्रयोगे निबन्धनमित्यर्थः ॥ ९ ॥**

**यद्येवं शब्दजातिः शब्दगतानामपि जातीनामन्या वाचकजातिस्तासामप्यन्ये-त्यनवस्थाप्रसङ्ग इत्याशङ्क्याह—**

---

शब्दजातय इमा इत्येवं शब्दजातिशब्देन प्रत्याख्यास्तदा तज्जातिः शब्दजातिः जातिशब्दगतं सामान्यं जातिशब्दत्वरूपं शब्दजातिषु गोशब्दत्वादिकासु व्यक्तिस्थानीयासु प्रतिपाद्यासु अभिन्नशब्दप्रयोगे निबन्धनमिति।

अयं भावः—वाजप्यायनमत एकशेषसूत्राणां प्रत्याख्यानमस्ति। तदुक्तम्—'आकृत्यभिधानाद् वैकविभक्तौ वाजप्यायनः' इति, अत्र वाशब्दस्तन्त्रमपेक्ष्य प्रयुक्तः। अस्यार्थो वा—अथवा आकृत्यभिधानात् = शब्दैरर्थगतजातीनामभिधानात्, जातेरेकत्वादेकविभक्तौ सिद्धायामेकशेषसूत्रं न कर्त्तव्यमिति वाजप्यायनाचार्यो मन्यत इति। एवं जातिपक्ष एकशेषस्य प्रत्याख्यानात् तत्फलभूत एकशब्दप्रयोगोऽत्रैकशेषशब्देनोक्तो लक्षणया। यद्वा—एकशेषनिमित्तभूता सहविवक्षा, अत्रैकशेषशब्देन लक्ष्यते। यद्वा जातिशब्दैकशेषे प्रसक्ते इत्यध्याहृत्य योजनीयम्। सा जातिरित्यत्र तत्पदेन शब्दगता जातिः परिगृह्यते। शब्दे जातिरवस्थिता' इति पूर्वकारिकायां तस्या एवोपन्यासेन सर्वनाम्नां पूर्वपरामर्शकत्वेन तस्या एव तत्पदेन परामर्शात्। एवञ्चार्थजातीनामभेदेनाध्यस्यमाना गवादिशब्दरूपजातिशब्दगता गोशब्दत्वादिरूपा जातिः जातिशब्दगता वा जातिशब्दत्वरूपा जातिर्गवाद्यर्थानां सर्वेषामेकगवादिशब्दबोध्यत्वरूपम्, गोत्वादिजातीनां वा सर्वासामेकजातिशब्दबोध्यत्वरूपं जातिकार्यं सम्पादयति। तद्यथा गावौ, गावः, वृक्षौ, वृक्षा इत्यादिरूपोऽभिन्नजातिनिबन्धनो जातेर्वाच्य एव पक्षे जातौ संख्याया अभावेऽपि तदेकार्थसमवायात् = जातिसामानाधिकरण्यात् जातौ समाश्रितविशिष्टसंख्य एकशब्दप्रयोगः। तथा 'इमा गोत्वादिजातयः' इत्ययमपि प्रयोगो जातावन्यजात्यभावेऽप्यर्थजातिषु गोशब्दत्वादिरूपवाचकजातितादात्म्याध्यासाश्रय उपपद्यते। अभिधानशब्दगतञ्च सामान्यमभिधेयजातिकार्यमभिधेयासु शब्दजातिष्वर्थजातिषु वोपचरति = तादात्म्याध्यासरूपेणोपचारेण सम्पादयति। न त्वभिधेयास्वर्थजातिष्वेवेति नियमः केनचित् क्रियत इति। अत एव यदा गोशब्दत्वादिरूपा जातय एव जातिशब्देन प्रत्याख्यास्तदा तास्वभिधानजातिशब्दगतं जातिशब्दत्वरूपं सामान्यं जातिकार्याय = अभिन्नशब्दप्रत्ययरूपव्यवहाररूपाय कल्पत एवेत्याह शब्दजातय इत्यत्रेति। तज्जातिः = शब्दजातिः, शब्दगतं सामान्यम्। इमा गोशब्दत्वादिरूपाः शब्दजातय इत्यत्रैकपदप्रयोगे तस्योच्चरितस्य शब्दजातिशब्दस्य या जातिः शब्दजातिशब्दत्वरूपा सा शब्दजातिषु गोशब्दत्वादिकासु व्यक्तिस्थानीयासु प्रतिपाद्यास्वभिन्नशब्दप्रयोगेऽभिन्नप्रत्यये च निबन्धनमित्यर्थ इति ॥ ९ ॥

**या शब्दजातिः शब्देषु शब्देभ्यो भिन्नलक्षणा ।**
**जातिस्सा शब्दजातित्वमप्यतिक्रम्य वर्तते ।। १० ।।**

**प्रयोक्तृभेदाद् बहुषु शब्दजातिशब्देषु, अभिन्नप्रत्ययनिबन्धना या जातिस्तेभ्य एव शब्देभ्यः स्वाश्रयभूतेभ्यो भिन्नस्वभावा सा गोशब्दत्वादिशब्दजातिवर्गान्तः-पातिनी, न तु व्यपदेशान्तरार्हा। शब्दजातिशब्दस्यापि गोशब्दत्वादिवत् शब्द-जातय इत्यनेनैवैकशब्दप्रयोगेण सापि प्रत्याय्यत इति न प्रयोगानवस्थापत्तिरि त्यभिप्रायः ।। १० ।।**

**तदेवं स्वनिकायसिद्धाध्यासदर्शनाश्रयेण सार्वत्रिकी जातिपदार्थव्यवस्था दर्शिता। स्वरूपभूता हि जातिः सर्वेषां शब्दानामन्तरङ्गत्वादसाधारणत्वादहेयत्वाच्च प्रथमं प्रतिपाद्या । इदानीमध्यासानाश्रयेणापि प्रौढिवादितया जातिपदार्थव्याप्ति-मुपपादयितुमाह—**

---

ननु यद्येवं शब्दजातिः=शब्दजातिशब्दाभिधेया शब्दजातिः = शब्दत्वरूपा जातिः शब्दगतानामपि जातीनां गोशब्दत्वादिरूपाणां वाचिकान्या—गोत्वादिरूपाभ्योऽर्थजा-तिभ्यो वाच्याभ्यो गोशब्दत्वादिभ्यश्च शब्दजातिभ्यो वाचिकाभ्योऽन्या जातिस्तासा-मप्यन्या इत्यनवस्थाप्रसङ्ग इत्याशङ्क्याह—या शब्दजातिरिति ।

अस्यार्थः—शब्देषु = प्रयोक्तृभेदप्रयुक्तप्रयोगभेदाद् भिन्नेषु बहुषु शब्दजातिशब्देषु इमाः शब्दजातय इत्यभिन्नशब्दप्रत्ययनिबन्धना या शब्दजातिः, शब्देभ्यः = शब्दजाति-शब्देभ्यः स्वाश्रयभूतेभ्यो भिन्नलक्षणा भिन्नस्वभावा, सा जातिर्गोशब्दत्वादिरूपशब्द-जातिवर्गान्तःपातिनी शब्दजातिपदाभिधेयैव, न त्वन्यव्यपदेशार्हा। अतः सा जातिः शब्दजातित्वमप्यतिक्रम्य वर्तते, शब्दजातित्वस्य शब्दजातिशब्दमात्रवृत्तित्वेनासाधार-ण्यात्, शब्दजातेस्तु शब्दजातिशब्दे गोशब्दादिष्वपि च सत्त्वेन साधारणत्वात् ।

अयं भावः—शब्दजातय इमा इत्यत्र शब्दपदेन गोशब्दादीनामिव शब्दजातिशब्द-स्याप्यभिधानेन सङ्ग्रहादनेनैव एकशब्दप्रयोगेण गोशब्दत्वादिजातिवत् शब्दजातिपदेनैव शब्दजातिशब्दगताऽपि जातिः प्रत्याय्यत इति न प्रयोगानवस्थापत्तिरिति ।। १० ।।

तदेवं स्वनिकाये = वैयाकरणगृहे सिद्धो योऽर्थो जातौ, गुणे, क्रियायाम्, द्रव्ये वा तत्तच्छब्दजातेरभेदाध्यासस्तद्दर्शनसमाश्रयेण सार्वत्रिकी = जातिगुणक्रियायदृच्छाशब्द-स्थलीया जातेः पदार्थत्वव्यवस्था दर्शिता। यतः शब्दजातिः सर्वेषां शब्दानां स्वरूप-भूता, तदसाधारणधर्मत्वात् । अतोऽर्थापेक्षयाऽन्तरङ्गत्वाद् असाधारणत्वाद् अहेयत्वा-च्चार्थापेक्षया प्रथमं प्रतिपाद्येति। अर्थो हि शब्दजात्यपेक्षया पश्चात् प्रतीतिकत्वेन बहिरङ्गः। किञ्च घटकलशकुम्भादिपर्यायशब्दस्थले साधारणः, शब्दजातिस्तु तत्रा-साधारणी, किञ्चानुकरणस्थले हेयः, शब्दजातिस्त्वहेयेति ।

**अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।**
**व्यापारलक्षणा यस्मात् पदार्थाः समवस्थिताः ॥ ११ ॥**

**अन्यथा चात्र संबन्धः। तथा हि—अस्तु शब्दजातेरर्थजातीनां जातिकार्यम्, सम्बन्धव्युत्पत्तिस्तु न घटते। यत्र हि संकेतस्तत्र शब्दजातिरध्यस्यते। स एव त्वनेकत्वादर्थजातीनां सामान्यान्तरमन्तरेण न संभवतीत्याह—अर्थजात्यभिधानेऽपि इत्यादि। यदा विशुद्धा एवार्थजातयः शब्दैरभिधीयन्त इत्याश्रीयते तदापि सर्वे जात्यभिधायिनः जात्यादिशब्दा अपि तदा जातिवाचिन एव। ननु निस्सामान्यानि सामान्यानीति सिद्धान्तात् कथं जात्यादिशब्दा अपि जात्याधारां जातिमभिदध्युरित्याह—'व्यापारलक्षणाः' इति। व्यापारः कार्यं प्रयोजनं तदेव लक्ष्यतेऽनेनेति लक्षणं**

---

अथेदानीं प्रागुक्ताध्यासानाश्रयेणापि प्रौढिवादितया सर्वत्र = जातिशब्दादिचतुष्टयेऽपि जातिपदार्थव्याप्तिं = जातेः पदार्थत्वव्याप्तिम् उपपादयितुमाह अर्थजात्यभिधानेऽपीति।

**अस्यार्थः** —अर्थजात्यभिधानेऽपि = चतुर्विधैर्जातिगुणक्रियाद्रव्यशब्दैरर्थजातेरेवाभिधानमिति पक्षेऽपि सर्वे चतुर्विधा अपि शब्दा जात्यभिधायिनः, पदार्थान्तरेऽन्वयिरूपेणाभिधीयमानः पदार्थो जातिरिति तल्लक्षणात्। एवञ्च गुणक्रियायदृच्छाशब्दोऽपि प्रवृत्तिनिमित्तभूतो जातिरेव। सर्वेषां शब्दानां जात्यभिधायित्वे हेतुमाहोत्तरार्धेन—यस्मात् कारणात् सर्वे पदार्थाः व्यापारलक्षणाः = शब्दस्य व्यापारोऽभिधा तदेव लक्षणं ज्ञापको हेतुर्येषां ते तथाभूताः समवस्थिताः। अत्र लक्षणपदं लक्ष्यतेऽनेनेति करणव्युत्पत्त्या ज्ञापकहेतुपरम्। एवञ्च शब्दस्याभिधारूपेण व्यापारेण ज्ञाप्यत्वात् सर्वेऽपि जात्यादिरूपाः पदार्था जात्यभिधानपक्षे प्रागुक्तरीत्या जातय एवेति रीत्या सर्वेऽपि शब्दा जात्यभिधायिन एवेति। अन्यथा चात्र संबन्धः, अत्रास्यां कारिकायाम्, पूर्वकारिकया सह अवतरणिकारूपः संबन्धः पूर्वोक्ततत्कारिकावतरणिकापेक्षया अन्यथा च, प्रकारान्तरेणापि संभवति।

तथाहि—जातय इमा इत्यभिन्नाभिधानप्रत्ययरूपमर्थजातीनां कार्यम्। प्रागुक्तरीत्या शब्दजातेरस्तु = शब्दजातिप्रयुक्तमस्तु, किन्त्वर्थजातौ शब्दानां संबन्धव्युत्पत्तिः = शक्तिग्रहो न घटते। यत्र हि सङ्केतस्तत्र शब्दजातिरध्यस्यते। यत्र च शब्दजातेरध्यासस्तत्रैव शब्दानां शक्तिग्रहः। अर्थजातीनाञ्चानेकत्वात् तत्रानुगमक सामान्यान्तरमन्तरेण सङ्केत एव शब्दस्य तासु जातिषु न संभवति, अर्थजातिषु सामान्यान्तरं तु नास्त्येव; निःसामान्यानि सामान्यनीत्यभ्युपगमात्। तत्र सामान्यान्तराभ्युपगमेऽनवस्थादिदोषाच्चेति प्राप्ते आह—अर्थजात्यभिधानेऽपीत्यादि।

अस्यार्थः—अर्थजात्यभिधानेऽपि यदा विशुद्धा एवार्थजातयः शब्दैरभिधीयन्ते,

हेतुर्येषां पदप्रत्याय्यानामर्थानां ते तथा नियमितस्वरूपाः। अयमाशयः—वैशेषिका-दीनां भवन्तु निःसामान्यानि सामान्यानि। तानि हि व्यक्तिष्वन्वयप्रत्ययावसेयानि परोपाधिरूपाणि स्वतन्त्रव्यक्तिवदिदन्तावभासित्वाभावात् सामान्यान्तरेण नोपाधी-यन्ते। वैयाकरणानां शब्दार्थोऽर्थ इत्यभ्युपयतामन्वयिरूपावच्छेदेन शाब्दस्य प्रत्यय-स्योत्पत्तेर्जातिष्वपि जातिरविरुद्धाभ्युपगम्या। एतदेव हि व्यक्तिष्वपि जात्यभ्युपगमे निमित्तमित्यत्रापि तथाभ्युपगमे कः प्रद्वेषः। प्रत्यक्षा अपि च पदार्थाः स्वकार्यं विज्ञा-नादिकं कुर्वन्तः सन्तीति व्यवह्रियन्ते, किं पुनः शब्दवाच्याः पदार्था इति सामान्य-वचनाद् द्रव्यादयोऽपि शब्दवाच्यत्वेनैव लक्ष्यन्ते। शब्दप्रमाणकानां हि यच्छब्द आह तत् परमार्थरूपम्। तथा चान्वयिरूपेण गुणोऽप्यभिधीयमानो जातिरेव। यथो-पमानसमासे श्यामादिः। तथा च

'उपमानानि सामान्यवचनैः' ( पा २।१।५५ )

इत्युच्यते।

---

न तु शब्दजातितादात्म्याध्यासमापन्ना इत्याश्रीयते, तदापि सर्वे शब्दा जात्यभिधायिनः = जात्यादिशब्दा अपि तदा जातिवाचिन एव।

ननु निःसामान्यानि सामान्यानीति सिद्धान्तात् कथं जात्यादिशब्दा अपि जात्याधारां जातिमभिदध्युरिति प्राप्ते आह व्यापारलक्षणेति। यस्माद् व्यापारलक्षणाः पदार्थाः समवस्थिताः इति संबन्धः। व्यापारः शब्दस्याभिधारूपं कार्यं क्रियाप्रयोजनम्—प्रयोजकं, प्रतीयमानानां पदार्थानां = पदार्थानां प्रत्यये प्रयोजकमिति यावत्, तदेव लक्षणं येषां पदार्थानां ते तथाभूताः। अत्र लक्ष्यतेऽनेनेति करणव्युत्पत्त्या लक्षणं ज्ञापको हेतुरिति प्रागुक्तं न विस्मर्तव्यम्। पदार्थाः = पदैः प्रत्याय्या अर्थाः, समवस्थिताः = जातिगुणक्रियायदृच्छाशब्दरूपैः प्रवृत्तिनिमित्तैर्नियमितस्वरूपाः सन्तः सम्यगव-स्थिताः सन्ति।

अयमाशयः—वैशेषिकादीनां मते भवन्तु निःसामान्यानि सामान्यानि, तेषां मते हि तानि व्यक्तिषु संसर्गप्रत्ययपरिच्छेद्यानि व्यक्तीनां व्यावर्तकोपाधिरूपाणि स्वतन्त्र-व्यक्तिवत् = प्राधान्येन प्रतीयमानव्यक्तिवत् स्वगतेन सामान्यान्तरेण नोपाधीयन्ते = न व्यावर्त्यन्ते। व्यक्तिवदिदन्तातत्ताभ्यामवभासित्वाभावाद् इति। वैयाकरणानां तु शब्दार्थः = शब्दाभिधेयः, अर्थः=पदार्थ इत्यभ्युपयतामन्वयिरूपावच्छेदेन शाब्दस्य=पदार्था-नुगतं यद्रूपं जात्यादितत्कृतपदार्थव्यावृत्तिविशिष्टस्य = स्वानुगतजात्यादिव्यावृत्तपदार्थ विषयकस्य शाब्दस्य प्रत्ययस्योत्पत्तेर्जातिष्वपि जातिरविरुद्धाऽभ्युपगम्या। एतदेव हि = शाब्दबोधस्य स्वानुगतजात्यादिव्यावृत्तपदार्थविषयकत्वमेव हि व्यक्तिष्वपि जात्यभ्युपगमे निमित्तमिति जातावपि तथा जात्यभ्युपगमे कः प्रद्वेषः? "प्रत्यक्षा अपि च पदार्थाः स्व-कार्यं विज्ञानादिकं कुर्वन्तः सन्तीति व्यवह्रियन्ते, किं पुनः शब्दवाच्याः पदार्थाः" इत्यस्ति

**एवं क्रियाप्यभेदेनाभिधीयमाना जातिः। तथेदं तदिति स्वातन्त्र्येण विशेष्यतयाभिधीयमाना जातिगुणक्रिया अपि द्रव्यमिति यथावसरमग्रे निर्णेष्यत एव। एतच्च लौकिकव्यवहारानुगुण्येन शास्त्रेऽस्मिन् व्युत्पाद्यते। शास्त्रान्तरप्रसिद्धा हि व्यवस्था लोकविरुद्धा। लोके हि 'गवि शृङ्गम्,' 'वृक्षे शाखा' इति व्यवहारः। तथैव च व्याकरणेऽप्याधारसप्तमी। शास्त्रान्तरे त्ववयवेष्ववयवीति शृङ्गे गौः', शाखायां वृक्षः' इति स्यात्। इत्थं च शब्दाभिधेयस्येहार्थत्वात् सर्वे जात्यभिधायिनः, यस्माच्छब्दव्यापारेण पदार्था लक्ष्यन्ते। यद्यपि बहिर्वस्तूनि न सन्ति तथापि शब्दैस्तथा प्रत्याय्यन्ते, अतोऽभिधाव्यापारवशादन्वयिरूपेण प्रत्यायनाद् व्याप्तिर्जातौ पदार्थे सिद्धेत्येषोऽप्यर्थः॥ ११॥**

**अभिधालक्षणव्यापारत्वमेव व्यक्तयति—**

---

सर्वेषां शास्त्राणां वादिनां वा सामान्यवचनमविरोधात्। अयञ्च तद्वाक्यार्थः। प्रत्यक्षाणां प्रामाण्यं व्यभिचरितम्, भ्रान्तप्रत्यक्षस्यापि दर्शनात्। शब्दानां तु प्रामाण्यमव्यभिचरितम्, अबाधात्। तदुक्तं प्रथमकाण्डे—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तदुपासीनो हेतुवादैर्न बाध्यते॥ इति।

(वा० का० १।४१)

एवञ्च यदि प्रत्यक्षा अपि च पदार्थाः स्वकार्यं विज्ञानं क्रियां व्यवहारं च कुर्वन्तः सन्तीति सत्त्वेन व्यवह्रियन्ते। तदा किं पुनः शब्दवाच्याः पदार्थाः सत्त्वेन व्यवहर्तव्या इति? एवञ्चास्माद् वचनाद् द्रव्यादयोऽपि शब्दवाच्यत्वेनैव हेतुना सत्त्वेन लक्ष्यन्ते = प्रतीयन्ते। यच्छब्द आह तदेव हि शब्दप्रमाणकानां वैयाकरणानामन्येषां वा परमार्थरूपम्। तथा च स्वविशेष्यान्वयिरूपेण गुणोऽप्यभिधीयमानो जातिरेव। यथोपमानसमासे श्यामादिर्गुणः, तथा च उपमानानि सामान्यवचनैः, (पा० सू० २।१।५५) इति सूत्रमुच्यते। अत्र सामान्यपदं जातिपरम्। एवं क्रियाऽपि स्वविशेष्यद्रव्याभेदेनाभिधीयमाना जातिरेव। एवं यदृच्छाशब्दोऽपि स्वविशेषद्रव्याभेदेनाभिधीयमानो जातिरेव। तथाऽनेनैव न्यायेन इदं तदिति स्वातन्त्र्येण विशेष्यतया स्वशब्दैरभिधीयमाना जातिगुणक्रिया अपि द्रव्यमेवेति यथाऽवसरमग्रे निर्णेष्यत एव। एतच्च लौकिकव्यवहारानुगुण्याद् अस्मिन् शास्त्रे व्युत्पाद्यते 'जातौ जातिर्नास्तीति'। गुणक्रियायदृच्छाशब्दा न जातिरिति च शास्त्रान्तरप्रसिद्धा हि व्यवस्था लोकविरुद्धा इत्यतो नात्र शास्त्रे समाश्रीयते। लोकाविरुद्धा हि व्यवस्थाऽत्र शास्त्रे समाश्रीयते। शब्दानां साधुत्वानुशासनार्थमेव होदं शास्त्रं प्रवृत्तम्। शब्दमूलकश्च व्यवहारो लौकिक इति। लोके हि गवि शृगम्, वृक्षे शाखा इति व्यवहारः। तथैव च व्याकरणेऽप्याधारसप्तमी। शास्त्रान्तरे (न्यायवैशेषिकयोः तु, अवयवेष्ववयवी इति शृङ्गे गौः, शाखायां वृक्ष इति स्यात्। एवञ्च शब्दाभिधेयस्य

**जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत् ।**
**शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः ॥ १२ ॥**

**जातौ पदार्थे इति पक्षावच्छेदं करोति । अत्र हि पक्षे सर्व एव शब्दो जातिवाचीत्यभ्युपगन्तव्यम् । भवतु, मा वा भूज्जातिषु जातिः । शब्दैस्तु जातिव्यतिरिक्तया जात्यैकस्वभावैव अपेक्ष्यते, प्रत्याय्यत्वेनाङ्गीक्रियते । स्वालक्षण्येन हि वस्तूनां भेदः शब्दैः स्प्रष्टुं न शक्यते, अन्वयिरूपावेशेन सम्बन्धव्युत्पत्तौ शब्दस्य वाचकत्वात् । तथा च जातीनामितरेतरभेदो वस्तु सन्नाभिधीयते, अपि त्वभेदकल्पेन ता अभिधीयन्ते । अभेदश्च सामान्यमिति सिद्धमेकशब्दत्वाज्जातय इति ।**

**तथा योऽपि विशेषः संज्ञाशब्दानां वाच्यः प्रतीतिनियतः सोऽपि जातिवत् प्रसिद्धजात्या तुल्यम्, अपेक्ष्यते शब्दैः । तत्रापि बाल्यकौमाराद्यवस्थाभेदः शब्देन न स्पृश्यते, अपि त्ववस्थातूरूपमेवानुगतम्, तद्धि प्रत्यभिज्ञाप्रत्ययनिमित्तं तत्रावश्याभ्युपगन्तव्यम् । अतो यस्माज्जातिवत् सर्वमपेक्ष्यते शब्दैस्तस्माज्जातिं विशेषं वा प्रतिपादयन्तः सर्वे जात्यभिधायिन इति जात्यभिधानव्याप्तिं निगमयति । इत्थं च संज्ञाशब्दानामपि जातिवादिमते जातिशब्दत्वमित्येकैव शब्दानां प्रवृत्तिः ॥ १२ ॥**

**एवं दर्शनान्तरेऽपि शब्दव्यापाराश्रयण एव व्याप्तिसिद्धिरित्याह—**

---

इह शब्दार्थत्वात् सर्वे जात्यभिधायिनः, यस्माच्छब्दव्यापारेण अभिधावृत्तिरूपेण पदार्था लक्ष्यन्ते = प्रतीयन्ते । यद्यपि शशशृङ्गादीनि बहिर्न सन्ति, तथापि शशशृङ्गादिशब्दैस्तथा = शशशृङ्गत्वादिधर्मपुरस्कारेण प्रत्याय्यन्ते । अतोऽभिधावशात् शशशृङ्गत्वादिधर्माणां शशशृङ्गाद्यन्वयिरूपेण प्रत्यायनाद् जातिरूपे पदार्थे सर्वेषां शब्दानां व्याप्तिः = व्यापकत्वं सिद्धा इत्येषोऽपि "सर्वे जात्यभिधायिनः" इत्यस्यार्थः । यथा 'सर्वे जात्यभिधायिनः' इत्यस्य जात्यादिशब्दा अपीत्यर्थस्तथा शशशृङ्गादिशब्दा अपीति यावदिति ॥११॥

सर्वेषां शब्दानां जातिवाचित्वानुगुणमभिधालक्षणव्यापारत्वमेव = बहुव्रीहिणा अभिधालक्षणं व्यापारमेव, व्यक्तं करोति जातौ पदार्थे इति ।

अस्यार्थः—यस्मात् कारणाज्जातौ पदार्थे = जातिः पदस्यार्थ इति पक्षे, शब्दैः = घटत्वादिजातिवाचकैर्घटत्वादिशब्दैः गुणक्रियावाचिभिः शुक्लपाचकादिशब्दैः, डित्थडवित्थदेवदत्तादिपदरूपैः संज्ञाशब्दैश्च, जातिर्वा, जातिवत् स्वाश्रयस्य भेदको गुणक्रियारूपः बाल्यकौमाराद्यवस्थाभेदेऽप्यभिन्नप्रत्ययनिमित्तभूतः प्रतिव्यक्तिनियतः संस्थानादिरूपो विशेषो वाऽपि जातिवत् = प्रसिद्धजात्या तुल्यम् स्वप्रवृत्तिनिमित्ततयाऽपेक्षतेऽतस्ते सर्वेऽपि शब्दा जातिवाचिनः, पूर्वपद्यप्रदर्शितदिशा विशेषाणामपि गुणक्रियादीनां जातिकार्यकरत्वेन जातित्वोपचारादिति ।

**द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते ।**
**द्रव्यधर्माश्रयाद् द्रव्यमतः सर्वोऽर्थ इष्यते ।। १३ ।।**

**न केवलं मयैव जातिपदार्थवादिनैतदङ्गीकृतं सर्वोऽर्थो जातिरिति यावद्, द्रव्ये अपि पदार्थे, द्रव्यपदार्थपक्षेऽपि द्रव्यधर्मा सर्वोऽर्थ उच्यते, कुतः ? द्रव्यधर्माणामाश्रय-**

---

अयं भावः—जातौ पदार्थे इत्यनेन द्रव्यं पदार्थं इति पक्षस्यावच्छेदं = व्यावृत्तिं करोति । अस्मिन् पक्षे हि सर्व एव शब्दश्चातुर्विध्यमापन्नो जातिवाचीत्यभ्युपगन्तव्यम् । किं बहुना, जातिसामान्यादिशब्दा अपि जात्यभिधायिन एव । भवतु, मा वा भूज्जातिषु जातिः । जात्यादिशब्दैस्तु गोत्वघटत्वादिजातिव्यतिरिक्तया जातित्वरूपया जात्या एक-स्वभावैव = अभिन्नस्वरूपैव गोत्वघटत्वादिरूपा जातिरपेक्ष्यते, प्रत्याय्यत्वेनाङ्गीक्रियते । वस्तुतः प्रतीतितश्च परस्परमत्यन्तविलक्षणानां घटपदादिवस्तूनां परस्परं भेदो हि शब्दैः स्वालक्षण्येन = अर्थव्यक्तिस्वरूपेण स्प्रष्टुं न शक्यते, किमुत प्रत्याययितुम् । अन्वयिरूपावेशेन संबन्धव्युत्पत्तौ = अर्थव्यक्तिष्वनुगतं रूपं जातिर्विशेषो वा तद्विशिष्टासु व्यक्तिषु संबन्धग्रहे सति शब्दस्य जातिविशिष्टार्थवाचकत्वात् । तथा च व्यक्तीनां परस्परं व्यावर्तकत्वेनापि सर्वत्र जातिरभ्युपेया । तथा गोत्वघटत्वादिरूपाणां जातीनां परस्परं भेदो वस्तु सन्नपि जातिशब्दप्रयोगे नाभिधीयते, अपि तु जातित्वेन रूपेणाभेदं कल्पयित्वा जात्यादिशब्दैस्ता अभिधीयन्ते । अभेदश्च घटभेदाभावादिरूपो घटत्वादिसामान्यसमनिय-तत्वात् सामान्यमिति सिद्धमेकशब्दवाच्यत्वात् जातय इत्यभिधानम् । एवञ्च परस्पर-व्यावृत्तासु गोत्वघटत्वादिजातिष्वपि जातय इत्यभिन्नाभिधानप्रत्ययनिमित्तं जातित्वरूपं सामान्यमभ्युपेयत एवेति । तथा योऽप्यनुगतसंस्थानविशेषादिरूपो विशेषः संज्ञाशब्दानां वाच्यः प्रतीतिनियतः = संज्ञाशब्दप्रयोगे नियमेन प्रतीयमानः, सोऽपि जातिवत्, प्रसिद्ध-जात्या तुल्यमपेक्ष्यते संज्ञाशब्दैः । तत्रापि बाल्यकौमाराद्यवस्थाविशेषः परस्परं व्यावृत्त-स्वभावः संज्ञाशब्देन न स्पृश्यते = न स्वप्रवृत्तिनिमित्ततया प्रत्याय्यते, अनुवृत्तप्रत्ययानाधायकत्वात्, किन्त्ववस्थाभेदेऽप्यनुगतं यद् रूपमवस्थातृसंस्थानविशेषादिकमभिन्ना-भिधानप्रत्ययनिमित्तं तदेव स्पृश्यते । तद्धि अवस्थाभेदेऽपि प्रत्यभिज्ञाप्रत्ययनिमित्तं तत्रा-वश्यमभ्युपगन्तव्यम् । अतो यस्माज्जातिवत् सर्वं गुणक्रियादिकमपि शब्दैः स्वप्रवृत्ति-निमित्ततया वाच्यत्वेनापेक्ष्यते । तस्माज्जातिं विशेषं वा गुणक्रियादिरूपं प्रतिपादयन्तः सर्वे शब्दा जात्यभिधायिन इति सर्वेषु जात्यभिधानव्याप्तिं निगमयति = उपसंहरति । इत्थञ्च जातिपदार्थवादिमते संज्ञाशब्दानामपि जातिशब्दत्वमेवेति जातिरूपैकनिमित्त-नियन्त्रितैव सर्वेषां शब्दानां प्रवृत्तिरिति सिद्धम् ।। १२ ।।

एवं जातिः पदार्थं इति दर्शन इव द्रव्यं पदार्थ इति दर्शनान्तरेऽपि शब्दव्यापा-रस्याभिधायाः शब्दानां द्रव्यपदार्थकत्वनियामकत्वाश्रयण एव सर्वेषां शब्दानां द्रव्यपदार्थ-कत्वस्य व्याप्तिसिद्धिरित्याह—द्रव्यधर्मेति ।

णात्। द्रव्यमतः सर्वोऽर्थं इष्यते। व्याप्तिरतः सिद्धा भवतीत्यर्थः। द्रव्यवादिनाप्येतदभ्युपेतव्यं व्याप्तिसिद्धये। शब्देन योऽर्थं उच्यते सर्वोऽसौ द्रव्यधर्मयुक्त एवेत्यभिप्रायः। यथा तव द्रव्यवादिनः केचिदेव शब्दा मुख्यद्रव्याभिधायिनस्तदन्ये तूपचरितद्रव्याभिधायिनः, तथा ममापि जातिवाचिनो मुख्यां जातिमभिदधति केचित्, उपचरितामन्य इति मतद्वयेऽपि साम्यम्। तत्र द्रव्यधर्मा इदं तदिति प्रत्यवमर्शयोग्यत्वम्, परिनिष्पन्नता, स्वातन्त्र्यम्, लिङ्गसङ्ख्यायोगश्चेत्येवमादयः। तेषां शुक्लादिगुणेष्वप्यध्यारोपात्तेऽपि द्रव्यस्येव धर्मो येषामिति द्रव्यधर्माणः। तथा हि—शुक्लो नीलं स्त्रीपुन्नपुंसकानि सत्त्वगुणाः। तथैकत्वादयश्चेत्यादिभिः शब्दैः प्रत्याय्यमाना गुणादयो द्रव्यधर्माणः स्वातन्त्र्यादिरूपेणावभासन्त इति सर्वोऽर्थो द्रव्यरूपेणाभिधीयते ॥ १३ ॥

एवं शब्दव्यापाराश्रयेण व्याप्तिरुपपादिता। अधुना वैशेषिकदृष्ट्याप्यर्थगतसमानधर्माश्रयेण जातिपदार्थव्याप्तिमाह—

---

अस्यार्थः—न केवलं मयैव जातिपदार्थवादिनैतदङ्गीकृतं सर्वोऽर्थोऽन्वयिरूपेणाभिधीयमानत्वरूपजातिधर्मवत्त्वेन जातिरिति, किन्तु द्रव्ये पदार्थे=द्रव्यपदार्थपक्षेऽपि द्रव्यधर्मा सर्वोऽर्थ उच्यते। कुतः, द्रव्यधर्माश्रयात्, द्रव्यधर्माणां सिद्धत्वस्वातन्त्र्यादीनामाश्रयणात्। अतः सर्वोऽर्थो द्रव्यमिष्यते। अतः सर्वेषु शब्देषु द्रव्यपदार्थकत्वस्य व्याप्तिः सिद्धा भवतीत्यर्थ इति।

अयं भावः—शब्देन योऽर्थ उच्यते, सर्वोऽसौ द्रव्यधर्मयुक्त एवेत्येतद् द्रव्यपदार्थवादिनाऽप्यभ्युपेतव्यं शब्दानां द्रव्यपदार्थकत्वव्याप्तिसिद्धये। यथा तव द्रव्यपदार्थवादिनो घटपटादिशब्दाः केचिदेव मुख्यद्रव्याभिधायिनः तदन्ये शुक्लनीलादिशब्दाः पाकयागादिशब्दाश्चोपचरितद्रव्याभिधायिनः=गौणद्रव्याभिधायिनः; तथा ममापि जातिवादन आद्यो मुख्यां जातिमभिदधाति, द्वितीयस्तूपचरितां तामिति मतद्वयेऽपि साम्यम्। तत्र द्रव्यस्य धर्माः—इदं तदिति प्रत्यवमर्शयोग्यत्वम्, क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वरूपं परिनिष्पन्नत्वं सिद्धत्वापरपर्यायम्, स्वातन्त्र्यम्=मुख्यविशेष्यत्वरूपं प्राधान्यम्, लिङ्गसंख्यायोगश्चेत्येवमादयः। एते च धर्माः पाकयागादिपदोपस्थाप्यासु क्रियासु शुक्लं रूपमित्यादौ शुक्लादिपदैः प्राधान्येनोपस्थाप्येषु गुणेषु च व्यवह्रियन्ते। तेषां द्रव्यधर्माणां शुक्लादिगुणेष्वप्यध्यारोपात् तेऽपि द्रव्यस्येव धर्मो येषां ते द्रव्यधर्माणः। तथाहि—शुक्लो नीलम्, स्त्रीपुंनपुंसकानि, सत्त्वगुणाः एकत्वम् इत्यादिभिः शब्दैः प्रत्याय्यमानाः=अभिधीयमाना गुणलिङ्गादयः प्रागुक्तद्रव्यधर्माणः स्वातन्त्र्यादिरूपेणावभासन्त इति रीत्या सर्वोऽप्यर्थो द्रव्यरूपेणाभिधीयत इति ॥ १३ ॥

एवं शब्दव्यापारस्याभिधाया आश्रयणेन सर्वेषां शब्दानां जातिपदार्थकत्वव्याप्तिरुपपादिता। अधुना वैशेषिकदृष्टिमालम्ब्याप्यर्थगतसमानधर्माश्रयेण=अर्थे सामान्यरूपे

अनुप्रवृत्तिधर्मो वा जातिस्स्यात् सर्वजातिषु ।
व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते ।। १४ ।।

जातीनामेतज्जातित्वं येयं स्वाश्रयानुवृत्तिः सर्वजातीनां साधारणो धर्मः । सा च ताभ्योऽनन्यापि सादृश्यादभेदेन परामृष्टा सती सर्वासां जातिः । सर्वैव हि जातिः स्वव्यक्तीरनुवर्तते । उपलक्षणं चैष धर्मः । तेन स्वानुरूपप्रत्ययजनकत्वम्, यद्बलाद् द्रव्यं तद्रूपमाभाति । स्वानुरूपाभिधानहेतुत्वम्, यद्वशाद् द्रव्यं तद्रूपाभिधानवाच्यं भवति । प्रत्याश्रयं च सर्वात्मना परिसमाप्तिः साधारणो जातिधर्मः । यदि भागशो जातिर्वर्तेत तदा भागश एव गोत्वादिप्रत्ययः स्यात् । संपूर्णश्च विषाणाद्यवयवदर्शनेऽपि झटिति गोत्वाकारः प्रसूयते । प्रत्याश्रयपरिसमाप्ता अपि च गुणाः प्रतिद्रव्यं

---

जातिरूपे परस्परविलक्षणे यः सामानो धर्मोऽनुप्रवृत्तिरूपः, येन सामान्यं सामान्यमिति, जातिर्जातिरिति वाऽनुगतो व्यवहारो भवति । किञ्चार्थे विशेषरूपे गुणक्रियादिके यः समानो धर्मो व्यावृत्तिरूपो येन विशेषो विशेष इति व्यवहारो भवति तदाश्रयेणापि सर्वेषां शब्दानां सामान्यविशेषादिशब्दानामपि जातिपदार्थकत्वव्याप्तिमाह—अनुप्रवृत्तिः धर्मो वेति ।

अस्यार्थः—सर्वजातिष्वनुप्रवृत्तिरूपः = भिन्नासु गोत्वघटत्वादिजातिषु याऽनुगता जातिशब्दस्य प्रवृत्तिस्तद्रूपः धर्मो वा धर्म एव सर्वजातिषु गोत्वादिकासु जातिः स्यात् ।

विशेषे गुणक्रियादिरूपे तु व्यावृत्तिरूपं व्यावर्तकस्वरूपं धर्मसामान्यं साधारणो धर्मो जातिरिष्यत इत्येवं सर्वेषां शब्दानां जातिपदार्थकत्वमिति । अयं भावः—जातीनामेतज्जातित्वम्, योऽयं स्वाश्रयानुवृत्तिरूपः सर्वजातीनां साधारणो धर्मः । सा च = सर्वजातीनां स्वाश्रयानुवृत्तिः, स्वाश्रयभूताभ्यः सर्वजातिभ्योऽनन्यत्वेनानन्ताऽपि सादृश्यादभिन्नत्वेन परामृष्टा सती सर्वजात्यनुगतत्वेन सर्वासां जातीनां जातिः । सर्वैव हि जातिः स्वव्यक्तीरनुवर्तत इति । एष च सर्वजातीनां स्वाश्रयानुवृत्तिरूपो धर्मोऽन्येषामपि तद्धर्माणामुपलक्षणम् । तेन स्वानुरूपप्रत्ययजनकत्वम्, स्वानुरूपाभिधानहेतुत्वम् प्रत्याश्रयं प्रत्यवयवं च सर्वात्मना परिसमाप्तिरित्येते सर्वजातिधर्मा अपि संगृहीता भवन्ति । तत्राद्येन घटत्वजात्यनुरूपो घट इति प्रत्ययो भवति । द्वितीयेन तु घटरूपस्य द्रव्यस्य घटत्वानुरूपं घटशब्दरूपं यदभिधानं तद्वाच्यता भवति । तृतीयेन तु विषाणाद्यवयवदर्शनेऽपि झटिति गोत्वाकारः सम्पूर्णः प्रत्ययः प्रसूयते । यदि भागशो जातिर्वर्तेत तदा भागश एव गोत्वादिप्रत्ययः स्यात् । गुणास्तु प्रत्याश्रयपरिसमाप्ता अपि प्रत्याश्रयं भिन्नाः, जातिस्तु प्रतिद्रव्यमेकैव इत्येवमादयोऽसाधारणा गुणविलक्षणा जातिधर्मा वाच्याः । यथा च गोत्वादिजातिः सर्वा व्यक्तीर्व्याप्नोति, तथैते धर्मा सर्वजातीर्व्याप्नुवन्तीति जात्या तुल्यरूपत्वाज्जातय इत्यभिन्नाभिधानप्रत्ययरूपाय जातिकार्याय कल्पन्ते । एवं सर्व एव गुणक्रिया-

भिन्नाः, जातिस्त्वेकैवेत्येवमादयोऽसाधारणा धर्मा वाच्याः। यथा च गोत्वादिजातिस्सर्वा व्यक्तीर्व्याप्नोति तथैते धर्माः सर्वजातीर्व्याप्नुवन्तीति जात्या तुल्यरूपत्वाज्जातिकार्याय कल्पन्ते। एवं सर्व एव विशेषा व्यावर्तन्ते। अन्यथानुगमात् सामान्यानि स्युर्न विशेषा इति सर्वविशेषेषु साधारणी व्यावृत्तिः सामान्यसमो धर्मो भवंस्तेषु जातिः इत्युच्यते।

नन्वेवं गोपिण्डेष्वपि सास्नालाङ्गूलखुरककुदविषाणाद्यवयवसम्बन्धस्य साधारणत्वात्सैव जातिरस्तु। मैवम्। सास्नादिमत्त्वेन सास्नादिमानित्यादिप्रत्ययो जायते न तु गौर्गौरिति। अनुरूपं हि कार्यं कारणं कल्पयति, तद्यथा दण्डीति प्रत्यये दण्डसम्बन्धो निमित्तं न तु दण्डोपादित्सा। यद्येवमनुप्रवृत्तावपि न जातिर्जातिरिति प्रत्ययो युक्तः, व्यावृत्त्या च विशेषो विशेष इति। नैतदेवम्। गत्यन्तराभावादत्र सदृशा एव धर्मा जातिः कल्पते, मुख्ये जातिमत्त्वे बाधकोपपत्तेः। तथा हि—सामान्येष्वपरसामान्यसमवायेऽनवस्थादिबाधकमन्यत्र निर्णीतम्। नित्यद्रव्यवृत्तिषु

---

दिरूपा विशेषाः प्रतिस्वाश्रयं व्यावर्तन्ते। अन्यथा प्रतिस्वाश्रयव्यक्त्यनुगमात् ते सामान्यानि स्युर्न विशेषा इत्येवं सर्वविशेषेषु साधारण्येन वर्तमानो व्यावृत्तिरूपो धर्मः= प्रत्याश्रयं व्यावर्तमानत्वरूपो धर्मः, सामान्यसमो धर्मो भवन् तेषु विशेषा इत्यभिन्नाभिधानप्रत्ययनिमित्तं जातिरित्युच्यते।

नन्वेवं विशेषेषु साधारणस्यैव धर्मस्य व्यावृत्तिरूपस्य जातित्वाभ्युपगमे गोपिण्डेष्वपि सर्वेषु सास्नालाङ्गूलककुदखुरविषाणाद्यवयवसंबन्धस्य साधारणत्वात् स एव जातिरस्तु, कृतं गोत्वजात्येति चेन्मैवम्। सास्नाद्यवयवसम्बन्धरूपेण सास्नादिमत्त्वेन सास्नादिमानित्येव प्रत्ययो जायते, न तु गौर्गौरिति। जातेस्तदन्यस्य वा सामान्यधर्मस्य स्वानुरूपप्रत्ययजनकत्वस्यैव स्वभावसिद्धत्वात्। कार्यं हि स्वानुरूपमेव कारणं कल्पयति। तद्यथा—दण्डीति प्रत्यये विशेषणतया प्रतीयमानो दण्डसंबन्ध एव निमित्तम्, न तु दण्डोपादित्सा, तथा अप्रतीयमानत्वात्। अत एव विशिष्टबुद्धिं प्रति विशेषणज्ञानम्, ज्ञायमानं विशेषणं वा कारणमित्यभियुक्ताः। यद्येवं सर्वस्यापि सामान्यधर्मस्य स्वानुरूपप्रत्ययजनकत्वं स्वभावोऽभ्युपेयते, तदा सर्वासु जातिष्वनुवृत्तिरूपे सामान्यधर्मेऽभ्युपगम्यमानेऽपि 'अनुप्रवृत्तम्' 'अनुप्रवृत्तम्' इत्येव तदनुरूपः प्रत्ययः स्यात्, न तु जातिर्जातिरिति प्रत्ययो युक्तः, वैरूप्यात्, व्यावृत्त्या च सर्वविशेषाणां सामान्यधर्मेण व्यावृत्तम्, 'व्यावृत्तम्' इत्येव प्रत्ययः स्यात् न तु 'विशेषो विशेषः' इति विशेषपदस्य विशिष्यतेऽनेन स्वाश्रय इति करणव्युत्पत्त्या व्यावृत्तिजनकधर्मार्थकत्वादिति चेन्मैवम्। यत्रानुप्रवृत्तिरूपः सर्वासां जातीनां साधारणो धर्मोऽभ्युपेयते, तत्रानुप्रवृत्तेरपि प्रतिव्यक्त्यनुगतसंबन्धरूपतायाः प्रतियोग्यनुयोगिभेदेन प्रतिजातिभिन्नत्वेन गत्यन्तराभावादत्र स्वानुरूपप्रत्यय-

**व्यावृत्तिप्रत्ययजनकेषु विशेषेषु सामान्याभ्युपगमे संशयापनोदाय विशेषान्तरकल्पने तेषामपि सामान्यसमवाये सन्देहविषयत्वाद् विशेषान्तराभ्युपगमेऽनवस्थाप्रसङ्गः। अथ कश्चिन्निस्सामान्योऽस्तिविशेषः, तदा तदविशेषात् सर्वेपि तथा स्युरित्यन्यत्र विस्तरेणोक्तम्। गोपिण्डेषु सामान्याभ्युपगमे न किञ्चिद्बाधकमिति न तत्र यथाकथञ्चिन्निमित्तं परिकल्प्यम्। तदेवं यत्र जात्यभ्युपगमे प्रमाणबाधास्ति तत्र सदृशधर्मरूपा जातिः। तथा चाभावेष्वपि सामान्याभ्युपगमे भावत्वापत्तेरभवनात्मकधर्मसामान्यादन्वयिप्रत्ययविषयतेति सैव तत्रापि जातिः॥ १४॥**

**कालाकाशदिशामेकत्वान्नित्यत्वेनावस्थाभेदाभावाच्च कथं जातिः, येन व्याप्तिसिद्धिरित्यत आह—**

---

जनकत्वं स्वानुरूपाभिधानहेतुत्वम्, प्रत्याश्रयञ्च सर्वात्मना परिसमाप्तिरित्येते त्रयः सदृशा एव धर्मा जातिः कल्पते। व्यावृत्तिश्चापीतरभेदरूपा प्रतियोग्यनुगिभेदेन भिन्नाऽपि इतरभेदत्वरूपेण धर्मेण सदृश्येव विशेषो विशेष इति प्रत्ययनिमित्तभूता जातिः कल्पते। मुख्ये जातिमत्त्वेऽनवस्थारूपबाधकसत्त्वात्। तथा हि—जातिष्वपरजातिसत्त्वे आत्माश्रयान्योन्याश्रयचक्रकानवस्थारूपा दोषा अन्यत्र निर्णीताः। तदुक्तम्—

व्यक्तेरभेदस्तुल्यत्वं　संकरोऽथानवस्थितिः।
रूपहानिरसबन्धो　जातिबाधकसंग्रहः॥ इति।

अत्रानवस्थितिपदमात्माश्रयादीनामप्युपलक्षणम्, तेषां नियमेनानवस्थाप्राग्भावित्वात्। एवं नित्यद्रव्यवृत्तिषु स्वाश्रयव्यावृत्तिप्रत्ययजनकेषु वैशेषिकाभ्युपगतेष्वपि गुणक्रियादिविलक्षणेषु विशेषेषु सामान्याभ्युपगमे परस्परमभेदसंशयापनोदाय विशेषान्तरकल्पने तेष्वपि सामान्यान्तरसमवायेऽभ्युपगम्यमाने तेषामप्यभेदसंशयविषयत्वाद् विशेषान्तराभ्युपगमेऽनवस्थाप्रसङ्गः। जातिबाधकान्तराणि त्वत्र नोपवर्णितानि, अनुपयोगात्। यदि त्वन्तेऽस्ति कश्चिन्निःसामान्यो विशेषः, तदा तदविशेषात् = अन्त्यविशेषतुल्यत्वात् सर्वेऽपि पूर्वे विशेषास्तथा = निःसामान्याः स्युरिति कृतं विशेषेषु सामान्याभ्युपगमप्रयासेनेत्यन्यत्र विस्तरेणोक्तम्। गोपिण्डेषु तु सामान्याभ्युपगमे न किञ्चिद् बाधकमस्ति इति न तत्र यथाकथञ्चित् सादृश्यमूलकाभेदसमाश्रयणेन जात्यादिष्विव सदृशं निमित्तं परिकल्प्यम्। तदेवं यत्र जात्यभ्युपगमे प्रमाणबाधाऽस्ति तत्र सदृशधर्मरूपा जातिः। तथा चाभावेष्वप्यभावत्वरूपसामान्याभ्युपगमे तेषां जातिमत्त्वेन भावत्वापत्तेरभवनात्मकधर्मसामान्याद् यक्षानुरूपो बलिरिति न्यायेन भवनाभावरूपस्वानुरूपसामान्यधर्मसत्त्वात् अभावोऽभाव इत्यनुगतप्रत्ययविषयतेति अभवनात्मकसामान्यधर्मरूपैव अभावेष्वपि जातिरिति॥१४॥

**संयोगिधर्मभेदेन देशे च परिकल्पिते ।**
**तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ॥ १५ ॥**

**यथा सामान्यविशेषाणामन्वयिधर्मोपाधिरभेदः तथाकाशस्यापि संयोगोपाधिर्भेद इति प्रकृतापेक्षः समुच्चयः । आकाशेन संयोगो विद्यते येषामाकाशाधिकरणानां घटादीनाम् ते संयोगिनः । आकाशं हि सर्वेषां मूर्तानामधिकरणम् । अवकाशदानाद्धि तदाकाशम् । मूर्तास्तु भावाः परस्परं प्रतिबन्धका इति न तेऽवकाशदायिनः । संयोगिनां धर्मभेदः प्रत्यक्षादिप्रमाणसिद्धं परिमितत्वं तद्वशाद्वा लोकप्रसिद्धं परिमितदेशवृत्तित्वम् । यत्र हि देशे संयोगः परिसमाप्तो वर्तते, स प्रदेशो भवत्याकाशस्यानेकः । कार्यं प्रति देशः**

---

नन्वस्ति नित्यमेकमनेकानुगतं सामान्यमिति सर्वेषां जातिवादिनां सम्मतं जातिलक्षणम् । एतच्च कालाकाशदिशामेकत्वात् तद्गतेषु कालाकाशदिक्त्वेषु नास्ति, अनेकानुगतत्वाभावात् । किञ्च यथैकत्वेन प्रत्यभिज्ञायमानेऽपि देवदत्तदेहे बाल्यकौमाराद्यवस्थाभेदेन भेदमादायानेकानुगता देवदत्तत्वजातिः परिकल्प्यते, तद्वदपि कालाकाशादिषु कालाकाशत्वादिजातयः परिकल्पयितुं न शक्यन्ते । कालाकाशदिशां नित्यत्वेनावस्थापरिणामाभावेनावस्थाभेदाभावादिति कथं सर्वेषां शब्दानां जात्यभिधायकत्वस्य व्याप्तिसिद्धिरित्याशङ्क्याह—संयोगिधर्मभेदेनेति ।

अस्यार्थः—यथा सामान्यानां विशेषाणाञ्च स्वानुगतानुप्रवृत्तिव्यावृत्तिरूपाभिन्न धर्मोपाधिकोऽभेदः परिकल्प्यते, तथा संयोगिधर्मभेदेन = आकाशस्य संयोगिनो ये धर्मास्तन्निष्ठा घटादयस्तेषां भेदेन, च = अपि । अत्र प्रकृतो यः सामान्यविशेषाणामन्वयिधर्मोपाधिकोऽभेदस्तत्समुच्चायकश्चकारः । अभिन्नस्याप्याकाशस्य देशे परिकल्पिते = देशभेदे परिकल्पिते, यद्वा संयोगिनाम् = आकाशसंयोगिनां घटादीनां यो धर्मभेदः = धर्मविशेषः प्रत्यक्षादिप्रमाणसिद्धः परिमितत्वरूपस्तेनाकाशस्यापि देशे परिकल्पिते = परिमितदेश वृत्तित्वे परिकल्पिते सति, तेषु घटादिपरिमितेषु देशेषु स्थितस्याकाशस्यापि परिमितत्वमापन्नस्य इदमाकाशम्', 'इदमाकाशम्' इत्यभिन्नाभिधानप्रत्ययनिमित्तमाकाशत्वरूपं सामान्यं विद्यत इति ।

अयं भावः—यथा सामान्यानां विशेषाणाञ्च स्वान्वयिधर्मोपाधिः = स्वानुगतानुप्रवृत्तिव्यावृत्तिरूपाभिन्नधर्मनिमित्तकोऽभेदः, तथाऽऽकाशस्यापि संयोगोपाधिः = स्वनिष्ठघटादिसंयोगनिमित्तको भेद इति रीत्या प्रकृतो यः सामान्यविशेषाणामभेदस्तदपेक्षः समुच्चयश्चकारार्थः । संयोगिधर्मभेदेन = आकाशेन सह संयोगो विद्यते येषामाकाशाधिकरणानाम् = आकाशवृत्तीनाम्, मूर्तानां घटादीनां ते संयोगिनः । आकाशं हि सर्वेषां मूर्तानामधिकरणम् । मूर्तत्वञ्च परिच्छिन्नपरिमाणवत्त्वरूपम् । मूर्तानामवकाशदानाच्च तदाकाशपदाभिधेयम् । मूर्तास्तु भावाः संहतैरवयवैरुपेता इति परस्परं प्रत्यवकाशदाने

**प्रदेश इति निर्वचनात् । गुणाश्च केचिद् व्याप्यवृत्तयः यथा रूपादयः । संयोगस्तु मूर्तिपरिच्छिन्नवस्तुवृत्तिरिति सर्वदा प्रदेशवृत्तिरेव । अतः संयोगस्य नियतदेशतया संयोगिनोऽपि नियतदेशवृत्तय इति संयोगिधर्मभेदेन आकाशस्य भेदो भवत्युपाधिकृतो न स्वतः । यदाह—देशे च परिकल्पिते इति । देशभेदाच्च सामान्यमाकाशस्यापि विद्यते । अतश्च प्रतिदेशम् 'इदमाकाशम्, इदमाकाशम्' इत्यभिन्नाभिधानप्रत्ययानुवृत्तिलक्षणमाकाशसामान्यमाकाशशब्दगोचरोऽस्ति ।**

**एवं समानन्यायत्वात् कालादीनामपि प्रदेशपरिकल्पनेन सामान्यमुपवर्णनीयम् । तथा हि—कालस्य युधिष्ठिरादिसंयोगवशेन भेदे सत्यभिन्नं कालसामान्यं कालशब्दवाच्यमस्ति । एवं मेरुं प्रदक्षिणमावर्तमानस्य सवितुर्लोकपालगृहीतैर्देशविशेषैये संयोगाः,**

---

प्रतिबन्धका इति न तेऽवकाशदायिनः । तदेवं संयोगिनां घटादीनां मूर्तानां धर्माणां भेदस्तेन । यद्वा संयोगिनामाकाशसंयोगिनां घटादीनां यो धर्मभेदः = धर्मविशेषः प्रत्यक्षादिप्रमाणसिद्धः परिमितत्वरूपस्तेन = तद्वशात्, आकाशस्याभिन्नस्य सर्वगस्यापि देशे परिकल्पिते = लोकप्रसिद्धे परिमितदेशवृत्तित्वे परिकल्पिते सति । अयं भावः—यत्र देशे घटादिसंयोगः परिसमाप्तो वर्तते स भवत्यनेकः प्रदेश आकाशस्य विभोरपि । कार्यं प्रति देशः प्रदेश इति प्रदेशपदनिर्वचनात् । गुणाश्च केचिद् व्याप्यवृत्तयः = स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिनः यथा रूपरसादयः । संयोगस्तु मूर्तिपरिच्छिन्नवस्तुवृत्तिः = मूर्त्या परिमाणेन परिच्छिन्नं यद्वस्तु तद्वृत्तिः परिच्छिन्नपरिमाणवद्वस्तुवृत्तिरिति यावत्, इति सर्वदा प्रदेशवृत्तिरेव = अव्याप्यवृत्तिरेव । अतः संयोगस्य नियतदेशतया = परिच्छिन्नदेशवृत्तितया, संयोगिनोऽपि घटादय आकाशादयश्च नियतदेशवृत्तय इति संयोगिधर्मभेदेनाकाशस्याभिन्नस्यापि उपाधिकृतः = परिच्छेदकनिमित्तकृतो भेदो भवति, न स्वतः । एतदेवोच्यते—'देशे च परिकल्पिते' इति ।

एवं देशभेदाच्चाभिन्नस्याप्याकाशस्य भेदं परिकल्प्य, आकाशत्वजातिरूपं सामान्यं तस्यापि विद्यते । अतश्च प्रतिसंयोगिदेशम् 'इदमाकाशम्' 'इदमाकाशम्' इत्यभिन्नशब्दप्रत्ययानुवृत्तिज्ञाप्यमाकाशशब्दाभिधेयमाकाशत्वरूपं सामान्यमाकाशेऽप्यस्तीत्यवधेयम् । एवं समानोपपत्तिकत्वात् कालदिशोरपि संयोगिधर्मभेदेन प्रदेशं परिकल्प्यानेकत्वकल्पनयाऽभिन्नशब्दप्रत्ययनिमित्ते कालत्वदिक्त्वरूपे सामान्ये उपवर्णनीये ।

तथाहि—युधिष्ठिरादिसंयोगवशेन कालस्याभिन्नस्यापि भेदे सत्यनेकानुगतमभिन्नं कालसामान्यं कालशब्दवाच्यमस्ति । एवं मेरुं प्रदक्षिणमावर्तमानस्य सवितुरिन्द्रादिलोकपालगृहीतैर्देशविशेषैर्ये संयोगास्तदुपाधिना = तत्परिच्छिन्नेन सूर्येण दिशः संयोगे सति तस्याभेदेऽनेकानुगतमप्यभिन्नं दिक्शब्दवाच्यं परिकल्प्यम् । आत्मा तु प्रतिशरीरमन्य एव = अनौपाधिकभेदवानेव, इति तत्राप्यस्त्येवात्मत्वरूपं सामान्यम् । एवं समवायस्य वस्तुतोऽभिन्नस्यापि सम्बन्धिभेदात् = प्रतियोग्यनुयोगिभेदात्, नानात्वोपचारे = नानात्वा-

तदुपाधिना सूर्येण दिशः संयोगे सति भेदेऽभिन्नं दिक्सामान्यं दिक्शब्दवाच्यं परिकल्प्यम्। आत्मा तु प्रतिशरीरमन्य एवेति तत्राप्यस्त्येवात्मत्वसामान्यम्। एवं समवायस्यापि सम्बन्धिभेदान्नानात्वोपचारे सर्वत्रेहबुद्ध्यनुवृत्तेर्जातिः परिकल्पनीया। ननु च संयोगिदेशेनाकाशस्य देशपरिकल्पः, तेन संयोगिनामितीतरेतराश्रयत्वम्। नैतदस्ति, इतरेतरव्यावृत्तिरूपतैव रथादीनां मूर्तत्वापरिच्छिन्नपरिमाणत्वं बोधयति। कल्पितास्त्वाकाशदेशा लोकप्रसिद्धाः संयोगिवस्तुगतां परिच्छिन्नदेशतां ज्ञापयन्ति। सामान्येन ह्याकाशदेशत्वे रथादीनां प्रत्यक्षादिप्रमाणावसितरूपविरुद्धं व्यापित्वमारोपितं स्वगतेन परिमितत्वेनाकाशस्य प्रदेशकल्पनया निराक्रियते। यद्येवं कल्पिता देशाः, कथमाकाशस्य स्वतो निरवयवस्य देशभेदनिबन्धनं कार्यं जातिप्रक्लृप्तिलक्षणं जातिशब्दप्रवृत्तिलक्षणं वा कुर्युः, येन तद्गता जातिरभिधीयेत ? उच्यते। व्यक्तिस्थानीयानां देशानामद्वैतदर्शने यथाऽसत्यत्वम्—

'असत्या व्यक्तयः स्मृताः'। (वा० का० ३। जाति० ३२)।

इति वक्ष्यते, तथेहाप्याकाशस्य सत्यत्वे व्यक्तीनां न कश्चिद्विरोधः॥ १५॥

अथवा मुख्या एवाकाशस्य देशा घटादीनामिवेत्याह—

---

रोपे, सर्वत्र 'इह कपाले घटः' 'इह तन्तुषु पटः, इत्यादीहबुद्ध्यनुवृत्तेः कल्पितानेकत्ववत्समवायानुगता समवायत्वरूपा जातिः परिकल्पनीया।

ननु स्वसंयोगिनां घटादीनां देशेन परिच्छिन्नेन भूतलादिनाऽऽकाशस्यापरिच्छिन्नस्य देशपरिकल्पः = भूतलादिरूपपरिच्छिन्नदेशपरिकल्पनम्। तेन चाकाशस्य परिच्छिन्नदेशपरिकल्पनेनाकाशस्य परिच्छिन्नत्वे व्यवस्थापिते तत्संयोगिनां घटादीनां परिच्छिन्नतत्तदाकाशरूपदेशपरिकल्प इतीतरेतराश्रयत्वमिति चेन्नैतदस्ति। तथाहि, परस्परव्यावृत्तस्वरूपतैव ह्यबाधितप्रत्यक्षगोचरीकृता स्वानुपपत्त्या रथादीनां मूर्तत्वम् = परिच्छिन्नपरिमाणत्वम्, आकाशस्य चापरिच्छिन्नपरिमाणत्वं वस्तुभूतं बोधयति। एवं रथादीनामाकाशस्य च विरुद्धपरिमाणत्वे प्रमिते न प्रागुक्तरीत्या इतरेतराश्रयदोषापादनावकाशः। किञ्च कल्पिता आकाशदेशा अनादिकालाल्लोकप्रसिद्धास्त एवाकाशसंयोगिवस्तुरथादिगतां परिच्छिन्नाकाशदेशवृत्तितां ज्ञापयन्तीति कल्पितानामाकाशदेशानां संयोगिदेशकल्पनानपेक्षत्वेन नास्तीतरेतराश्रयदोषापादनावकाशः। किञ्चाकाशत्वरूपेण सामान्येन स्वानुपपत्त्या रथादीनामाकाशदेशत्वं व्यवस्थाप्यते।

तथा हि—यदि रथादय आकाशदेशवृत्तयो न स्युस्तर्ह्याकाशे तत्कृतपरिच्छेदाभावेनानेकत्वाभावे आकाशत्वरूपं सामान्यं नोपपद्येत, ततश्च सर्वेषां शब्दानां जात्यभिधायित्वं न सिध्येत्। एवमाकाशत्वरूपेण सामान्येन स्वानुपपत्त्या रथादीनामाकाशदेशत्वे व्यवस्थापिते सति प्रत्यक्षादिप्रमाणावसितं यद्रथादीनां परिच्छिन्नपरिमाणत्वात्मकं रूपं तद्विरुद्धं यत् स्वाश्रयाकाशगतं व्यापित्वं रथादिष्वारोपितं तत् स्वगतेन = रथादि-

अदेशानां घटादीनां देशास्संबन्धिनो यथा ।
आकाशस्याप्यदेशस्य देशास्संबन्धिनस्तथा ॥ १६ ॥

इह देशोऽवयव उच्यते । घटादयश्चावयविनः स्वात्मनि निरवयवाः । ये हि तेषामवयवभूताः कपालादयस्ते आरम्भकाः कारणभूता व्यतिरिक्ता एव समवायसम्बन्धेन सम्बन्धिनः । एवमाकाशमपि केनचिदप्यनारब्धत्वादमूर्तं व्यापि निरवयवमित्यात्मभूतदेशाभावाद् द्रव्यादयः संयोगिन एवास्य देशाः, तथा तद्भेदादाकाशभेदे सर्वत्राभिन्नप्रत्ययानुगमाज्जातिपरिकल्पः । आकाशं ह्यवच्छिन्दतोऽर्था देशास्तस्य भवन्ति। तत्कृतावच्छेदं ह्याकाशमपि तेषामाधारभावापत्तेर्देश इत्यन्योन्यदेशत्वं मूर्तामूर्तयोः, मूर्तास्त्वव्यापकाः परस्परमवच्छेदका न भवन्तीत्याधार एवैतेषां देशः ॥ १६ ॥

कथं तर्हि देशे गौणत्वव्यवहारः । यदि हि कस्यचिन्मुख्याः प्रदेशा आत्मभूताः स्युस्तदायं युक्तः स्यान्नान्यथेत्यत आह—

---

गतेन, परिच्छिन्नत्वेनाकाशस्य प्रदेशकल्पनयाऽऽकाशेऽपि परिच्छिन्नत्वमापाद्य निराक्रियते । अस्मिन्नपि प्रकारे आकाशस्य प्रदेशकल्पनायां नास्ति संयोगिदेशकल्पनाऽपेक्षेति नास्तीतरेतराश्रयदोषावकाशः ।

ननु यद्येवं स्वतो निरवयवस्य विभोरदेशस्याकाशत्वरूपसामान्यप्रसिद्धये देशाः कल्पिताः, तदा ते कल्पितत्वादेव कथं वस्तुभूतदेशभेदनिबन्धनं जातिप्रक्लृप्तिलक्षणम् = जातिप्रसिद्धिलक्षणम्, जातिवाचकशब्दप्रवृत्तिलक्षणं वा कार्यं कुर्युः, येन तद्गता = आकाशगताऽऽकाशत्वरूपा, जातिरभिधीयेतेति चेदत्रोच्यते—यथा अद्वैतदर्शने सर्वभावानुगतस्य सत्ताजातिरूपस्यैकस्य ब्रह्मण एव सत्यत्वम्, तदाश्रयभूतानां सर्वासां भावव्यक्तीनां तु दृश्यत्वजडत्वपरिच्छिन्नत्वादिनाऽसत्यत्वमिति स्वीकारेऽपि व्यक्तीनामपि व्यावहारिकं सत्यत्वं स्वीक्रियते, तथा तस्मिन्नेव दर्शने व्यक्तिस्थानीयानामाकाशदेशानामपि व्यावहारिकं सत्यत्वमिति देशभेदनिबन्धनानां सर्वेषां जातिकार्याणां निर्वाहः । एतदेवाग्रे वक्ष्यते—

'असत्या जातयः स्मृताः' इति । (वा० का० ३ । जाति० ३२)

किञ्च यथैकाद्वितीयब्रह्मरूपायाः सत्ताजातेः सत्यत्वे श्रुत्यनुमानादिना व्यवस्थापिते सर्वासां भावव्यक्तीनां व्यावहारिकसत्यत्वाभ्युपगमेऽपि न कश्चिद् विरोधः, तथा प्रकृतेऽपि कल्पितानामाकाशव्यक्तीनां व्यावहारिकसत्यत्वाभ्युपगमेऽप्याकाशस्यैकस्य विभोर्निरवयवस्य सत्यत्वे न कश्चिद् विरोध इति ॥ १५ ॥

अथवा यथा न्यायमते स्वात्मभूतावयवरूपदेशरहितानां घटादीनां स्वात्मव्यतिरिक्ताः समवायेन संबन्धिनः स्वावयवाः एव देशाः, तथा स्वात्मभूतदेशरहितस्य समवायेन

**भिन्नवस्त्वाश्रया बुद्धिः संयोगिष्वनुवर्तते ।**
**समवायिषु भेदस्य ग्रहणं विनिवर्तते ॥ १७ ॥**
**अतः संयोगिदेशानां गौणत्वं परिकल्प्यते ।**
**अविवेकात् प्रदेशेभ्यो मुख्यत्वं समवायिनाम् ॥ १८ ॥**

**भिन्ने पृथक्सिद्धे वस्तुनी आश्रयो यस्या बुद्धेः । अप्राप्तयोः प्राप्तिः संयोग इति पृथक्सिद्धपदार्थविषया संयोगबुद्धिः । भेदस्य ग्रहणं विनिवर्तते इति, यतोऽपृथक्सिद्धा-**

---

स्वसंबन्धिस्वव्यतिरिक्तदेशरहितस्य चाकाशस्य संयोगेन संबन्धिनो मूर्ता भावा एव देशा इत्याह—अदेशानां घटादीनामिति ।

अस्यार्थः—इह देशोऽवयव उच्यते, नित्यसम्बन्धित्वात् । अदेशानाम् = स्वात्मभूतावयवरूपदेशरहितानां घटादीनां यथा स्वात्मव्यतिरिक्ताः समवायेन स्वसंबन्धिनः स्वावयवा एव देशाः, तथाऽदेशस्य = स्वात्मभूतस्वव्यतिरिक्तोभयरूपावयवरूपदेशरहितस्य आकाशस्यापि संबन्धिनः = संयोगेन संबन्धिनो मूर्ता भावा एव देशा इति ।

अयं भावः—यद्यपि घटादय आरब्धत्वादवयविनस्तथापि स्वात्मनि निरवयवाः = स्वात्मभूतावयवरहिताः । ये हि तेषामवयवभूताः कपालादयस्त आरम्भकाः कारणभूताः, तेभ्यो व्यतिरिक्ता एव समवायसंबन्धेन तेषां संबन्धिनः । एवमाकाशमपि केनचिदप्यनारब्धत्वादमूर्तम् = अपरिच्छिन्नपरिमाणम्, अत एव व्यापि निरवयवमित्यात्मभूतावयवरूपदेशरहितत्वात् समवायसंबन्धेन स्वसंबन्धिस्वव्यतिरिक्तावयवरूपदेशरहितत्वाच्च द्रव्यादय (अत्रादिपदेन गुणक्रिये परिगृह्येते । इदं च सांख्यमतेन) संयोगिन एवास्य देशाः । एवञ्चाकाशदेशत्वेन परिकल्पिततत्तत्संयोगिभावभेदादाकाशभेदे व्यवस्थिते सर्वत्राकाशमाकाशमित्यभिन्नप्रत्ययानुगमादाकाशत्वजातिपरिकल्पनम्, आकाशं ह्यपरिच्छिन्नमपि परिच्छिन्दन्तस्तदुपाधिभूता अर्थास्तस्य देशा भवन्ति । तत्कृतावच्छेदवच्चाकाशमपि तेषामाधारभावापन्नं तेषां देश इत्यन्योऽन्यं प्रति देशत्वं तयोर्मूर्तामूर्तयोः । मूर्तास्तु भावास्तत एवाव्यापका इति परस्परमवच्छेदकत्वाभावात्, परस्परमाधारत्वाभावाच्च न परस्परं प्रति देशा इत्यधिकपरिमाण आधार एवैतेषां देशः, न तु न्यूनपरिमाणा भावास्तस्य देशा इति ॥ १६ ॥

ननु यदि कस्यचित् स्वात्मभूताः प्रदेशाः स्युस्तदा तेषु देशत्वव्यवहारो मुख्यः, अन्यत्र तु गौणः स्यात् । यदि तु सर्वस्यापि स्वसंयोगिनः स्वसमवायिनो वा स्वव्यतिरिक्ता एव देशास्तदा देशे गौणत्वव्यवहारो नोपपद्यते, गौणत्वस्य मुख्यत्वापेक्षत्वात्, इत्याशङ्क्य युग्मेन समाधानमाह—भिन्नवस्त्वाश्रया बुद्धिरिति, अतः संयोगिदेशानामिति च ।

**अस्य पद्यद्वयस्यार्थः—भिन्नवस्त्वाश्रया = भिन्ने पृथक्सिद्धे-पृथक्त्वेन ज्ञाते, द्वे**

नामिहबुद्धिहेतुः समवायः, यथा 'इह कपालेषु घटः' इति। अतः इति, भेदेन ग्रहणात्। अविवेकात्, विवेक्तुमशक्यत्वात्। यतो भिन्ना बुद्धिः संयोगिनाम्, अतस्तत्प्रदेशानां गौणत्वम्। यतश्च समवायिनामभिन्ना बुद्धिः, अतस्तत्र मुख्यत्वम्। समवायप्रभावाद्धि प्रदेशेभ्यो विवेक्तुं समवायिनो न शक्यन्त इति तेष्वेव देशेषु कपालादिष्वेव तदारब्ध-मवयवि द्रव्यमुपलभ्यते। अतस्तत्र मुख्याः समवायिनः प्रदेशत्वेन व्यवस्थाप्यन्ते। संयु-क्तानां तु नैवमिति गौणत्वमित्यनेनौपचारिकत्वमाकाशदेशानां समर्थितम्।

ननु च घटादीनां संयोगिनां परस्परसंयोगेऽपि परस्परदेशभावो न भवति, एवमाकाशेनापि न स्यात्। नैतदस्ति। आकाशेन सदा संबद्धा रथादय इति तत्राध्या-रोपो युक्तः, न तु घटादीनामनियतसंयोगानाम्। अत एव घटादिष्वाकाशानुगतः प्रत्ययो दृश्यत एव घटाकाशः पटाकाश इत्यादि, अध्यारोपे च न भेदविगलनमित्यु-क्तम्॥ १७, १८॥

तदेवं वैशेषिकदर्शनाश्रयेण जातिपदार्थव्याप्तिरुपपादिता। इदानीं विज्ञानवादे-नापि पदार्थव्यवस्थामाह—

---

वस्तुनी विषयतासंबन्धेन आश्रयो यस्या बुद्धेः सा तथा। भिन्नवस्तुविषयेति यावत्। एवंभूता बुद्धिः = इमौ संयुक्ताविति बुद्धिः, संयोगिषु परस्परं व्यावर्तमानेष्वप्यनुवर्तते। अप्राप्तयोः प्राप्तिर्हि संयोग इति पृथक्सिद्धपदार्थविषया संयोगबुद्धिः। समवायिषु तु पदार्थेषु वस्तुगत्या परस्परं भिन्नेष्वपि देशभेदस्य ग्रहणम्, देशभेदबुद्धिर्विनिवर्तते। एवञ्च यतोऽयुतसिद्धानाम् = अपृथक्सिद्धानाम्, पदार्थानामिह प्रत्ययहेतुः समवाय इति। यथा 'इह कपालेषु घटः' इति। तथा चापृथक्सिद्धतया देशाभेदेन तेषां ग्रहणम्। अतः— संयोगिनां पृथक्सिद्धतया देशभेदेन ग्रहणात्, संयोगिदेशानाम् = संयोगिरूपाणां देशानां गौणत्वं परिकल्प्यते = परिकल्प्य व्यवह्रियते। समवायिनां तु भावानां प्रदेशेभ्योऽवय-वेभ्योऽविवेकात् = अपृथक्सिद्धत्वेन विवेक्तुमशक्यत्वात् = पृथक्कर्तुमशक्यत्वात्, तेषां देशत्वव्यवहारस्य मुख्यत्वमिति।

अयं भावः—यतो भिन्ना = भिन्नविषया, बुद्धिः संयोगिनाम्, अतस्तत्प्रदेशानां गौणत्वम्। यतश्च समवायिनामभिन्नाबुद्धिः = अपृथक्सिद्धविषया, अभिन्नविषया च। तत्राद्यस्योदाहरणम्—इह कपालेषु घटः' इति। द्वितीयस्योदाहरणं तु मृद्घटः, 'नीलो घटः' इत्यादि, अतस्तत्र प्रदेशेषु मुख्यत्वमिति। समवायप्रभावाद्धि = समवायसंबन्धस्या युतसिद्धानुयोगिप्रतियोगिकत्वस्वभावबलाद्धि समवायिनः स्वप्रदेशेभ्यः = स्वावयवेभ्यः, स्वा-श्रयेभ्यश्चान्येभ्य', विवेक्तुम् = पृथक्कर्तुम्, न शक्यन्त इति, तेष्वेव देशेषु = स्वावयवेषु कपालादिष्वेव, तदारब्धमवयविद्रव्यमुपलभ्यते। अतस्तत्र समवायिनः प्रदेशत्वेन मुख्या-व्यवस्थाप्यन्ते = व्यवस्थया व्यवह्रियन्ते, संयुक्तानां तु नैवम् = न समवायिनामिवा युतसिद्धत्वमिति तेषां गौणदेशत्वमित्यनेन प्रकारेणौपचारिकत्वमाकाशस्य देशानां समर्थितम्।

**अनुप्रवृत्तिरूपां यां प्रख्यातामाकृतिं विदुः ।**
**केचिद् व्यावृत्तिरूपां तु द्रव्यत्वेन प्रचक्षते ।। १९ ।।**

**'सर्वपार्षदं हीदं शास्त्रम्' इति, शब्दार्थोऽर्थ इति वा पदार्थव्यवस्थेयम् । अनुगताकारा या बुद्धिस्तस्यां प्रतिभासमानस्तदाकारोऽर्थरूपतयावसीयमानवपुर्दृश्यविकल्पयोरभेदाध्यवसायात् सामान्यमाहुः । व्यावृत्ताकारबुद्धिसन्निवेशीत्वाकारोऽत्र (च) दर्शने द्रव्यमिति प्रसङ्गादुक्तम् । एवं च बाह्यस्य सामान्यस्याभावादाकाशादावपि तत्समर्थने**

---

ननु घटादीनाञ्च ( तु ) संयोगिनां परस्परं संयोगेऽपि परस्परं देशभावो न भवति । एवमाकाशेनापि साकं तत्संयोगिनां रथादीनां परस्परं देशभावो न स्यादिति चेन्नैतदस्ति । वैषम्यात् । तथाहि—आकाशेन सदा संबद्धा रथादय इति तत्र परस्परं देशत्वाध्यारोपो युक्तः, न तु घटपटादीनामनियतसंयोगानाम् = व्यभिचारिसंयोगानां, स युक्तः । आकाशेन सह घटादीनां सदा संबद्धत्वादेव च घटादिष्वाकाशानुगतः = आकाशानुविद्धः, प्रत्ययो दृश्यत एव घटाकाशः पटाकाश इत्यादि ।

नन्वाकाशस्य घटादीनाञ्च परस्परं देशत्वाध्यारोपे आकाशे घटः, घटे आकाशम्' इत्यादौ द्वयोर्भेदप्रतीतिर्न स्यात्; द्वयोरयुतसिद्धयोरध्यारोपे नीलो घटः मृद् घट इत्यभेदस्यैवप्रतीतिदर्शनादिति चेन्न; अनाहार्यारोपे तथा सत्त्वेऽप्याहार्याध्यारोपे भेदविगलनाभावात् = भेदविगलनमप्रतीतिस्तदभावात् । दृश्यते हि मुखचन्द्रयोराहार्यभेदाध्यारोपेऽपि भेदप्रतीतिः । न त्वनाहार्यभेदारोपस्थले शुक्तिरजतयोर्भेदप्रतीतिरित्येतत् सर्वमुक्तप्रायं प्राक् ।। १७, १८ ।।

तदेवं वैशेषिकदर्शनमाश्रित्य सर्वेषु शब्देषु जातिपदार्थस्य व्याप्तिः (अव्यभिचरितः संबन्धः ) उपपादिता । इदानीं 'प्रज्ञा प्रसादं लभते भिन्नैरागमदर्शनैः' ( वाक्य० २।४९२) इति स्वोक्त्यनुसारेणशिष्यबुद्धिवैशद्याय मध्यमकाभिमतविज्ञानवादसमाश्रयणेनापि शब्देषु पदार्थव्यवस्थामाह—अनुप्रवृत्तिरूपामिति । अत्र पूर्वार्धे 'याम्' इत्युक्त्योत्तरार्धे 'ताम्' इत्यध्याहार्यम् ।

अस्यार्थः —नैयायिकवैशेषिकादयः प्रख्याताम् = लोकप्रसिद्धाम्, यामाकृतिम् = गोत्वघटत्वादिरूपां जातिम्, आक्रियते व्यावर्त्यते स्वाश्रयो यया साऽऽकृतिः, करोतेः क्रियासामान्यार्थकत्वेऽपि आङ् समभिव्याहारेण क्रियाविशेषरूपार्थप्रतीतेः । अनुप्रवृत्तिरूपाम् = परस्परं व्यावृत्तास्वपि व्यक्तिष्वभिन्नयोरभिधानप्रत्यययोरनुवृत्तिः=अनुप्रवृत्तिस्तद्रूपाम् = तया निरूप्यमाणां विदुः । केचित्तु विज्ञानवादिनो बौद्धास्तामेवाकृतिं द्रव्यत्वेन = व्यावृत्ताकारबुद्धिविषयत्वेन, व्यावृत्तिरूपाम् = अतद्व्यावृत्तिरूपामपोहपदेन प्रचक्षते । यद्वा यथाश्रुत एव संबन्धः । नैयायिकादयोऽनुप्रवृत्तिरूपां प्रख्यातां यामाकृतिं

**न प्रयतितव्यम् । अनपह्नवनीयाभिन्नाकारप्रत्ययोपजनस्य सर्वत्रैव सिद्धेर्विज्ञाननये च सर्वमेव प्रत्ययात्मकमङ्गीकृतमेव । शब्दादुच्चरिताद्वाकारवती बुद्धिरुत्पद्यत इति तदाकारस्यैव शब्दार्थत्वम्, न बुद्धेः । स ह्याकारो बाह्योऽस्तु, न वा, शब्दवाच्यत्वस्य न काचित् क्षतिः ॥ १९ ॥**

**ननु च वस्तूनां देशकालादिनिमित्तो भेद इति तदनादरेणाभिन्नान्येव तानि सिद्धानीति किमर्थं व्यतिरिक्तसामान्यकल्पनायां प्रयस्यत इत्याशङ्क्याह—**

---

विदुः. केचित्तु व्यावृत्तिरूपां तामेव द्रव्यत्वेन प्रचक्षत इति । अस्यामपि योजनायां पदानामर्थास्तु त एवेति ।

अयं भावः—सर्वपार्षदं हीदं शास्त्रम्' इति, शब्दार्थोऽर्थः इति वाऽभ्युपगममाश्रित्येयं पदार्थव्यवस्था कर्त्तव्या । तत्राद्यवाक्यस्यार्थः । हि = यतः, इदम् = व्याकरणशास्त्रम्, सर्वपार्षदम् = सर्वासु दार्शनिकपर्षत्सु भवं ततः सर्वदर्शनसिद्धान्तानुगामित्वमस्य शास्त्रस्यावश्यकमिति । द्वितीयवाक्यस्यार्थः—यः शब्दार्थः = शब्दात्प्रतीयमानोऽर्थः, स एवार्थोऽभ्युपगन्तव्य इति । एवं स्थिते विज्ञानवादिनो बौद्धाः—अनुगताकारा या घटः' इत्यादिकाबुद्धिस्तस्यां प्रतिभासमानो यो घटत्वादिरूपो बुद्धेराकारो बाह्यार्थरूपतयाऽध्वसीयमानशरीरस्तं दृश्यविकल्पयोः = दृश्यं बाह्यार्थः, विकल्पः = कल्पनारूपो बुद्धेराकार आन्तरस्तयोः, अभेदाध्यवसायात् सामान्यमाहुरपोहरूपम् = अतद्व्यावृत्तिरूपम् । व्यावृत्ताकारासु नीलो घटः, पीतो घटः, श्वेतो घट इत्यादि बुद्धिसु घट इत्यनुगतैकाकारेण सन्निवेशी तु = विषयीभवंस्तु आकाशे घटत्वादिरूपोऽत्र दर्शने = विज्ञानवादिमते, द्रव्यमिति प्रसंगादुक्तम्—'द्रव्यत्वेन प्रचक्षते' इति । एवञ्च बाह्यस्य सामान्यस्याभावादाकाशादावप्याकाशत्वादिसामान्यसमर्थने न प्रयतितव्यम् । घटो घट इत्यभिन्नाकारप्रत्ययोपजनस्य = अभिन्नाकारप्रत्ययोत्पत्तेः, अनपलप्यस्य सर्वत्रैव मतेषु सिद्धेर्विज्ञानवादिमते च सर्वमेव वस्तु प्रत्ययात्मकमङ्गीकृतमेवेति घटत्वादिरूपं सामान्यमपि प्रत्ययात्मकमेव, न बाह्यम् । उच्चरिताच्च शब्दाद् घटत्वाद्याकारवती बुद्धिरुत्पद्यत इति शब्दाज्जाताया बुद्धेर्न शब्दार्थत्वम्, तत्र शब्दस्यासंकेतितत्वात्, तया सहौत्पत्तिकसंबन्धाभावाच्च । किन्तु तदाकारस्यैव शब्दार्थत्वम् । तत्र शब्दस्य संकेतितत्वात्, तेन सह तस्यौत्पत्तिकसंबन्धाच्च । सत्वाकारः शब्दार्थरूपः सौत्रान्तिकवैभाषिकयोर्मते बाह्योऽस्तु, अथवा विज्ञानवादिमते बाह्यो माऽस्तु । तत्र शब्दवाच्यत्वस्य न काचित् क्षतिरिति ॥ १९ ॥

**भिन्ना इति परोपाधिरभिन्ना इति वा पुनः ।**
**भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते ॥ २० ॥**

**निरुपाधिनो वस्तुनोऽव्यवहार्यत्वात् सर्व एव परोपाध्याश्रयो व्यवहार इति सामान्यादौ व्यतिरिक्तसामान्यकल्पनैवमकारीत्यत्र तात्पर्यार्थः ॥ २० ॥**

**एतदेव व्यतिरेकमुखेनापि प्रपञ्चयति—**

---

ननु सर्वेषां वस्तूनां देशकालादिनिमित्तको भेद इति तदनादरेण चाभिन्नान्येव स्वरूपतस्तानि सिद्धानीति किमर्थं तेषामभिन्नाभिधानप्रत्ययसिद्धये, सामान्येषु विशेषेषु च तत्सिद्धये, व्यतिरिक्तसामान्यकल्पनायां प्रयस्ते इत्याशङ्क्याह—भिन्ना इति । अत्र यत इति, अत इति च पदद्वयमर्थवशादध्याहार्यम् ।

अस्यार्थः—इमे भिन्ना इति, इमेऽभिन्ना इति वा पुनः सर्वोऽप्ययं व्यवहारप्रपञ्चो यतः परोपाधिः = दिग्देशकालावस्थादिरूपपरोपाधिनिमित्तकः, अतस्तत्संसृष्टेष्वेव भावात्मसु = भावस्वरूपेषु जायते, न तु तदसंसृष्टेष्विति । अयं भावः—निरुपाधिकस्य वस्तुनोऽव्यवहार्यत्वात् सर्व एव व्यवहारः परोपाध्याश्रय इत्येवं मत्वा सामान्यविशेषादावपि व्यतिरिक्तसामान्यकल्पनाऽकारीत्यत्र तात्पर्यार्थः ॥२०॥

देशकालादिसंसृष्टेषु भावस्वरूपेषु भिन्नत्वादिव्यवहारस्य परोपाध्याश्रयत्वमन्वयमुखेनोपपाद्य तदसंसृष्टेषु तेषु तदभावं व्यतिरेकमुखेनापि प्रपञ्चयति—नैकत्वमिति । भावस्वरूपेषु देशकालादीनां संसर्गोऽन्वयः, तेषु तेषामसंसर्गो व्यतिरेकः ।

अस्यार्थः—भावानामसंसृष्टेषु = सर्वविधोपाधिसंसर्गरहितेषु, आत्मतत्त्वेषु = अबाधितेषु स्वरूपेषु, एकत्वं संख्यारूपं न विद्यते, अतो नैकत्वसंख्याधीन एकत्वेन व्यवहारस्तेषु । किञ्च, तादृशेषु भावस्वरूपेषु नानात्वमपि पृथक्त्वमपि न विद्यते, अतः पृथक्त्वनिबन्धनो नानात्वेन व्यवहारोऽपि तेषु न भवति । किञ्च, तादृशेषु घटादिस्वरूपेषु सामान्यादिस्वरूपेषु च सत्त्वं जातिरूपं स्वरूपसत्त्वं वा न विद्यते । अतस्तेषु सत्तानिबंधनः स्वरूपसत्त्वनिबन्धनो वा सत्त्वेन व्यवहारो न भवति । किञ्च, तादृशेषु भावेषु नास्तिता च = अभावोऽपि, न विद्यते । अतस्तेषु भावेष्वभावोपाधिको नास्तीति व्यवहारोऽपि न भवतीति रीत्या संसर्गदर्शने = तत्तदुपाधिसंसृष्टानि सर्वाणि भावस्वरूपाणीति दर्शने, सर्वोऽप्ययं 'भिन्नाः, अभिन्नाः' इत्यादिव्यवहारप्रपञ्चः - व्यवहारवैचित्र्यं परोपाध्याश्रय इति ॥२१॥

एवं व्यतिरिक्तोपाधिदर्शनम् = स्वरूपतोऽभिन्नानामपि वस्तूनां परोपाधिको भिन्नाभिन्नत्वादिव्यवहारप्रपञ्च इति दर्शनम्, उपन्यस्याधुना वस्तुभूतस्यैकस्यैव ब्रह्मणः स्वशक्तय एवोपाधयः = निमित्तानि, नानाविधे व्यवहारप्रपञ्च इत्यद्वैतदर्शनमाश्रित्यापि

**नैकत्वं नापि नानात्वं न सत्त्वं न च नास्तिता ।**
**आत्मतत्त्वेषु भावानामसंसृष्टेषु विद्यते ॥ २१ ॥**

**एकत्वसङ्ख्याधीन एकत्वेन व्यवहारः, पृथक्त्वनिबन्धनो नानात्वेन, सत्तानिबन्धनः सत्त्वेन, स्वरूपसत्त्वेन तु सामान्यादीनामभावोपाधिर्नास्तीति व्यवहार इति संसर्गदर्शने सर्वः परोपाध्याश्रयोऽयं प्रपञ्चो वैचित्र्यम् ॥ २१ ॥**

**एवं व्यतिरिक्तोपाधिदर्शनमुपन्यस्याधुना स्वशक्तय एवोपाधय इत्यद्वैतदर्शनाश्रयेणापि प्राह—**

---

प्राह—सर्वशक्त्यात्मभूतत्वमिति । अत्रार्थवशाद् यदा-इति पूर्वार्धे, तदा-इति चोत्तरार्धेऽध्याहार्यम् ।

अस्यार्थः—यदैकस्यैव ब्रह्मणः सर्वशक्त्यात्मभूतत्वम्=सर्वशक्तितादात्म्यम्, तादात्म्येन सर्वकार्यानुकूलशक्तिमत्त्वमिति निर्णयः, तदा भावानामात्मभेदस्य=स्वरूपभिन्नत्वस्य, कल्पना=परोपाधिकत्वकल्पनाऽनर्थिका=निष्प्रयोजना स्यात्, स्वगतशक्तिभेदेन विचित्रविविधव्यवहारोपपत्तिसंभवादिति ।

अयं भावः—'पराऽस्य शक्तिर्विविधैव श्रूयते' इति, 'इन्द्रो मायाभिः पुरुरूप इयते' इत्यादिश्रुतिरूपैः प्रमाणैः 'एकमेव ब्रह्म सर्वशक्ति' इत्यस्मिन्नर्थे सिद्धे सत्यविद्यारूपब्रह्मशक्तिपरिकल्पितस्य भावभेदस्यापारमार्थिकत्वाद् ब्रह्मरूपस्याभिन्ननिमित्तोपादानरूपस्य कारणस्यैकत्वेऽपि कार्यनानात्वेनोत्प्रेक्ष्यमाणः शक्तिभेद एवैकस्य व्यवहारवैचित्र्ये नियामको युक्तः, न तु स्वरूपभेद इति ॥२२॥

एकमेव ब्रह्म सर्वशक्ति, शक्तिभेद एव च कार्यभेदस्य व्यवहारभेदस्य च प्रयोजकः, न तु भावानां स्वरूपभेद इत्यद्वैतदर्शनं द्रव्यादिभावषट्कलक्षणानां शक्तीनां संसृष्टानामेव पुरुषार्थसाधकत्वम्, न तु व्यस्तानामित्युपदर्शयन्नुपसंहरति—तस्माद् द्रव्यादय इति ।

अस्यार्थः=तस्माद्=एकस्यैव सर्वशक्त्यात्मभूतत्वात्, द्रव्यादयः–द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः षड्भावाः भिन्नलक्षणाः=भिन्नस्वरूपाः, एकस्य ब्रह्मणः तत्तत्कार्यानुकूलाः शक्तयः सर्वाः सन्ति । ताश्च संसृष्टाः=समुदिता एव पुरुषार्थस्य–प्रावरणजलाहरणाद्यर्थक्रियायाः,, साधिकाः, न तु केवलाः=पृथग्भूता इति ।

अयं भावः—एकस्यैव ब्रह्मणो द्रव्यादिभावषट्करूपेण परिणममानाः शक्तयः कार्यरूपेण प्रत्यक्षत्वेऽपि स्वरूपेणातीन्द्रियत्वात् स्वाश्रयस्य ब्रह्मण एकत्वेऽपि प्रतिपदार्थोपजनं विलक्षणव्यापारानुमेया इति वा यथाग्रथं भगवत्संकल्पं तत्तत्कार्यानुकूलमदृष्टञ्चानुसृत्य यथाकार्यं परस्परं प्राप्तसंसर्गा एव प्रावरणाद्यर्थक्रियाकारिण्यो न तु व्यस्ता इत्यस्मिन्नद्वैतमते सर्वेष्वेव पदार्थेषु जातिव्यक्तिप्रविभागो ब्रह्मणः शक्तिरूपया अविद्यया कल्पितः—

**सर्वशक्त्यात्मभूतत्वमेकस्यैवेति निर्णयः ।**
**भावानामात्मभेदस्य कल्पना स्यादनर्थिका ।। २२ ।।**

**एकमेव ब्रह्म सर्वशक्तीति प्रमाणेन सिद्धेऽस्मिन्नर्थेऽविद्यापरिकल्पितस्य भावभेदस्यापारमार्थिकत्वात् कार्यनानात्वोन्नीयमानः शक्तिभेद एवैकस्य युक्तः, न तु स्वरूपभेदः ।। २२ ।।**

**तथा च**

---

'सत्यासत्यौ तु यौ भागौ' ( वा० का० ३ जाति, ३२ )

इत्यत्र वक्ष्यमाणः, न तु परमार्थ इति कल्पितजात्याश्रयाणामाकाशादीनामपि कल्पितजात्याश्रयेभ्यो घटादिभ्यो न कश्चिद्विशेषः, उभयेषामपि कल्पितजात्याश्रयत्वात् । यथा हि वैशेषिकाणां मते परमार्थभूतासु घटादिव्यक्तिषु परमार्थभूतमेव तत्तद्व्यक्तिव्यतिरिक्तं सामान्यम्, नैवमिहाद्वैतदर्शने, किन्त्वेकस्यैव पदार्थस्य ब्रह्मणोऽविद्याख्यया स्वशक्त्या विश्वमूर्तेः केवलं शक्तिमात्रं सामान्यम्, न केवलं सामान्यमेव तस्य शक्तिमात्रम्, किन्तु द्रव्यादयोऽपि अवशिष्टाः पञ्चभावास्तस्य शक्तिमात्रमेवेति सामान्यप्रसङ्गादुक्तम्—द्रव्यादयः सर्वाः शक्तय इति । द्रव्यादीनां षण्णां पदार्थानां परमार्थानामवान्तरभेदेनानन्तानामनन्तशक्तिमतां ब्रह्मणः परमार्थभेदाऽभ्युपगमेऽपि संसृष्टानां तेषामर्थक्रियाकारित्वापेक्षया लाघवादेकमेव वस्तु ब्रह्मरूपम्, अनन्तशक्तिभेदस्तु अर्थक्रियाकारीति ।। २३ ।।

तत्रैतत् स्यात् = वक्ष्यमाणं संभाव्यते, संसृष्टानां द्रव्यादिरूपाणां शक्तीनां पुरुषार्थसाधनत्वे शक्तीनामसामर्थ्यम् ! शक्तिषु विशेषणीभूतस्य संसर्गस्यैव सामर्थ्यात् अन्यथाऽसंसृष्टानामपि तासां सामर्थ्यं स्यात् । एवञ्च पुरुषार्थसाधनसमर्थस्य शक्तीनां संसर्गस्य ब्रह्मात्मभूताभ्यस्ताभ्यो व्यतिरेकः, अव्यतिरेको वा । आद्ये द्वैतापत्तिः, द्वितीये चासंसृष्टानामपि तासां पुरुषार्थसाधनत्वप्रसङ्गोऽनिष्ट आपद्येतेत्याशङ्क्याह—यथैव चेति ।

अस्यार्थः—यथैव चेन्द्रियादीनाम् = चक्षूरूपालोकमनस्काराणाम् ( अत्र मनस्कारो मनसोऽवधानम्, करोतेः क्रियासामान्यार्थकत्वेन 'निर्विशेषं न सामान्यम्' इति न्यायेनावधानार्थकत्वात्, आत्ममनइन्द्रियार्थानां वा परस्परं संघटनरूपा सामग्रता-सामग्रो आत्मभूता = तेषां स्वरूपभूतैव न तु तेभ्यो व्यतिरिक्ता, तथा संबन्धिसंबन्धसंसर्गेऽपि संबन्धिना = सर्वशक्त्याधारेण ब्रह्मणा संबध्यन्त इति संबन्धिसंबन्धा द्रव्यादिशक्तयः, तासां संबन्धभूतानां शक्तीनां रूपसम्मूर्छनरूपः परस्परं संघटनात्मकः संबन्धस्तत्रापि ब्रह्मात्मभूतानां शक्तीनामात्मभूतैव समग्रता प्रतीयत इति 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेन ब्रह्माभिन्न एव सर्वशक्तीनां परस्परं संबन्ध इति न ब्रह्मणोऽद्वैतहानिरिति ।

**तस्माद् द्रव्यादयः सर्वाः शक्तयो भिन्नलक्षणाः ।**
**संसृष्टाः पुरुषार्थस्य साधिका न तु केवलाः ।। २३ ।।**

**द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः पदार्था न पृथग्भूताः । एकस्यैव शक्तयो विलक्षणव्यापारानुमेया इति ता यथायथमुपगतसमन्वयाः प्रावरणाद्यर्थक्रिया-कारिण्य इत्यस्मिन् मते सर्वत्रैव जातिव्यक्तिप्रविभागः कल्पितः,**

**'सत्यासत्यौ तु यौ भागौ' ( वा० का० ३ जाति० ३२ )**

**इत्यत्र वक्ष्यमाण इति नाकाशादीनामपि कश्चिद्विशेष इत्यर्थः । यथा हि वैशेषिकाणां व्यतिरिक्तं सामान्यम्, नैवमिह, केवलं विश्वमूर्तेः पदार्थस्य शक्तिमात्रम् । न केवलं सामान्यमेव, यावद् द्रव्यादयोऽपीति प्रसङ्गात्कथितम् । भेदाभ्युपगमेऽपि द्रव्यादीनां संसृष्टानामर्थकारित्वे वरमेकमेव शक्तिमदस्त्वित्यर्थः ।। २३ ।।**

**तत्रैतत्स्यात् संसृष्टानां साधनत्वे तासामसामर्थ्यम्, संसर्गस्यैव तथात्वात्, तस्य च व्यतिरेके द्वैतापत्तिरित्याशङ्क्याह—**

---

अयं भावः—चक्षूरूपालोकमनस्काराः । अत्र रूपपदेनोद्भूतं रूपं गृह्यते । तथा च नैयायिकाः 'गृह्णाति चक्षुःसंयोगादालोकोद्भूतरूपयोरिति' । आत्ममनइन्द्रियार्था वा परस्परेण परस्परस्मिन् जनितातिशयाः संघटिता = समुदायभावमवाप्ताः, यथायथमन्व-यव्यतिरेकाभ्यां विशेषविज्ञानहेतवः = सामान्यज्ञानहेतवश्च दृष्टा इति नैतेभ्यः पदार्थान्तरं नामेयं सामग्री विशेषविज्ञानस्य विज्ञानसामान्यस्य वा जनिका प्रसिद्धा लोके । अत एव हि सामग्रीजनकाः = परस्परं परस्परस्य कार्यानुकूलपरिपूर्णशक्तिकत्वसंपादका एव सामग्री शब्दवाच्याः, तत्र कारणसमुदायातिरिक्तस्य सामग्रीशब्दवाच्यस्य वस्त्वन्त रस्यानुपलब्धेः । एवमेकेन संबन्धिना ब्रह्मणा द्रव्यादिसर्वशक्तीनामाधारभूतेन सह संबन्धिनीनां प्रकृतत्वाद् द्रव्यादिशक्तीनां संबन्धः 'संबन्धिसंबन्धसंसर्ग' इत्यस्यार्थः । ततश्च य एकस्माद् द्रव्यादिशक्तीनामाधाराद्व्यतिरेकाद् = स्वगतसजातीयविजातीयभेद-शून्यात् । ल्यब्लोपे पंचमी । एतादृशं ब्रह्मस्वरूपं समाश्रित्येति, ब्रह्मणो द्रव्यादिशक्तीनां संसर्गो रूपसंमूर्च्छनं = स्वरूपसंघटनम्, तस्मिन् = तद्रूपे संसर्गे पुरुषस्य प्रावरणाद्यर्थ-क्रियासाधके सत्यपि द्रव्यादिशक्तीनां स्वभावभूता = स्वरूपभूता समग्रता विज्ञायते । तत्रापि हि द्रव्यादिशक्तीनामात्मभूतैव समग्रता न्यायायाता = न्यायप्राप्ता गुणादिसंसर्ग-रहितेन द्रव्यमात्रेण द्रव्यव्यवहाराभावात् । एवं गुणादिमात्रेणापि द्रव्यादिसंसर्गरहितेन तत्तद्व्यवहाराभावाद् इत्यवश्यंभाविनः स्वस्मिन् स्वेतरकारणसंसर्गस्य द्रव्यादिभ्यो भेदा-नवधारणात् तत्स्वभावतैव । 'तथा संबन्धिसंबन्धसंसर्गोऽपि प्रतीयते' इति क्वचित् प्रथमान्तपाठो दृश्यते । तत्रापि संबन्धिना सर्वशक्त्याधारेण ब्रह्मणा संबध्यन्त इति

**यथैव चेन्द्रियादीनामात्मभूता समग्रता ।**
**तथा सम्बन्धिसम्बन्धसंसर्गेऽपि प्रतीयते ॥ २४ ॥**

चक्षूरूपालोकमनस्कारा आत्ममनइन्द्रियार्था वा परस्पराहितविशेषाः संघटिता विज्ञानहेतवोऽन्वयव्यतिरेकाभ्यां दृष्टा इति नेयमेभ्यः सामग्री नाम पदार्थान्तरं जनिका। अत एव हि सामग्रीजनकाः सामग्रीशब्दवाच्याः, वस्त्वन्तरस्यानुपलब्धेः। एवमेकेन सम्बन्धिना सर्वशक्तीनामाधारभूतेन प्रकृत्वात्सम्बन्धो द्रव्यादिशक्तीनाम्। ततो य एकस्मादाधारादव्यतिरेकात्संसर्गो रूपसंमूर्च्छनं तस्मिन्नपि संसर्गे सति पुरुषार्थसाधके स्वभावभूता समग्रता विज्ञायते। तत्रापि हि आत्मभूता एव न्याया-याता, द्रव्यमात्रेण गुणादिसंसर्गरहितेन द्रव्यव्यवहाराभावात्। एवं गुणादिमात्रेणे-त्यवश्यंभाविनः संसर्गस्य द्रव्यादिभ्यो विवेकानवधारणात् तत्स्वभावतैव। क्वचि-त्पाठः—'तथा सम्बन्धिसम्बन्धसंसर्गोऽपि प्रतीयते' इति। तत्रापि सम्बन्धिना सर्वशक्त्याधारेण, सम्बध्यन्त इति सम्बन्धाः द्रव्यादिशक्तयः, तासां सम्बन्धानां शक्तीनामन्योन्यसंसर्गोऽप्यात्मभूत एवेति व्याख्या। यद्वा सर्वशक्तेः पदार्थस्य सम्बन्धिनीनां शक्तीनां संसर्गेऽपि संसर्गावस्थायामपि तथैवासौ सम्बन्धः, आत्मभूत एवासौ संसर्ग इत्यर्थः। चित्सामान्यानुगमाच्च विश्वस्य प्रमाणसिद्धोऽभेद इति प्रथमकाण्ड एव निर्णीतम् ॥ २४ ॥

तदेवं यथादर्शनं जातिः शब्देन प्रतिपाद्यते इत्युपपादितम्। सा च नित्येति नित्यः शब्दार्थः। तथा च—

"नित्यावेवोपवर्णितौ" ( वा० का० ३ जाति० २ )

इत्युक्तम्। तत्र जातेर्नित्यत्वे कार्योपयोगमाह—

---

संबन्धाः संबद्धा द्रव्यादिशक्तयस्तासां संबन्धानां द्रव्यादिशक्तीनां परस्परं संसर्गोऽपि आत्मभूत ऐवेति व्याख्या।

यद्वा सप्तम्यन्तपाठपक्षे सर्वशक्तेरेकस्य पदार्थस्य ब्रह्मणः संबन्धिनीनां द्रव्यादिश-क्तीनां संसर्गावस्थायामपि तथैवासौ संबन्धः, द्रव्यादिशक्तीनामात्मभूत एवासौ संसर्ग इत्यर्थः। भाति घट इत्यादिरूपे प्रत्यये चित्सामान्यानुगमाच्च विश्वस्य। प्रत्यक्षप्रमाण-सिद्ध एव विश्वस्य चिद्रूपेण ब्रह्मणा सहाभेद इति प्रथमकाण्डे एव निर्णीतम्। तदुक्तं पञ्चदश्याम्—

अस्ति भाति प्रियं रूपं नामचेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ इति ॥ २४ ॥

तदेवं 'जातिः पदार्थः' इत्ययं पक्षस्तत्तद्दर्शनानि समाश्रित्योपपादितः। सा च जातिर्नित्या, एकस्या एव जातेः सर्वासु व्यक्तिषु भङ्गुरासु समवायाभ्युपगमादिति जाति-

**न तदुत्पद्यते किञ्चिद्यस्य जातिर्न विद्यते ।**
**आत्माभिव्यक्तये जातिः कारणानां प्रयोजिका ॥ २५ ॥**

**व्यक्त्यधीना जात्यभिव्यक्तिरिति स्वाश्रयकारणानां प्रयोजककर्तृत्वमिवावलम्बते जातिः । सदा सन्निहिता कार्योत्पत्तौ कारणानां सहकारिणीत्यर्थः । निमित्तकारणत्वाद्वैशेषिकदर्शने जातीनामेषोऽर्थः प्रयोजकपदेन भङ्ग्याभिहितः ॥ २५ ॥**

**ननु कारणेष्वसन्निधानात्कथं तेषां प्रयोजिकेत्याह—**

---

पदार्थवादे नित्यः शब्दार्थः । तथा च—'नित्यावेवोपवर्णितौ' (वा० जाति ३।२) इत्युक्तम् ।

अस्यार्थः—शब्दशब्दार्थौ नित्यावेवोपवर्णिताविति । तत्रशब्दः स्फोटरूपो नित्यः, शब्दार्थस्तु जातिरूप इति । तत्र जातेर्नित्यत्वे तत्तत्कार्येषु तस्या उपयोगप्रकारमाह—न तदुत्पद्यत इति ।

अस्यार्थः—जगति तत् किञ्चिदपि नोत्पद्यते यस्य जातिर्न विद्यते, जायमानानां प्रध्वंसावश्यंभावेनानेकत्वात्तेष्वभिन्नाभिधानप्रत्ययनिमित्तभूता जातिरवश्यमभ्युपगन्तव्या । अत एव जननेन या प्राप्यते सा जातिरित्यभियुक्ताः । जातिशब्दस्य जन् धातोर्निष्पन्नत्वाच्च । नित्येषु तु कालाकाशादिषु व्यक्त्यभेदान्न जातिः । यद्यप्यात्ममनआदिषु नित्येषु व्यक्त्यनेकत्वेनानुगतप्रत्ययनियामिका जातिरस्त्येव तथापि साऽत्र नोपवर्णिता उत्तरार्धेन तस्याः संबन्धासंभवात् । सा च कार्येषु भावेषु विद्यमाना जातिः स्वाश्रयव्यक्त्युपजननद्वारा आत्माभिव्यक्तये = स्वाभिव्यक्तये कारणानाम् स्वाश्रयस्य कारणानां प्रयोजिका = स्वाश्रयोत्पत्तौ प्रयोजककर्तृत्वमिवावलम्बत इति ।

अयंभावः—जातेर्नित्यत्वेन सदा सर्वत्र विद्यमानत्वेऽपि व्यक्त्यधीना जात्यभिव्यक्तिरिति स्वाश्रयस्य कारणानां स्वाश्रयोत्पत्तौ प्रयोजककर्तृत्वमिवावलम्बते । नित्यत्वेन कार्योत्पत्तेः प्राक् सदा सन्निहिता स्वाश्रयकार्योत्पत्तौ कारणानां सहकारिणीति यावत् ।

यत्तु 'निमित्तकारणत्वाद् वैशेषिकदर्शने जातीनामेषोऽर्थः प्रयोजकपदेन भंग्याभिहितः' इति हेलराजेनोक्तम् । तच्चिन्त्यम् । कारणगतजातीनामिव कार्यजातीनामपि कार्यनियतपूर्ववर्तित्वेऽपि अन्यथासिद्धत्वस्य तैरभ्युपगमात् । तस्मादकारणत्वेऽपि कार्यजातीनां कार्यव्यापकत्वेन स्वाभिव्यक्तये कारणावच्छेदद्वारा परम्परया कार्योत्पादनियामकत्वरूपं कार्यप्रयोजकत्वं स्वाभिव्यक्तिफलककार्योत्पादाय कारणप्रयोजकत्वमपि च द्रष्टव्यम् । कार्योत्पत्तेः प्राक् नित्यत्वेन कार्यदेशे संनिहितया कार्यजात्याऽवच्छिन्नानामेव हि तत्तत्कार्यं प्रति कारणत्वं नान्येषामित्येवं रीत्याऽपि कार्यजातीनां कारणप्रयोजकत्वं द्रष्टव्यम् । तच्चानुपदमेव वक्ष्यते–कारणेषु पदं कृत्वेत्यादिना ॥ २५ ॥

**कारणेषु पदं कृत्वा नित्यानित्येषु जातयः ।**
**क्वचित्कार्येष्वभिव्यक्तिमुपयान्ति पुनः पुनः ॥ २६ ॥**

**सर्वगतत्वाज्जातीनां कारणेषु अपि सन्निधानात्पदबन्धः । तथा च जात्यात्मना कारणेषु कार्याणामवस्थानाज्जातिरूपोपरागेण तदवसायात् तत्र साधनानां प्रवृत्तौ कार्यारम्भे तत्समवेतजात्यभिव्यक्तिरसकृदाश्रयोपलब्धौ भवति । नित्याः परमाणवः कारणानि दर्शनान्तरे वा प्रधानपुरुषादयः । अनित्या वीरणादयः 'क्वचित्' इति दृश्येषु । किञ्चित् किल कार्यं जात्याश्रयं निष्पन्नमप्यदृश्यम् । यथा वायुर्द्रव्यमिति । तत्र हि तज्जात्यभिव्यक्तिर्नास्ति ॥ २६ ॥**

**इत्थं च कृत्वा प्राक् प्रभवादपि जातेर्विद्यमानत्वान्नित्यत्वं पोषितम् । तथा च जातिपदार्थनयेऽत्र जातेरुपयोगं दर्शयति—**

---

ननु कार्यजातीनां कारणेष्वसमवायेनासन्निधानात् । कथं तासां तत्प्रयोजकत्वमित्याशंक्याह कारणेषु पदमिति ।

अस्यार्थः—जातयः = कार्यगता जातयः, कार्योत्पत्तेः प्राक् नित्यानित्येषु कारणेषु न्यायमते नित्यानि कारणानि परमाणवः, सांख्यादिदर्शनेषु प्रधानपुरुषादयः, अनित्यानि कटादिकारणानि वीरणादयः सर्वगतत्वात्पदं कृत्वा = संबन्धं कृत्वा, क्वचित्कार्येषु—दृश्येषु कार्येषु घटादिषु, पुनः पुनरभिव्यक्तिमुपयान्ति । केषुचित् कार्येषु तु जात्याश्रयेषु निष्पन्नेष्वपि जातयोऽभिव्यक्तिं न यान्ति । यथा वाय्वादिषु वायुत्वादिजातयो न दृश्या व्यक्तिस्वभाववैचित्र्यादिति वा कार्यसंस्थानानामदृश्यत्वादिति वा बोध्यम् ।

अयं भावः—जातयः सर्वगताः, यत्र क्वचन व्यक्तयः समुत्पद्यन्ते तत्र सर्वत्रैव कार्योत्पत्तिदेशे कारणसामग्रीवत् नियमेन सन्निधानात् तासां जातीनां कारणेष्वपि पदबन्धः = पदन्यासः, संबन्ध इति यावत्, अस्ति, तथा च स्वोत्पत्तेः प्राक् कार्याणां कारणेषु जात्यात्मना = जातिस्वरूपेण अवस्थानात् कार्यजातिरूपोपरागेण = कार्यजातिरूपोपसंसृष्टतया कारणानामुपग्रहात् अव्यभिचरिताभ्यां कार्यान्वयव्यतिरेकाभ्यां कारणानां कार्यजात्युपसंसृष्टत्वानुमानात् । जनयितव्येषु तत्तत्कार्येषु साधनानां प्रवृत्तौ सत्यां कार्यारम्भे सति कारणसमवेतायाः कार्यजातेरभिव्यक्तिः स्वाश्रयस्योपलब्ध्याऽसकृद् भवति । कार्योत्पत्तेः प्राक् कारणेषु सन्निहितायाः कार्यजातेरभिव्यक्तिर्न भवति कारणाकाराणाम् = कारणसंस्थानानाम्, तदनभिव्यञ्जकत्वस्वाभाव्यात् । कार्योत्पत्तौ सत्यां तु तस्या असकृद् अभिव्यक्तिर्भवति, कार्याकाराणां तदभिव्यञ्जकत्वस्वभावसद्भावादिति ॥ २६ ॥

**निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।**
**स्वाश्रयस्याभिनिष्पत्तौ सा क्रियाणां प्रयोजिका ।। २७ ।।**

**घटं करोतीति कथमसतो निर्वर्त्यमानस्य क्रियायां साधनभावः कर्मण इत्येतदत्र चोद्यं नावतरति। जातेः सत्वात् स्वाश्रयनिर्वर्त्तनाय क्रियां प्रत्युक्तेन कारणपदबन्धन्यायेन प्रयोजकत्वादिति जातिरूपाश्रयेण च साधनता, व्यक्तिरूपाश्रयेण च कर्मता, निवर्त्त्यंत इति कारकं कर्मेति सामानाधिकरण्योपपत्तिः। न हि जातिव्यक्ती अत्यन्तभिन्ने गवाश्ववत्, संमूर्च्छितस्वभावत्वादित्युभयरूपाश्रयो व्यपदेशोऽविरुद्धः। प्राप्यविकार्ययोस्तु कर्मणोस्सत्त्वात् स्वत एव साधनतोपपत्तिरिति 'निर्वर्त्यमानम्' इति विशेषमाह। जात्यात्मना च निरूप्य वस्तु कारणेषु योग्येषु प्रवर्तन्ते तदर्थिन इति 'प्रयोजिका' इत्युच्यते। एतच्च जात्यभिधानपक्षे संभवति घटशब्देन जातेरभिधानात्। व्यक्तिपदार्थपक्षे तु उपचारसत्ताश्रयं साधनत्वं वक्ष्यति—**

**व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।**
**साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ।। इति । २७ ।**
**( वा० का० ३ सा० ७ )**

**कारणानां प्रयोजिका जातिरित्युक्तम्। तथा च जातिपदार्थपक्षे न द्रव्यस्य क्रियासाधनत्वम्, अपि तु सैव विधिप्रतिषेधयोः साधनं जातिरित्याह—**

---

एवं कार्योत्पत्तेः प्रागपि कार्यजातीनां विद्यमानत्वात्तासां नित्यत्वं पोषितम्। तथा च नित्यमेकमनेकानुगतं सामान्यमिति लक्षितां जातिं तस्याः शब्दार्थत्वञ्च प्रसाध्य जातिपदार्थनये व्याकरणशास्त्रे जातेरुपयोगं दर्शयितुमाह—निर्वर्त्यमानमिति।

अस्यार्थः—घटं करोतीत्यादौ यत् निर्वर्त्यमानं = निष्पाद्यमानं घटादिकं कर्म तत्रापि अपिना तत्साधनक्रियायामपि जातिः कार्योत्पत्तेः प्राक् कारणेषु कृतपदबन्धा साधनम्। यतः सा कार्योत्पत्तेः प्राक् कारणेषु कृतपदा कार्यजातिः, स्वाश्रयस्याभिनिष्पत्तौ स्वाश्रयस्य कार्यस्य सिद्धौ, क्रियाणाम् सर्वेषां कारकव्यापाराणाम्, कारणोपसंसृष्टा सती प्रयोजिका। यानि तु अकारणानि कार्योत्पत्तिदेशे सन्निहितानि तेषु संसृष्टाऽपि कार्यजातिर्न स्वाश्रयाभिनिष्पत्तये तेषां कार्यानुकूलव्यापारप्रयोजिका तेषां स्वतोऽकारणत्वात्। जातेः कारणव्यापाराणामेव त्वरकत्वादिति।

अयं भावः—नित्यत्वेन कार्योत्पत्तेः प्रागपि जातेः सत्त्वात् स्वाश्रयनिर्वर्तनाय जायमानां तत्तत्कारणक्रियां प्रत्युक्तेन कारणेषु पदबन्धन्यायेन प्रयोजकत्वात् घटं करोतीत्यादौ निर्वर्त्यमानस्यासतो घटादेः कर्मणः कथं क्रियायां साधनभाव इत्येतत् चोद्यम्= प्रश्नः नात्रावतरति। निर्वर्त्यकर्मणो घटादेर्जातिरूपाश्रयेण क्रियासाधनता, व्यक्तिरूपाश्रयेण च कर्मता निर्वर्त्यंत इति घटः कारकम्। घटः कर्मेति व्यवहारे सामानाधि-

**विधौ वा प्रतिषेधे वा ब्राह्मणत्वादिसाधनम् ।**
**व्यक्त्याश्रिताश्रिता जातेः संख्याजातिर्विशेषिका ॥२८॥**

**जातेः पदार्थत्वे तत्र विधौ चोदिते प्रतिव्यक्तिपरिसमाप्तत्वात्तस्याः सकृदनुष्ठानेऽपि कृतः शास्त्रार्थो 'ब्राह्मणमालभेत' इति । एवं 'ब्राह्मणं न हन्यात्' इत्यादिरपि प्रतिषेधो जातावेव । सकृदनुष्ठानेऽपि च पुनरुल्लङ्घने चोदितस्य दोषः । तथा हि—**

---

करण्योपपत्तेः । जातिव्यक्ती च परस्परं गवाश्ववद् नात्यन्तभिन्ने, द्वयोः संमूर्च्छितस्वभावत्वात् = परस्परं संश्लिष्टस्वभावत्वादिति निर्वर्त्यकर्मणि जातिरूपाश्रयः कारकमिति व्यपदेशो व्यक्तिरूपाश्रयश्च कर्मेति व्यपदेशो न विरुध्यते । प्राप्यविकार्ययोस्तु कर्मणोः क्रियातः प्राक् सत्त्वात् स्वरूपेणैव क्रियासाधनतोपपत्तिरिति तयोर्निर्वर्त्यकर्मापेक्षया विशेषं मत्वाऽऽह—निर्वर्त्यमानमिति । तत्तत्कारणेषु तत्तत्कार्यं जात्यात्मना सन्निहितं निरूप्य तु जात्याश्रयतया योग्येषु कारणेषु कार्यार्थिनः प्रवर्तन्त इति जातिः सा कारणक्रियाणां प्रयोजिकेत्युच्यते । एतच्च घटं करोतीत्यादौ घटस्य निर्वर्त्यकर्मत्वं जात्यभिधानपक्षे प्रागुक्तरीत्या संभवति, घटशब्देन घटत्वजातेरभिधानात् । व्यक्तिः पदार्थ इति पक्षे तु कार्योत्पत्तेः प्राग् व्यक्तेरसत्त्वादुपचारसत्ताश्रयम् = कार्ये उपचारस्य आरोपस्य विषयीभूता या बुद्धिसत्ता तदाश्रयं तन्निमित्तकम्, कार्योत्पत्तेः प्राक्कार्यबुद्धेर्विद्यमानत्वात्तद्गतां सत्तां कार्ये आरोप्येति यावत् व्यक्तेः कारणगतक्रियासाधनत्वं वक्ष्यति ॥२७॥

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥ इति ॥
(वा॰ का॰ ३ साध॰ ७)

अस्यार्थः—यथा बुद्धिप्रवृत्तिविषयीभूतमान्तरमर्थं बाह्येष्वर्थेषु अध्यस्य शब्देषु शक्तिभेदः परिकल्प्यतेऽभिधातृभिः तथा व्यक्तौ पदार्थे स्वीक्रियमाणे शब्दं करोतीत्यादौ जन्यमानस्य निवर्त्यस्य कर्मणः शब्दादेर्बुद्धिरूपप्रकल्पितम् = बुद्धिविषयीभूतस्य शब्दादेर्यदान्तरं रूपं तस्य बाह्येषु शब्दादिषु अध्यासेन प्रकल्पितं जननादिक्रियासाधनत्वं सिद्धम् । बौद्धस्य शब्दादेः कार्योत्पत्तेः प्रागपि विद्यमानत्वादिति ॥२७॥

कारणानां प्रयोजिका जातिरिति, 'सा क्रियाणां प्रयोजिका' इति चोक्तं प्राक् । तथा च जातिः पदार्थ इति पक्षे न द्रव्यस्य क्रियासाधनत्वम्, अपि तु जातिरेव विधिप्रतिषेधयोः साधनमित्याह—विधौ वेति ।

अस्यार्थः—विधौ वा 'ब्राह्मणमालभेत' इत्यादौ, प्रतिषेधे वा-'न ब्राह्मणं हन्यात्' इत्यादौ, ब्राह्मणत्वादिरूपा जातिरेव तयोः साधनम् । अत्र साक्षाज्जातेर्विधिप्रतिषेधसाधनत्वाभावेऽपि स्वाश्रयद्वारा तत्त्वं बोध्यम् । जातिपदार्थवादे विभक्त्याऽपि संख्यागता जातिरेवाभिधीयत इत्यभिप्रेत्याह—व्यक्त्याश्रिताश्रितेति । व्यक्तिं द्रव्यमाश्रिता या एक-

**अहननं चोदितम्, हननं तु क्वचिदनुष्ठितमिति विरुद्धक्रियाचरणात्प्रत्यवाय एव। क्वचित्तु विध्यनुष्ठानेऽन्यत्र तदभावेऽपि न विरोधः। तथा चाहुः—**

**'नाकारणानि विधिं बाधन्ते प्रतिषेधस्तु क्रियां निवर्तयति' इति।**

**तस्माद्यदा यदा हननबुद्धिरुत्पद्यते तदा तदा प्रतिषेधः सर्वत्र ब्राह्मणजातौ व्याप्रियते। अत्र च जात्यवच्छिन्ने हननकर्तव्यताप्रतिषेधावभासस्य सङ्कल्पस्यानुष्ठेयत्वम्। इत्थं प्रवृत्तिनिवृत्तिमये पुरुषार्थे सर्वत्र जातेरुपयोगो दर्शितः। अनुष्ठानस्य प्राधान्यात्तदङ्गम् (द्रव्यसंख्याभ्यां युज्यते)—**

**'पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया' (वा० का० ३ जाति ८२)**

**इति वक्ष्यमाणन्यायेन। सङ्ख्याविवक्षामत्राह "व्यक्त्याश्रिताश्रिता" इति। व्यक्ति द्रव्यमाश्रिता या एकत्वसङ्ख्या तदाधारा या जातिः आश्रयभेदभिन्नेष्वेकत्वगुणेषु प्रत्यया-**

---

त्वादिरूपा संख्या तामाश्रिता या जातिरेकत्वत्वादिरूपा स्वाश्रयभेदभिन्नेष्वेकत्वादिसंख्यारूपेषु गुणेष्वभिन्नाकारप्रत्ययानुवृत्तिनिमित्तं सा प्रातिपदिकवाच्यां द्रव्यगतां जातिमेकार्थसमवेतसमवायात्सामानाधिकरण्येनावच्छिनत्ति = विशिनष्टि। अतो व्यक्त्याश्रिताश्रिता संख्याजातिर्जातिर्द्रव्यगतायाः प्रातिपदिकवाच्याया विशेषिकेत्युक्तम्। यद्यपि "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति न्यायाबलात् संख्याजातेः प्रत्ययार्थत्वेन प्राधान्यात्संख्याजातिर्विशेष्येति वक्तुमुचितम्, तथापि वास्तवेन रूपेण तस्या एकार्थसमवेतसमवायसंबन्धावच्छिन्नसामानाधिकरण्यसंबन्धेन द्रव्यजातिविशेषणत्वात्संख्याजातिर्विशेषिकेत्युक्तमिति।

अयं भावः—जातिपदार्थवादे तत्र विधौ चोदिते = जातिकर्मिकायां कस्याश्चिद् विधेयभूतायां क्रियायां विहितायाम्. जातेः प्रतिव्यक्तिपरिसमाप्तत्वात् = पर्याप्तत्वाद् ब्राह्मणत्वादिकर्मिकाया आलम्भनादिक्रियायाः क्वचिद् व्यक्तौ सकृदनुष्ठानेऽपि 'ब्राह्मणमालभेत' इति शास्त्रार्थः कृतः स्यात्। एवं 'न ब्राह्मणं हन्यात्' इत्यादिः प्रतिषेधोऽपि जातावेव। तथा च ब्राह्मणजातिकर्मकहननाभावविषयकस्य संकल्पस्य सकृदनुष्ठानेऽपि क्वचित् कदाचिद् ब्राह्मणहननक्रियया च तस्य संकल्पस्य विहितस्य पुनरुल्लङ्घने = विरोधिक्रियानुष्ठानेन बाधे, दोषः = प्रत्यवायः। तथाहि—'नेक्षेतोद्यन्तमादित्यम्' इत्यादावनीक्षणविषयकसंकल्पवत् 'न ब्राह्मणं हन्यात्' इत्यत्र ब्राह्मणहननाभावविषयकः संकल्पो विहितः, ब्राह्मणहननाभावस्याविधेयत्वात्। विध्यर्थेन नञः संबन्धे ब्राह्मणकर्मकहननविधिनिषेधस्तु नात्र बोध्यते, रागतः प्राप्तत्वेन तद्विधेरप्रसक्तत्वात्। एवञ्च यदि तादृशसंकल्पविरोधिहननं क्वचिदनुष्ठितं तदा विहितविरुद्धक्रियाचरणात् प्रत्यवाय एव। क्वचित्तु 'ब्राह्मणमालभेत' इत्यादिविहितब्राह्मणालम्भनादिक्रियानुष्ठानेऽन्यत्रान्यदा च तदभावेऽपि न विरोधः। 'ब्राह्मणालम्भनादेः काम्यत्वेनानित्यत्वात्, कामनाया अभावे तदभावस्यैवौचित्यात्। सकलब्राह्मणालम्भनस्याशक्यत्वाच्च। सकलब्राह्मणहननाभावविषयकः संकल्पस्तु

**नुवृत्तिनिमित्तं सा प्रातिपदिकवाच्यां द्रव्यजातिमेकार्थसमवेतसमवायादवच्छिनत्ति। जातेः पदार्थत्वे विभक्तेरपि संख्याजात्यभिधायित्वात् वास्तवेन च रूपेण संख्याजाति-विशेषिका। शाब्देन तु प्रत्ययार्थस्य प्राधान्याद्विशेष्यासौ। एवं चैकत्वसङ्ख्याया अत्र विवक्षितत्वान्न युगपदनेकव्यक्तिविषयमनुष्ठानं चोदितम्। सत्यपि जातिपदार्थत्वे एक-स्यामपि च व्यक्तौ सर्वात्मना परिसमाप्ता जातिरिति न काचित् क्षतिः। कामनाहेतुकश्च विधिरिति सत्यां कामनायां व्यक्त्यन्तरेऽप्यनुष्ठानाविरोधः। एवं प्रतिषेधेऽपि हनन-बुद्धिनिमित्तमिति तदुत्पत्तौ सर्वत्र तत्प्रवृत्तिः। तदेवं जातेः पदार्थत्वे चोदनासूपपत्तिः। यदाह वाक्यकारः—**

**'धर्मशास्त्रं च तथा'। इति ॥ २८ ॥**

**ननु जातिरेव पदार्थ इत्यवधारणानुपपत्तिः, तस्याः स्वाश्रयसमवायावियोगात्। अत एव चासां कार्यसिद्धेः कारणानामाश्रयेषु प्रतिनियतेषु भाव इत्याश्रयादुत्कर्ष-यितुमशक्या जातिः केवला कथं शब्देनाभिधीयत इत्याशङ्क्य दृष्टान्तेनैतदुपपाद-यितुमाह—**

---

कर्तुमकर्तुमन्यथाकर्तुञ्च शक्यत इति नित्यत्वेन विधीयते। अतस्तदकरणे तद्विरोधिकरणे च प्रत्यवाय एव।

तथा चाहुः—"नाकारणानि विधिं बाधन्ते प्रतिषेधस्तु क्रियां निवर्तयति" इति।

अस्यार्थः—अकारणानि = अभावाः कार्यनियतपूर्वसत्त्वं हि कारणत्वम्, तदभाव-वन्ति अकारणानि = अभावाः अभावेषु तादृशसत्त्वाभावात्। अतएव भावा एव कारणानि नत्वभावा इति वृद्धाः।

अत एव च 'भावो यथा तथाऽभावः कारणं कार्यवन्मतः' इति नैयायिकानां तन्मत-प्रत्याख्यानप्रयासः। तथा चाकारणानि-नञर्थाभावाः लिङाद्यर्थेन विधिना सह संसर्ग-मनुभूय 'न ब्राह्मणं हन्यात्' 'न सुरां पिबेत्' इत्यादौ ब्राह्मणहननसुरापानादिविधिं न बाधन्ते-न निषेधन्ति। ब्राह्मणहननसुरापानादीनां रागतः प्राप्तत्वेन "विधिरत्यन्तमप्राप्तौ" इत्येवं लक्षणकविधेरगोचरत्वात्। अतो नञर्थः प्रतिषेधस्तु क्रियया सह संबध्यमानो रागतः प्राप्तां पानहननादिक्रियामेव निवर्तयतीति। तस्माद् यदा यदा हननबुद्धिरुत्पद्यते तदा तदा नञर्थः प्रतिषेधः सर्वत्र = सर्वव्यक्त्यवच्छेदेन ब्राह्मणजातौ व्याप्रियते। अत्र च जात्यवच्छिन्नकर्तव्यताप्रतिषेधावभासस्य ब्राह्मणत्वजात्यवच्छिन्नसंबन्धिनी या हननकर्तव्यता तस्या यः प्रतिषेधस्तदवभासस्य तद्विषयकस्य संकल्पस्य 'न ब्राह्मणं हन्यात्' इत्यत्रानुष्ठेयत्वम् = विधेयत्वम्। नेक्षेतोद्यन्तमित्यादावनीक्षणसंकल्पवत्। इत्थं 'ब्राह्मणमालभेत' इत्यादौ प्रवृत्तिरूपे पुरुषार्थसाधनत्वात् पुरुषार्थे, 'न ब्राह्मणं हन्यात्' इत्यादौ निवृत्तिरूपे पुरुषार्थे साधनत्वात् पुरुषार्थे, सर्वत्र जातेरुपयोगो दर्शितः। वैयाकरण-नये 'भावप्रधानमाख्यातम्' ( निरुक्तम् १।१। ) इति यास्कवचनानुरोधेन अनुष्ठानस्य =

यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते ।
तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते ।। २९ ।।

प्रतिबिम्बे भावान्तरोत्पत्तिः
'विरुद्धपरिमाणेषु' ( वा० का० १, १०० )
इत्यादिना पूर्वं निराकृतेति यथा मुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्यापि दृश्यमानं मुखशब्दाभिधेयमादर्शादिव्यञ्जकरहितं शुद्धम् । एवं शब्दोऽपि जातिं व्यक्तिरहिता-मभिदधाति । अयमाशयः—आश्रयसमवायाबियोगेऽपि सर्वत्राभेदात् सङ्केतोपपत्तौ जातिः शब्दाभिधेया शुद्धा, शाब्दे ज्ञाने तथा प्रतीतेः । ऐन्द्रियके तु ज्ञाने विवेकान-वभासाद्भवतु जातिव्यक्त्योः संमूर्च्छितावभासः । शब्दस्य तु यथासङ्केतं प्रतीतिहेतुत्वे न काचित् क्षतिः ॥ २९ ॥

यद्येवं शब्दादप्रतीयमाना व्यक्तयः कथं शब्दज्ञानविषयतया जातीर्विशिंष्यु-रित्याशङ्कयाह—

---

क्रियायाः प्राधान्यात्तदङ्गं सामान्यं यथायथं विशेष्यत्वविशेषणत्वाभ्यां रूपाभ्यां द्रव्य-संख्याभ्यां सह युज्यते यदाह—

'पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया' ( वा. का. ३ जाति. ८२) इति वक्ष्य-माणन्यायेन । अत्र पराङ्गभूतम्—इत्यस्य क्रियाङ्गभूतमित्यर्थः । द्रव्यसंख्यया इत्यत्र द्रव्य-सहिता संख्येति मध्यमपदलोपी समासः, एकवचनानुरोधात् । अत्र संख्यापदं संख्याजाति-परम् 'संख्याजातिर्विशेषिका' इत्युक्त्यनुरोधात् ।

न च क्रियायां विशेषणतयाऽन्वितस्य सामान्यस्य द्रव्ये तत्त्वेनान्वयायोग इति वाच्यम् । द्रव्यद्वारकस्यैव क्रियान्वयस्यात्र विवक्षितत्वात् । द्रव्यजातौ संख्याजातियोग-विवक्षामाह—'व्यक्त्याश्रिताश्रिता' इति । एतदर्थस्तु प्रागुक्तः । एवञ्च 'ब्राह्मणमालभेत' इत्यत्र ब्राह्मणमित्येकत्वसंख्याया विवक्षितत्वान्न युगपदनेकव्यक्तिविषयकमालम्भनानुष्ठानं चोदितमिति । सत्यपि जातिपदार्थत्वे एकस्यामपि च व्यक्तौ सर्वात्मना परिसमाप्ता जाति-रिति च कृत्वा न काचित् क्षतिः । 'ब्राह्मणमालभेत' इति विधिश्च कामनाहेतुक इति सत्यां कामनायां ब्राह्मणव्यक्त्यन्तरेऽपि आलम्भनानुष्ठाने 'ब्राह्मणं न हन्यात्' इति प्रति-षेधेन सहाविरोधः । एवं ब्राह्मणहननप्रतिषेधेऽपि हननबुद्धिनिमित्तमिति तद्बुद्ध्युत्पत्तौ सर्वासु ब्राह्मणव्यक्तिषु प्रतिषेधप्रवृत्तिः । तदेवं जातेः पदार्थत्वे सर्वासु प्रवृत्तिनिवृत्ति-चोदनासूपपत्तिर्भवति । यदाह वाक्यकारः—"धर्मशास्त्रञ्च तथा" इति ।

अस्यार्थः—न केवलं लौकिकवाक्यमेव जातौ प्रवृत्तिनिवृत्त्योर्बोधकम्, किन्तर्हि, धर्मशास्त्रञ्च—धर्मशास्त्रमपि, तथा = जातौ प्रवृत्तिनिवृत्तिबोधकमिति ॥२८॥

ननु जातिरेव पदार्थ इत्यवधारणानुपपत्तिः तस्याः स्वाश्रयद्रव्यसमवायावियोगेन द्रव्यस्यापि पदार्थत्वौचित्यात् । अत एव च कार्योत्पत्तेः प्राक् कारणेषु संसर्गमनुभूय कार्य-

**यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते ।**
**इन्द्रियार्थेष्वदृष्टोऽपि ज्ञानभेदाय कल्पते ।। ३० ।।**
**तथात्मरूपग्रहणात् केषांञ्चिद् व्यक्तयो विना ।**
**सामान्यज्ञानभेदानामुपयान्ति निमित्तताम् ।। ३१ ।।**

**शब्दाद्युपलब्ध्यन्यथानुपपत्त्यानुमितसत्त्वानीन्द्रियाणि नित्यपरोक्षत्वादनुपलभ्यमानस्वगतचक्षुःश्रोत्रादिविशेषाणि शब्दस्पर्शरूपरसगन्धेषु इन्द्रियार्थेषु चाक्षुषादिप्रत्ययविशेषहेतुभावं नियमेन प्रतिपद्यन्ते । न हि चाक्षुषं ज्ञानं श्रोत्रेन्द्रियकार्यम् ।**

---

सिद्धेः कारणानामासां प्रतिनियतेषु आश्रयेषु भावः = समवायेन सत्त्वम्, न सर्वत्र सर्वगानामपि इत्यत आश्रयात् पृथक् कर्तुं न शक्या जातिरिति केवला सा कथं शब्देनाभिधीयत इत्याशंक्य दृष्टान्तेनैतदुपपादयितुमाह—यथा जलादिभिरिति ।

अस्यार्थः—यथा जले आदर्शे वा स्वं मुखं पश्येत्यादौ जलादिभिर्व्यक्तम् = अभिव्यञ्जितम्, अन्तर्भावितण्यर्थत्वात् । गौणं मुखमेव मुखशब्देनाभिधीयते, न शुद्धम्, तस्य तत्रासंभवात् । तथा द्रव्यैरभिव्यक्ता जातिरेव शब्देनाभिधीयते, न द्रव्यम् । व्यञ्जकोपाधिसन्निधाने व्यंङ्ग्याभिधायकत्वस्यैव शब्दस्वभावसिद्धत्वादिति ।

अयं भावः—प्रतिबिम्बस्थले बिम्बातिरिक्तस्य भावस्योत्पत्तिः—

विरुद्धपरिमाणेषु वज्रादर्शतलादिषु
पर्वतादिसरूपाणां भावानां नास्ति सम्भवः । ( वा. का. १, १०० )

इत्यादिना प्रथमकाण्डे निराकृतेति यथा मुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्याऽपि दृश्यमानं मुखशब्दाभिधेयम्, नादर्शादिव्यञ्जकरहितं शुद्धम् । एवं शब्दोऽपि व्यक्तिव्यक्तां जातिमेव व्यक्तिरहितामभिदधाति न व्यक्तिम् । अयं तु परमाशयः-जातेराश्रयसमवायादवियोगेऽपि सर्वासु व्यक्तिषु तस्या अभेदेन प्रतिभासात् तत्र शब्दस्य संकेतोपपत्तौ केवला जातिरेव शब्दाभिधेया, न द्रव्यसंसृष्टा, नापि द्रव्यम् । शाब्दे ज्ञाने केवलाया जातेरेव प्रतीतेः । व्यक्तिलाभस्तु पश्चादाक्षेपेण लक्षणया वा । ऐन्द्रियके तु ज्ञाने जातिव्यक्त्योस्तादात्म्याध्यासेन भेदाग्रहाद् भवतु जातिव्यक्त्योः सम्मूर्च्छितावभासः = परस्परं तादात्म्येन संश्लिष्टयोरवभासः । शब्दस्य तु यथासंकेतं पदार्थप्रतीतिहेतुत्वे व्यवस्थिते सति न काचित् क्षतिः । जातिपदार्थवादेऽपि द्रव्ये प्रवृत्तिनिवृत्त्योः प्रागुपपादितत्वादिति ॥२९॥

ननु यदि जातिरेव पदार्थस्तदा शब्दादप्रतीयमाना व्यक्तयः कथं शब्दजन्यज्ञानविषयत्वेन जातीर्विशिंष्युः=स्ववृत्तित्वेनेतरजातिभ्यो व्यावर्त्य व्यञ्जयेयुः इत्याशङ्क्य युग्मेन समाधानमाह-यथेन्द्रियगत इति । तथात्मरूपग्रहणादिति च ।

अनयोरर्थः—यथेन्द्रियगतो भेदः = चक्षुरादिगतश्चक्षुष्ट्वादिरूपो विशेषः अदृष्टोऽपि इन्द्रियाणां नित्यपरोक्षत्वादप्रत्यक्षोऽपि, इन्द्रियग्रहणादृते = इन्द्रियाणां चक्षुरादीनां स्वरूप-

**एवमगृह्यमाणस्वभावा व्यक्तयः। शब्देनाभिधानवेलायां केषांचिद् एव सामान्यज्ञानभेदानां काश्चन प्रत्यक्षप्रत्ययानामिवोपयान्ति हेतुतां व्यक्तयः। शाब्दे प्रत्यये शब्दार्थभूतानां सामान्यानां वस्तुतः समवायनियमाद् विशेषमावेदयन्तीति न साङ्कर्यं शब्दार्थ इत्यर्थः। अगृह्यमाणस्यापि तदानीं व्यक्तिरूपस्यान्यदा प्रत्यक्षकाले गृहीतत्वादव्युत्पन्नसंबन्धस्यापि तद्विषयावसायाविरोधात् संप्रत्यगृह्यमाणस्यापि दृष्टं प्रतीतिविशेषहेतुत्वमिति एतावता साम्येनात्रेन्द्रियाणि दृष्टान्तः। 'केषाञ्चित् सामान्यज्ञानभेदानाम्' इत्यर्थात् काश्चनैव व्यक्तय इति लभ्यते। तदेवं केवलं जात्यभिधानपक्षः समर्थितः। तद्वदभिधाने तु न कश्चिद्दोषः, जात्युपरक्ते द्रव्येऽभिधाविश्रान्तेर्विरम्य व्यापाराभावात्। द्रव्यपदार्थनये तु जातिरनभिधीयमानैवोपलक्षणमभेदेन सङ्केतार्थद्रव्यस्येति तत्रैव क्रियायोगोपलब्धेः शब्दवाच्यत्वम्। यथोक्तम्—**

**'चोदनासु च तस्यारम्भात्' ( वा० १।२।६४ ) इति। ३०, ३१॥**

**इदानीं यदुक्तं प्राक्**

**'सर्वशक्त्यात्मभूतत्वमेकस्यैव' ( वा० का० ३, जाति० २२ ) इति। अत्रापि मते जातिव्यक्तिप्रविभागमाह—**

---

ग्रहणं विनैव इन्द्रियार्थेषु = चक्षुरादिविषयेषु रूपादिषु ज्ञानभेदाय चाक्षुषादिप्रत्यक्षविशेषजननाय, कल्पते = समर्था भवति। तथा शाब्दे ज्ञाने काश्चिद् व्यक्तय आत्मरूपग्रहणात् = असंकेतितत्वेन स्वरूपग्रहणाद् विनैव केषाञ्चिदेव सामान्यज्ञानभेदानाम् घटत्वादिसामान्यज्ञानविशेषाणामेव, निमित्तताम् = ज्ञापकनिमित्ततामुपयान्ति। केषाञ्चिदिति पदोत्तरमेवकारोऽध्याहृत्य योजनीयः।

अयं भावः—शब्दाद्युपलब्धिः, सकरणिका क्रियात्वात्; छिदिक्रियावदित्येवं शब्दाद्युपलब्ध्यन्यथाऽनुपपत्त्याऽनुमितसत्त्वानीन्द्रियाणि नित्यमतीन्द्रियत्वादनुपलभ्यमानस्वगतचक्षुःश्रोत्रत्वादिविशेषाण्यपि इन्द्रियार्थेषु शब्दस्पर्शरूपरसगन्धेषु चाक्षुषादिप्रत्ययविशेषाणां हेतुभावं नियमेन प्रतिपद्यन्ते नहि चाक्षुषं ज्ञानं श्रोत्रेन्द्रियकार्यं भवतीति।

एवमसंकेतित्वात् शब्देनागृह्यमाणस्वरूपा अपि काश्चन व्यक्तयः शब्देनाभिधानवेलायां केषाञ्चिदेव सामान्यज्ञानभेदानाम् = तत्तत्सामान्यविषयकशाब्दज्ञानविशेषाणां तत्तत्सामान्यविषयकप्रत्यक्षप्रत्ययानामिव हेतुतामुपयान्ति। तत्तच्छब्दार्थभूतानां तत्तत्सामान्यानां वस्तुतः स्वस्वव्यक्तिसमवायनियमात् काश्चन व्यक्तयः शाब्दे प्रत्यये कञ्चिदेव सामान्यविशेषमावेदयन्ति इति न घटत्वपटत्वयोर्घटशब्दार्थत्वरूपं शब्दार्थे सांकर्यम्। शाब्दे प्रत्यये जननीयेऽसंकेतितत्वात् शब्देनागृह्यमाणस्यापि व्यक्तिरूपस्यान्यदा प्रत्यक्षकाले गृहीतत्वाद् अव्युत्पन्नसंबन्धस्यापि = असंकेतितत्वात् शब्देन सहागृहीतसंबन्धस्यापि, तद्विषयावसायाविरोधात्, तद् विषयेण-शब्दार्थेन सामान्यविशेषेण सह, अवसाये =

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।**
**सत्यं यत् तत्र सा जातिरसत्या व्यक्तयः स्मृताः ॥ ३२ ॥**

**अविद्याप्रवृत्तिरूपस्य सर्वपदार्थेष्वागमापायिनोऽसत्यत्वाद् व्यक्तिरिति व्यवहारः ।**

**'तदेव हि सत्यं यस्मिंस्तत्त्वं न विहन्यते' (म. भा. पस्पशाह्निकम्) इत्यन्वयिरूपं भेदप्रत्ययेष्वबाध्यमानं 'सत्यं जातिः' इति व्यवहृतमद्वैतिभिः । तद्यथा—रुचकस्वस्तिक-कुण्डलादयो विकाराः परस्परोपमर्देन भवन्तोऽस्थिरप्रत्ययविषयाः, सुवर्णमित्येव तु सत्यमन्वयिविज्ञानावसेयसतत्त्वम् । एवमभेदान्तरविवक्षायां तेज इत्येव सत्यम् ।**

---

अभेदाध्यवसायेऽविरोधात्, शाब्दप्रत्ययावसरे शब्देनागृह्यमाणस्यापि व्यक्तिस्वरूपस्य दृष्टं प्रतीतिविशेषहेतुत्वम् = सामान्यविषयकशाब्दप्रत्ययहेतुत्वम् इति । एतावता साम्येन अगृहीतत्वे सति ग्राहकत्वरूपेण सादृश्येन, अत्रेन्द्रियाणि दृष्टान्तः । केषाञ्चित् सामान्य-ज्ञानभेदानामित्युक्त्याऽर्थात् काश्चनैव व्यक्तय इति लभ्यते । तदेवं केवल शब्दजात्यभि-धायकत्वपक्षः समर्थितः । किन्तु शब्दस्य जातिविशिष्टाभिधायकत्वपक्षेऽपि न कश्चिद् दोषः । जातिविशिष्टे द्रव्य एव शब्दस्याभिधारूपव्यापारस्य विश्रान्तेः, शब्दस्य विरम्य व्यापाराभावात्, न शब्दस्य जातिद्रव्योभयस्मिन् शक्तिः, किन्तु विशिष्ट एव सोचिता । शब्दस्य द्रव्यमात्राभिधायकत्वपक्षे तु शब्देनानभिधीयमानैव जातिरभिधेये संकेतितार्थे द्रव्ये अभेदेनोपलक्षणम्, सर्वत्रैव व्यवहारे द्रव्यस्यैव क्रियायोगोपलब्धेरिति द्रव्यस्यैव शब्द-वाच्यत्वम् । यथोक्तम्—"चोदनासु च तस्यारम्भात्" इति ।

अस्यार्थः—अत्र चकारो भिन्नक्रमः । चोदनासु = विधिविषयीभूतासु क्रियासु तस्य द्रव्यस्यैव आरम्भात् संबन्धाच्च । अत्रारम्भणमालम्भनं स्पर्शः संबन्धः । रलयोर-भेदादिति । यतः सर्वत्रैव व्यवहारे द्रव्यस्यैव क्रियासु संबन्धो न जातेस्तस्माद् द्रव्यमेव शब्दाभिधेयं न जातिरिति तदाशयः ॥ ३०-३१ ॥

यदुक्तं प्राक् 'सर्वशक्त्यात्मभूतत्वमेकस्यैव' इति, तेन महासत्तारूपमेकं ब्रह्मैव सर्वशक्तिकम् । तत्र भावभेदास्तु अविद्याकल्पिता अपारमार्थिका इति लभ्यते । अत्रापि मते जातिव्यक्तिप्रविभागमाह-सत्यासत्याविति ।

अस्यार्थः—अद्वैतिमते एकस्य ब्रह्मण एव पारमार्थिकत्वम्, तदन्येषान्तु सर्वेषाम-विद्याकल्पितत्वेनापारमार्थिकत्वमिति वस्तुतो भावभेदाभावेऽपि परमतेन वस्तूनां भेदमा-श्रित्य प्रतिभावमिति वीप्सा । यौ तु प्रतिभावं प्रतिपदार्थं सत्यासत्यौ भावौ व्यवस्थितौ 'सन् घटः, सन् पटः' इत्याद्यनुभवेन निश्चितौ, तत्र यत्सत्यं महासत्तारूपं ब्रह्म सा जातिः । असत्यास्तु अविद्या परिकल्पिता अपारमार्थिका घटपटादयो भावाः सत्यस्य ब्रह्मणः सत्तारूपतया सर्वानुगतस्य व्यञ्जकोपाधिभूता व्यक्तयः स्मृता इति ।

**तत्राप्यभेदस्तत्कारणमित्यन्त्या परा प्रकृतिः सत्या सर्वविकारानुयायिनी प्रशान्त-कल्लोला चिदेकघना ब्रह्मेत्यागमविदः। तदुक्तम्—**

**'पृथिवीधातौ किं सत्यम्, विकल्पः, विकल्पे किं सत्यम्, विज्ञानम्, विज्ञाने किं सत्यम्, ॐ, अथ तद् ब्रह्म।' इति।**

**'प्रतिभावम्' इति। परमतेन वस्तूनां भेदाद् वीप्सा। चित्सामान्यस्य सर्वत्रानुगमादेव महासत्तारूपमभावाप्रतियोगि विश्वस्य जगतः सत्यरूपमवदातदर्शनैः साक्षात्कृत्योपदिष्टम्। प्रमाणं नस्ते भगवन्तः॥ ३२॥**

**इत्थं चात्राद्वयनये परमार्थसत्यैकैव जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन विवर्त्ते व्यवहार इत्याह—**

---

अयं भावः—ब्रह्मविषया ब्रह्माश्रिता जीवाश्रिता वा याऽविद्याऽनिर्वचनीयानादिभावरूपा तत्प्रवृत्त्या समुपजातरूपस्य उत्पादविनाशशीलस्य सर्वपदार्थेषु विशेष्यभागस्य घटपटादिरूपस्यासत्यत्वात् कादाचित्कत्वेन सत्तारूपस्य ब्रह्मणो व्यञ्जकोपाधित्वात् व्यक्तिरिति व्यवहारः व्यज्यते जातिर्ययेति बाहुलकात् करणे क्तिन्। "तदेव हि सत्यं यस्मिंस्तत्त्वं न विहन्यते" इति भाष्यम्।

अस्यार्थः—यस्मिन् सर्वानुगते सत्तारूपे ब्रह्मणि भासमाने सति तत्त्वम्—भावानां घटादीनां स्वरूपम्, न विहन्यते न परस्परस्माद् व्यावृत्तं भवति। सत् इति प्रत्ययस्य सर्वानुगतत्वाद् घटादिप्रत्ययस्य च परस्परं व्यावृत्तत्वात्, तदेव सत्तारूपं ब्रह्म, सर्वेषु घटादिविषयकेषु भेदप्रत्ययेषु अन्वयिरूपम्=अनुगतरूपम् सर्वत्राबाध्यमानं सत्यं जातिरिति अद्वैतिभिर्व्यवहृतम्। तद्यथा—रुचकस्वस्तिककुण्डलप्रभृतयो विकाराः परस्परोपमर्देन जायमानाः कदाचित् रुचकमिति, तदुपमर्दे स्वस्तिकमिति तदुपमर्दे च कुण्डलमिति अस्थिरप्रत्ययगोचरस्वरूपाः। तेषु रुचकादिषु सर्वेष्वपि सुवर्णमित्येव त्वनुगतप्रत्ययविषयीभूतस्वरूपं सत्यम्। एवं सुवर्णापेक्षयाऽपि अभिन्नवस्त्वन्तरविवक्षायां तेज इत्येव सत्यम्। सुवर्णम्, वह्निः, सूर्यः, विद्युद् इत्येवं व्यावर्तमानेष्वपि तेजः प्रत्ययस्य सर्वानुगतत्वात्। तेजस्यपि अभिन्नो भावस्तेजसोऽपि कारणं सर्वभावानुगतो वायुस्तस्याप्यभिन्नं कारणं सर्वानुगतमाकाशं, तस्याप्यभिन्नं कारणं सर्वानुगतं सद्रूपं ब्रह्म इति अन्त्या परा प्रकृतिः सत्या, सर्वविकारानुयायिनी, प्रशान्तसर्वविक्षेपा, चिदेकघनमूर्तिर्ब्रह्मरूपेत्यागमविदः। आगमश्च—तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या अन्नौषधय इत्यादिः। अन्यत्रापि तदुक्तम्—"पृथिवीधातौ किं सत्यम्? विकल्पः, विकल्पे किं सत्यम्? विज्ञानम्, विज्ञाने किं सत्यम्? ॐ-अथ तद् ब्रह्म" इति।

अस्यार्थः—कार्याणां धारणाद् धातुरुपादानकारणम्। घटशरावादीनामुपादानकारणीभूतायां सर्वस्वकार्यानुगतायां पृथिव्यां किं सत्यमिति प्रश्नः। सर्वस्वकार्यानुगतत्वात् पृथिवी सत्या, तस्यामपि किं सत्यमिति प्रश्ने विकल्प इत्युत्तरम्। 'पृथिवी-पृथिवी'

**सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।**
**जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ ३३ ॥**

**वक्ष्यमाणैराश्रयादिभिः स्वसम्बन्धिभिः भिद्यमाना उपचरितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिः। गोत्वाश्वत्वादिकाः, अपरसामान्यम्, नान्या परमार्थभिन्ना सा विद्यते। तथा हि गोः सत्ता गोत्वम्, नापरमन्वयि प्रतिभासते। एवमश्वस्य सत्ता अश्वत्वमित्यादि वाच्यम्। तस्याम् एव च गवादिभेदभिन्नायां सत्ताख्यायां जातौ सर्वे गवादयो डित्थादयश्च शब्दा वाचकत्वेन व्यवस्थिता इत्यसाङ्कर्येण नियतोपाधिवशाज्जात्यभिधायिनः सिद्धाः ॥ ३३ ॥**

**सर्वशब्दविषयत्वमेवाभिव्यनक्ति—**

---

इत्यनुगतः विज्ञानेन विशेषरूपेण कल्पितः पृथिवीमात्रानुगतः पृथिवीत्वजातिरूपो विकल्पः। विकल्प्यत इति कर्मणि घञ्। विकल्परूपे पृथिवीत्वेऽपि किं सत्यमिति प्रश्ने पृथिवीत्वस्य सामान्यस्य विकल्पकं विज्ञानं सत्यमित्युत्तरम्। अत्र विज्ञानं वृत्तिविशिष्टचैतन्यरूपम्। तस्मिन् विज्ञानेऽपि किं सत्यमिति प्रश्ने ओमित्युत्तरम्। ओंकारपदवाच्यं यत् किञ्चित्तदेव विज्ञाने सत्यमित्युत्तराशयः। अथ तत् ओङ्कारपदवाच्यं किमिति प्रश्ने ब्रह्म इत्युत्तरम्। अथ शब्दस्य प्रश्नार्थकत्वात्। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथेत्यमरः। अत्र ब्रह्मपदस्य चैतन्यमर्थः। वृत्तिविशिष्टचैतन्यरूपे विज्ञानेऽपि चैतन्यमेव सत्यम्, वृत्तेरन्तःकरणपरिणामरूपाया जडत्वाद् दृश्यत्वपरिच्छिन्नत्वादिभिर्मिथ्यात्वादिति चित्सामान्यस्य सत्यस्य भातीत्यादिप्रत्ययबलात् सर्वत्रानुगमादेव महासत्तारूपमभावाप्रतियोगि विश्वस्य जगतः सत्यरूपं चिद्रूपं ब्रह्मैवेति तपोविशुद्धदर्शनैर्महर्षिभिस्साक्षात्कृत्यैतदुपदिष्टं। ते च भगवन्तो नः प्रमाणमिति ॥ ३२ ॥

इत्थञ्चात्राद्वैतसिद्धान्ते परमार्थसती एकैव जातिर्महासत्ताख्या परब्रह्मस्वरूपा तस्या एव संबन्धिभेदाद् गोत्वादिजातिभेदेन विवर्ते सति गवाश्वादिव्यवहार इति आह— संबन्धिभेदादिति।

अस्यार्थः—सत्तैव परब्रह्मस्वरूपा गवाश्वादिसंबन्धिभेदाद् गोत्वाश्वात्वादिजातिभेदेन विवर्ते सति गवादिषु भिद्यमाना गोत्वादिजातिरित्युच्यते। तस्यामेव च गवादिभेदभिन्नायां सर्वेषां शब्दानामभिधेयभूतायां सर्वे शब्दा वाचकत्वेन व्यवस्थिता इति।

अयं भावः—"आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिणः।
स्वशक्तयो वा सत्ताया भेददर्शनहेतवः॥" इति।
(वा० का० ३ जाति० ४०)

वक्ष्यमाणैराश्रयादिभिः स्वसंबन्धिभिः स्वगतभेदारोपेण भिद्यमाना गवादिषु सत्तैव महासामान्यमेव गोत्वाश्वत्वादिजातिरूपा अपरसामान्यम् नान्या सत्तातः परमार्थभिन्ना

**तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥ ३४ ॥**

**सर्वभावेषु सद्रूपं सामान्यमनुगतम् । अभावस्यापि बुद्ध्याकारेण निरूपणात्, महासत्तयानयावियोगात् प्रातिपदिकमात्रवाच्या सत्ता । तदुक्तम्—**

**'प्रातिपदिकार्थः सत्ता' इति ।**

**धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्युपगृहीत-नानात्वा सत्तैवाभिधेयत्वमापाद्यते । सिद्धसाध्यरूपार्थद्वयात्मना च तस्या एव वृत्तेस्तदपरराश्यभावात् सर्वशब्दविषयत्वं सत्तायाः । प्रत्ययभागेनाप्यत्र यथायथं सङ्ख्याकारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते । सा चोदयव्ययरहितत्वात् नित्या, सत्प्रत्ययस्य सर्वदानुवृत्तेः । एते सत्तामात्रस्यात्मनो महतः षड् विशेषपरिणामाः, यत् तत्परं विशेषेभ्यो लिङ्गमात्रं महत्तत्वम्, तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय**

---

गोत्वाश्वत्वादिजातिर्विद्यते । तथाहि—गोः सत्तैव गोत्वम्, नापरं गोष्वन्वयि प्रतिभासते । एवमश्वस्य सत्ताऽश्वत्वमित्यादि वक्तव्यम् । तस्यामेव गवादिभेदभिन्नायां सत्ताख्यायां जातौ सर्वे गवादयो डित्थादयश्च शब्दा वाचकत्वेन व्यवस्थितेति असांकर्येण = असामानाधिकरण्येन गोत्वाश्वत्वादिरूपनियतोपाधिवशाज्जात्यभिधायिनः सर्वे शब्दाः सिद्धा इति ॥ ३३ ॥

सत्तायाः सर्वशब्दवाच्यत्वमेवाभिव्यनक्ति—तां प्रातिपदिकार्थमिति ।

अस्यार्थः—ताम्-सर्वभावेषु सद्रूपप्रत्ययेनानुगताम्, अभावस्यापि बुद्ध्याकारविशेषेण सत्त्वेन 'अभावोऽस्ति' इत्येवं निरूपणात् तस्यापि महासत्तयाऽवियोगात्, तत्राप्यनुगताम् । प्रातिपदिकार्थञ्च—सिद्धात्मना सर्वप्रातिपदिकवाच्यामपि, धात्वर्थञ्च-साधनाधीनोत्पत्तिकत्वात् क्रमवत् क्रियारूपोपाधिपरिग्रहेण साध्यात्मना स्थितां सर्वधात्वर्थमपि प्रचक्षते । तदुक्तमभियुक्तैः—'प्रातिपदिकार्थः सत्ता' इति साधनाधीनलब्धजन्मसु तत्तत्क्रियाव्यक्तिषु समवेतत्वेन क्रमवत् तत्तत्क्रियारूपोपाध्युपगृहीतभेदा सत्तैव ब्रह्मरूपा साध्यात्मना प्रतीयमाना धातुभिरप्यभिधीयते ।

तदेवं सिद्धसाध्यार्थराश्यपरार्थराश्यभावात् सर्वशब्दवाच्यत्वं सत्ताया एव । सा चोत्पत्तिविनाशरहितत्वात् नित्या । सर्वेषु भावेषु सत्प्रत्ययस्य 'आसीत्, अस्ति, भविष्यति' इत्येवं रूपेण सर्वदाऽनुवृत्तेः सा-सत्तैव सांख्यानां महानात्मा-महत्तत्वपदवाच्या सर्वेषां भावनां जन्मलयाधिष्ठानत्वात्, तस्यैवापरब्रह्मरूपत्वात् । तदुक्तमभियुक्तैः—मनो मतिर्महान् ब्रह्मा' इति । परस्यैवोपहितस्यापरब्रह्मरूपत्वात् । ताम्-सत्तामेव गवाश्वादिषु संबन्धिभेदात् गोत्वाश्वत्वादिरूपेण भिद्यमानां त्वतलादयो भावप्रत्यया आहुरिति ।

अयं भावः—यथा त्वतलादयो भावप्रत्ययाः सत्तामेवाहुस्तथा सुप्तिङ्विभक्तिरूपाः

**विवृद्धिकाष्ठामनुभवन्ति। प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत् तन्नि:सत्तासत्तं नि:सदसदव्यक्तमलिङ्गं तस्मिन् प्रतियन्तीत्येवं साङ्ख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमित्यतोऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात् सत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः साङ्ख्यनयेनाप्युपबृंहितः। एवं च सर्वशब्दवाच्या सत्ता शब्दप्रवृत्तिनिमित्तभूतेति यथायथं भिन्नोपाधिभिर्भावप्रत्ययाभिधेया सैव। नन्वेवं गोत्वमिति प्रकृतिप्रत्यययोरेकार्थताप्रसङ्गः। नैतत्। उपाधिभेदेन सत्ताया भेदात्। प्रातिपदिकेन गवाश्रयायास्तस्या अभिधानम्, प्रत्ययेन तु निष्कृष्टाश्रयस्य सामान्यस्याभिधेतेत्यदोषः। प्रकृत्यर्थनिमित्तश्च भावप्रत्ययभेद इति न साङ्कर्यप्रसङ्गः॥ ३४॥**

**यदुक्तम्—**

**'तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते' ( वा० का० ३, जाति० ३४ ) इति।**

**एतदेवोपपादयितुमाह—**

---

नामधातुनिदानभूताः क्यजादयः, कृतस्तद्धिता अपि तामेवाहुः। तथाहि—सुप्तिङन्तलक्षणेषु पदेषु प्रत्ययभागेनापि यथायथं संख्याकारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते। कृत्तद्धितप्रत्ययार्थास्तु नामार्था एव। एवं नामधातुनिदानप्रत्ययार्था अपि धात्वर्था एवेत्येवं सर्वेषां प्रत्ययानामपि सत्तैवार्थ इति सर्वशब्दवाच्यत्वं सत्तायाः। किञ्च अहंकारस्तन्मात्राणि पञ्चैते षट्सत्तामात्रस्यात्मनो महतो बुद्धितत्त्वस्य विशेषपरिणामाः। एते च यत्तद्विशेषेभ्यः परं लिङ्गमात्रम्—अद्वैतिभिः सूक्ष्मशरीरमित्याख्यातं समष्टिरूपं महत्तत्त्वम्। तस्मिन् सत्तामात्रे महत्यात्मनि सर्गकालेऽवस्थाय विवृद्धिकाष्ठामनुभवन्ति। प्रलीयमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मनि अवस्थाय यत्तन्नि:सत्तासत्तं, नि:सदसद्— सत्तासत्ताभ्यां रहितम्, सद्रूपत्वमसद्रूपत्वञ्चातिक्रान्तम्, अव्यक्तम् नामरूपशून्यत्वात्, अलिङ्गम् कस्याप्यकार्यत्वात्, तस्मिन् प्रलीयन्ते इत्येवं सांख्यशास्त्रे बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमित्यतोऽनन्तरेऽहंकारादिविकारग्रामे कारणरूपेण महतोऽनुगमात् सत्तारूपत्वमविरुद्धमिति। सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः सांख्यनयेनाप्युपबृंहितः। तदुक्तं पञ्चदश्याम्—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥ इति।

एवञ्च धातुप्रातिपदिकप्रत्ययरूपाणां सर्वेषां शब्दानां वाच्या सत्ता सर्वशब्दप्रवृत्तिनिमित्तभूतेति यथायथं गवादिव्यक्तिविशेषरूपभिन्नोपाधियुताऽभिन्नाऽपि भिन्ना सती तत्तद्भावप्रत्ययाभिधेया भवति।

नन्वेवं गोत्वमित्यादौ प्रकृतिप्रत्ययाभ्यामुभाभ्यामपि एकस्याः सत्ताया एवाभिधाने प्रकृतिप्रत्यययोरेकार्थताप्रसङ्ग इति चेन्नैतत्। तत्तद्वाच्यायाः सत्ताया उपाधिभेदेन

**प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते ।**
**क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ।। ३५ ।।**

**क्रियावाची धातुः सत्त्ववाचितामेति। गीयते क्रियासत्त्वे च सत्तैव। तथाहि—साधनपरिस्पन्दवशात्क्रियाणां व्यक्तिस्थानीयानां विशेषशब्दवाच्यानां पौर्वापर्ये तद्गतापि जातिस्तथात्वेन प्रतिभासत इति सैव सक्रमा क्रिया सकलधातुविषया। तस्या एवावान्तरो धात्वर्थभेद इत्यनन्तरमेव वक्ष्यते। साधनसम्पर्कहेतुकप्रतायमानरूपापरामर्शे सत्तैव सत्त्वं द्रव्यमित्युच्यत इति सिद्धसाध्यरूपो द्विधा विवर्तः सन्मात्ररूपस्य परस्य ब्रह्मणः प्रतिपादितः। तदेव हि सर्वत्रानुगतम्। न चात्र दर्शने सद्भ्यः सत्ता व्यतिरिक्ता भावत इति सर्वं तन्मयम्। ततश्च सर्वशब्दानां सत्ता-**

---

भेदात्। तथाहि—गोप्रातिपदिकेन गवाश्रयायाः = गोवृत्तित्वविशिष्टायाः सत्ताया अभिधानम्। तदुत्तरभावप्रत्ययेन तु निष्कृष्टाश्रयस्य = निष्कासिताश्रयस्य केवलस्य सत्तारूपस्य सामान्यस्याभिधानमित्यदोषात्। किञ्च सर्वप्रकृतिसाधारणस्थायिभावप्रत्ययस्य तदर्थस्य च प्रकृतितदर्थनिमित्तकोऽपि भेद इति न गोत्वाश्वत्वपदयोर्भावप्रत्ययस्यैकार्थत्वरूपसांकर्यप्रसङ्गो दोष इति ।।३४।।

यदुक्तम्—'तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते' इत्येतदेवोपपादयितुमाह—प्राप्तक्रमेति।

अस्यार्थः—विशेषेषु = पाकादिक्रियाया विशेषेष्वधिश्रयणाद्यधःश्रयणान्तादिषु स्थिता, अतएव तासां पौर्वापर्यरूपक्रमवत्त्वेन प्राप्तक्रमा = आरोपलब्धक्रमा, सैव—सत्तैव, क्रिया—पाकादिक्रिया, आख्यातसमभिव्याहृतेन धातुनाऽभिधीयते। भावकृत्प्रत्ययसमभिव्याहारे तु पाकः, पचनम्, पक्तिरित्यादावधिश्रयणादिक्रियाणां क्रमरूपस्य संहारे = विनाशे अदर्शने, तत् = सत्ता। सत्त्वम्—द्रव्यमिति कथ्यते। तदुक्तम्—कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति। अत्र 'तत्सत्त्वम्', 'सा सत्त्वम्' इति द्वयमपि वक्तुं शक्यते। यदुक्तमभियुक्तैः—'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनामपर्यायेण तत्तल्लिङ्गभाग्' इति। अत्र प्रतिनिर्दश्यं विधेयमिति।

अयं भावः—तिङ्विभक्तिसमभिव्याहारे क्रियावाची धातुर्भावकृत्प्रत्ययसमभिव्याहारे सत्त्ववाचिताम् = द्रव्यवाचकत्वम् एति। सत्तैव च प्रागुक्तरीत्या तत्तत्प्रत्ययसमभिव्याहारे क्रिया सत्त्वञ्च यथायथं गीयते। तथाहि—कर्तृकर्मादिसाधनानां प्रतिनियतव्यापारवशात् पचत्यादौ क्रियाणामधिश्रयणाद्यधःश्रयणान्तादीनां व्यक्तिस्थानीयानां प्रकृते विशेषशब्दवाच्यानां पौर्वापर्येण जन्मनि सति तद्गता सत्ताजातिरपि तथात्वेन = पौर्वापर्यरूपक्रमवत्त्वेन प्रतिभासत इति सत्तैव सक्रमा सती सकलधातुवाच्या क्रिया। तस्या एवावान्तरो धात्वर्थभेदः पाकादिरित्यनन्तरमेव वक्ष्यते। ततःसाधनसम्पर्कात् पौर्वापर्येण

**वचनत्वाज्जातिपदार्थव्याप्तिः। यद्यपि च द्रव्यपदार्थेऽपि ब्रह्मद्रव्यस्याभिधानमुपाधिभेदभिन्नस्य वक्ष्यति, तथापि तात्पर्यभेदादवस्थाभेदः। जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पः। अयमेव च पक्षद्वयेऽप्येकपक्षीभावरूपः सिद्धान्तः परमार्थदृष्ट्या। अत्र सर्वपार्षदत्वात्पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः। एष च सर्वत्रैवास्य ग्रन्थकारस्याभिप्रायः पदार्थचर्चाविषये, ब्रह्मदर्शननयेनैव संबन्धादिविचारे विनिगमनात्॥ ३५॥**

**इदानीं समग्रः क्रियाकलापः सत्ताविवर्त एवेति निरुक्तकारमतेन संवादमाह—**

---

संतन्यमानरूपाणामधिश्रयणाद्यधः श्रयणान्तादीनां क्रियाणामपरामर्शे पाकत्वादिना रूपेण तत्समुदायस्यैव परामर्शे सति अलब्धक्रमा सिद्धस्वभावा सत्तैव सत्त्वं द्रव्यमित्युच्यत इति सन्मात्ररूपस्य परस्य ब्रह्मणः सिद्धसाध्यरूपो द्विधा विवर्तः शास्त्रेषु प्रतिपादितः। तदेव हि सन्मात्ररूपं ब्रह्म सर्वेषु भावेषु अनुगतं सामान्यम्।

न चात्र सद्ब्रह्माद्वैतदर्शने सद्भ्यो भावेभ्यः सत्ता व्यतिरिक्ता भावतः = स्वभावतः स्वरूपतः इति सर्वं सन्मयमस्ति, प्रतीयते च। ततश्च सर्वशब्दानां सत्तावचनत्वाज्जातिपदार्थवाचकत्वस्य तेषु व्याप्तिः = पर्याप्तिः। यद्यपि च द्रव्यपदार्थवादेऽपि घटपटादिरूपद्रव्योपाधिभेदभिन्नस्य ब्रह्मरूपस्य सन्मात्रस्वरूपस्यैकस्यैव द्रव्यस्याभिधानं पदैरिति वक्ष्यतीति न द्रव्यपदार्थवादेऽपि कश्चिद् दोषस्तथापि जातिपदार्थवादिनां द्रव्यपदार्थवादिनाञ्च तात्पर्यभेदात् सिद्धसाध्यरूपोऽवस्थाभेद एकस्यैव ब्रह्मणः पदैरुच्यत इति न पक्षद्वयेऽपि कश्चन दोषः।

तथाहि—जातिपदार्थनये सत्तारूपजात्यात्मना सर्वत्रानुगतरूपं ब्रह्मपदार्थत्वेन विवक्षितम्। द्रव्यपदार्थनये तु परमार्थत्वेन सदा परिनिष्ठितरूपम् = परिनिष्पन्नरूपम्, सिद्धस्वरूपम् सन्मात्ररूपं तत्तद्द्रव्यरूपोपाधिभेदाभिन्नं ब्रह्मैव पदार्थत्वेन विविक्षितमिति एकस्यैव ब्रह्मणः सिद्धसाध्यरूपावस्थाभेदेन जातिः पदार्थः, द्रव्यं पदार्थ इति दर्शनविकल्पः। एकस्य ब्रह्मण एव सन्मात्ररूपत्वात्सत्तामात्ररूपत्वाच्च अयमेव पक्षद्वयेऽपि (जातिः पदार्थः, द्रव्यं पदार्थ इति पक्षद्वयेऽपि) एकपक्षीभावरूपः (ब्रह्मैव पदार्थ इत्येकपक्षीभावरूपः) परमार्थदृष्ट्या सिद्धान्तो ग्रन्थकर्तुः। यद्यप्यत्र शब्दार्थसंबन्धानां द्वैतमादायैव प्रवृत्ते व्याकरणेऽद्वैतदर्शनस्योपन्यासो नोचितस्तथापि अस्य शास्त्रस्य सर्वदर्शनपार्षदत्वादत्राद्वैतदर्शनोपन्यासः कृतः। सर्वत्रैव पदार्थचर्चाविषये अद्वैतदर्शनमेव सिद्धान्त इत्येष एव चाभिप्रायो ग्रन्थकारस्य लक्ष्यते। शब्दार्थसंबन्धानां विचारे तत्र-तत्र ब्रह्मदर्शननयेनैव ब्रह्माद्वैतसिद्धान्तेनैव विनिगमनात् = पक्षस्योपसंहरणादिति॥ ३५॥

इदानीं सामान्यरूपो विशेषरूपश्च समग्रोऽपि क्रियाकलापः सत्तारूपस्य ब्रह्मणो नित्यस्याविकारिणो विवर्त एवेति निरुक्तकारमतेन सह जातिपदार्थवादस्य संवादमाह—सैवेति।

सैव भावविकारेषु षडवस्थाः प्रपद्यते ।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते ॥ ३६ ॥

'षड् भावविकारा भवन्तीति ह स्माह भगवान् वार्ष्यायणिः' ( नि० १।२।८ ) इति निरुक्तकारः । तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य जन्मादयो विकारा इत्यर्थः । सन्मात्रस्वभावा हि सत्तोत्तरोत्तरविकारापत्तौ—

'जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति' ( नि० १।२।९ ) इति व्यपदेशमासादयति । प्रथमतरं च सन्मात्रं रूपमस्तिशब्देन नाभिधीयते, अपितु जन्मोत्तरकालभावी तस्या अवस्थाविशेषः । जन्मानन्तरभावि हि रूपं तस्या लोके सदिति व्यवहार्यम् । ततः प्राकपश्चाद्भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्याः । तथा हि—स्वशक्तिमाहात्म्यात्पूर्वं जायत इत्यवसीयते, पश्चादस्तीति । अवस्थितस्य विकारापत्तिरिति विपरिणमते । तच्च विपरिणमन्मुहूर्तमपि नावतिष्ठत

---

अस्यार्थः—सैव = सत्तैव, भावविकारेषु = भावस्य परमार्थरूपस्य सत्तात्मकस्य, विकारेषु=जन्मादिषु उत्तरोत्तरक्रमेण जायमानेषु सत्सु, जन्मादिरूपाः षडवस्थाः प्रपद्यते= प्राप्नोति । न केवलं षडवस्थाः प्रपद्यतेऽपितु 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतिसिद्धाभिः स्वाभिः शक्तिभिः क्रमेणैवैवं जन्मादिमत्त्वेन प्रतिभासतेऽपीति ।

अयं भावः—'षड्भावविकारा भवन्तीतीह स्माह भगवान् वार्ष्यायणिः' इति निरुक्तकारः । तत्र 'भावविकारा' इत्यस्य भावस्य परमार्थरूपस्य सत्तात्मकस्य जन्मादयः षड्विकारा इत्यर्थः । सन्मात्रस्वभावा हि सत्ता प्रतिनियतेन पौर्वापर्यरूपेण क्रमेण जन्मादिषड्विकारापत्तौ—"जायतेऽस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति" इति व्यपदेशं प्रपद्यते ।

ननु षड्भ्यो भावविकारेभ्यः प्रथमतरं विद्यमानमपि सत्तायाः सन्मात्रं रूपमस्ति—शब्देन नाभिधीयते, किन्तु जन्मोत्तरकालभावी तस्या अवस्थाविशेषः । किञ्च जन्मानन्तरभावि तस्या रूपं लोके सदिति व्यवह्रियते । ननु ततः प्रथमतरं विद्यमानं रूपम्, ततः सत्तारूपाया अवस्थायाः प्राक् पश्चाद् भाविन्यस्तु अवस्था जन्मविपरिणामादिरूपेण व्यवह्रियन्त इत्यत्र को हेतुरित्याशंक्याह–क्रमेण शक्तिभिः स्वाभिरिति । घटाद्युपहिता सत्ता स्वशक्तिमाहात्म्यात् पूर्वं जायते इत्येवावसीयते, पश्चादस्तीति । अवस्थितस्य च भावस्य कालेन विकारापत्तिर्भवतीति विपरिणमते इति व्यपदिश्यते । तच्च भावरूपं विपरिणमन् मुहूर्तमपि अविपरिणम्य नावतिष्ठत इति वर्धते । यावदनेन वर्धितव्यम् ततो मुहूर्तमपि अनवस्थानादेवापक्षीयते ।

अत एवोक्तम्—'ततोऽपायेन युज्यते' इति । अत्रापायोऽपक्षयः । ततोऽप्यनवस्थानादेव विनाश इत्येवं भावविकाराणां क्रमस्थितिः । तथा च सन्मात्ररूपाया नित्या-

**इति वर्धते यावदनेन वर्धितव्यम्, ततोऽपक्षीयते मुहूर्त्तमप्यनवस्थानादेव। अत एवोक्तं—**

'ततोऽपायेन युज्यते' इति। (म० भा० १।४।५१)

**ततोऽपि विनाश इत्येवं क्रमस्थितिः। एवंभूतास्तस्याः काश्चन शक्तयो विद्यन्ते येनैकैव सती तथा तथा विचित्रेण रूपेण प्रतिभासते। न च परिणतिदर्शनाभिप्रायेणायं विकारशब्दः, अनित्यत्वप्रसङ्गात्, अपि तु विवर्त्तपर्यायोऽयम। तथा हि—सर्वशक्त्यात्मभूतत्वाद् ब्रह्मणोऽनेकविकारप्रदर्शनसामर्थ्यलक्षणा अविद्याख्या शक्तिः कार्यभेदादुपचरितनानात्वा समस्तीत्यागमविदः। इत्थं च स्वाभिरेव शक्तिभिरव्यतिरिक्ताभिर्जन्मादिरूपतया अविद्यायामाभासते। तदेव ब्रह्म सर्वभावेषु समानरूपं सत्तात्मकमन्यस्य तद्व्यतिरिक्तस्याभावादित्येषोऽत्रार्थः॥ ३६॥**

**यदि तर्हि स्वशक्तिमाहात्म्याज्जन्मादिरूपतया सत्तैवावभासते, कथं न युगपदवभासः। क्रमेणेति कथम्? न हि क्रमो नाम कश्चित्क्रियाविशेष इत्याशङ्क्य कालाख्यापि शक्तिर्ब्रह्मण एवेत्याह—**

---

यास्तस्या = सत्तायाः, काश्चन शक्तयः सन्ति येनैकैव सती जायतेऽस्ति इत्यादिना विचित्रेण रूपेण प्रतिभासते। प्रकृतकारिकायां 'भावविकारेषु' इत्यत्र विकारशब्दः परिणामवादाभिप्रायेण न प्रयुक्तः। तथा सति कूटस्थब्रह्मरूपायाः सत्तायाः परिणामित्वेन मृदादिवदनित्यत्वप्रसङ्गात्। किन्त्वत्र विवर्तपर्यायो विकारशब्दः। तथाहि—ब्रह्मणस्तादात्म्येनाध्यासिकेन सर्वशक्तिमत्त्वादनेकविकारप्रदर्शनसामर्थ्यलक्षणाऽविद्याख्या शक्तिः कार्यनानात्वेनारोपितनानात्वास्ति इति औपनिषदाः। एवञ्चाविद्यायां सत्यां व्यवहारकाले सत्तारूपमविकारमपि ब्रह्मभेदाभेदाभ्यामनिर्वाच्याभिः स्वाभिरेव शक्तिभिर्जन्मादिरूपतयाऽऽभासते। तदेव ब्रह्म सर्वभावेषु मृषात्मसु सुसमानरूपं सत्तात्मकं समनुगतमस्ति, येन सर्वे भावा मिथ्याभूता अपि सत्त्वेन प्रतीयन्ते। तद्व्यतिरिक्तस्य वस्तुनोऽभावादित्येषोऽत्रार्थोऽभिप्रेतो ग्रन्थकृत इति॥ ३६॥

ननु यदि सत्तैव स्वशक्तिमाहात्म्याज्जन्मादिरूपतयाऽवभासते तदा कथं न तस्यास्तत्तद्रूपैर्युगपदवभासः, क्रमेणैव तस्यास्तत्तद्रूपैरवभासः कथम्। नहि क्रमो नाम कश्चिद् जन्मादिवद् विक्रियारूपः क्रियाविशेषः, क्रमस्य धातुवाच्यत्वाभावेनाक्रियात्वादित्याशंक्य क्रमरूपा कालख्यापि शक्तिर्ब्रह्मण एवेत्याह-आत्मभूत इति।

अस्यार्थः—क्रमोऽपि = अवान्तरक्रियाणां पौर्वापर्यरूपः क्रमोऽपि, अस्याः = ब्रम्हरूपायाः सत्तायाः कालशक्तिरूपतयाऽऽत्मभूतः शक्तिशक्तिमतोरभेदात्। यत्र-क्रमे इदम् शास्त्रप्रसिद्धम्, तीर्थिकानाम् = शास्त्रकाराणाम्, कालदर्शनं पौर्वापर्यादिरूपेण प्रविभक्तमिव कालस्य—भगवच्छक्तिरूपस्यैकस्य वस्तुतोऽप्रविभक्तत्वेऽपि प्रविभक्तक्रियारूपोपाधिवशात् प्रविभक्तत्वम्।

**आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम् ।**
**पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् ॥ ३७ ॥**

**योऽयं क्रियाणां क्रमः सोपि आत्मभूतोऽस्याः सत्तायाः । न केवलं ताः क्रिया एव, क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासञ्चेतनात् । यत्र क्रमे इदं कालदर्शनम्, कालं नाम पदार्थान्तरं तीर्थिकाः पश्यन्ति पौर्वापर्यादिरूपेण प्रविभक्तम् । कालस्य प्रविभक्तत्वाद्दर्शनमपि प्रविभक्तमित्युक्तम् । तात्पर्येण तु कालः पौर्वापर्यादिरूपेण प्रविभक्त इव क्रियोपाधिवशात् । क्रमाख्या हि कालशक्तिः ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणावभासोपगमविधायिनी नापरो द्रव्यभूतः काल इति;**

**'अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ ( वा० का० १, ३ )**

**इत्यत्र शब्दप्रभायां निर्णीतोऽयमर्थः ॥ ३७ ॥**

**ननु च जन्मनाशाववस्तुत्वात्कथं सत्तात्मकौ स्यातामित्याशङ्क्य नाशस्य तावत्सत्तात्मकत्वमुपपादयति—**

---

एवं कालस्य प्रविभक्तत्वे तद्विषयकदर्शनस्यापि प्रविभक्तत्वमादाय कालदर्शनमपि प्रविभक्तमित्युक्तम् । इव शब्दप्रयोगस्तु कालस्य कालदर्शनस्य वा वस्तुतः प्रविभक्तत्वाभावमभिप्रेत्य स्थितम्–'शास्त्रे लोके च निश्चितमिति' ।

अयं भावः–न केवलं ताः क्रिया एव (जन्मादिविक्रियारूपाः तत्तद्धात्वर्थभूताऽवान्तरक्रिया एव च) अस्याः सत्तायाः आत्मभूताः, किन्तु योऽयं तासां क्रियाणां पौर्वापर्यादिरूपः क्रमः सोऽपि अस्या आत्मभूतः, क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासञ्चेतनात् = अननुभवात् । एवञ्च 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेन क्रमस्य तद्वतीनां क्रियाणाञ्च सत्तात्मभूतत्वं सिद्धम् । यत्र क्रमे इदं कालदर्शनम् पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् । कालं नाम पदार्थान्तरं तीर्थिकाः = नैयायिकादयः पश्यन्ति, कालस्यैकस्यापि क्रियारूपोपाधिवशात् पौर्वापर्यादिरूपेण प्रविभक्तत्वाद् दर्शनमपि प्रविभक्तमिव स्थितमित्युक्तम् । क्रमाख्या हि कालशक्तिर्ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारैव पौर्वापर्येण तदवभासप्राप्तिविधायिनी, न त्वपरो द्रव्यभूतः कालोऽस्ति इति—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ ( वा० का० १, ३ )

इत्यत्राम्बाकर्त्र्यां निर्णीतोऽयमर्थ इति विरम्यते ॥३७॥

ननु 'जायतेऽस्ति' इत्यादीनां षण्णां भावविकाराणां प्रागुक्तानां त्रिष्वेव जन्मस्थितिभङ्गेष्वन्तर्भावः । तथाहि—वृद्धेर्जन्मन्येवान्तर्भावः, विपरिणामापक्षययोस्तु विनाशे ।

**तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।**
**लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥ ३८ ॥**

**अनपायोपजनविकारित्वान्नित्या ब्रह्मात्मिका सत्ता निरन्वयविनाशासहेत्यभावो नाम न भावाद् व्यतिरिक्तः । केवलं प्रागूर्ध्वं च तिरोभावमात्रं भावाभावस्य यदस्माभिरभ्युपगम्यते सैव नास्तिता कथ्यते । सत्त्वैव तिरोभूता स्वकारणेषु शक्तिरूपतयावस्थिता वस्तूनां नाशो न तु निरुपाख्योऽसौ । समस्तेषु च भावेषु तिरोभूतेषूपसंहृतक्रमः सिद्धरूपः तिरोभावो 'नाश' इत्यादिनामपदप्रत्याख्यः । यत्र तु सैव नास्तिता तिरोभावावस्था साधनसम्पर्कवशात्प्रतायमानस्वभावा विवक्षिता तदाख्यातपदप्रत्याख्या । पूर्वावस्था 'अपक्षीयते' इत्युच्यते, तदुत्तरा तु 'विनश्यति' इति । द्वौ भावविकारौ प्रतियोग्यपरिणामलक्षणौ । तत्र च भवनधर्मणो भावस्याभवनविरोधात्तिरोभावमात्रं विनाशः ॥ ३८ ॥**

**एवं सत्ताप्रतियोगिनोऽपि प्रथमं तद्विकारत्वमवस्थाप्य जन्मनस्तद्विकारत्वं व्याचष्टे—**

---

एवञ्च स्थितेः सत्तात्मकत्वसंभवेऽपि जन्मनाशौ अवस्तुत्वात् कथं सतात्मकौ स्याताम् । तथाहि—अद्वैतवादे सकलोऽपि प्रपञ्चो मायापरिणामत्वात् स्वरूपेण कारणात्मना चावस्तुभूत इति तस्य जन्मनाशावपि अवस्तुभूतौ । ब्रह्मणस्तु स विवर्त इति कारणात्मना सतोऽपि तस्य जन्मनाशौ अवस्तुभूतौ । तदुक्तं गीतासु—

'नासतो विद्यते भावो नाभावो विद्यते सतः' । इति ।

अत्र भावो भवनं जन्म, अभावो विनाश इति । अत्र भावाभावौ स्वेतरस्योपलक्षणे । एवं जन्मनाशयोरवस्तुत्वात् सत्तात्मकत्वाभावमाशंक्य नाशस्याभावरूपत्वेनाभिमतस्य सत्तात्मकत्वं दुरुपपादं मत्वा प्रथमं तदेवोपपादयति तिरोभावाभ्युपगम इति ।

अस्यार्थः—अद्वैतवादे सत्तारूपब्रह्मरूपकारणात्मना सकलोऽपि प्रपञ्चः सद्रूप इत्येवमस्ति सत्कार्यवादः । एवञ्च भावानां कारणात्मना सतां निरन्वयविनाशासम्भवेन तिरोभावाभ्युपगमे सैव = कारणे तिरोभाव एव, तेषां नास्तिता । सा च तिरोभावरूपा नास्तिता संहृतक्रमा सिद्धरूपा नाशादिनामपदप्रत्याय्या । तेषां तिरोभावे लब्धक्रमे तु साधनसम्पर्कवशात् क्रमवति तु नश्यतीत्याख्यातपदात् तिरोभावरूपा नास्तिता प्रतीयत इति ।

अयं भावः—ब्रह्मस्वभावा सत्ता नित्या, अनपायोपजनविकारित्वात् । अपायोऽपक्षय इति प्राग्व्याख्यातम् । उपजनो जन्म, उपेत्यस्य जनेरनधिकार्थकत्वात् । अत एवोक्तं भाष्ये—'आगमश्च नामापूर्वः शब्दोपजनः' इति । विकारपदेन च तदितरे चत्वारो विकारास्तद्रहितत्वात् । एवञ्च सा निरन्वयविनाशासहा निरन्वयः = स्वकारणे सर्वथा संबन्धा-

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ।। ३९ ।।

कारणे शक्तिरूपेणावस्थानाख्यात्पूर्वधर्मात्प्रच्युता, धर्मान्तराभिव्यक्तिप्रगुणां निष्ठाम् अप्राप्ता सत्ता, गृहीतक्रमा कार्याभिमुखोत्तरोत्तरोत्तरावस्थाविशेषमासादयन्ती जायत इति व्यपदिश्यते, न त्वसत एवोत्पादो जन्म । तद्यथा न सतोऽत्यन्तं विनाशः, तथा जन्मापि नाभूतपूर्वस्याविर्भावः । एतच्च—

नाभावो जायते भावो नैति भावोऽनुपाख्यताम्' ( वा० का० ३ सं० ६१ )

इत्यादिना प्रकटयिष्यति । अत एव चावस्थामात्रत्वात्कार्यकारणयोरभेदाद्यथाविवक्षं जनिक्रियाकर्तृत्वोपपत्तिः 'अङ्कुरो जायते' इत्यादौ । एतच्च निपुणतरं कारकसमुद्देशे वक्ष्यते । पूर्वापरावस्थान्तरालवर्त्तिक्षणपरम्पराक्रमविवक्षायां च जनिक्रियान्वयो न परिनिष्ठावस्थायाम् । तथा च वक्ष्यति—

---

भावः, तद्रूपस्य विनाशस्यासहा इत्यभावो नाम न भावाद् व्यतिरिक्तः । तदुक्तं बाह्यैरपि—"भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्" इति ।

एवञ्च भावानामाविर्भावात् प्राक् स्थितेश्चोर्ध्वं यद्भावावभासस्य तिरोभावमात्रमस्माभिरभ्युपगम्यते सैव नास्तिता अभावः कथ्यते । सत्तैव स्वकारणेषु तिरोभूता शक्तिरूपतयाऽवस्थिता वस्तूनां नाशो, न तु निरुपाख्यः = निःस्वरूपत्वेनाभिलप्यः असौ । भावेषु च समस्तेषु तिरोभूतेषु = सर्वात्मना तिरोभूतेषु उपसंहृतक्रमः सिद्धरूपस्तिरोभावो 'नाश' इत्यादिनामपदप्रत्ययाश्रयः । यदा तु सैव तिरोभावावस्थारूपा नास्तिता साधनसंपर्कात् पौर्वापर्येण संतन्यमानस्वरूपा विवक्षिता तदा नश्यतीत्याद्याख्यातपदप्रतिपाद्या । तत्रापि तिरोभावस्य पूर्वावस्था 'अपक्षीयते' इत्युच्यते तदुत्तरा तु 'विनश्यति' इति द्वौ भावविकारौ भावानां प्रातिलोम्येन परिणामरूपौ, इतरे त्वानुलोम्येन । तत्र च भवनधर्मणो भावस्याभवनविरोधात् तिरोभावमात्रं तस्य विनाशो, न तु निरन्वयोऽभाव इति ।।३८।।

एवं सत्ताप्रतियोगिनोऽपि = सत्ताविरोधिनोऽपि विनाशस्य तद्विकारत्वम् = सत्ताविकारत्वम् प्रथममवस्थाप्य जन्मनस्तद्विकारत्वं व्याचष्टे—पूर्वस्मात् प्रच्युतेति ।

अस्यार्थः—कारणे शक्तिरूपेणावस्थाननामकात् पूर्वस्माद् धर्मात् प्रच्युता धर्मान्तरस्य —सत्ताऽतिरिक्तस्य घटत्वादिधर्मस्य अभिव्यक्तौ प्रगुणाम् = अनुकूलाम् उत्तरोत्तरावस्थाविशेषरूपक्रमनिष्ठाम् = तादृशक्रमावसानम् अप्राप्ता सत्ता, तदन्तराले तयोः = पूर्वधर्मोत्तरपदयोर्मध्ये, भेदानाम् कार्याभिमुखोत्तरावस्थाविशेषाणामाश्रयणाद् गृहीतक्रमा जन्म कथ्यते, जन्मपदेन व्यपदिश्यते । नत्वसत एवोत्पादो जन्मेति ।

अयं भावः—यथा सतो नात्यन्तं विनाश (निरन्वयो विनाशः) न याऽऽविर्भावरूपं

'पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम् ।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ इति ।
( वा० का० ३ सा० ११८ )

उत्तरावस्थायाश्च पूर्वावस्थासु समारोपात्कर्तृत्वम् । व्यापृतं हि कारकं निरूपयन्तो जायत इति व्यवहरन्ति । निष्ठायां पुनरस्तीति जन्मोत्तरकाला सत्ता व्यपदिश्यते । ततोऽपि धर्मान्तराविर्भावोन्मुखतायां विपरिणमते । तत्रापि वृद्धौ वर्धत इति जन्मविशेषा एवैतेन पृथगुपात्ताः । तदयमानुलोम्यपरिणामः । तदेवं सत्त्वैव

---

जन्माऽपि नाभूतपूर्वस्य । एतच्च–'नाभावो जायते भावो नैति भावोऽनुपाख्यताम्' इत्यादिना व्यक्तीकरिष्यति ।

अस्यार्थः—स्वोत्पत्तेः प्राक् अभावरूपो घटादिर्भावरूपो न जायते । एवं सति वन्ध्यापुत्रादीनामपि जन्मप्रसङ्गात् । उत्पत्त्यनन्तरञ्च भावरूपो घटादिर्मुद्गरपातादिना निमित्तेनानुपाख्यातम्—निरन्वयविनाशरूपतां निःस्वरूपता प्रध्वंसाभावरूपां नैति, भावस्वभावताविरोधात् । न ह्यग्निः पूर्वं शीतः, पश्चादुष्णः ततः शीत इति संभवति । अतएवोक्तं गीतास्वपि—'नासतो विद्यते भावो नाभावो विद्यते सतः' इति । अतएव च सर्वस्यापि भावस्य व्यक्तावस्था कार्यम्, अव्यक्तावस्था च कारणमित्यभ्युपगमेनोपादानोपादेययोरभेदाद् विवक्षामनुसृत्य यवादिरङ्कुरो जायत इत्यादावङ्कुरस्य जनिक्रियाकर्तृत्वोपपत्तिरद्वैतिनां सांख्यानां च संमते सत्कार्यवाद एव सिध्यति; न तु नैयायिकवैशेषिकाभिमते अत्यन्तासत्कार्यवादे । स्वोत्पत्तेः प्रागसतोऽङ्कुरादेः कार्यनियतपूर्वसत्त्वरूपकारणत्वानुपपत्त्या तद्विशेषरूपकर्तृत्वानुपपत्तेः । एतच्च निपुणतरं साधनसमुद्देशे उपपादयिष्यते । स्वोत्पत्तेः प्राक् कारणात्मना सतोऽप्यङ्कुरादेः पूर्वधर्मात्प्रच्यवोत्तरपदाप्राप्तिरूपप्रागुक्तपूर्वापराऽवस्थाऽन्तरालवर्तिक्षणपरम्परारूपक्रमसंबन्धविवक्षायाञ्च कर्तृत्वेन जनिक्रियान्वयो, न तु परिनिष्ठावस्थायाम् = न तु परिनिष्पन्नत्वरूपसिद्धत्वदशायाम् । तथा चाग्रे वक्ष्यति—

पूर्वावस्थामविजहत् संस्पृशन् धर्ममुत्तरम् ।
सम्मूर्छित इवार्थात्मा जायमानोऽभिधीयते ॥ इति ।
( वा० का० ३ सा० ११८ )

अस्यार्थः—कारणे शक्तिरूपेणावस्थानरूपां पूर्वावस्थामंशतोऽविजहत्, उत्तरञ्च धर्मं परिनिष्पन्नरूपमंशतः संस्पृशन् संमूर्छित इव पूर्वोत्तरावस्थाभ्यां संलग्न इव, जायमानस्य भावस्यावस्थाद्वयेन सह कात्स्न्येन संबन्धाभावादिव शब्दप्रयोगः । अर्थात्मा—भावस्वरूपम्, जायमानोऽभिधीयत इति । न चात्र पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदमिति वदतः, अग्रे च पूर्वावस्थामविजहत् संस्पृशन् धर्ममुत्तरमिति वदिष्यतो ग्रन्थकृतः पूर्वापरविरोध इति वाच्यम् । प्रच्युता इत्यस्य प्रच्योतुमारब्धा इत्यर्थः । आदिकर्मणि

**क्रियाविवर्त्तान्वयिनी। षण्णामेव ह्यपरः क्रियाभेदः सर्वधातुविषयः। तत्रैव च सिद्धरूपतायां द्रव्यता। सिद्धिर्हि निष्पत्तिरिति क्रियापूर्वभाविनो नात्यन्तमर्थान्तरभूता ॥ ३९ ॥**

**अथ यदुक्तम्—**

**'संबन्धिभेदात्सत्तैव भिद्यमाना' इति,**

**( वा० का० ३ जा० ३३ )**

**तदिदानीं संबन्धिनः प्रदर्शयितुमाह—**

---

निष्ठा। अप्राप्ता इत्यस्य चांशतः प्राप्तावपि कार्त्स्न्येनाप्राप्ता इत्यर्थः, एवमर्थकरणेनादोषात्।

न च ब्रह्मस्वरूपभूतायाः सत्ताया निरंशत्वेन नायमर्थो युज्यत इति वाच्यम्। भावरूपोपाधिगतस्यांशवत्त्वस्य सत्तायामविद्ययाऽध्यारोपसंभवात्। किञ्चाङ्कुरपदवाच्याया उत्तरावस्थायाः पूर्वावस्थाविशिष्टे अङ्कुरे समारोपादङ्कुरस्य जनिक्रियाकर्तृत्वमुपपद्यते। तथाहि पूर्वावस्थाविशिष्टम्, उत्तरावस्थां प्राप्तुं व्यापृतमङ्कुरादिकारकं वीक्षमाणा जना अङ्कुरो जायत इति व्यवहरन्ति। निष्ठायां तु प्राप्तायाम्, क्रमसमाप्तिरूपायां परिनिष्पन्नावस्थायां तु प्राप्तयाम्, जन्मोत्तरकाला भावस्य सत्ताऽस्तीति व्यपदिश्यते। ततोऽप्यनन्तरं भावस्य धर्मान्तराविर्भावोन्मुखतायां विपरिणमत इति व्यपदेशः। तत्रापि वृद्धौ वर्धत इत्येवं जन्मविशेषा एव जायते, अस्ति, वर्धते इत्येतैर्व्यपदेशैः पृथगुपात्ता इति हेलाराजेनोक्तम्। तत्तु चिन्त्यम्—स्थितेर्जन्मत्वासंभवात्। अतएव जन्माद्यस्य यत इति वेदान्तसूत्रे—जन्मादि-जन्मस्थितिभङ्गमिति जन्मनः स्थितिं पृथक्कृत्य त्रयो भावविकाराः श्रीशङ्करभगवत्पादैरुक्ताः।

यद्वा विपरिणामं बुद्धिविषयीकृत्य हेलाराजीये—एते इति बहुवचननिर्देशः। तदयं जायते, अस्ति, वर्धते इति भावस्यानुलोम्येन परिणामः। सर्गानुगतत्वाद् विपरिणमतेऽपक्षीयते विनश्यतीत्ययं तु प्रातिलोम्येन परिणामः, सर्गप्रतिकूलत्वात्।

तदेवं ब्रह्मरूपं सत्तासामान्यमेव पाकादिक्रियारूपेषु स्वविवर्तेषु अनुगता। अत्र हेलाराजीये "षण्णामेव हि अपरः क्रियाभेदः सर्वधातुविषयः" इत्युक्तम्। तस्यायमर्थः—षण्णामेव हि भावविकाराणां संबन्धी षड्भावविकारान् क्रमेण प्राप्नुवन् इति यावत्। अपरः—सत्तारूपात् क्रियासामान्याद् भिन्नः, पाकादिरूपः क्रियाविशेषः सर्वधातुवाच्य इति। वस्तुतस्तु 'सन्मात्रमेव ह्यपरः क्रियाभेदः सर्वधातुविषय' इति पाठो युक्तः। एवं सति हेत्वर्थकस्य हि शब्दस्य सार्थक्यात्।

तथाहि—यतः सत्तैव क्रियाविवर्तान्वयिनी अतः सर्वधातुविषयोऽपरः क्रियाभेदः सन्मात्रमेव इत्यर्थस्य युक्तत्वात्। पाकादिक्रियात्वेन च क्रमोपसंहारेण सिद्धरूपतायां सत्यां द्रव्यता भावकृदन्तपाकादिशब्दप्रतिपाद्या। सिद्धिर्हि निष्पत्तिरिति पूर्वभाविनी परिनिष्प-

**आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिणः ।**
**स्वशक्तयो वा सत्ताया भेददर्शनहेतवः ।। ४० ।।**

**क्रियाद्रव्ययोः सत्तात्मकत्वप्रतिपादनात् तद्व्यतिरेकेण वस्त्वन्तराभावाद् यद्यपि सर्वं सत्तात्मकपरब्रह्ममयम्, तथापि व्यवहारेऽविद्याप्रवृत्तिरूपे यथावभासं भेदस्यासत्यस्यानपह्नवनीयत्वाद् द्रव्यादिसत्ताश्रयः प्रविभागोऽयमविरुद्धः। तत्र आश्रयः सत्तायाः स्वाधारः व्यञ्जकत्वात्, भेददर्शनस्य भेदावभासस्य न तु भेदस्यैव स्वतोऽभेदात् हेतुः। तद्यथा—एकमपि मुखं तैलोदकादर्शमणिकृपाणादावनेकरूपमवभासते। एवं व्यञ्जकानां गवादीनां भेदात्सत्ता गोत्वाश्वत्वादिरूपतयावभासत इत्यर्थः। स्वात्मीया वा मात्राः कलाः परिकल्पिता भागा अंशा गोत्वादिसामान्यविशेषाः परिच्छिन्नविषयाः सर्वविषयायाः सत्तायाः विच्छिन्नावभासतां दर्शयन्ति,**

---

न्नरूपाऽपि पाकादिक्रिया परिनिष्पद्यमानपाकादिक्रियातो नात्यन्तमर्थान्तरभूतेति एकैव पाकादिक्रियासिद्धसाध्यत्वरूपाभ्यां तत्तत्प्रत्ययसमभिव्याहारे सर्वधातुवाच्येति ॥३९॥

अथ यत् 'संबन्धिभेदात् सत्तैव भिद्यमाना गवादिषु' इति सत्तायाः संबन्धिभेदाद् भिद्यमानत्वमुक्तम् तदेवेदानीं संबन्धिनः प्रदर्शयितुमाह—आश्रय इति।

अस्यार्थः—तत्र आश्रयः=सत्तायाः स्वाधारः, व्यञ्जकत्वात् सत्ताया भेददर्शनस्य हेतुः, न तु भेदस्य, सत्तायाः स्वतोऽभेदात्। स्वात्ममात्रा वा=स्वात्मीया वा मात्राः कलाः परिकल्पिता भागा अंशा गोत्वादिसामान्यविशेषाः परिच्छिन्नविषयाः सर्वविषयाः सत्ताया भेददर्शनस्य हेतवः, व्यतिरेकिणः=अविद्यया परिकल्पितभेदाः, देशकालेन्द्रियादयो भावा वा सत्ताया भेददर्शनस्य हेतवः, सत्तायाः स्वशक्तयो वा विश्वप्रपञ्चरचनानुकूलाः सत्ताया भेददर्शनहेतव इति।

अयं भावः—यद्यपि क्रियाद्रव्ययोः सत्तात्मकत्वं प्राक् प्रतिपादितम्, क्रियाद्रव्यव्यतिरेकेण च जगति वस्त्वन्तराभावः। सांख्यानुसारि वैयाकरणनये गुणजात्यादीनामपि द्रव्यमात्रात्मकत्वादिति सर्वं सत्तात्मकपरब्रह्ममयमिति कुतः संबन्धिभेदः, कुतो वा तत्प्रयुक्तः सत्ताभेदः, तथाप्यविद्याप्रवृत्तिरूपे व्यवहारे भेदावभासेन भेदस्यासत्यस्यानपलपनीयत्वात् परस्परं भिद्यमान-द्रव्यादिसत्तानिष्ठः प्रतीयमानः प्रविभागः=भेदोऽविरुद्धः। तत्र सत्ताया आधारस्तस्या व्यञ्जकत्वात्तस्याभेददर्शनस्य हेतुः। तद्यथा—एकमपि मुखं तैलोदकादर्शमणिकृपाणादौ स्वव्यञ्जकोपाधौ एकमप्यनेकरूपमवभासते। एवं स्वव्यञ्जकानां गवादीनां भेदात् सत्ता गोत्वाश्वत्वादिरूपतया भेदेनावभासते। स्वात्मीया वा मात्राः परिकल्पिता भागा गोत्वादिसामान्यविशेषाः सत्ताया भेददर्शनहेतवः। ते च गोत्वाश्वत्वादिसामान्यविशेषा आश्रयाणां परस्परं भेदादेव स्वस्वाश्रयेभ्यः स्वेषु परिकल्पितभेदाः सन्तः सत्ताया भेददर्शनहेतवः। तथा च—"सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता" इति गोत्वादिभिः सत्ताभेदं वक्ष्यति। अस्य श्लोकार्धस्यार्थः। गवादिपदै-

**येन तैरेव सा विच्छिन्नेवाविच्छिन्नाप्यवभासते। ते चाश्रयभेदादेव ततः परिकल्पित-भेदाः। तथा च—**

**'सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता'। इति।**

**गोत्वादिभिः सत्ताभेदं वक्ष्यति। दृष्टश्च स्वांशैरेव परिकल्पितैर्भेदावभासः। तद्यथावयविनः। आत्मा परोऽपि संभवति कल्पनानिर्मितेन भेदेनेति स्वग्रहणेन विशेष्यते स्वश्चासावात्मा चेति। दृष्टश्च काल्पनिको भेदः यथा 'हन्त्यात्मानमात्मना' इति। न ह्यात्मव्यतिरिक्तो हन्ता कश्चित् प्रत्यवभासते। अर्थान्तरत्वेनावभासमाना वा देशकालेन्द्रियादयो भेददर्शनहेतवः सत्तायाः। इहेदानीमिदमन्यत्रान्यदान्यदिति देशादिनिमित्तो वस्तुभेदः। तथा देशासत्तिविप्रकर्षकृतोऽन्यथावभासो वस्तूनाम्। यथाहुः—**

**'दूरे यथा वा मरुषु महानल्पोऽपि दृश्यते'। इति।**

**तथा रात्रौ नीलोत्पलानामन्यथावभासः, अन्यथाहनीति कालकृतो भेदः। तथा काचकामलाद्युपहतनयनानां शुक्ले शङ्खे पीतावभास इति इन्द्रियनिमित्तो**

---

गोत्वादिसामान्यान्यभिधीयन्ते, तैर्गोत्वादिभिर्विशेषिता आश्रयान्तरेभ्यो भेदिता सत्ता वाऽभिधीयत इति। दृष्टश्च लोके स्वांशैरेव परिकल्पितैर्भेदावभासः। यथाऽवयविनः। यद्यपि 'स्वात्ममात्रा वा' इत्यस्य स्थाने 'आत्ममात्रा वा' इत्येव वक्तुमुचितम्, लाघवात् स्वपदस्य वैयर्थ्याच्च। तथापि—आत्मापरोऽपि संभवति कल्पनानिर्मितेन भेदेनेति स्वग्रहणेन विशेष्यते। स्वश्चासावात्मा चेति कर्मधारयः। सर्वेषां स्वरूपभूतो य आत्मा सत्तारूपस्तदीया मात्रेति तदर्थः। दृष्टश्च काल्पनिक आत्मभेदो लोकेऽपि। यथा—हन्त्यात्मानमात्मनेति। नह्यात्मव्यतिरिक्तो हन्ता कश्चित् प्रतीयते। व्यतिरेकिणः=सत्ताऽपेक्षयाऽर्थान्तरत्वेन अवभासमाना वा भावा देशकालेन्द्रियादयः सत्ताया भेददर्शनहेतवः। इहेदानीमिदमिति, अन्यत्रान्यदाऽन्यदिति च प्रतीतिद्वयसिद्धो देशादिनिमित्तो वस्तुभेदः। तथा देशस्यासत्तिविप्रकर्षाभ्यामपि वस्तूनामन्यथावभासो भवति। यथाहुः—'दूरे यथा वा मरुषु महानल्पोऽपि दृश्यते' इति। यथा वा मरुषु अल्पोऽपि दूरे महान् दृश्यत इति योजना। तथा तमसावृतायां रात्रौ नीलोत्पलानां गाढनीलत्वेनावभासः। ज्योत्स्नावत्यां तु रात्रौ श्वेतत्वेनावभास इति। तथा च कवयश्चन्द्रिकायां काकमपि श्वेतं वर्णयन्ति। 'क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते इति'। अहनि तु नीलोत्पलानामन्यथावभासो नीलत्वेनेति कालकृतो वस्तुभेदः। तथा काचकामलाद्युपहतनयनानां शुक्ले शंखे पीतावभास इति इन्द्रियकृतो वस्तुभेदः। तथा च देशकालेन्द्रियादयो वस्तुभेदं द्वारीकृत्य तद्गतसत्ताया भेददर्शनहेतव इत्यायातम्।

ननु गाघटादिवस्तुगतसत्ताया देशकालादयो भेदका गोघटादिकवस्तु भेदयन्त इत्युक्तम्, देशादिगतसत्तायाश्च के भावा भेदका इति प्रश्ने, यदि गोघटादीनि वस्तूनि देशकालादिभेदनद्वारा इत्युच्यते तदेतरेतराश्रयतेति चेन्न। देशादिगताया अपि सत्तायाः

**भेदः। देशादावपि च सत्तायाः संबन्धिनोऽन्ये भेदका इति विषयभेदान्नेतरेतराश्रयता। तथा चायमत्र परमार्थः—आत्मीया एव शक्तयो योग्यताख्यास्सत्तायास्तथाविधाः सन्ति याभिर्विश्वप्रपञ्चं रचयति। तद्यथा चिन्तामणिरर्थिनां यथाशयमाकारनानात्वमुद्दर्शयति तथानन्तशक्ति सन्मात्रं ब्रह्म अविद्याविलसितसहं सांसारिकप्रमातृविषये नानारूपं चकास्तीत्यन्ते वस्तुसतत्त्वमुद्घाटितम् ॥ ४० ॥**

**इत्थं च दर्शनान्तरोपन्यासपूर्वकं स्वदर्शने जातिपदार्थव्यवस्थामुपपाद्य व्यवहारे भिन्नाया गोत्वादिजातेर्यथासंभवं स्वगतो धर्मश्चर्च्यते—**

---

संबन्धिभूताद् देशादेरन्ये देशादयो भेदका इति विषयभेदान्नेतरेतराश्रयता। तथा चायमत्र परमार्थः। स्वशक्तयो वा सत्ताया भेददर्शनहेतव इति। अत्र वा शब्द एवकारार्थे। वा स्याद् विकल्पोपमयोरेवार्थेऽपि समुच्चय इत्यमरः। तथा च ब्रह्मस्वरूपभूतायाः सत्ताया आत्मीया एव शक्तयः श्रुत्यादिसिद्धा योग्यताख्यास्तथाविधाः सन्ति याभिर्विश्वप्रपञ्चं रचयति, ता एव तस्या भेददर्शनहेतवः। तद्यथा—चिन्तामणिरर्थिनामभिप्रायमनुसृत्य स्वशक्त्यैव सङ्कल्पिततत्तद्वस्त्वाकारेण विपरिणतस्वाकारनानात्वमुपदर्शयति, तथाऽनन्तशक्तिसन्मात्रं ब्रह्म अविद्याख्यस्वशक्तिविलसितविश्वमविरुन्धत्, तयैव शक्त्या प्रकल्पितनानारूपं सांसारिकप्रमातृप्रमाविषये चकास्तीत्यन्ते 'स्वशक्तयो वा' इत्यनेन वस्तुस्वरूपमुद्घाटितं ग्रन्थकृतेति ॥ ४० ॥

एवं जातिविषये दर्शनान्तरोपन्यासपूर्वकं ब्रह्मदर्शनानुयायिनि स्वदर्शने जातिपदार्थव्यस्थामुपपाद्य परमार्थतः सत्तारूपत्वेनाभिन्नाया अपि व्यवहारे संबन्धिभेदाद् भिन्नाया गोत्वादिजातेर्यथासंभवं स्वगतो धर्मश्चर्च्यते—पृथिव्यादिष्विति।

अस्यार्थः—पृथिव्यादिषु भावेषु वर्तमाना प्रतीयमाना च पृथिवीत्वादिजातिः स्वाभिव्यक्तौ स्वाश्रयस्य संस्थानमवयवसंयोगविशेषं निमित्तत्वेन नापेक्षते। अवयवसंस्थानस्य पृथिवीत्वजात्याश्रयेऽननुगतत्वात्। तथाहि—लोष्टोऽपि पृथिवीरूपेण प्रतीयते, मृत्समूहोऽपि, घटोऽपि पर्वतोऽपि इत्यादि। तथा च कस्याश्चिज्जातेः स्वाभिव्यक्तौ संस्थानापेक्षत्वम् यथा गोत्वघटत्वादिजातेः, कस्याश्चिन्नेति स्वभावसिद्धो धर्मः। किञ्च जातेरनुच्छिन्नाश्रयात् अनुच्छिन्नस्य = वर्तमानस्याधिकरणस्याश्रयणादनित्येऽपि आश्रये जातिः स्थिता। यथा गोत्वघटत्वादिजातिः। पृथिवीत्वादिजातिस्तु नित्येषु परमाणुषु अनित्येषु च गोघटादिषु स्थिता। तथा च जातेर्वर्तमानाश्रयत्वं स्वभावः, तच्च वर्तमानत्वं कालविशेषावच्छिन्नं तदनवच्छिन्नं वा भवत्वित्यत्रानास्था। किञ्चानेन ग्रंथेन जातेराश्रयविनाशमनुविनाशित्वाभावोऽपि स्वभावः सिद्धः। यतो जातिरुच्छिन्नेऽप्याश्रये वर्तमानमाश्रयान्तरमाश्रित्य तिष्ठतीत्यर्थस्य तदेवेदं गोत्वमिति प्रत्यभिज्ञाप्रत्ययसिद्धत्वात्।

अयं भावः—पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियतावयवरचनापेक्षा एव महति परमिते चाश्रये अभिव्यज्यन्ते। यथा समुद्रोऽपि बिन्दुरपि चोदकत्वेन

पृथिव्यादिष्वभिव्यक्तौ न संस्थानमपेक्षते ।
अनुच्छिन्नाश्रयाज्जातिरनित्येऽप्याश्रये स्थिता ॥ ४१ ॥

पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियतावयवरचनानपेक्षा एव महति परिमिते चाश्रयेऽभिव्यक्तिमासादयन्ति । तथा हि—लोष्टोऽपि पृथिवीरूपेण प्रतीयते, मृत्समूहोऽपि घटोऽपि पर्वतोऽपीत्यादि । एवं समुद्रोऽपि बिन्दुरपि चोदकत्वेन प्रतीयत इत्यादि वाच्यम् । क्वचित्तु गोत्वादिका सालत्वतालत्वादिका च जातिः संस्थानमभिव्यक्तौ नियतमपेक्षत एवेत्यर्थादुक्तं भवति । तथा समवेतत्वेऽपि न गुणवदाश्रयविनाशाज्जातिर्विनश्यति । घटादौ गुणा ह्याश्रयप्रतिबद्धोदयाः युक्तं यदाश्रयविनाशमनु विनश्येयुः । जातीनां त्वाश्रयप्रतिबद्धो नात्मलाभः । केवलं प्रतीतावाश्रयमपेक्षन्ते ताः । एकव्यक्तिविनाशेऽपि च तदन्यत्रानुगतसंविदन्यथानुपपत्तेरनुमितिसद्भावाज्जातिः समवस्थितैवेति अनुच्छिन्नाश्रयात् आश्रयादुच्छेदोऽस्या नायाति, आश्रयोऽस्या नोच्छेदहेतुरित्यर्थः । आश्रयश्च विनश्यन्नुच्छेदहेतुः संभाव्यत इति नाश्रयविनाशादस्या विनाश इत्यर्थः । तृतीयार्थे वा पञ्चमी । आश्रयेण सह न विनश्यतीत्यर्थः ॥ ४१ ॥

ननु महाप्रलयेऽनित्यानां सर्वेषां विनाशादाश्रयाभावे कथं जातयोऽवतिष्ठेरन् इत्याह—

---

प्रतीयते । क्वचित्तु गोत्वादिकासालत्वतालत्वादिका च जातिः स्वाभिव्यक्तौ नियतं संस्थानमपेक्षत एवेत्येषोऽर्थः पूर्वार्थानुपपत्त्या लभ्यते । किञ्च यद्यपि घटत्वादिजातिरनित्येषु आश्रयेषु समवेता तथापि नाश्रयविनाशाद् गुणवद् विनश्यति, गुणवैषम्यात् । घटादौ गुणा हि आश्रयप्रतिबद्धोदयाः ( अत्र प्रतिबन्धो व्याप्तिः उदिताश्रयव्यापकोदयाः अत्र व्याप्यव्यापकभावश्च कालिकसामानाधिकरण्येन ) इति युक्त आश्रयविनाशमनु तेषां विनाशः । जातीनां त्वाश्रयप्रतिबद्धो नात्मलाभः, नित्यत्वात् । केवलं स्वप्रतीतौ निमित्तत्वेनाश्रयमपेक्षन्ते ताः । एकगोव्यक्तिविनाशेऽपि च ततोऽन्यत्र गौरित्यनुगतसंविदन्यथाऽनुपपत्तिमूलकानुमितिसद्भावादाश्रयान्तरे गोत्वजातिः समवस्थितैवेत्यभिप्रेत्य अनुच्छिन्नाश्रयादित्युक्तम् । अत्र अनुच्छिन्ना आश्रयादिति पदच्छेदो हेलाराजस्याभिमतः । व्याख्यातं ह्येत्थं तेन "अनुच्छिन्नाश्रयाद् = आश्रयादुच्छेदोऽस्या नायाति, आश्रयोऽस्या-नोच्छेदहेतुरित्यर्थः । आश्रयश्च विनश्यन्नुच्छेदहेतुः संभाव्यत इति नाश्रयविनाशादस्या विनाश इत्यर्थः । तृतीयार्थे वा पञ्चमी । आश्रयेण सह न विनश्यति इत्यर्थ इति । अत्र हेलाराजोक्ते प्रथमपक्षे आश्रयपदस्य विनश्यदवस्थाश्रये लक्षणा । द्वितीयपक्षे च तृतीयार्थे साहित्येऽप्रामाणिकी पञ्चमीति तदुक्तं व्याख्यानद्वयमपि चिन्त्यम् । मदुक्ते व्याख्याने दोषाभावादिति ॥ ४१ ॥

**अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते ।**
**न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिताः ॥ ४२ ॥**

**एके इति । य आधारं विना तासामवस्थानमन्ते नेच्छन्ति त आश्रयोच्छेदो नास्त्येवेत्याहुः । तथा हि—**

**'न कदाचिदनीदृशं जगत्' इति ।**

**वदन्तो महाप्रलयस्याभावमिच्छन्तः परमाणुत्वादिजातिवद् घटत्वादिजातीनामाश्रयोऽनुच्छेद्यः सर्वथोच्छेत्तुमशक्य इत्याहुः । तथा च सदैव व्यवस्थिता जातयः कस्यचिदाश्रयस्यापायेऽप्यपराश्रयवृत्तित्वादिति नित्यत्वसिद्धिः । अथवा पृथिव्यादौ विनष्टेऽपि पार्थिवादिपरमाणुषु पृथिवीत्वादयो विश्राम्यन्ति, तद्गतेषु च रूपादिषु, रूपत्वादयः । आदिसर्गवत् युगपत्सर्वभावप्रलयो नास्तीत्यस्मिन्मते व्यवस्थिता एक इति समन्वयः । एवं एकस्मिन्नपि ब्रह्माण्डे युगपत्सर्वभावानां प्रलयो नास्तीति दर्शनाश्रयेणोक्तम् । यद्वा ब्रह्माण्डान्तरे विनष्टेऽपि ब्रह्माण्डान्तरस्य संभवाद्युगपत्प्रलयो नास्ति । तथा चाहुः—**

**अण्डानामीदृशानां तु परिसंख्या न विद्यते । इति ॥ ४२ ॥**

**ये तर्हि महाप्रलयमिच्छन्ति तन्मते कथमित्याह—**

---

ननु महाप्रलये सर्वेषामनित्यानां विनाशादाश्रयाभावे तद्गता जातयः कथमवतिष्ठेरन् इत्याशङ्क्याह—अनुच्छेद्याश्रयामिति ।

अस्यार्थः—ये सर्वस्य भावस्य प्रलये यौगपद्यं न, खण्डप्रलये तस्मिन्नेव ब्रह्माण्डे भावान्तरस्य तज्जात्याश्रयस्य महाप्रलये ब्रह्माण्डान्तरे च तस्य सत्त्वादिति व्यवस्थितास्त एके सर्वां जातिमनुच्छेद्याश्रयाम्—अनुच्छेद्यः सर्वथा उच्छेतुमशक्य आश्रयो यस्यास्तां प्रचक्षते ।

अयं भावः—येऽन्ते = भावविनाशे आधारं विना जातीनामवस्थानं नेच्छन्ति ते जातीनामाश्रयोच्छेदो नास्त्येवेत्याहुः । तथाहि—मीमांसकाः—'न कदाचिदनीदृशं जगद्' इति वदन्तोऽनीश्वरवादिनो जगत्सर्गस्येव महाप्रलयस्याभावमिच्छन्तः परमाणुत्वादि जातिवद् घटत्वादिजातीनामाश्रयोऽनुच्छेद्यः = सर्वथोच्छेत्तुमशक्य इत्याहुः । यद्यप्यत्र हेलाराजीये परमाणुत्वस्य जातित्वमुक्तं तथापि परमाणुत्वं सखण्डत्वान्न जातिः किन्तु पारिमाण्डल्यरूपं परमाणुपरिमाणं गुण इति नैयायिकैर्वैशेषिकैश्चोच्यते । तथा च सदैव व्यवस्थिता जातयः कस्यचिदाश्रयस्यापायेऽप्यपराश्रयवृत्तित्वादिति तासां नित्यत्वसिद्धिः । अथवा पृथिव्यादौ विनष्टेऽपि पार्थिवादिपरमाणुषु पृथिवीत्वादयो विश्राम्यन्ति तद्गतेषु च रूपादिषु रूपत्वादयः । यथा सर्गोऽनादिरीश्वरानङ्गीकारात् इत्यादिसर्गो नास्ति, तथा ईश्वरानङ्गीकारादेव युगपत्सर्वप्रलयो नास्तीति दर्शनाश्रयेणेदमुत्तरार्धमुक्तम् । यद्वा

**प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।**
**द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः ।। ४३ ।।**

**एकत्वमभेदं मूलप्रकृत्या प्रधानेन सह परब्रह्मणा वा ये पश्यन्ति जगतः, तेषां मते सर्वथा भावप्रपञ्चस्य निरन्वयविध्वंसाभावान्महासामान्यरूपे तत्र परस्मिन्मूलकारणे प्रविलयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं स्वजातियोगस्तदानीमविरुद्ध एवेति द्रव्यात्मना जातीनां तदानीमपि सत्त्वम्, द्रव्यादर्थान्तराभावात् । अत एव सत्त्वमित्येव वक्तव्ये द्रव्यग्रहणं द्रव्यादभिन्नत्वं बोधयितुम् । यद्वा—द्रव्यं मूलकारणम्, तत्र सत्त्वं तस्य वा यत्सत्त्वम्, कारणसत्तामवलम्बन्त इत्यर्थः । अद्वैतिनां हि कारणमेवानुगतं सामान्यम् । द्रव्यशब्दो वा वस्तुपर्यायः । तेन द्रव्यसत्त्वं वस्तुन एव विद्यमानत्वं मुख्यं सत्त्वम्, न तूपचरितं साधारणमेव, शक्तिरूपतयावस्थानादित्यर्थः । वैशेषिकदर्शने तु निराधारा एव घटत्वादिजातयो महाप्रलय आसते । न हि गुरुत्वादधःपतनमासां मा भूदित्याधारः, अभिव्यक्तिमात्रे तस्योपयोगात् । तदानीं चानभिव्यक्ता एव आसताम्, को विरोधः ? । शास्त्रकारस्तु स्वसिद्धान्तेनैव निगमितवान् ।। ४३ ।।**

**एवं व्यक्तिसर्वगतत्वं सामान्यानामाश्रित्योक्तम् । इदानीं सर्वसर्वगतत्वनयेनाप्याह—**

---

ब्रह्माण्डानामसंख्येयत्वाद् ब्रह्माण्डान्तरे विनष्टेऽपि ब्रह्माण्डान्तरस्य सद्भावाद् युगपत् सर्वभावप्रलयो नास्ति ।

तथा चाहुः—'अण्डानामीदृशानान्तु परिसंख्या न विद्यते' इति । एतद् ब्रह्माण्डसदृशसंस्थानानामण्डनाम् = ब्रह्माण्डानाम् परिसंख्या-गणना न विद्यत इति तदर्थ इति ।। ४२ ।।

ये तर्हि अद्वैतिनोऽन्तर्यामिब्राह्मणप्रामाण्याद् व्यावहारिकमीश्वरमभ्युपगच्छन्त आदिसर्गवद् महाप्रलयमपीच्छन्तः सर्वस्य प्रलये यौगपद्यमिति व्यवस्थितास्तन्मते महाप्रलये आश्रयाभावात् कथं जातयोऽवतिष्ठेरन् इत्याशंक्याह—प्रकृताविति ।

अस्यार्थः—भेदेषु = भूतेषु भौतिकेषु च कार्यरूपेषु विशेषेषु महाप्रलये प्रकृतौ, परिणामवादे स्वोपादानभूतायां मायायां, विवर्तवादे परस्मिन् ब्रह्मणि वा प्रविलीनेषु भावप्रपञ्चस्य निरन्वयविनाशे पुनरुद्गमाभावापत्तिभिया कारणे प्रविलयमात्रमेव महाप्रलयमवाप्तेषु सत्स्वेकत्वदर्शिनाम् = तदानीं जगत्कारणीभूतब्राह्मद्वैतदर्शिनां मते स्वाश्रया एव = स्वसत्तैव सन्मात्ररूपं द्रव्यं सर्वस्योपादानं सामान्यमाश्रिता एव सर्वा गोत्वघटत्वादिका जातयो द्रव्यसत्त्वम् = सन्मात्रद्रव्यरूपेण सत्त्वम् = विद्यमानत्वम् । यद्वा द्रव्यं मूलकारणं ब्रह्म, तत्र सत्त्वं तस्य वा यत्सत्त्वं तत्प्रपद्यन्ते, मूलकारणसत्तां सन्मात्रद्रव्यस्वभावामालम्बत इत्यर्थः ।

ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इत्यपि स्मृताः ॥४४॥

भवन्ति सर्वत्रेति भावाः ब्राह्मणत्वक्षत्रियत्वादयः सामान्यविशेषाः । ते प्राणिषु पिण्डेषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः । तथापि च 'ब्राह्मणमालभेत' इत्यादौ न सांकर्यप्रसङ्गः, यस्मात्सर्वगतत्वेऽपि प्रतिनियताभिव्यञ्जकव्यङ्ग्या इति प्रतीतस्य क्रियाङ्गत्वात् यत्रैवाभिव्यक्तिमासादयन्त्युपदेशादिना व्यञ्जकेन तत्रैव स्वकार्य-सम्पादका इत्यविच्छिन्नागमपारम्पर्येण स्मर्यते । यथा सर्वगतत्वं पारम्पर्यागतं तथा प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपीत्यर्थः ॥ ४४ ॥

एवं च प्रलये घटत्वादिजातयः परमाण्वादिष्ववस्थिता इति प्रकरणसामर्थ्या-दुक्तं भवति । आदिग्रहणेन ह्यचेतनजातीनामपि सर्वगतत्वमत्र विवक्षितम्, चेतन-जातयोऽप्यचेतनेष्ववस्थिता इति पूर्णं सर्वगतत्वमाह—

---

अयं भावः—जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिसिद्धया चिदाभासवत्या मूलप्रकृत्या प्रधानेश्वरादिपदवाच्यया सह परिणामवादे ये जगत एकत्वमभेदं पश्यन्ति, विवर्तवादे तु परेण ब्रह्मणा सह तस्य येऽभेदं पश्यन्ति तेषा-मेकत्वदर्शिनां मते सर्वथा भावप्रपञ्चस्य निरन्वयविनाशाभावात् सत्तारूपमहासामान्यरूपे तत्र परस्मिन् मूलकारणे प्रकृत्युपहिते ब्रह्मणि प्रविलयमात्रं महाप्रलय इति तदानीं शक्तिरूपतया स्थितेषु पदार्थेषु यथायथं स्वस्वजातियोगस्तदानीमविरुद्ध एवेति परब्रह्म-रूपद्रव्यात्मना जातीनां तदानीमपि सत्त्वम्, सद् ब्रह्मरूपद्रव्यादर्थान्तराभावात् । अतएव 'तदा सत्त्वं प्रपद्यन्ते' इत्येव वक्तव्ये द्रव्यादभिन्नत्वं भावानां तद्गतानां जातीनाञ्च बोध-यितुमत्र द्रव्यपदमुपात्तम् । एवञ्च 'द्रव्यसत्त्वं प्रपद्यन्ते' इत्यस्य मूलकारणीभूतब्रह्मरूपां सत्तामवलम्बन्त इत्यर्थः । अद्वैतिनां मते हि विश्वस्य मूलकारणं सन्मात्रं ब्रह्मैव सर्वानु-गतं सामान्यम् । अथवा द्रव्यशब्दो वस्तुपर्यायः । वस्तु च ब्रह्मैव 'अतोऽन्यदार्तम्' इति श्रुत्याऽन्यस्यावस्तुत्वश्रवणात् । तेन द्रव्यस्य वस्तुन एव विद्यमानत्वं मुख्यं सत्त्वं प्रपद्यन्ते, न तूपचरितम्, सर्वभावेष्वारोपितत्वेन साधारणं व्यावहारिकमेव सत्त्वं तदानीं तेषामस्ति। तेषां तदानीं शक्तिरूपतयाऽवस्थानात् । वैशेषिकदर्शने तु निराधारा एव घटत्वादिजातयो महाप्रलय आसते । तैर्भावानां निरन्वयविनाशस्य शाक्यसिद्धान्त इवाभ्युपगमात् । नहि गुरुत्वादधःपतनं जातीनां माभूदित्युपयोग आधारस्य तैरुपेयते, जातेरभिव्यक्तिमात्रे तस्योपयोगाभ्युपगमात् । अतो महाप्रलयेऽनभिव्यक्ता एवानाधारा जातय आसतां को विरोधः । ग्रन्थकारस्तु ब्रह्मदर्शनानुसारि स्वसिद्धान्तेनैव महाप्रलये शक्तिरूपेण जाति-सत्त्वमुपसंहृतवान् इति ॥४३॥

एवं सामान्यानां व्यक्तिसर्वगतत्वम् = व्यक्तिरूपं-व्यञ्जकरूपं यत्सर्वं तद्गतत्व-

**चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते ।**
**प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः ॥४५॥**

**आलेख्यनिर्मिते पुस्तकर्मणा दार्वादिना वा कृतेऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदय इति तत्रापि तज्जातिप्रकाशः । प्राण्युपघातात्पुनरधर्म इति चित्र-**

---

माश्रित्योक्तं प्राक् । इदानीं सर्वसर्वगतत्वनयेन = सर्वव्यक्त्यव्यवितरूम्, व्यञ्जकाव्यञ्जकरूपम्, यत्सर्वं तद्गतत्वं सामान्यानामिति नयेनाप्याह—ब्राह्मणत्वादय इति ।

अस्यार्थः—ब्राह्मणत्वादयः = ब्राह्मणत्वक्षत्रियत्ववैश्यत्वादयः, बह्वृचत्वकठत्वादयश्च येषां व्यञ्जकं न प्रत्यक्षं किन्तु आप्तोपदेशादिरूपं ते भावाः = भवन्ति वर्तन्ते सर्वत्रेति भावाः सर्वत्र वर्तमानाः सामान्यविशेषाः सर्वप्राणिषु सर्वेषु पिण्डेषु समानसंस्थानेषु अवस्थितत्वात् सर्वगता अपि यत्रैव पिण्डविशेषे उपदेशादिनाऽभिव्यक्तास्तत्रैव स्वकार्याणाम् ब्राह्मणमालभेत' इत्यादिना विहितानामालम्भनादीनां साधका नान्यत्र इत्यपि स्मृतिः = अविच्छिन्नागमपारम्पर्येण शिष्टानां स्मरणमिति ।

आयं भावः—यद्यपि ब्राह्मणत्वादयो बह्वृचत्वकठत्वादयश्च समानसंस्थानसर्वपिण्डगतास्तथापि—"सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" इत्यादिमन्वाद्युक्त्यनुसारेण शिष्टलोकप्रसिद्ध्या च ब्राह्मणाद् ब्राह्मण्यां जातत्व-साक्षात् परम्परया वा बह्वृचकठादिशाखाध्येतृप्रभवत्वादिरूपप्रतिनियताभिव्यञ्जकाभिव्यङ्ग्या इति स्थिते प्रतीतस्यैव = अभिव्यक्तस्यैव तत्तत्क्रियाङ्गत्वाद् यत्रैव पिण्ड उपदेशादिनाऽभिव्यञ्जकेनाभिव्यज्यन्ते तत्रैव स्वकार्यसंपादका इत्यविच्छिन्नेनागमपारम्पर्येण शिष्टैः स्मर्यते । एवञ्च यथा ब्राह्मणत्वादिजातीनां समानसंस्थानसर्वपिण्डगतत्वमागमपारम्पर्यागतं तथा तासां प्रागुक्तप्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपि अविच्छिन्नागमपारम्पर्यागतमेव इति ॥ ४४ ॥

एवञ्च प्रलये घटत्वादिजातयः परमाणुष्ववस्थिताः तेषु शक्तिरूपेण स्वाश्रयाणां घटादीनामवस्थानादिति प्रकरणसामर्थ्यादुक्तम् । ब्राह्मणत्वादयो भावाः" इत्यत्रादिपदेन ह्यचेतनजातीनामपि सर्वप्राणिष्वस्थितत्वोक्त्या तासामपि सर्वगतत्वमत्र विवक्षितम् । एवञ्च तुल्यन्यायेन चेतनजातयोऽप्यचेतनेष्ववस्थिता इति सर्वासां जातीनां पूर्णं सर्वगतत्वमर्थाल्लब्धं शब्दतो व्यक्तमाह—चित्रादिष्वपीति ।

अस्यार्थः—कैश्चिद् ब्राह्मणादिचित्रादिष्वपि ब्राह्मणत्वादिजातीनां सर्वगतत्वादुपदेशादिनाऽभिव्यक्तिरिष्यते । तु = किन्तु, ताः = ब्राह्मणत्वादिजातयः प्राण्याश्रिताः सत्यः पूजादिना पुण्यस्य, वधादिना पापस्य च प्राप्तौ निमित्तम्, न तु चित्राद्याश्रिताः सत्यस्तथा ।

अयं भावः—आलेख्यनिर्मिते ब्राह्मणे, पुस्तककर्मणा कृते वा ब्राह्मणे ग्रन्थरूपे यद्वापुस्तककर्मणा भित्तिलेपेनालेख्यनिर्मित इति योजना । दार्वादिना = दारुपाषाणमृदा-

**स्योपघाते तदभावः। एवं धर्मोऽपि चित्रस्थब्राह्मणपूजायां न भवति। कैश्चिद् इति वचनादत्रारुचिं सूचयति किल। मुख्यसादृश्यात्प्रतिकृतिषु प्रत्ययानुगमोपपत्तिर्न तु तद्वशाज्जातिसमवाय इति युक्तम्। तदेवं पूर्वं।**

**'निर्वर्त्यमानं यत्कर्म' ( वा० का० ३ जा० १७ )**

**इत्यादिना प्राक् प्रभवनादपि जातेः सद्भावान्नित्यत्वमुपपादितम्। इदानीं पुनराश्रयध्वंसेऽप्यवस्थानादिति पूर्वापरकोटिगामित्वात् प्राक्प्रध्वंसाभावाभ्यामयोगात् परिपूर्णस्य नित्यत्वस्य सिद्धिः ॥ ४५ ॥**

**नन्वविदितशब्दार्थसंबन्धस्यान्येभ्यो व्यावृत्तं गोष्वनुगतं रूपं गौर्गौरिति न प्रतिभासते। यदि च ताभिर्व्यक्तिभिरभिव्यक्तं तत्सामान्यं कथं तत्प्रत्ययो न स्यात्। अथान्येभ्यो व्युत्पन्नः प्रतिपद्यते, तेऽपि कुतः, तेऽपि कुत इति साक्षाद्दर्शिनं सर्वज्ञं द्रष्टारमन्तरेणान्धपरम्परा प्रसज्यते। सर्वत्र च शब्दार्थसंबन्धेऽन्धपरम्पराया एव वृद्धव्यवहार इति नाम कृतं स्यात्, निर्मूलत्वात्। ब्राह्मणत्वादीनां रूपव्यञ्जनसादृश्याद् बालमूकादिज्ञानसदृशोऽप्यसौ गोत्वादीनामिवानुवृत्तव्यावृत्तरूपावभासो नास्तीत्यवश्यमेव सर्वज्ञोऽभ्युपगन्तव्य इति मन्यमान आह—**

---

दिना वा कृतेऽपि ब्राह्मणे, आद्ये आकृतिसादृश्याद्, द्वितीये ब्रह्मणो वेदस्य व्याख्यानकर्तृत्वरूपात् सादृश्यात् तृतीयेऽपि आकृतिसादृश्यात् तदाकारानुकारप्रत्ययोदयः=तस्मिन् ब्राह्मणपिण्डे य आकारः प्रत्ययः ब्राह्मण इति, तदनुकारस्य ब्राह्मण इति प्रत्ययस्योदयं इति तत्रापि तज्जातिप्रत्ययः। प्राण्युपघातात् पुनरधर्म इति चित्रस्योपघाते तदभावः।

एवं धर्मोऽपि चित्रस्थब्राह्मणपूजायां न भवति। यदि तु चित्रस्थब्राह्मणसादृश्येन स्मृतस्य प्राणिब्राह्मणस्य तादात्म्याध्यासेन चित्रस्थब्राह्मणः पूज्यते तदा तु मन्ये धर्मो भवत्येव। अतएव द्रोणस्य मार्त्तिकीं प्रतिमां विधाय तां प्रपूज्य तदग्रे चापकर्मशिक्षमाण एकलव्यः परमां चापशिक्षामुपागत इति भारते स्मर्यते। शिष्टाचारेषु च चित्रपूजनं दृश्यते। विष्णवादिप्रतिमा तु नोदाहर्तव्या, तासां प्राणप्रतिष्ठया प्राणित्वादिति। अत्र श्लोके कैश्चिदिति वचनादत्र पक्षे = चित्रादिष्वपि तत्तज्जातीनामभिव्यक्तिपक्षे, अरुचिं सूचयति। मुख्यसादृश्यात् प्रतिकृतिषु = प्रतिमासु तत्तत्प्रत्ययानुगमोपपत्तिर्गौणीति न तत्तत्प्रत्ययवशाज्जातिसमवायस्तत्र, किन्तु सादृश्यमूलकस्तज्जात्यध्यारोप एव तत्रेति वक्तुं युक्तम्। एवञ्च जातेः समवायः स्वरूपेण शक्तिरूपेण वा स्थिते स्वाश्रय एव, न तु तदनुकारिणि तद्विसदृशे वाऽन्यत्रेति न सर्वगतत्वं जातेरिति स्थितम्।

तदेवं 'निर्वर्त्यमानं यत्कर्म' इत्यादिना प्रभवनात् = उत्पत्तेः प्रागपि जातेः सद्भावान्नित्यत्वं तस्या उपपादितम्। इदानीं पुनराश्रयध्वंसेऽपि महाप्रलये तस्या अवस्थानान्नित्यत्वमुपदर्शितमित्युत्पत्तेः पूर्वापरकोटिगामित्वाद् जातेः प्राक्प्रध्वंसाभ्यामयोगात् परिपूर्णस्य नित्यत्वस्य सिद्धिः ॥ ४५ ॥

**ज्ञानं त्वस्मद्विशिष्टानां तासु सर्वेन्द्रियं विदुः ।**
**अभ्यासान्मणिरूप्यादिविशेषेष्विव तद्विदाम् ॥ ४६ ॥**

**अस्मद् इति पञ्चमीबहुवचनम् । पञ्चम्या अत् ( पा. ७।१।३१ ) इत्यदादेशे कृते प्रतिनियतपदार्थदर्शिभ्योऽस्मदादिभ्यो विशिष्टाः सर्वदृश आदिगुरवः सन्ति । तथा च पतञ्जलिः—**

**'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति ।**

**( यो. भा. १।२६ )**

**सर्वज्ञानामीश्वरो गुरुरुपदेष्टा । तस्य च बुद्धीन्द्रियदेहानां कालेनानवच्छेदान्नित्यता ।**

---

ननु यस्य पुरुषस्य गोशब्दस्य गोत्वजात्या सह संबन्धो न गृहीतस्तस्यान्येभ्यो व्यावृत्तं गोष्वनुगतञ्च गोत्वसामान्यस्वरूपं गौर्गौरिति प्रत्यये न प्रतिभासते। यदि च ताभिर्गोव्यक्तिभिस्तत्सामान्यमभिव्यक्तं स्यात्तदा कथमविदितशब्दार्थसम्बन्धस्यापि तत्प्रत्ययो न स्यात्। यदि चाप्तोपदेशात् शब्दार्थसम्बन्धव्युत्पत्तिः = शब्दार्थसम्बन्धविशेषग्रहः तत्सहकृताभिश्च व्यक्तिभिः सामान्यमभिव्यज्यत इत्युच्यते, तदाऽऽदिसर्गे शब्दार्थसम्बन्धोपदेशसिद्ध्यर्थं सर्वज्ञ ईश्वरोऽभ्युपगन्तव्यः। अथेश्वरे सर्वज्ञे प्रमाणाभावाद् आदिसर्गाभावादनादौ संसारे अन्येभ्यः पुरुषेभ्यः शब्दार्थसम्बन्धं व्युत्पन्नो गोशब्दात् प्रतिपत्स्यते गोत्वसामान्यमित्युच्यते, तदा तेऽपि पुरुषाः कुतः पुरुषाद् व्युत्पन्नाः। तेऽपि कुत इति जिज्ञासाधारायां सत्यां साक्षाद्दर्शिनं सर्वज्ञं द्रष्टारमन्तरेणान्धपरम्परा प्रसज्यते। सर्वत्र च शब्दार्थसम्बन्धग्रहेऽन्धपरम्पराया एव वृद्धव्यवहार इति नाम कृतं स्यात्, मूलशून्यत्वाद्।

किञ्च यथा बालमूकादिज्ञाने रूपव्यञ्जनम् = वस्तुस्वरूपस्यावभासनरूपं विषयीकरणम् अस्ति, अनुवृत्तस्य व्यावृत्तस्य च रूपस्य व्यञ्जनं नास्ति, इति। तथाऽऽदिसर्गेऽविदितपदपदार्थसम्बन्धानां पुंसां रूपव्यञ्जनसादृश्याद् बालमूकादिज्ञानसदृशो ब्राह्मणत्वादिजातीनां प्रतिभासोऽस्ति। प्रत्यक्षसंस्थानव्यङ्ग्यानां गोत्वादीनामिवानुवृत्तव्यावृत्तरूपावभासो नास्तीत्यादिसर्गे उपदेशद्वारा पुंसां ब्राह्मणत्वादीनामनुवृत्तव्यावृत्तरूपावभासार्थं सर्वज्ञोऽभ्युपगन्तव्य इति मन्यमान आह-ज्ञानन्त्विति।

अस्यार्थः—तासु = जातिषु, अस्मदिति पञ्चमीबहुवचनान्तम्। प्रतिनियतपदार्थदर्शिभ्योऽस्मदादिभ्यो विशिष्टानां विलक्षणानामादिगुरूणां सर्वदृशां ज्ञानन्तु सर्वेन्द्रियम् = सर्वाणीन्द्रियाणि कारणत्वेन सन्त्यस्मिन्निति सर्वेन्द्रियजन्यं विलक्षणं विदुराचार्याः। यथा तद्विदाम् = मणिरूप्यादिविदाम्, मणिरूप्यादिविशेषेषु = मणिरूप्यादितारतम्येषु, अभ्यासाद् विलक्षणं ज्ञानं भवतीति।

अयं भावः—यत्किञ्चिन्नियतपदार्थदर्शिभ्योऽस्मदादिभ्यो विलक्षणाः सर्वदृश आदिगुरवः कपिलादयः सन्ति। तदाह पतञ्जलिः-'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति।

**अन्यथा प्रलये वृत्ते पुनरुत्पन्नेषु ब्रह्मादिषु क उपदेष्टा स्यात् । ततश्च निःशास्त्रं निरनुष्ठानं विधिनिषेधयोरन्धमूकप्रायं जगत् स्यात् । अथ प्रलयो नैवास्ति, अपि तु**

**'न कदाचिदनीदृशं जगत्'**

**इति जैमिनीयाः । तदेतदसत्, सर्वशास्त्रेषु प्रलयस्मृतेः । अथाम्नायस्य क्रियार्थत्वाद् भूतार्थप्रतिपादकं वाक्यमप्रमाणमित्युच्यते । तथा हि—कार्यपरत्वेनैव वृद्धव्यवहाराच्छब्दार्थसम्बन्धव्युत्पत्तिप्रतिपत्तेः 'यत्परश्च शब्दस्स शब्दार्थः' इत्याख्यायिकामात्रवर्णने सिद्धार्थाभिधाने प्रयोजनाभावाद्विधिनिषेधचोदनाभावात् कस्यचिदप्यशासनाद् भूतार्थं वाक्यमशास्त्रत्वादेव न प्रमाणतामर्हति । प्रवर्तकवाक्याङ्गभावेन तु समन्वयमेति । शास्त्रे स्तावकत्वेन ह्यर्थवादवाक्यानि विधिवाक्याङ्गभावगमनादन्वयभाञ्जि भवन्ति । एवं हि विधिरुपोद्बलितो भवति ।**

---

अस्यार्थः—स ईश्वरः, पूर्वेषाम् सर्वज्ञानां कपिलादीनां सर्गादिभुवामपि गुरुरुपदेष्टा । तस्य बुद्धीन्द्रियदेहानां कालेन भूतभविष्यदादिनाऽनवच्छेदात् नित्यता । अन्यथा प्रलये जाते पुनरुत्पन्नेषु ब्रह्मादिषु क उपदेष्टा स्यात् । ततश्च शास्त्राभावाद् विधिनिषेधानुष्ठानरहितं जगदन्धमूकसदृशं स्यात् । यदि तु प्रलयो नैवास्ति इति, 'न कदाचिदनीदृशं जगत्' इति जैमिनीयानां मतमनुसृत्योच्यते । तदेतदसत् । अथ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति जैमिनिसूत्रानुसारेणाम्नायस्य क्रियार्थत्वात् सिद्धार्थप्रतिपादकं वाक्यमप्रमाणमिति प्रलयप्रतिपादकानि शास्त्रवाक्यानि अर्थवादरूपतया स्वार्थपरत्वाभावेन स्वार्थेऽप्रमाणानीत्युच्यते ।

तथाहि व्युत्पित्सोर्बालस्य प्रयोज्यप्रयोजकवृद्धव्यवहारात् कार्यपरत्वेनैव शब्दार्थसम्बन्धव्युत्पत्तिप्रतिपत्तेः = शब्दार्थसम्बन्धग्रहानुभवात् 'यत्परश्च शब्दः स शब्दार्थः' इत्यभ्युपगमेन कार्यपराणामेव वाक्यानां प्रामाण्यमिति प्रलयाद्याख्यायिकामात्रवर्णने सिद्धार्थाभिधाने प्रयोजनाभावाद् विधिनिषेधचोदनानामभावे कस्याप्यर्थस्याशासनादशास्त्रत्वादेव सिद्धार्थकं वाक्यमप्रमाणमिति । आख्यायिकारूपाणि अन्यानि वा भूतार्थकवाक्यानि अर्थवादरूपतया लक्षणया स्तुतिनिन्दान्यतरपरत्वेन विधिनिषेधशेषतामुपगतानि ताभ्यामन्वयमनुभूय तु प्रामाण्यमनुभजन्त्येव । एवं हि विधिनिषेधावुपोद्बलितौ भवतः । तदेतत्सर्वं पूर्वमीमांसायामाकरतोऽवसेयमिति ।

अत्रोच्यते-किं वर्णवदनर्थकान्येवार्थवादवाक्यानि विधायके महावाक्ये कार्यार्थप्रतिपादकेऽङ्गतयैकवाक्यतामुपयान्ति, अथवा विधिवाक्यार्थासंसृष्टः स्वदेशे एषां कश्चित् स्वार्थोऽप्यस्ति यत्र प्रतिपत्तिमाधाय पश्चाद् विधिशेषतया कार्यपराणि संपद्यन्त इति विकल्पद्वये प्रथमो न युक्तः । सिद्धार्थकेभ्योऽपि वाक्येभ्यः स्वार्थप्रतिपत्तेरनुभवसिद्धत्वात्, सर्वथा स्वार्थप्रतिपादकत्वाभावे शक्यार्थसम्बन्धरूपाया लक्षणाया अभावे विध्यङ्गभावानुपपत्तेश्चेत्यस्ति स्वार्थप्रतिपादकत्वमप्यर्थवादवाक्यानामित्यभ्युपेयम् । केवलं सा स्वार्थे

**अत्र ब्रूमः। किमनर्थकानि वर्णवदेवार्थवादवाक्यानि महावाक्ये विधायके कार्यार्थप्रतिपादकेऽङ्गभावमुपयान्ति, आहोस्विदात्मीयः कश्चिदेषामर्थोऽस्ति यत्र प्रतिपत्तिमादधति कार्यपराणि संपद्यन्त इति पक्षद्वयम्। प्रथमः पक्षो न युक्तः। यथायथं सिद्धार्थानां स्वार्थप्रतिपत्तिदर्शनादकिञ्चित्करस्यानर्थकस्य परत्राङ्गभावानुपपत्तेः, केवलं सा प्रतिपत्तिः, तत्र स्वार्थे प्रमाणभूता अन्यथा वेति विचार्यम्। यत्र बाधस्तत्राप्रमाणम्। अबाधे तु प्रमाणमेव। अबाधिता हि संवित् स्वतः प्रमाणमिति जैमिनीयनयः। सर्वज्ञेश्वरदेवतानां च शास्त्रादधिगतानां न किञ्चन बाधकमुत्पश्यामः। ननु च मार्जारादीनां शास्त्रे सार्थकं वचनं श्रूयते। न च तत्र संवादोऽस्तीत्येवमेव सर्वमदृष्टार्थमप्रमाणम्। मैवं वोचः। सर्वज्ञभूतानां वचनस्यागमान्तरेणापि सार्थकत्वस्य संवादोपलब्धेरबाधितत्वमेव। चर्मचक्षुषः परमेतन्न मन्यन्ते। तथा हि भगवान् पतञ्जलिः—**

**'शब्दार्थसंयमनात् सर्वभूतरुतज्ञानम्' ( यो. सू. ३।१७ )**

---

प्रतिपत्तिः प्रमाणमप्रमाणं वेति विचारोऽवशिष्यते। विचारे तु क्रियमाणे यत्र स्वार्थस्य बाधस्तत्राप्रमाणम्। यत्र तु न, तत्प्रमाणमिति निश्चयः। जैमिनीयाश्चाबाधितायाः संविदः स्वतः प्रामाण्यमिच्छन्ति।

न च शास्त्राज्जायमानानां सर्वज्ञेश्वरदेवतासंविदां किञ्चन बाधकं पश्याम इति तत्प्रतिपादकानि वाक्यानि स्वार्थेऽपि प्रमाणान्येव। ननु च मार्जारादीनां सार्थकं वचनं शास्त्रे श्रूयते, महाभारते च गृध्रगोमायुसंवादः स्मर्यते। न च तत्र प्रत्यक्षसम्वादोऽस्ति, लोकेऽदर्शनादिति यथा तेषामप्रामाण्यम्, एवमेव सर्वं सर्वज्ञेश्वरदेवताप्रतिपादकमदृष्टार्थवचनमप्रमाणम्। नैवं वक्तव्यम्। लोके प्रत्यक्षसंवादाभावेऽपि पतञ्जल्यादीनामृषीणां सर्वज्ञभूतानां वचनरूपेणागमान्तरेण प्रागुक्तागमानां सार्थकत्वस्य सम्वादोपलब्धेरबाधितत्वमस्त्येव। केवलं चर्मचक्षुषो भवादृशा एव सर्वज्ञेश्वरादिकं मार्जारादिसंवादञ्चादृष्टमर्थं न मन्यन्ते, पतञ्जलिस्तु भगवान् मन्यते। तथाहि तदीयं सूत्रम्—शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्'' इति। तस्माद् यत्रार्थवादवाक्ये नास्ति स्वार्थे प्रमाणान्तरसंवादः, किन्तु बाधकस्यैव केवलस्य प्रामाण्यपर्यवसानमस्ति, तदसत्यार्थप्रतिपादकतया स्वार्थेऽप्रमाणं सत् कार्यमात्रप्रतिपादनपरमस्तु। यत्र तु सिद्धार्थवाक्ये नास्ति बाधः, अस्ति च शास्त्रान्तरेण संवादस्तत्प्रमाणमेव। नैव च तत्र कार्यपरता। सिद्धार्थप्रतिपादनेन पुराणेतिहासवाक्यानां तावत्येवार्थे प्रश्नोत्तरवाक्ययोः परिसमाप्त्या निराकाङ्क्षत्वदर्शनात्, तज्जातसिद्धार्थपरिज्ञानमात्राद् धर्मोत्पत्त्यभ्युपगमेन फलस्मरणाच्च न सिद्धार्थकानां पुराणादिवाक्यानां वैफल्यमपि। तदुक्तम्—

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च।
ऋतुपर्णस्य राजर्षेश्चरितं कलिनाशनम्॥ इति।

**आदिदेश। तस्माद्यत्र नास्ति संवादो बाधकमात्रपर्यवसानमर्थवादवाक्ये, तदसत्यार्थ-प्रतिपादनेनास्तु कार्यमात्रप्रतिपादनपरम्। यत्र तु नास्ति बाधः, शास्त्रान्तरेण संवादः तत्प्रमाणमेव। न च तत्र कार्यपरता। सिद्धार्थप्रतिपादनेन पुराणेतिहासवाक्यानां तावत्येव प्रश्नोत्तरयोः समाप्तत्वदर्शनात्, तत्परिज्ञानमात्राच्च धर्मोत्पत्त्यभ्युपगमात्। किञ्च ध्येये निर्ज्ञाते ध्यानादिरनुष्ठातुं शक्यत इति निष्प्रयोजनतापि नास्तीश्वरादि-प्रतिपादकानां वाक्यानाम्। तथा च शास्त्रम्—**

**'आत्मा ज्ञातव्यो मन्तव्यो निदिध्यासितव्य' इति।**

**पातञ्जलमपि—**

**'तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनम्, ततः प्रत्यक्चेतनाधिगमोऽन्त-रायाभावश्च' इति। ( यो. सू. १, २७-२९ )**

**स्मृतिकाराणां च मन्वादीनामभ्युपगमो महेन्द्ररुद्रादीनां प्रत्याख्यानमिति पक्षपातः। न हि मन्वादयो महर्षयो न सर्वज्ञा वीतरागा वा। रागादिमत्त्वेऽज्ञत्वे वा तेषां कथं तद्वचनं प्रमाणम्।**

**तस्मात् "साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उप-**

---

किञ्च 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुत्या 'ईश्वरप्रणिधानाद् वा' इति सूत्रेण एवमादिभिरन्यैश्च शास्त्रैरीश्वरात्मादीनां ध्यानादिकं विहितम्। ध्येये निर्ज्ञात एव च तस्य ध्यानादिरनुष्ठातुं शक्यत इति नास्ति निष्प्रयोजन-ताऽपि ईश्वरादिप्रतिपादकवाक्यानाम्। स्मृतिकाराणाञ्च मन्वादीनां वचनानि भवद्भिर-भ्युपगम्यन्ते। महेन्द्ररुद्रादिदेवताप्रतिपादकानि तु तेषां वचनानि प्रक्षिप्तत्वाद्युक्त्या प्रत्याख्यायन्त इत्यपूर्वस्तव स्वमतपक्षपातः, सर्वेषां मनुवचनानां विनिगमनाविरहेण प्रामाण्येऽप्रामाण्ये वा समत्वात्। नहि मन्वादयो महर्षयो न सर्वज्ञा वीतरागा वा। सति रागादिमत्त्वेऽसर्वज्ञत्वे वा तेषां किमपि वचनं प्रमाणं न स्यात्। असति च तस्मिन् वा सर्व-मपि तेषां वचनं प्रमाणमेवेति तद्वचनप्रामाण्यान्महेन्द्ररुद्रादयो देवा अप्यभ्युपगन्तव्या एव। तस्मात् "साक्षात् कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुरुपदेशाय ग्लायन्तोऽवरे विल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च"। अयञ्च मन्त्रः प्रथमकाण्डे पञ्चमकारिकायामम्बाकर्त्र्या व्याख्यात इति नेह पुनर्व्याख्यायते। अत्र विल्मम् = स्वप्नवृत्तवत्प्रतिभातं वस्तु। इत्यागमप्रामाण्यात् सन्ति धर्ममप्यदृष्टं साक्षात् कृतवन्तः सर्वज्ञा ऋषयः, येषामन्धपरम्परान्युदासार्थमादिगुरुर्भगवान् सर्वशास्त्र-प्रवक्ता तैरेव मुनिभिरागम्यते = आचार्यत्वेनाश्रीयते। शब्दनित्यत्वेऽपि आनुपूर्व्या अनि-त्यत्वेन रचनावत्त्वात् शास्त्रस्यानित्यत्वेनेश्वरप्रणीतत्वमेव। तथा च भिक्षुसूत्रम्—"शास्त्र-योनित्वात्" इति। अत्र च शास्त्रस्य ऋग्वेदादिलक्षणस्य अन्यस्य वा योनिः कर्तृरूपं कारणमिति षष्ठीतत्पुरुषः, शास्त्रं योनिर्ज्ञापकनिमित्तमस्येति बहुव्रीहिर्वा। तथा च शास्त्रा-दीश्वरः समधिगम्यते। ईश्वरात् शास्त्रं प्रवृत्तमिति ईश्वरस्य शास्त्रं ज्ञापकनिमित्तम्।

देशेन मन्त्रान् संप्राहुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" ( नि. १, २०, २ )

इत्यागमप्रामाण्यात् सन्ति सर्वज्ञाः, येषामन्धपरम्पराव्युदासार्थमादिगुरुर्भगवान् सर्वशास्त्रप्रवक्ता तैरेव मुनिभिरागम्यते। शास्त्रस्य हि शब्दनित्यत्वेऽपि रचनावत्त्वादीश्वरप्रणीतत्वमेव। तथा च शास्त्रादीश्वरः समधिगम्यते। तस्माच्छास्त्रं प्रवृत्तमिति तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किन्निमित्तम्? ईश्वरनिमित्तम्। तदेतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः संबन्ध इत्युक्तम्। तथा च गीतास्वाविष्टमहेश्वरभावेन भगवता कृष्णावतारेणाभिहितम्—

'वेदान्तकृद्वेदविदेव चाहम्' इति।

एवमपि च शास्त्रस्य नित्यत्वे क्षतिर्नास्तीश्वरबुद्धिरूपत्वात्तस्य। ईश्वरस्य नित्यत्वं कालेनानवच्छेदादुक्तमेव। विशिष्टरचनावत एव वेदस्येश्वरबुद्धौ दर्शनात्मनि सदावस्थितत्वमिति स्मृतिवद्यथाकालं मन्वादिवदस्य रचनाकर्तापि नास्तीत्युक्तं ब्रह्मकाण्डे—

'अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम्।
शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः॥' इति।
( वा. का. १, १४५ )

तदेवमागमप्रामाण्याद्भावतत्त्वदृशः शिष्टास्सन्त्यतीन्द्रियार्थदर्शिन इति ते यथायथं गोत्वब्राह्मणत्वादिजातीराश्रयविवेकेनाध्यक्षयन्ति। तच्च तेषां शिष्टानां ज्ञानं सर्वेन्द्रियं

---

तदेवमृग्वेदादिलक्षणस्य शास्त्रस्योत्कर्षद्वयमायाति। अनन्यसाधारणमीश्वरजन्यत्वमीश्वरज्ञापकत्वञ्चेति। तदेतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे एव लब्धसत्ताकयोरनादिः सामानाधिकरण्यरूपः संबन्ध इत्युक्तं भवति। तदेतदीश्वरस्य शास्त्रकर्तृत्वं सतताविर्भूतमहेश्वरभावेन कृष्णरूपतयावतीर्णेन भगवता गीतासु स्वयमेवोक्तम्—"वेदान्तकृद्वेदविदेव चाहम्" इति।

न चैवं सति वेदस्यानित्यत्वेनापौरुषेयत्वक्षतिरिति वाच्यम्। वेदस्येश्वरबुद्धिरूपत्वेनेश्वरबुद्धेश्च नित्यत्वेन नित्यत्वात्। ईश्वरस्य नित्यत्वादपि तद्बुद्धेर्नित्यत्वम्। ईश्वरस्य नित्यत्वञ्च कालेनानवच्छेदादुक्तमेव। विशिष्टानुपूर्वीमत एव वेदस्येश्वरबुद्धौ दर्शनात्मिकायामवस्थितत्वमिति न स्मृतिवद् यथाकालं मन्त्रादिवदस्य रचनाकर्ताऽपि ईश्वरोऽन्यो वा कोऽपि अस्तीत्युक्तं ब्रह्मकाण्डे—

अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम्।
शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः॥ इति।
( वा० का० १।१४५ )

तदेवमुक्तागमप्रामाण्याद् वस्तुतत्त्वदृशः शिष्टाः सन्त्यतीन्द्रियार्थदर्शिन इति ते यथायथं गोत्वब्राह्मणत्वजातीराश्रयविवेकेन = स्वाश्रयान्यव्यावृत्ततया प्रत्यक्षीकुर्वन्ति।

**प्रतिनियमानपेक्षत्वात्। सर्वज्ञा हीन्द्रियान्तरेणापीन्द्रियान्तरव्यापारं कुर्वन्ति। तथा चागमः—**

**'नेदानीमिन्द्रियैरेव पश्यन्ति, घ्राणतः शब्दं शृणोति, पृष्ठतो रूपाणि पश्यति, अप्यङ्गुल्यग्रेण सर्वेन्द्रियार्थानुपलभते' इति।**

**अथवा न चाक्षुषमेव तेषां विप्रादिजातिविषयं विज्ञानम् अपि त्विन्द्रियान्तरसंबन्ध्यपि। शब्दादौ सूक्ष्मजातिविशेषावधारणक्षममित्यर्थः। तदेवमागमप्रामाण्यमाश्रित्य सर्वज्ञसिद्धिरत्र सूचिता पूर्वार्धेन। विस्तरेणागमप्रामाण्यं वाक्यपदीयेऽस्माभिः प्रथमकाण्डे शब्दप्रभायां निर्णीतमिति तत एवावधार्यम्। उत्तरार्धेनागमसिद्धे सर्वज्ञेऽत्रानुमानं तदुपोद्बलकमाह—'अभ्यासाद्' इत्यादिना। इहाभ्यासवशाज्ज्ञानैश्वर्यादीनां पुरुषविशेषेष्वतिशयो दृष्टः। यथा वैकटिकानां रत्नतत्त्वपरीक्षायाम्, रूप्यतर्काणां च रूप्यगतातिशयपरिच्छेदे यथाभ्यासं प्रकर्षतारतम्यम्। यच्च सातिशयं तदवश्यं क्वचित्काष्ठाप्राप्तं सम्भाव्यते। यथादित्ये तेजः, दाहकत्वमग्नौ, शैत्यमप्सु, तथा ज्ञानैश्वर्यशक्तिबलादयो गुणाः सातिशयाः पुरुषेषु दृष्टाः सर्वज्ञेयव्यापिकाष्ठाप्राप्तमतिशयमावेदयन्तस्तत्समुचितमाधारं पूर्णसमस्तसम्पत्कमनुमापयन्त्येव। अतिशय एव हि ज्ञानादीनां तारतम्येन दृश्यमानः सर्वज्ञबीजम्।**

---

तच्च तेषां शिष्टानां ज्ञानं सर्वेन्द्रियजन्यम्, प्रतिनियमानपेक्षत्वात् = प्रतिनियतनिमित्तानपेक्षत्वात्, निमित्तप्रतिनियमानपेक्षत्वाद्वा। सर्वज्ञा हि ऋषय इन्यियान्तरेणाऽपि इन्द्रियान्तरस्य व्यापारं कुर्वन्ति। तथा चागमः—"नेदानीमिन्द्रियैरेव पश्यन्ति, घ्राणतः शब्दं शृणोति, पृष्ठतो रूपाणि पश्यति अप्यङ्गुल्यग्रेण सर्वेन्द्रियार्थानुपलभते" इति।

अयमाशयः—न चाक्षुषमेव तेषां विप्रादिजातिविषयं विज्ञानम्, अपि त्विन्द्रियान्तरजन्यमपि शब्दादौ सूक्ष्मजातिविशेषावधारणक्षममिति। तदेवमागमप्रामाण्यमाश्रित्य सर्वज्ञसिद्धिरत्र सूचिता पूर्वार्धेन। इदानीमागमसिद्धे सर्वज्ञे तदुपोद्बलकमनुमानमाहोत्तरार्धेन अभ्यासादित्यादिना। तथा चायमत्रानुमानप्रयोगः। ज्ञानैश्वर्यशक्तिबलादयो गुणाः; क्वचित् काष्ठां प्राप्ताः, सातिशयत्वाद्, दाहकत्वशैत्यादिवदिति। तथाहि— इहाभ्यासवशाद् ज्ञानैश्वर्यादीनां पुरुषविशेषेष्वतिशयो दृष्टः। यथा वैकटिकानाम् = रत्नपरीक्षकाणाम्, विकटो विशालो निकषोपलोऽस्ति रत्नतत्त्वपरीक्षासिद्ध्यर्थं येषां ते विकटिकास्त एव वैकटिकाः, प्रज्ञादित्वात् स्वार्थेऽण्। रत्नतत्त्वपरीक्षायाम्, रूप्यतर्काणाम् = रजतपरीक्षकाणाञ्च ( रूप्यं तर्कयन्ते, उत्प्रेक्षन्ते, सम्यगसम्यग्वा ये ते रूप्यतर्काः, कर्मण्यण् ) रूप्यगता प्रकर्षापकर्षरूपातिशयपरिच्छेदे यथाभ्यासं ज्ञानप्रकर्षतारतम्यम्। यच्च सातिशयं तदवश्यं क्वचित् काष्ठाप्राप्तं सम्भाव्यते। यथा तेज आदित्ये, दाहकत्वमग्नौ, शैत्यमप्सु। एवं ज्ञानैश्वर्यशक्तिबलादयो गुणाः सातिशयाः पुरुषेषु दृष्टाः, सर्वज्ञेयव्यापिनम् = सर्वज्ञेयविषयकम्, काष्ठाप्राप्तं ज्ञानैश्वर्याद्यतिशयमावेदयन्तः, तत्समुचितमाधारं पूर्णसमस्तसंपत्-

न च 'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्' इति वाच्यम्। स्वार्थस्य स्वाश्रयानुसारेण व्यवस्थापयितुमशक्यत्वात्, आदित्यादौ च प्रकाशकत्वादेः स्वार्थातिलङ्घनेन दृष्टत्वात्। तस्मात् संभावनानुमानेनापि सर्वज्ञसिद्धिरुचिता। तदुक्तम्—

'तत्र निरतिशयं सर्वज्ञबीजम्' इति। ( यो. सू. १।२५ )

यदेतत् सर्वज्ञबीजं ज्ञानादीनामतिशयलक्षणं तत्तत्र निरतिशयम्। यत्र निरतिशयं स सर्वज्ञ इत्यर्थः। सर्वज्ञग्रहणं चात्रैश्वर्योपलक्षणाम्, तेन यत्र निरतिशयमैश्वर्यं स सर्वेश्वरः परमेश्वर इत्यपि सिद्धम्, राजादीनामैश्वर्यतारम्यदर्शनात्। इत्थं च मूलभूतेश्वरसम्भवात्—

'ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्' ( वा. का. १।३० )

इत्युक्तम्। परमेश्वरस्तु कालेनानवच्छिन्नः सहजज्ञानैश्वर्यादिधर्मयुक्तः। तस्य चेतनस्याचेतनं जगदिच्छानुविधायि प्रत्यगात्मन इव शरीरमित्युपकार्योपकारकभावसंस्थानविशेषयोगादिज्ञाता स एतन्निर्मिमीत इति बुद्धिमत्कर्तृकमपीदमत्र विश्वं सिद्धमिति

---

कमनुमापयन्त्येव। एवमतिशय एव हि ज्ञानादीनां तारतम्येन पुरुषेषु दृश्यमानः सर्वज्ञबीजम्।

ननु 'घ्राणतः शब्दं शृणोति, पृष्ठतो रूपाणि पश्यति' इत्याद्युक्तिरयुक्ता। तदुक्तमभियुक्तैः—

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥"

इति चेन्न। स्वार्थस्य स्वाश्रयानुसारित्वेन नियन्तुमशक्यत्वात्। तद्यथा—आदित्यस्य दाहकत्वप्रकाशकत्वादयो गुणाः सुदूरविप्रकृष्टार्थविषयका दृष्टाः, नैवमग्निप्रदीपादेः। तस्मात् प्रागुक्तेन ज्ञानैश्वर्यादीनां काष्ठाप्राप्तिसाधकेन संभावनारूपेणानुमानेनापि सर्वज्ञसिद्धिरुचिता। तदुक्तं पातञ्जलसूत्रेषु—"तत्र निरतिशयं सर्वज्ञबीजम्" इति।

एतदर्थस्तु यदेतज्जगत्कर्तुः सर्वज्ञत्वे बीजं ज्ञानादीनामतिशयलक्षणम्, तत्तत्र भगवति निरतिशयम्, यत्र निरतिशयं स सर्वज्ञ इति। सर्वज्ञग्रहणञ्चात्रैश्वर्योपलक्षणम्। तेन यत्र काष्ठाप्राप्तमैश्वर्यं स परमेश्वरः, सर्वेश्वर इत्यपि सिद्धं भवति। राजादीनामैश्वर्यतारतम्यदर्शनात्। एवञ्च जगन्मूलभूतसर्वज्ञेश्वरसंभवात् "ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्" ( वा० का० १।३० ) इत्युक्तिरप्युपपद्यते। अत्रागमो गुरुसंप्रदायपरम्परारूपः। प्रागुक्तरीत्या सहजनिरतिशयज्ञानैश्वर्यादिधर्मयुक्तः। परमेश्वरस्तु कालेनानवच्छिन्नः, प्रागुक्तपातञ्जलसूत्ररूपान्मानात्। तस्य तु चेतनस्याचेतनं जगच्छरीरं तदिच्छानुविधायिचेष्टितम्, जीवस्येव शरीरमिति परस्परं भोक्तृभोग्यभावभिन्ने जगति यश्चेतनानामचेतनानाञ्च, चेतनानामपि मनुष्याणां गवाश्वप्रभृतीनाञ्च परस्परमुपकार्योपकारकभावः, संस्थानविशेषयोगादयश्च तेषां ज्ञाता यः सर्वज्ञः सर्वेश्वरः स एतज्जगन्निर्मिमीत

**स्थितम्। तदेवमागमसिद्धाः सन्त्यस्मद्विशिष्टाः। इन्द्रियप्रतिनियमानपेक्षं च साक्षात्काररूपं तेषां ज्ञानमित्यतीतानागतसूक्ष्मव्यवहितविप्रकृष्टार्थसतत्त्वदृशो योगिनः सर्वा गोत्वब्राह्मणत्वादिजातीरध्यक्षयन्तः तदुपदेशमसङ्करेणारभन्ते। ब्राह्मणत्वादिष्वस्ति किञ्चित्सास्नादिस्थानीयमुपव्यञ्जनमस्माकं परमतीन्द्रियम्। शिष्टैस्तदवधार्य संज्ञाः प्रणीताः। तदुक्तम्—**

**'प्रत्यक्षपूर्वकं संज्ञाकर्म' इति।**

**तत्रभवतामुपदेशाद्वयमपि सम्प्रदायपारम्पर्याद्यथायोगं गोत्वादिजातीरध्यवस्यामः। अस्मद्विशिष्टानां चेदं संज्ञाप्रणयनं यथावस्थितशब्दार्थसंबन्धप्रकाशनमात्रं न त्वपूर्वसङ्केतकरणं स्वाभाविकत्वाच्छब्दार्थसंबन्धस्येति शिष्टप्रामाण्यात्सन्ति ब्राह्मणत्वादिजातयो विविक्ता यथायथं भावप्रत्ययाभिधेयाः॥ ४६॥**

**'तत्रेदं विचार्यते। 'तामाहुस्त्वतलादयः'**

**( वा० का० ३ जा० ३४ )**

**इत्युक्तम्, जातीगन्धत्वम्, उत्पलगन्धत्वम्, मल्लिकागन्धत्वमित्यत्र किं परजातौ गन्धसामान्ये भावप्रत्ययः, किं वाऽपरजातावपरसामान्ये विशिष्टाश्रयगन्धसमवायिनीत्याशङ्क्याह—**

---

इत्येवं प्रेक्षावत्कर्तृकमपि इदं विश्वं सिद्धम् न तु स्वभावाभावस्वतन्त्रप्रधानान्यतमकारणकमिति।

तदेवं सर्वज्ञेश्वरादिगुरुपरम्परागमसिद्धाः सन्त्यस्मद्विशिष्टा ऋषयः सर्वज्ञाः, तेषां ज्ञानञ्चातीतानागतसूक्ष्मव्यवहितविप्रकृष्टार्थविषयकं साक्षात्काररूपमिन्द्रियव्यवस्थानपेक्षञ्चेति तादृशालौकिकज्ञानसंपन्ना योगिनः सर्वा गोत्वब्राह्मणत्वादिजातीः परोक्षापरोक्षव्यञ्जकव्यंग्याः प्रत्यक्षयन्तः तासामसंकीर्णमुपदेशमारभन्ते। गोत्वादिषु सास्नादिवद् ब्राह्मणत्वादिष्वपि अस्ति किञ्चिदुपव्यञ्जनं यदस्माकमतीन्द्रियम्। शिष्टैस्तु तत्प्रत्यक्षीकृत्य ब्राह्मणादिसंज्ञास्तत्तदर्थविषयाः प्रणीताः। तदुक्तम्—"प्रत्यक्षपूर्वकं संज्ञाकर्म" इति। तत्तज्जातीनां तत्तदुपव्यञ्जनानाञ्च साक्षात्कारपूर्वकं तत्तदर्थेषु तत्तच्छब्दानां संज्ञात्वसंपादनमिति तदर्थः। सर्वज्ञानां तत्रभवताम् 'अस्माच्छब्दादयमर्थो बोद्धव्यः' 'इदं पदमिममर्थं बोधयतु' इति वोपदेशाद् वयमपि गुरुसंप्रदायपारम्पर्याद् यथासंभवं गोत्वब्राह्मणत्वादिजातीरध्यवस्यामः। अस्मद्विलक्षणानां तत्रभवतामिदं संज्ञाकरणञ्च ततोऽपि पूर्वसिद्धशब्दार्थसंबन्धप्रकाशनमात्रम्, न त्वभूतपूर्वस्य नवस्य संकेतस्य करणम्, शब्दार्थसंबन्धस्य स्वाभाविकत्वात् = नित्यत्वाद् इति। तदुक्तम्—'सिद्धे शब्दार्थसंबन्धे' इति। 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति च। तदेवं सर्वज्ञशिष्टप्रामाण्यात् सन्ति ब्राह्मणत्वादिजातयो विविक्ताः = स्वाश्रयेषु परस्परमसंकीर्णाः यथायोगं त्वतलादिभावप्रत्ययवाच्या इति॥ ४६॥

**जात्युत्पलादिगन्धादौ भेदतत्त्वं यदाश्रितम् ।**
**तद्भावप्रत्ययैर्लोकेऽनित्यत्वान्नाभिधीयते ॥४७॥**

**इह लौकिके शब्दव्यवहारे विवक्षाधीने यदा जातिगन्धादिशब्दात् समासाद्भावप्रत्ययः क्रियते, तदा सामर्थ्यं समासविधानात्तदेव प्रवृत्तिनिमित्तमिति तत्रैव भावप्रत्ययः,**

**'समासकृत्तद्धितेषु सम्बन्धाभिधानम्'**

**इति वचनादित्याधाराधेयसम्बन्धः सप्तमीसमासे, तत्पूर्वकः शेषसम्बन्धो वा षष्ठीसमासे तद्वाच्यः। यदा तु गन्धशब्दादेव पूर्वं भावप्रत्ययः पश्चात्समास इति विवक्षा, तदा भेदस्य जात्युत्पलाद्याश्रितस्य विशिष्टस्य गन्धस्य यत्तत्त्वं पारमार्थिकं तत्कर्मभूतं**

---

तत्रैवं स्थिते इदं विचार्यते। 'तामाहुस्त्वतलादयः' (वा० का० ३ जा० ३४) इत्युक्तम् । एवञ्च जातिगन्धत्वम् = मालतीगन्धत्वम्, उत्पलगन्धत्वम्, मल्लिकागन्धत्वम् इत्यत्र किं सर्वगन्धवर्तिनि परजातिरूपे गन्धसामान्ये त्वरूपो भावप्रत्ययः, किं वाऽपरजातिरूपेऽपरसामान्ये विजातीयाश्रयवृत्तिगन्धसमवेत इत्याशंक्याह—जात्युत्पलादिगन्धादाविति ।

अस्यार्थः—जात्युत्पलादिगन्धादौ यद् भेदतत्त्वम् = भेदस्य भिद्यमानस्य गन्धविशेषस्य यत्तत्त्वं पारमार्थिकं गन्धत्वरूपं परं सामान्यम्, तदाश्रितं यद् गन्धविशेषनिष्ठमपरसामान्यं गन्धत्वरूपम्, यद्वा—जात्युत्पलगन्धादौ आश्रितं यद् भेदतत्त्वम् = भेदस्य गन्धविशेषस्य तत्त्वम् = विशिष्टमपरसामान्यं गन्धत्वरूपम्, तदनित्यत्वात्-चन्दनगन्धादिष्वनुपलम्भेन व्यभिचारित्वात्, लोके जातिगन्धत्वमुत्पलगन्धत्वमित्यादौ भावप्रत्ययैर्नाभिधीयते । किन्तु सप्तमीसमासे षष्ठीसमासे वा जातिगन्धयोरुत्पलगन्धयोश्च संबन्धविशेष एवाधाराधेयभावस्तन्मूलको वा समवायाख्यो यथायथं त्वप्रत्ययेनाभिधीयते । तदुक्तम्—''समासकृत्तद्धितेषु संबन्धाभिधानम्'' इति ।

अयं भावः-जातिगन्धत्वमुत्पलगन्धत्वमित्यादौ विवक्षाधीने लौकिके शब्दव्यवहारे द्विधा भावप्रत्ययः क्रियते। जातिशब्दगन्धशब्दयोः सप्तमीसमासे षष्ठीसमासे वा कृते समासाद् भावप्रत्यय इत्येकः पक्षः। गन्धशब्दाद् भावप्रत्यये कृते भावप्रत्ययान्तस्य जात्यादिशब्दैः समास इति द्वितीयः पक्षः। तत्र यदा जातिगन्धादिशब्दात् समासाद् भावप्रत्ययस्तदा समर्थः पदविधिरिति शास्त्रसहकारेण सामर्थ्ये समासविधानात् पदार्थद्वयसंबन्धरूपं सामर्थ्यमेव समासपदस्य प्रवृत्तिनिमित्तमिति तदर्थक एव भावप्रत्ययः।

तदुक्तम्—''समासकृत्तद्धितेभ्यः संबन्धाभिधानं भावप्रत्ययेन'' इति। यदा तु गन्धशब्दादेव पूर्वं भावप्रत्ययः पश्चाच्च जात्युत्पलादिशब्दैस्तदन्तस्य समास इति विवक्षा, तदाऽस्याः कारिकाया अयमर्थः । जात्युत्पलादिगन्धादौ-जात्युत्पलादिनिष्ठगन्धविशेषादौ,

यदाश्रितं कर्तृभूतमपरसामान्यं तद्भावप्रत्ययवाच्यं न भवति, अनित्यत्वात्सर्वत्रा सन्निधानात् । भेदस्य वा गन्धविशेषस्य तत्त्वं विशिष्टं सामान्यम्, यदाश्रितं समवेतमिति समानाधिकरणे पदे ।

अयमत्रार्थः—यदुत्पलगन्धसमवेतं विशिष्टं सामान्यम्, न तच्चन्दनगन्धादिव्यक्तौ सन्निहितमिति व्यभिचारादनित्यम्, न तु सामान्यमनित्यं भवति । गन्धशब्दश्चाविशेषेण गन्धमात्रे वर्तत इति गन्धमात्रव्यापिनैवास्य प्रवृत्तिनिमित्तेन भावप्रत्ययाभिधेयेन भवितव्यम् । न चोत्पलगन्धसमवेतं विशिष्टं सामान्यं सर्वगन्धव्यापीति नेदमभिन्नं गन्धशब्दप्रवृत्तिनिमित्तम् । आश्रयविशेषेण तु जातेः गन्धत्वं उत्पलगन्धत्वमिति समवेतसमवायाद्विशेषणे विशिष्टावसायसिद्धिः । न चैवं नास्त्येव सामान्यविशेषः, आश्रयभेदेन गन्धव्यक्तीनां भेदात् शाबलेयत्वादिवदपरजातियोगोपपत्तेः । तथा च भेदतत्त्वं यदाश्रितम् इत्याह । गुणानामाश्रयभेदाद् भेद इति वक्ष्यत्येव । अस्त्येव चोत्पलगन्धानामन्यतो व्यावृत्तोऽन्वयी प्रत्यय इति तन्निमित्तसामान्यसम्भवः केन वार्यते । अत एव लोकग्रहणम् । लोकव्यवहारे परं नाभिधीयते गन्धयुक्तिविदस्त्वभियुक्ताः पश्यन्त्येव विशिष्टं सामान्यम् । समासादपि च भावप्रत्यये सामान्यविशेषसंबन्धस्य समासवाच्यत्वाच्छब्देनाप्रतिपादनादनित्य इति नाभिधीयते ॥ ४७ ॥

काश्चित्तु जातयोऽसंविज्ञानपदा अपि सन्तीत्याह—

---

भेदतत्त्वम्=भेदस्य विशिष्टस्य गन्धस्य संबन्धि यत्तत्त्वम्=नित्यत्वेन सर्वगन्धानुगतत्वेन च परमार्थिकं स्वरूपं गन्धत्वसामान्यरूपमाश्रयणक्रियायाः कर्मभूतम्, व्याप्यव्यापकभावसंबन्धेन तदाश्रितं यदाश्रयणक्रियायाः कर्तृभूतं जात्युत्पलादिगन्धनिष्ठमपरसामान्यं शक्तिभेदेन गन्धत्वपदाभिधेयमेव तद् जातिगन्धत्वमित्यादौ भावप्रत्ययवाच्यं न भवति । सर्वासु गन्धव्यक्तिषु असन्निधानेनानित्यत्वात्=व्यभिचारित्वात् । अस्मिन् व्याख्याने—'भेदतत्त्वं यदाश्रितम्' इत्यत्र भेदतत्त्वमिति कर्मपदमाश्रितमिति तु कर्तृपदमित्येते व्यधिकरणे पदे । यद्वा—जात्युत्पलादिगन्धादावाश्रितम्—समवायसंबन्धेन वर्तमानं यद् भेदतत्त्वम्=भेदस्य गन्धविशेषस्य तत्त्वम्-पारमार्थिकं स्वरूपं विशिष्टं=व्याप्यम् सामान्यम्, तद् भावप्रत्ययैरनित्यत्वान्नाभिधीयत इति संबन्धः । अस्मिन् व्याख्याने "भेदतत्त्वं यदाश्रितम्" इति समानाधिकरणे पदे ।

अयन्त्वत्र परमार्थः—यदुत्पलगन्धसमवेतपरसामान्यं न तच्चन्दनगन्धादिव्यक्तिवृत्ति इति व्यभिचारादनित्यम्=असार्वत्रिकम् । न तु सर्वस्य साधारणधर्मरूपं सामान्यमनित्यं संभवति । किञ्च गन्धशब्दोऽयमविशेषेण गन्धमात्रे वर्तत इति गन्धमात्रव्यापिनैवास्य प्रवृत्तिनिमित्तेन भावप्रत्ययाभिधेयेन भवितव्यमिति न जातिगन्धत्वमित्यादौ गन्धत्वपदेनावान्तरसामान्याभिधानम् । किञ्च जात्यादिगन्धसमवेतमवान्तर-

**अस्वशब्दाभिधानास्तु नरसिंहादिजातयः ।**
**सरूपावयवेवान्या तासु श्रुतिरवस्थिता ॥ ४८ ॥**

**नरसिंहगौरखरत्वादिजातयोऽविद्यमानासाधारणवाचकाः। समानं रूपं ययोस्ताव-वयवौ यस्याः नरसिंह इत्यादि श्रुतेः शब्दस्य सा तत्र वाचिका। एषा हि श्रुतिः नरत्व-सिंहत्वजातिविषयनरसिंहशब्दद्वयसादृश्येनावभासमाना नरत्वसिंहत्वजातिप्रतिभा-**

---

सामान्यं न सर्वगन्धव्यापीति नेदं सर्वगन्धेष्वभिन्नम्, किन्तु तत्र तत्र भिन्नमेवेति न गन्धशब्दप्रवृत्तिनिमित्तम् ।

न चैवं सति जातेर्गन्धत्वम्, उत्पलगन्धत्वमित्यादौ कथं गन्धत्वव्याप्यजातिविशेष-प्रतिभास इति वाच्यम् । जातिपुष्पे समवेतो गन्धस्तत्र समवायो गन्धत्वस्येति समवेतसम-मवायसंबन्धेन जात्यादिरूपाश्रयविशेषेण गन्धस्य विशेषणे विशिष्टावसायसिद्धेः=जाति-विशेषनिश्चयसिद्धेः ।

न चैवं जातेर्गन्धत्वमित्यादौ समवेतसमवायाद् जातिपुष्पविशेषितेन परेण गन्धत्व-सामान्येनैव जातिविशेषप्रयुक्तव्यवहाराद्युपपत्तौ नास्त्येव जात्यादिगन्धवृत्तिर्जातिविशेष इति वाच्यम् । जात्युत्पलादिरूपाश्रयभेदेन गन्धव्यक्तीनां भेदस्यानुभवसिद्धत्वेन तत्तद्गन्ध-व्यक्तिभेदकस्य गन्धत्वापरजातिविशेषस्याभ्युपगमौचित्येन गोत्वादिव्याप्यशाबलेयत्वादि-वद् गन्धत्वापरजातियोगोपपत्तेः । एतदेवाभिप्रेत्य—'भेदतत्त्वं यदाश्रितम्' इत्याह । व्याख्यातञ्चात्रैव हेलाराजीये—'भेदस्य गन्धविशेषस्य तत्त्वं विशिष्टसामान्यम्' इति । अत्र-विशिष्टं सामान्यजातिविशेष इत्यर्थः । गुणानामाश्रयभेदाद् भेद इति च मूल एव वक्ष्यति । किञ्चोत्पलगन्धानां जातिपुष्पादिगन्धतो व्यावृत्तः सर्वेषूत्पलगन्धेष्वन्वयी= अनुवृत्तः, उत्पलगन्धोऽयमिति प्रत्ययोऽस्त्येवातस्तन्निमित्तभूतस्य सामान्यस्य संभवः केन वारयितुं शक्यते । अत एव कारिकायां लोकग्रहणं कृतम् । लोकव्यवहार एव केवलं तत्तद्-गन्धगतं विशिष्टं सामान्यं नाभिधीयते, गन्धयुक्तिविदस्त्वभियुक्ता जात्युत्पलादिगन्धगतं विशिष्टं सामान्यं पश्यन्त्येवातस्तत्प्रामाण्यात् तत्र जातिविशेषसत्त्वं निश्चीयते । जाति-गन्धोत्पलगन्धादिपदरूपात् समासादपि भावप्रत्यये जात्यादिगन्धगतजातिविशेषसंबन्धस्य समासवाच्यत्वाद् जातिविशेषस्य च गन्धत्वशब्देनाप्रतिपादनादनित्यो जातिविशेष इति स भावप्रत्ययेन नाभिधीयत इति ॥ ४७ ॥

ता इमा गोत्वब्राह्मणत्वादिजातयः संविज्ञानपदाः प्राग् विचारिताः । गोत्व-ब्राह्मणत्वादिपदैस्तासां संविज्ञायमानत्वात् । काश्चित्तु नरसिंहत्वगौरखरत्वादिजातयोऽ-संविज्ञानपदा अपि सन्ति । नरसिंहादिसमासपदाद् भावप्रत्यये नरसिंहत्वादिशब्दाद् नर-त्वसिंहत्वजात्योरेवाभिधानाद् नरसिंहत्वजातेश्च ताभ्यां विलक्षणत्वात् । अतो नरसिंह-शब्दो निरंश एव यस्तदुत्तरभावप्रत्ययेन नरसिंहत्वजातिरभिधीयते । एवं गौरखरत्वादि-जातिरपीत्यभिप्रेत्याह—अस्वशब्दाभिधाना इति ।

**मत्रोत्पादयति। न च नरसिंहाभ्यामारब्धो नरसिंहः, अपि तु जात्यन्तरमेवात्र शबलरूपे वस्तुनि समवेतम्, चित्र इव रूपे चित्रत्वमिति, तदसाधारणमेषा न शक्नोति प्रत्याययितुम्। भावतश्च निरंशैवेयं श्रुतिरित्यवयवसादृश्यमपि न वास्तवमिति इव-शब्दः, सादृश्याभिमानमात्रमत्र परम्। यथा निरंशवाक्यस्थानां पदानामिति भ्रान्त्या नरत्वादिजातौ प्रतिभोत्पादनान्नेयमसाधारणी नरसिंहजातौ श्रुतिः, न चान्यापि विद्यत इति अस्वशब्दाभिधाना-न विद्यते स्वशब्दः अभिधीयतेऽनेनेत्यभिधानं यस्या इति ॥ ४८ ॥**

**तदेवमर्थद्वारेण पदे परीक्ष्यमाणे प्रकृतिभागस्य जात्यर्थतया व्याप्तिमुपपाद्य प्रत्ययभागस्यापि तदुपादनेन जात्यभिधायितायां प्रकृतिप्रत्यययोस्समभिव्याहारमुपपादयितुमाह—**

---

अस्यार्थः—नरसिंहादिजातयस्तु-अद्भुतोभयाकारदेवविशेषादिगता नरत्वसिंहत्वोभयजातिविलक्षणा, नरसिंहत्वादिजातयस्तु, अस्वशब्दाभिधानाः-अभिधीयते येन तदभिधानम्, स्वशब्दः स्वस्य वाचकोऽसाधारणः शब्दोऽभिधानं यासां ता न भवन्तीति अस्वशब्दाभिधानाः। सावयवनरसिंहत्वादिपदान्नरसिंहत्वादिजातयो नाभिधीयन्ते, किन्तु निरंशात्तस्मादित्यभिप्रायः। इममेवार्थमुत्तरार्धेन विवृणोति—सरूपावयवेवान्या इति। तासु—नरसिंहत्वादिजातिषु, सरूपावयवेव—समासाद् बहिः श्रूयमाणाभ्यां नरशब्दसिंहशब्दाभ्यां समानं सदृशं रूपमानुपूर्वीस्वरूपं ययोः कल्पितयोः समासघटकयोर्नरशब्दसिंहशब्दयोस्तौ सरूपौ कल्पितावयवौ यस्या निरंशाया नरसिंह इति श्रुतेः=शब्दस्य, सा तथाभूता इव। अत्रेवशब्दप्रयोगो वस्तुतो नरसिंहत्वादिजात्यन्तरवाचकस्य नरसिंहत्वादिशब्दस्य निरंशत्वात्। अन्या=वस्तुतस्तु सावयवनरसिंहादिशब्दादन्या निरंशा, नरसिंहत्वादिजातिवाचिका नरसिंहादिश्रुतिरिति।

अयं भावः— नरसिंहत्वगौरखरत्वादिजातयोऽस्वशब्दाभिधानाः = अविद्यमानासाधारणवाचकाः नरसिंहत्वादिजातिवाचिकानां नरसिंहत्वादिश्रुतीनां नरत्वसिंहत्वादिजातिद्वयविषयकप्रतिभाया अप्युत्पादनेन तासां तदसाधारणश्रुतित्वाभावात्। नरसिंहत्वश्रुतिर्हि नरत्वसिंहत्वजातिवाचकनरसिंहशब्दद्वयसादृश्येनावभासामाना नरत्वसिंहत्वरूपजातिद्वयविषयकप्रतिभामप्यत्रोत्पादयति।

न च नरसिंहरूपाभ्यामवयवाभ्यामारब्धं नरसिंहशरीरं येन जातिद्वयं तत्र समवेयात्, अपि तु नरसिंहत्वरूपं जात्यन्तरमेव जातिद्वयविलक्षणम्। अत्र शबलरूपे=चित्ररूपे वस्तुनि नृसिंहशरीरे समवेतम् चित्ररूप इव चित्रत्वमित्यसाधारणं नरसिंहत्वरूपं जात्यन्तरमिदं न शक्नोति सावयवा नरसिंहत्वश्रुतिः प्रत्याययितुम्। अतो या भावतः=स्वरूपतः, निरंशा नरसिंहत्वश्रुतिः सैव जात्यन्तरमिदं प्रत्याययितुं शक्तेति अवयवसादृश्यमपि न वास्तवमत्रेति बोधयितुमत्रेवशब्दप्रयोगः। केवलं निरंशायां नरसिंहत्वश्रुतौ अवय-

**जात्यवस्थापरिच्छेदे सङ्ख्या सङ्ख्यात्वमेव वा ।**
**विप्रकर्षेऽपि संसर्गादुपकाराय कल्पते ।। ४९ ।।**

**द्रव्यजातेः क्रियाजातेश्च सुबन्ततिङन्तपदगतप्रकृतिवाच्यायाः स्वाश्रये द्रव्येऽवस्थानं अवस्था समवायः, तत्र परिच्छेदः, किमेकत्र द्रव्ये तस्याः समवायो विवक्षितः, किं वानेकत्रेत्येवंरूपः। तस्मिन्निर्णीयमाने यथायथं सुप्तिङ्प्रत्ययवाच्या सङ्ख्याजातिरेकार्थसमवेतसमवायात् साक्षात् सम्बन्धाभावेऽप्युपयोगाय संपद्यते। तिङन्तपदवाच्याया अपि सङ्ख्याजातेः क्रियाजात्या स्वाश्रयद्वारेणास्त्येवैकार्थसमवेतसमवायः। जातेर्वा अवस्था रूपभेदः स्वाश्रयविशेषेण संसर्गलक्षणः। शब्दप्रतीतया वा संख्याजात्या सामर्थ्यादाक्षिप्ता सङ्ख्याव्यक्तिरेकार्थसमवायात् प्रकृतिवाच्यां जातिं विशिनष्टि। प्रतीतस्य ह्यवच्छेदकत्वम्। प्रतीतिश्च शब्दादर्थसामर्थ्याद्वा भवन्ती न विशिष्यते।**

---

वसादृश्याभिमानमात्रम्। यथा सिद्धान्ते निरंशवाक्यस्थानां कल्पितानां पदानां सादृश्याभिमानमात्रमिति भ्रान्त्या नरत्वसिंहत्वजात्योरपि प्रतिभोत्पादनान्नेयमसाधारणी नरसिंहत्वजातिश्रुतिः, न चेतोऽन्याऽपि एकशब्दरूपा तत्र संकेतिता तद्बोधिका श्रुतिर्विद्यतेऽसाधारणीत्यस्वशब्दाभिधाना इत्युक्तम्। अत्राभिधीयतेऽनेनेति अभिधानम्, न विद्यते स्वशब्दः = स्वस्यासाधारण्येन वाचकः शब्दोऽभिधानमभिधानसाधनं यस्याः सा तथेति बहुव्रीहिरिति ॥ ४८ ॥

तदेवमर्थपरीक्षामुखेन पदे परीक्ष्यमाणे प्रकृतिभागस्य जात्यर्थतया व्याप्तिमुपपाद्य = प्रकृतिभागस्य जातिरूपार्थव्याप्यत्वमुपपाद्य, प्रत्ययभागस्यापि तादृशव्याप्यत्वोपपादनेन प्रकृतिप्रत्यययोः समूहस्य जात्यभिधायितामुपपादयितुमाह—जात्यवस्थापरिच्छेदे इति। यद्वा—ननु जातिशक्तिवादे पचतीत्यादौ प्रकृतिभागस्येव प्रत्ययभागस्यापि जात्यभिधायित्वे कथं तिङ्प्रत्ययवाच्यया संख्यागतजात्या प्रकृतिवाच्यायाः क्रियागतजातेः परिच्छेदः, सुदूरविप्रकर्षादित्याशंक्य तमुपपादयितुमाह जात्यवस्थापरिच्छेदे इति।

अस्यार्थः—सुबन्ते पदे द्रव्यगतजातेः तिङन्ते पदे क्रियागतजातेश्च पदगतप्रकृतिवाच्यायाः स्वाश्रये द्रव्येऽवस्थानम्—अवस्था, समवायः, तत्र परिच्छेदः, किमेकत्राश्रये तस्याः समवायो विवक्षितः, किं वाऽनेकत्रेत्येवंरूपः। यद्वा जातेः = द्रव्यजातेः क्रियाजातेर्वा, अवस्था = स्वरूपभेदः स्वाश्रयविशेषेण संसर्गलक्षणः, तस्मिन् क्रियमाणे यथायथं सुप्तिङ्प्रत्ययवाच्यया संख्याजात्या सामर्थ्यादाक्षिप्ता संख्याव्यक्तिर्द्रव्यजातेः क्रियाजातेश्च विप्रकर्षेऽपि संसर्गात् = एकार्थसमवायात्। वा = अथवा, संख्यात्वमेव = सुप्तिङ्प्रत्ययवाच्या संख्यागता जातिरेव, विप्रकर्षेऽपि = द्रव्यजातिक्रियाजात्योर्विप्रकर्षेऽपि, साक्षात् संबन्धाभावेऽपि, संसर्गात् = स्वाश्रयद्वारेण एकार्थसमवेतसमवायलक्षणात्, ( स्वम् = संख्याजातिस्तदाश्रयः संख्या तद्द्वारेण एकार्थसमवेता क्रिया तत्र समवायः

**यद्वा द्रव्यपदार्थपक्षे संख्याव्यक्तिः शब्दवाच्या विशेषणम्। जातिपदार्थपक्षे तु सङ्ख्याजातिरिति विकल्पः। तत्र गौः, गावौ, पचति, पचत इत्यादौ विशिष्टजातीयो विशिष्टसङ्ख्यावच्छिन्नश्चार्थः प्राधान्येन प्रयीयत इति प्रत्ययार्थस्य विशेषणत्वम्, प्रकृत्यर्थस्य च विशेष्यत्वम्। तथा च**

**'क्रियाप्रधानमाख्यातम्' ( नि० १।१ )**

**इत्युपपत्तिः। पचतीत्यादौ साध्यत्वात् प्रकृत्यर्थस्य प्राधान्यात् कारकादिना प्रत्ययार्थेन तस्य विशेषणात्। औपगव इत्यादौ तु प्रकृत्यर्थोपरक्तस्य प्रत्ययार्थस्यापत्यलक्षणस्याभिधानं प्राधान्येनेत्येतद्विषयमेवेदम्।**

**'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति। ( परि० )**

**प्रायिकमेतत्। तथा हि—सङ्ख्या प्रकृत्यर्थानुग्रहायेहोक्तेति 'गामानय' इत्यादौ तद्विशिष्टस्य प्राधान्यम्॥ ४९॥**

**एवं तावत् सामान्येन प्रत्ययार्थविशिष्टः प्रकृत्यर्थोऽभिधीयते पदेनेति द्रव्यद्वारेण सम्बन्धाज्जात्योः प्रकृतिप्रत्यययोः समभिव्याहारोपपत्तिरुक्ता। इदानीं क्वचित्तात्पर्यभेदाच्छ्रुतोऽप्यर्थो न विवक्ष्यत इति वाक्यार्थौपयिकत्वं पदार्थस्य विचारयितुमाह—**

---

क्रियाजातेरित्येवंरूपात् संबन्धात् ), उपकाराय = तत्तज्जातिपरिच्छेदरूपाय प्रागुक्ताय, कल्पते = प्रभवति।

अयं भावः—द्रव्यजातेः क्रियाजातेश्च समवायरूपाया रूपभेदरूपाया वाऽवस्थायाः परिच्छेदे क्रियमाणे शब्दप्रतीतया संख्याजात्या सामर्थ्यादाक्षिप्ता संख्याव्यक्तिः, विभक्तिशब्दात् प्रतीयमाना संख्याजातिरेव वा संख्यायाः क्रियाजातेर्द्रव्यजातेश्च = संख्याजातेस्तयोर्जात्योश्च विप्रकर्षेऽपि संसर्गात्। आद्ये एकार्थसमवायाद् द्वितीये च एकार्थसमवेतसमवायादुपकाराय प्रकृतिवाच्यद्रव्यजातिक्रियाजात्यन्तरपरिच्छेदरूपाय प्रभवति।

न च विभक्तिशब्दे वाच्यसंख्याजात्या सामार्थ्यादाक्षिप्ता संख्याव्यक्तिशाब्दत्वात् कथं प्रकृतिवाच्यां जातिं विशिनष्टीति वाच्यम्, प्रतीतस्यावच्छेदकत्वाभ्युपगमात्। प्रतीतिश्च शब्दादर्थसामर्थ्याद्वा जायमाना न विशिष्यत इत्यर्थसामर्थ्याक्षिप्ताया अपि संख्याव्यक्तेः प्रकृतिवाच्यजातिविशेषकत्वमुपपद्यते। यद्वा द्रव्यं पदार्थं इति व्याडिमते संख्याव्यक्तिर्विभक्तिशब्दवाच्या द्रव्यस्य क्रियाया वा विशेषणम्। जातिः पदार्थं इति वाजप्यायनाचार्यमते तु संख्याजातिर्द्रव्यक्रियाजात्योः स्वाश्रयद्वारेणैकार्थसमवेतसमवायसंबन्धेन विशेषणमिति विकल्पः। तत्र गौः, गावौ; पचति, पचत इत्यादौ विशिष्टजातीयो विशिष्टसंख्यावच्छिन्नश्चार्थः प्राधान्येन प्रतीयत इति संख्यारूपस्य प्रत्ययार्थस्य विशेषणत्वम्, प्रकृत्यर्थस्य च विशेष्यत्वम्। तथा च 'क्रियाप्रधानमाख्यातम्,' 'सत्त्वप्रधानानि नामानि' इत्युपपत्तिः। पचतीत्यादावाख्यातस्य क्रियाप्रधानत्वञ्च प्रकृत्यर्थस्य साध्यत्वेन प्राधान्यात् प्रत्ययार्थेन कारकादिना तस्य विशेषणात्। औपगव इत्यादौ तु प्रकृत्यर्थो-

**लक्षणा शब्दसंस्कारे व्यापारः कार्यसिद्धये ।**
**सङ्ख्याकर्मादिशक्तीनां श्रुतिसाम्येऽपि दृश्यते ॥ ५० ॥**

**कर्मादयोऽपि शक्तयो विभक्तिवाच्याः संख्यावदिति तासां संख्याकर्मादिशक्तीनां श्रुतेः शब्दस्य स्ववाचकस्यामादेः साम्येऽपि, द्विविधो व्यापारो वाक्यार्थे । लक्षणा एकः । स च शब्दसंस्कारे शब्दसंस्कारविषये । संख्याकर्मादिरहितस्य प्रातिपदिकार्थमात्रस्यासम्भवात् ।**

**'न केवला प्रकृतिः प्रयोक्तव्या'**

**इति शब्दसंस्कारार्थं स्वार्थेन प्रकृत्यर्थमनवधारयन्त्यपि विभक्तिः प्रयुज्यते क्वचित् ।**

---

परक्तस्य = प्रकृत्यर्थविशिष्टस्य, प्रत्ययार्थस्यापत्यरूपस्य प्रत्ययेनाभिधानं प्राधान्येन इत्येतद्विषयमेवेदम् 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति ।

अस्यार्थः—प्रकृतिप्रत्ययौ प्रकृत्यर्थेन सह संबद्धं प्रत्ययार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति । एतच्च वचनं प्रायिकम् । तथाहि—गामानयेत्यादौ संख्याप्रकृत्यर्थानुग्रहायोक्तेति अनुग्राह्यस्य संख्याविशिष्टस्य = संख्याविशेष्यस्य प्राधान्यम् ।

एवं तावत् सामान्येन = प्रायेण, प्रत्ययार्थविशिष्टः प्रकृत्यर्थः पदेनाभिधीयत इति सिद्धम् ॥ ४९ ॥

पूर्वं प्रकृतिप्रत्यययोः समभिव्याहारस्य स्वस्वार्थजात्योः शक्तेरुपपत्तिरुक्ता, तदर्थजात्योर्द्रव्यद्वारेण परस्परं संबन्धात् । इदानीन्तु क्वचित्तात्पर्यभेदात् = भिन्नार्थे तात्पर्यात्, श्रुतोऽप्यर्थो न विवक्ष्यते । किन्तु तत्र तात्पर्यानुपपत्तिमूलिका या लक्षणा तद्गोचरीभूत एवार्थो वाक्यार्थान्वयित्वेन विवक्ष्यत, इत्येवं शक्यस्येव लक्ष्यस्यापि पदार्थस्य वाक्यार्थबोधौपयिकत्वं विचारयितुमाह—लक्षणा शब्दसंस्कार इति ।

अस्यार्थः—संख्याकर्मादिशक्तीनां वाचिकाया अमादिश्रुतेः = अमादिशब्दस्य, एकत्वेऽपि तस्याः श्रुतेर्वाक्यार्थबोधे जननीये द्विविधो व्यापारः । एका लक्षणा = संख्याकर्मादिजातिवाचकस्य संख्याकर्मादिषु लक्षणा, स च व्यापारः शब्दसंस्कारे फलभूते सति जायते । शब्दसंस्कारसिद्ध्यर्थं इति यावत् । संख्याकर्मादिरहितस्य घटत्वादिजातिरूपस्य घटादिप्रातिपदिकार्थमात्रस्यानयनादिक्रियायां तज्जातौ वाऽन्वयासंभवात् । क्वचित्तु शब्दसंस्कारार्थं स्वार्थेन प्रकृत्यर्थमनवधारयन्त्यपि = अपरिच्छिन्दानाऽपि विभक्तिः प्रयुज्यते । 'न केवला प्रकृतिः प्रयोक्तव्या' इति वचनात् । तद् यथा—'ग्रहं संमार्ष्टि' इति' । अत्रैकत्वं कथं न विवक्षितमिति चोद्ये = प्रश्ने शब्दसंस्कारमात्रफलकमेव त्वेकवचनमिति न्यायं = युक्तिम्, वक्ष्यति । अत इह वस्तुमात्रस्य ग्रहस्य = सोमरसग्राहिणः पात्रस्य, ग्रहपदेनोपक्षेपः = प्रत्ययः, न त्वेकत्वसंख्याविशिष्टस्येति बहूनामपि ग्रहाणां संमार्जनं सिद्ध्यति ।

**तद्यथा 'ग्रहं सम्मार्ष्टि' इति। कथमत्रैकत्वं न विवक्षितम्? शब्दसंस्कारमात्रफलमेव त्वेकवचनमिति चोद्ये न्यायं वक्ष्यति। इह वस्तुमात्रोपक्षेपः। तथा कर्मादिशक्तीनां शब्दसंस्कारार्थमुपादानेऽविवक्षा। यथा 'सक्तून् जुहोति' इति। अत्र हि सक्तुसाधनो होम इत्येतावन्मात्रं विवक्षितम्। हवनक्रियाया अदृष्टार्थत्वेन फलवत्त्वात्प्राधान्यात् क्रियाविषयत्वमात्रेणेप्सिततमा अपि सक्तवः क्रियासमन्वयमात्रे चरितार्थाः। न हि कथं नाम सक्तवो भस्म सम्पद्येरन् इति होमः क्रियते, अपि तु सक्तुसाधनेन तेनादृष्टं सम्पद्यतामिति। यद्येवमदृष्टार्थत्वात्क्रियायाः सक्तवो नैवेप्सिततमा इति नास्त्येवात्र कर्मशक्तिः। तदसत्यास्तस्याः कथमविवक्षा। सतो ह्यविवक्षा शब्दोपात्तस्य न्याय्या। तद्यथा 'ग्रहम्' इत्येकत्वस्य, न त्वसतः। न हि 'काष्ठानि पचन्ति' इत्युक्त्वा काष्ठानां कर्मशक्तिरविवक्षितेत्युच्यते, अपि तु करणशक्तिः।**

**सत्यमेतत्। अदृष्टमेव तु न सम्पद्येत यदि सक्तव ईप्सिततमत्वेन नाश्रीयेरन्, अनन्योपायसाध्यत्वादित्यदृष्टार्थत्वसामर्थ्यादेव सक्त्वर्थताभ्युपेतव्या क्रियायाः। तद्यथा-राधनस्य देवतार्थता। अदृष्टार्थमेव हि देवताराध्यते इत्यदेवतार्थत्वे तस्यादृष्टार्थत्वमेव**

---

तथा क्वचित् शब्दसंस्कारार्थं विभक्तेरुपादाने कर्मादिशक्तीनामविवक्षा। यथा— 'सक्तून् जुहोति' इति। अत्र हि सक्तुसाधनो होम इत्येतावन्मात्रं विवक्षितं न तु कर्मको होम इति। हवनक्रियाया अदृष्टार्थत्वेन स्वर्गादिरूपफलवत्वात् प्राधान्यात् तस्या एव विवक्षितत्वम्। सक्तवस्तु हवनक्रियाया विषयत्वमात्रेणेप्सिततमा अपि क्रियासमन्वय-मात्रे = क्रियासंबन्धमात्रे, सति चरितार्थाः = कृतकृत्याः, इति न तेषामीप्सिततमत्वरूप-कर्मत्वस्य सतोऽपि विवक्षा। कथं नाम सक्तवो भस्म संपद्येरन् इति नहि होमः क्रियते, किन्तु कथं नाम सक्तुसाधनकेन तेनादृष्टं संपद्यतामिति स क्रियते।

ननु यद्येवं तदाऽदृष्टार्थत्वाद् हवनक्रियायाः सक्तवो नैवेप्सिततमा इति नास्त्येवात्र कर्मत्वशक्तिः। तस्मादसत्यास्तस्याः कथमविवक्षा। शब्दोपात्तस्य सतो ह्यविवक्षा न्याय्या। यथा 'ग्रहं संमार्ष्टि' इत्यत्रैकवचनोपात्तस्य सत एकत्वस्य, नत्वसतः कर्मत्वस्या-विवक्षा समुचिता। नापि च सक्तून् जुहोति' इत्यत्रैकवचनोपात्तस्य कर्मत्वस्यासत्त्वम-विवक्षितत्वं वा वक्तुं शक्यते। नहि 'काष्ठानि पचन्ति' इत्युक्त्वा काष्ठानां कर्मत्वशक्तिर-विवक्षितेत्युच्यते, अपि तु करणशक्तिरविवक्षितेति चेत् सत्यमेतत्। अदृष्टमेव तु न संपद्येत यदि सक्तव ईप्सिततमत्वेन नाश्रीयेरन्। अदृष्टस्य सक्तुकर्मकहोमक्रियारूपोपायान्योपाया-साध्यत्वाद् इति क्रियाया अदृष्टार्थत्वसामर्थ्यादेव सक्त्वर्थताऽपि = सक्तुनिवृत्त्यर्थताऽपि, मशकार्थो धूम इतिवत्, अभ्युपेतव्या। यथाऽऽराधनस्य देवतार्थता। यद्यप्यदृष्टार्थमेव हि देवताराधनम्, तथापि तस्य देवतार्थत्वाभावेऽदृष्टार्थत्वमेव हीयेत इति यथा, तथा प्रकृते हवीरूपत्वेन प्रधानमङ्गं सक्तवोऽदृष्टस्येति भवन्त्येवेप्सिततमाः। किन्तु तेषामीप्सिततम-त्वमविविक्षितम्, सक्तुनिवृत्तिमात्रफलकत्वेन हवनक्रियाया अनभिप्रेतत्वात्। भस्मी-भूतानां सक्तूनां हवनक्रियाफलत्वस्यादृष्टरूपफलान्तरप्रयुक्तत्वाच्च अविवक्षितत्वम्। यथा

हीयेत। एवमिह प्रधानस्याङ्गं सक्तवोऽदृष्टस्येति भवन्त्येवेप्सिततमाः। अविवक्षितन्तु तदीप्सिततमत्वम्, तावन्मात्रफलत्वेन क्रियाया अनभिसंहितत्वात्, फलान्तरप्रयुक्तत्वाच्च सक्तूनाम् क्रियाफलत्वस्य, न ग्रहाणामिव रूपान्तरेणोपादानादविवक्षितत्वम्। तस्मादीप्सिततमत्वं कारकान्तरापेक्षयासच्चाविवक्षितं च कयाचिदपेक्षयात्रेति स्थितम्। क्वचित्तु कार्यसिद्धयर्थं संख्याकर्मादिशक्तीनां व्यापारः कार्यस्य वाक्यार्थभूतायाः क्रियायाः सिद्धिनिमित्तो द्रव्यावच्छेदोपयोगः, संख्यादिविशेषवता द्रव्येण साध्यमानायाः क्रियायाः प्रतिपादनात्। तद्यथा पशुना यजेतेति। अत्र हि यजिरेकेनापि पशुना अविकलो निष्पद्यत इति विवक्षितैव सा संख्येति वक्ष्यते न्यायः। कर्मशक्तेश्च विवक्षा 'व्रीहीनवहन्ति' इति। व्रीहयो ह्यवघातेन संस्कार्यत्वादीप्सिततमाः, न त्ववघातमात्रार्थं कश्चित् प्रवर्तते, अपि तु व्रीह्यर्थम्। तेषामवघातेन संस्कृतानां पुरोडाशयोग्यस्वभावातिशयप्रतिलम्भेन यज्यङ्गतासिद्धेरित्यवहननक्रियात्राप्रधानम्, संस्कार्या व्रीहय एव प्राधानम्, तण्डुलीकृतानामुत्तरत्रोपयोगात्। सक्तूनां तु भस्मीभूतानामसत्त्वान्नोत्तरत्रोपयोगः।

तदाहुः—

भूतभाव्युपयोगं हि द्रव्यं संस्कार्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥ इति॥
(त. वा. २।१।४)

---

ग्रहाणां रूपान्तरेण = एकत्वातिरिक्तेन ग्रहत्वेन रूपेण, यागे संमार्जनार्थमुपादानादेकत्वस्याविवक्षितत्वम्, तथा न सक्तूनां कर्मत्वातिरिक्तेन रूपेण, हीमकर्मणि उपादानादविवक्षितत्वं कर्मत्वस्य। सक्तूनिति द्वितीयाश्रवणात् कर्मत्वेनैवोपादानात्। तस्मात् सक्तूनामीप्सिततमत्वं कारकान्तरापेक्षया सदपि हवनक्रियाया मुख्यं यत्फलं स्वर्गादिसाधनीभूतमदृष्टं तदपेक्षया अविवक्षितञ्चात्रेति स्थितम्। क्वचित्तु संख्याकर्मादिशक्तीनां द्वितीयो व्यापारः कार्यसिद्धये = कार्यसिद्ध्यर्थम्, कार्यस्य वाक्यार्थभूतायाः क्रियायाः सिद्धिनिमित्तको द्रव्यावच्छेदे = द्रव्यावधारणे उपयोगरूपो दृश्यते। संख्याकर्मत्वादिरूपविशेषवता द्रव्येण साध्यमानायाः क्रियाया आख्यातेन प्रतिपादनात्। तद्यथा—'पशुना यजेत' इति। अत्र हि यजिः = यागः एकेनापि पशुनाऽविकलः = साङ्गः निष्पद्यते इति विवक्षितैव पशुनेति एकत्वसंख्येति न्यायो वक्ष्यते। कर्मत्वशक्तेश्च विवक्षा 'व्रीहीनवहन्ति' इति। व्रीहयो हि अवघातेन संस्कार्यत्वादीप्सिततमाः, नह्यवघातमात्रार्थं कश्चित् प्रवर्तते, अपि तु व्रीह्यर्थं = व्रीहिसंस्कारार्थम्-संस्कृतव्रीह्यर्थं वा, तेषामवघातेन संस्कृतानामेव पुरोडाशयोग्यस्वरूपातिशयप्राप्त्या यागाङ्गतासिद्धेरित्येवमवहननक्रियायाः शब्दतः प्राधान्येऽपि व्रीहिसंस्करार्थत्वेनार्थमप्राधान्यम्। व्रीहीणान्तु तत्संस्कार्यत्वेनेप्सिततमत्वरूपोद्देश्यत्वेनार्थं प्राधान्यम्। तण्डुलीकृतानां तेषामुत्तरत्र पुरोडाशभाव उपयोगात्। सक्तूनान्तु हवनक्रियया भस्मीभूतानामसत्त्वेन नोत्तरत्रोपयोगा। तदाहुः—

**अवहननक्रिया चात्राप्रधानं वास्तवेन रूपेण कथ्यते। शाब्देन तु रूपेण क्रियैव सम्पाद्यतया चोद्यते सर्वत्रेति सैव प्रधानम्। तथा च तदपेक्षं कर्मणः कारकत्वमत्रेति वाक्यार्थप्रधानभूता क्रियेति क्रियाविवेके विस्तरेणास्माभिरभिहितमिति तत एवावधार्यम्। इत्थं च—**

**'तानि द्वैधं गुणप्रधानभूतानि' इति।**

**भावशब्दानां द्वैविध्यकथनं वास्तवरूपाभिप्रायमवगन्तव्यम्। पूर्वे तु—**

**'लक्षणा शब्दसंस्कारो व्यापारः कार्यसिद्धये'**

**इति पठन्तो लक्षणा द्रव्योपलक्षणम्, तत्र शब्दसंस्कारमात्रोपयोगिसंख्योपादानमिति तद्विषयत्वाच्छब्दसंस्कारो लक्षणेति सामानाधिकरण्यं व्याचक्षते॥ ५०॥**

**इदानीं शब्दसंस्कारे लक्षणाख्यो व्यापारो विभज्यते—**

---

भूतभाव्युपयोगं हि द्रव्यं संस्कार्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥ इति।

तत्र भूतोपयोगं द्रव्यं संस्कार्यम्। यथा—"नीतासु दक्षिणासु चात्वाले कृष्णमृगविषाणां प्रास्यति" इति। अत्र हि भूतोपयोगा कृष्णमृगविषाणा चात्वालनाम्नि गर्ते प्रक्षेपेण संस्क्रियते। भाव्युपयोगास्तु प्रागुक्ता व्रीहयोऽवघातेन संस्कार्याः। यद्यप्यवघातक्रिया व्रीहिसंस्कारार्थत्वेनार्थतोऽप्रधानमित्युद्देश्यत्वेन प्रधानानां व्रीहीणां कारकत्वेन तच्छेषत्वं नोपपद्यते, तथापि शाब्दे व्यवहारे सर्वत्र क्रियैव विधेयत्वेनोपदिश्यत इति तदपेक्षं कर्मणः कारकत्वमिति सर्वत्र वाक्यार्थे प्रधानीभूता क्रियैवेति क्रियाविवेके हेलाराजकृते विस्तरेणाभिहितम्। एवञ्च "तानि द्वैधं गुणप्रधानभूतानि" इत्यत्र भावशब्दानां = क्रियावाचकानामाख्यातशब्दानाम्, द्वैविध्यकथनमर्थतो गुणभूतत्वम्, शब्दतश्च प्रधानभूतत्वं क्रियाया आदाय द्रष्टव्यम्। अत्र वाक्ये 'तानि' इत्यस्य आख्यातानीत्यर्थः। पूर्वे तु व्याख्याकृतः—'लक्षणा शब्दसंस्कारो व्यापारः कार्यसिद्धये' इति पाठमत्र कारिकायां पूर्वार्धे समाद्रियमाणाः लक्षणा = द्रव्योपलक्षणम् = द्रव्ये उपलक्षणीभूतया संख्यया तस्य इतरस्माद् व्यावर्तनम्, तत्र = द्रव्ये, शब्दसंस्कारमात्रोपयोगिन्या संख्याया उपलक्षणत्वेनोपादानमित्येवं लक्षणाविषयत्वात् शब्दसंस्कारो लक्षणेति सामानाधिकरण्यं व्याचक्षते। अस्मिंश्च पक्षे 'कार्यसिद्धये' इत्यस्य शब्दसंस्काररूपकार्यसिद्धय इत्यर्थः। उदाहरणञ्चास्य 'ग्रहं संमार्ष्टि' इत्यादिकं बोध्यम्। यत्र प्रकृत्यर्थे संख्या न विवक्षितेति॥ ५०॥

साम्प्रतं प्रसङ्गप्राप्तः शब्दसंस्कारे उपयुक्तो लक्षणाख्यः शब्दव्यापारो विभागपूर्वकं व्याख्यायते न विना संख्ययेति।

अयमर्थः—कश्चित् सत्त्वभूतो = द्रव्यभूतोऽर्थः संख्यया विना = संख्याविरहितो नोच्यते = शब्देन नाभिधीयते। अतो द्रव्याभिधानस्य संख्याऽविनाभावित्वात्, सर्वस्यापि

**न विना सङ्ख्यया कश्चित् सत्त्वभूतोऽर्थ उच्यते ।**
**अतः सर्वस्य निर्देशे सङ्ख्या स्यादविवक्षिता ॥ ५१ ॥**

इदं तदिति सर्वनामप्रत्ययवमर्शयोग्यं द्रव्यं संख्यासमन्वयसहम्; 'तस्यापत्यम्' इत्यादौ निर्देशे साक्षान्निर्दिदिक्षितमिति नान्तरीयकत्वान्निर्देशमात्रे—

'न केवला प्रकृतिः प्रयोक्तव्या' इति ।

चरितार्था सङ्ख्या न विवक्ष्यत इत्युत्सर्गः ॥ तदुक्तम्—

'तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम्, तस्याविवक्षितत्वात्' इति ।

जातिस्तु द्रव्यस्य द्रव्यान्तराद्विवेकमवगमयितुमुपादीयत इति न तदविवक्षा न्याय्या । सर्वथा विवक्षाभावे प्रकृतिप्रत्ययार्थयोः शब्दप्रयोगस्यैवाभावात् । तथा च प्रकृतिवाच्या सङ्ख्या विवक्ष्यत एवेति हि वक्ष्यति ॥५१॥

अस्योत्सर्गस्य केचिद्विशेषमाहुः—

---

भावस्य संख्यान्वितत्वेन द्रव्यरूपतया सर्वस्य निर्देशे संख्याऽविवक्षिता स्यात् । इतरव्यावृत्तयेऽनभिधीयमानत्वादिति ।

अयं भावः—इदमिति तदिति वा सर्वनाम्ना प्रत्ययवमर्शयोग्यो भावः संख्यासमन्वययोग्यः, अत एव स द्रव्यमित्युच्यते । तदेव च तस्यापत्यमित्यादौ सर्वत्रैव निर्देशे साक्षान्निर्दिदिक्षितं, न तु संख्याविशिष्टम् । इतरसंख्याया व्यावर्तयितुमिष्यमाणत्वाभावादिति सर्वत्रैव द्रव्यनिर्देशे नान्तरीयकत्वादुपात्ताऽपि संख्या 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति नियमानुसारेण पदसाधुत्वसंपादकविभक्त्युत्पत्तये चरितार्थेति न विवक्ष्यते इत्येष सर्वत्रैव संख्यानिर्देशे उत्सर्गः = उत्सृज्यते सति बाधके त्यज्यते इत्युत्सर्गः साधारणो नियमः । तदुक्तम्—'तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम् तस्याविवक्षितत्वादिति ।

अस्यार्थः—तद्धितार्थनिर्देशे-तस्यापत्यमित्यादौ, लिङ्गवचनम् = लिङ्गम्-पुंस्त्वादि वचनम् = संख्या, एतदुभयम्, अप्रमाणम् = इतरव्यावृत्तार्थाभिधायकतया प्रमाणं न भवति, तस्य लिङ्गस्य वचनस्य च नान्तरीयकतयोपादानेनेतरव्यावर्तकतयाऽविवक्षितत्वादिति । जातिस्तु संख्यातो विपरीता स्वाश्रयद्रव्यस्य द्रव्यान्तराद् व्यावृत्तिप्रत्यायनाय शब्देनाभिधीयत इति न तस्या अविवक्षा समुचिता । प्रत्ययार्थसंख्याया अविवक्षावत् प्रकृत्यर्थसंख्याया अपि विवक्षाया अभावे संख्यावाचकैकद्व्यादिशब्दमात्रस्यैवाभावप्रसङ्गः । एवञ्चैकद्व्यादिशब्दरूपप्रकृतिवाच्या संख्या विवक्ष्यत एव, न तु प्रत्ययार्थसंख्यावत् क्वापि अविवक्षितेति ॥५१॥

अस्योत्सर्गस्य केचिदपवादमाहुः—एकत्वं वा बहुत्वं वेति ।

अस्यार्थः—केषाञ्चिन्मते जातिगतं स्वाभाविकमेकत्वं वा, जातौ स्वाश्रयद्रव्येभ्योऽतिदेशतः प्राप्तं बहुत्वं वा, जातिपरे विधौ अविवक्षितम् । हि = यतः, तत् =

**एकत्वं वा बहुत्वं वा केषाश्चिदविवक्षितम् ।**
**तद्धि जात्यभिधानाय द्वित्वं तु स्याद्विवक्षितम् ॥५२॥**

**यज्जातौ न संभवति तद्व्यक्तिगतं पारम्पर्येण व्यवच्छेदकतयावसीयत इति द्रव्यगता सङ्ख्या जातेरवच्छेदिका न्याय्या, न तु स्वगता एकत्वबहुत्वलक्षणा। एकत्वं हि जातेरव्यभिचारि, बहुत्वम् अप्यातिदेशिकम् । ननु जातेर्नैव सङ्ख्यास्ति, द्रव्यधर्मत्वात्तस्याः। नेह शास्त्रान्तरप्रसिद्धा प्रक्रिया प्रमाणम्, अपि तु स्वकृतान्तः कश्चिदास्थेयः। अस्ति च प्रमाणमेकत्वे, जातेः प्रमाणेनैकत्वविशिष्टाया एव सिद्धेः। तथातिदेशिकम्**

**'जात्याख्यायामेकस्मिन्बहुवचनम्' इति ( पा० १।२।५८ ) ।**

**जातिपरायां चोदनायामेकत्वबहुत्वे न विवक्ष्येते 'ब्राह्मणो न हन्तव्यः', 'सुरा न पेया', 'वृषलैर्न प्रवेष्टव्यम्'। यत्र तु विवक्षा तत्र द्रव्यपरा चोदनेति। द्वित्वं तु न जात्याख्यायां विहितमिति तत्सर्वथा द्रव्याश्रयमेवेति विवक्ष्यते सर्वत्र ॥५२॥**

**तदपि क्वचिन्न विवक्ष्यत इत्याह—**

---

प्रागुक्तमेकत्वं बहुत्वं वा जात्यर्थभिधानाय शब्दत उपादीयते। तेन = तेन विना जातेरभिधानासंभवात्। द्वित्वन्तु जात्याख्यायां विहितत्वाभावाद् द्रव्यगतमेवेति विवक्षितमेव स्यादिति।

अयं भावः—यत्संख्यादिरूपं विशेषणं जातावसंभवि, तद्व्यक्तिगतं पारम्पर्येण = स्वाश्रयसमवेतत्वादिना जातिव्यवच्छेदकतया निश्चीयत इति रीत्या द्रव्यगतं संख्यादिकं पारम्पर्येण जातेरवच्छेदकं न्याय्यम्, न तु स्वगता संख्या एकत्वबहुत्वलक्षणा जातेरवच्छेदिका न्याय्या। एकत्वस्य जातेरव्यभिचारित्वेन जातिव्यवच्छेदकत्वासंभवात्। व्यभिचारिण एव व्यवच्छेदकत्वाभ्युपगमात्। तथा च वृद्धाः—संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति। बहुत्वं तु जातौ साक्षान्नास्त्येव, किन्तु 'द्रव्यगतं जातावतिदिश्यते' इत्यातिदेशिकम्। अतः प्रागुक्तपारम्पर्येणैव जातेरवच्छेदकम् न तु साक्षात्।

ननु जातौ काऽपि संख्या नास्ति, संख्याया गुणत्वेन द्रव्यधर्मत्वादिति चेन्न। शास्त्रान्तरप्रसिद्धायाः प्रक्रियाया व्याकरणशास्त्रे प्रमाणत्वाभ्युपगमावश्यकत्वाभावात्। व्याकरणशास्त्रे तु शब्दसाधुत्वनिर्वाहार्थं कश्चित् स्वसिद्धान्तः स्वीकार्यः। अस्ति च जातिगतैकाकारप्रतीतिरूपं प्रत्यक्षम् कार्यत्वादिलिङ्गकमनुमानं वा प्रमाणम्। तेन च प्रमाणेन जातेरेकत्वविशिष्टाया एव सिद्धेः। तथा बहुत्वं जातौ आतिदेशिकमित्यत्रापि प्रमाणम् 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति पाणिनीयं सूत्रमेव। तथा चायं निष्कर्षः—जातिपरे विधावेकत्वं बहुत्वं वा न विवक्ष्यते। तद्यथा-ब्राह्मणो न हन्तव्यः, सुरा न पेया, इत्यत्रोपात्तमप्येकत्वं न विवक्षितं सर्वब्राह्मणहननसर्वसुरापाननिषेधपरत्वादनयोर्वाक्ययोः। देवमन्दिरे वृषलैर्न प्रवेष्टव्यमित्यत्र एकस्य द्वयोरपि वृषलयोः

यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम् ।
इत्येवं लक्षणेऽर्थस्य द्वित्वं स्यादविवक्षितम् ॥५३॥

**औषधदानविषयभूतव्याधितोपलक्षणार्थस्यैवमनेन प्रकारेण व्याधिं निमित्तत्वेनोपादाय प्रवृत्तस्योपलक्षणस्यैतावित्येवमुपात्तस्य यद्वाच्यं द्वित्वं तदत्राविवक्षितम् । सप्तमी चेयम्; लक्षणे ज्ञापने, अर्थस्यौषधदानविषयस्योपलक्षणे वेत्यर्थः । औषधस्वरूपमहिम्नैवात्र व्याधितविषयतासिद्धेः तद्दानस्यैताविति व्याधितान्तरनिवृत्त्यर्थमुपादीयमानमेकस्यापि तयोर्मध्यात् संभाव्यमाने व्याध्युद्भवे तदौषधदानस्येष्टेरविवक्षामत्र द्वित्वे गमयति । सम्भावनाविषयत्वाच्च व्याधिसम्भवस्य यदा द्वयोरपि तत्सम्भवः, तदा समुदितावेवौषधदानस्य विषय इति सहविवक्षया चोदनार्थवती । व्याधिप्रतीकारप्रयुक्तं पुनरौषधदानमित्येकस्यापि व्याधितत्वे तत्सम्भवः । बहुषु च प्रकृतेषु एताविति परामर्शस्यानुपपत्तेरविवक्षायामपि द्वित्वस्य बहुषु तदौषधदानाप्रसङ्गः ।**

**किञ्चौषधदानेन द्वावनुग्राह्याविति प्रधानेऽत्र सङ्ख्या न विवक्ष्यते । यत्र तु क्रमेणापि द्वयोरेव चोदनार्थप्रतिपत्तिः वृक्षौ छेत्तव्याविति तत्र विवक्षैव । इह तु सम्भावनाविषयं व्याधितत्वं भविष्यदुत्प्रेक्ष्य चोदनेति क्रमेण युगपद्वा व्याधिसम्भवे तदुपपत्तिः । न हि भविष्यतो नियमेन साहभाव्यं निर्णीयते ॥ ५३ ॥**

**तदेवं प्रत्ययोपात्ताया विवक्षिताविवक्षितत्वं वाक्यार्थपर्यालोचनया विषयविभागेन प्रतिपाद्याधुना प्रकृत्युपादानाया एकान्तेनैव विवक्षेत्याह—**

---

प्रवेशनिषेधपरत्वादस्य वाक्यस्यात्र बहुवचनोपात्ता बहुत्वसंख्या न विवक्षिता । यत्र तु विधौ संख्या विवक्ष्यते, तत्र द्रव्यपरा चोदना = विधिः, न तु जातिपरा । तद्यथा पशुना यजेत इति । अत्र पशुगतैकत्वसंख्याया विवक्षणाद् बहुपशुकरणकयागान्नादृष्टसिद्धिः । एवं कपिञ्जलानालभेत इत्यत्र प्रथमोपस्थिताया बहुत्वव्याप्यत्रित्वसंख्याया विवक्षणान्नैककपिञ्जलकर्मकालम्भनाददृष्टसिद्धिः । द्वित्वं तु न जात्याख्यायां शास्त्रेण विहितमिति द्वित्वं सर्वथा द्रव्याश्रितमेवेति तत्सर्वत्रैव प्रयोगे विवक्ष्यत एवेति ॥५२॥

द्वित्वमपि क्वचिन्न विवक्ष्यत इतीदानीं वक्तुमाह—यद्येताविति ।

अस्यार्थः—यत्र यत्किञ्चिन्निमित्तत्वेनोपादाय या काचन क्रिया विधीयते, तत्रोद्देश्यपदार्थस्य द्वित्वं द्विवचनविभक्त्युपस्थापितमप्यविवक्षितं स्यात् । तद्यथा—'यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम्' इत्येवं लक्षणे = एवंस्वरूपे प्रयोगे व्याधितपदार्थगतं द्वित्वमविवक्षितं भवति । अत्र हि व्याधिरूपं निमित्तमुपादाय व्याधितपदार्थमुद्दिश्य औषधविशेषदानक्रिया विधीयत इत्युद्देश्यगतं द्वित्वमविवक्षितमिति ।

अयं भावः—'यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम्' इत्यत्र औषधदाने विधीयमाने उद्देश्यतया विषयभूतो यो व्याधितपदार्थस्तत्रोपलक्षणीभूतोऽर्थो यस्य एताविति पदस्य तादृशस्य, एवमनेन प्रकारेण व्याधिं निमित्तत्वेनोपादायोद्देश्यभूतं स्वार्थं

एकादिशब्दवाच्यायाः कर्मण्यङ्गत्वमिष्यते ।
सङ्ख्यायाः खनति द्वाभ्यामिति रूपाद्धि साश्रिता ।। ५४ ।।

'द्वाभ्यां मन्त्राभ्यां मृदं खनति', 'चतुर्भिरादत्ते', षड्भिर्हरति' इत्यत्र प्रवृत्तिनिमित्तभूतायाः प्रातिपदिकवाच्याया द्व्यादिसङ्ख्यायाः क्रियावच्छेदकत्वमभ्युपगम्यते, सा सङ्ख्या विवक्षितैव। अन्यथा शब्दार्थ एव त्यक्तः स्यादिति प्रातिपदिकस्यान्यथानुपपन्नप्रयोगस्य रूपात् स्वभावात्, विशिष्टसङ्ख्याभिधायिनः सामर्थ्यादत्र विवक्षा। रूपशब्दो वा प्रातिपदिकपर्याय इति रूपात् प्रातिपदिकात्, न विभक्ते-

---

वक्तुं प्रवृत्तस्य, उपलक्षणस्य = व्याधितपदार्थे उपलक्षणीभूतो यः स्वार्थस्तद्बोधकस्य, 'एतौ' इत्येवमुपात्तस्य = प्रयुक्तस्य यद् वाच्यं द्वित्वं तदत्र वाक्येऽविवक्षितं स्यात्। एकस्यापि व्याधितत्वे एतदौषधदानस्य विधेयत्वेनाभिप्रेतत्वात्। श्लोके 'लक्षणे' इति सप्तमी, न तु द्विवचनम्, सन्ध्यसंभवात्। अर्थस्य लक्षणे = ज्ञापने इत्यर्थः। यद्वा औषधदाने विधीयमाने उद्देश्यतया विषयस्यार्थस्य व्याधितपदार्थस्य उपलक्षणे = उपलक्षणीभूतैतत्पदार्थबोधन इत्यर्थः। प्रकृतवाक्ये औषधस्वरूपमहिम्नैव तद्दानस्य व्याधितविषयकत्वसिद्धेः पुनरेताविति पदं व्याधितान्तरव्यावृत्त्यर्थं प्रयुज्यमानं तयोर्द्वयोर्मध्यादेकस्यापि व्याध्युद्भवे संभाव्यमाने तदौषधदानस्येष्टत्वादत्र द्वित्वस्याविवक्षितत्वं गमयति। व्याधिसंभवस्य = व्याध्युत्पत्तेः, भावित्वेन संभावनाविषयत्वाच्च, यदा द्वयोरपि व्याधिसंभवः = व्याध्युद्भवः तदा समुदितौ द्वावेव औषधदानस्योद्देश्यतया विषय इत्येताविति एकशेषे सहविवक्षया चोदना = विधिः, अर्थवती = सफला। औषधदानन्तु व्याधिप्रतीकारेण फलेन प्रयुक्तं भवतीति एकस्यापि व्याधितत्वे औषधदानसंभवः। बहुषु च प्रकृतेषु एताविति द्विवचनान्तेन सर्वनाम्ना प्रकृतपरामर्शानुपपत्तेर्द्वित्वस्याविवक्षायामपि बहुषु तदौषधदानाप्रसङ्गः। किञ्चौषधदानेन द्वौ व्याधितपदार्थौ अनुग्राह्याविति अनुग्राह्यत्वात् प्रधाने व्याधितपदार्थे द्वित्वसंख्या न विवक्ष्यते। एकस्यापि व्याधितपदार्थस्य औषधदानेनानुग्राह्यत्वसंभवात्। यत्र तु सह वा, क्रमेणापि वा चोदनार्थप्रतिपत्तिः = विध्यर्थविज्ञानम्, यथा वृक्षौ छेत्तव्याविति, तत्र द्वित्वस्य विवक्षैव। प्रकृते तु संभावनाविषयं व्याधितत्वं भविष्यत्कालिकं समुत्प्रेक्ष्य औषधदानचोदनेति क्रमेण, सह वा व्याधितत्वे द्वित्वविवक्षोपपत्तिः। नहि भविष्यतो व्याधितत्वस्य नियमेन व्यक्तिद्वये यौगपद्यं निर्णेतुं शक्यत इति ।।५३।।

तदेवं प्रत्ययवाच्यायाः संख्याया विवक्षाऽविवक्षे तत्तद्वाक्यार्थानुरोधेन विषयविभागेन प्रतिपाद्य सांप्रतं प्रकृतिवाच्यायास्तस्या नियमेनैव विवक्षेत्याह—एकादिशब्दवाच्याया इति।

अस्यार्थः—एकद्विबह्वादिशब्दवाच्यायाः संख्यायाः खनति द्वाभ्यामित्यादौ खननादिकर्मणि स्वाश्रयद्वारा अङ्गत्वमिष्यते। हि = यतः, सा एकद्व्यादिप्रातिपदिकवाच्या संख्या, रूपात् = एकादिप्रातिपदिकस्वरूपात् = प्रातिपदिकस्वभावात्, आश्रिता = द्रव्ये

**रित्यर्थः, यथा द्विपुत्र इत्यादौ। अत्र हि विभक्तिवाच्यो भेदः समास एकार्थीभावान्निवर्तते। प्रकृतिवाच्यस्त्ववतिष्ठत एव। तदभावे हि शब्दप्रयोग एव निष्फलः स्यात्। ग्रहमित्यादौ तु प्रत्ययः प्रातिपदिकार्थप्रत्यायने साहाय्यं गच्छतीत्यर्थवानित्यत्राविवक्षा युक्ता।**

**'यस्योभयं हविरार्त्तिमार्च्छेत् ( स ) ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्'**

**इत्यत्रावयवद्वयारब्धः सङ्घ उभयशब्दवाच्यो न तु सङ्ख्यावाच्युभयशब्द इत्येकावयवविनाशेऽपि समुदायस्य विनाशान्निर्वापः क्रियत एव ।। ४।।**

**इदानीं यदुक्तं 'व्यापारः कार्यसिद्धये' इति तद्विभज्यते। तत्र द्वित्वमेव विवक्ष्यते नैकत्वबहुत्वे इति पूर्वमुक्तम्। अधुना त्वेकत्वमपि क्वचिद्विवक्ष्यत इत्याह—**

---

विशेषणतयाऽऽश्रिता भवतीति शेषः। प्रातिपदिकस्यैष स्वभावो यत् शाब्दबोधविषयीभूतार्थबोधकत्वं नाम। अत एकादिप्रातिपदिकार्थभूता संख्या सर्वत्र विवक्षितैव भवतीति फलितम्।

अयं भावः—द्वाभ्यां मन्त्राभ्यां मृदं खनति, चतुर्भिरादत्ते, षड्भिर्हरति, इत्यत्र तत्तत्पदप्रवृत्तिनिमित्तभूता तत्तत्प्रातिपदिकवाच्या द्व्यादिसंख्या करणीभूतस्वाश्रयद्वारा यथायथं खननादानहरणक्रियाणां विशेषिका स्वीक्रियते। सा तत्तत्प्रातिपदिकवाच्या तत्तत्संख्याविवक्षितैव, न तु तस्या अविवक्षा क्वापि कदाऽपि। अन्यथा शाब्दबोधे नियतभानः शब्दार्थ एव त्यक्तः स्यादिति एकादिप्रातिपदिकस्य स्वप्रवृत्तिनिमित्तभूतसंख्याविवक्षां विनाऽऽनुपपन्नप्रयोगस्य रूपात् = स्वरूपात्-स्वभावात् तत्तत्संख्याभिधायिनः प्रयोगसामर्थ्याद् द्वाभ्यां खनतीत्यादौ तत्तत्संख्याश्रिता विवक्षिता। यद्वा प्रकृतकारिकायां रूपशब्दः प्रातिपदिकपर्यायः, रूप्यते बोध्यतेऽर्थो येनेति व्युत्पत्तेः। ततश्च रूपात् प्रातिपदिकात् संख्याश्रिता विवक्षिता, न तु विभक्तेरिति तदर्थः। यथा द्विपुत्र इत्यादौ। अत्र हि द्विवचनरूपविभक्तिवाच्यो द्वित्वसमानाधिकरणो भेदः समासे विभक्तिलोपे एकार्थीभावान्निवर्तते। प्रकृतिवाच्यस्तु सोऽवतिष्ठत एव। तस्यापि विवक्षाया अभावे हि द्विशब्दप्रयोग एव निष्फलः स्यात्। 'ग्रहं संमार्ष्टि' इत्यादौ ग्रहमित्यत्र तु 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति नियमेन प्रत्ययः प्रातिपदिकार्थप्रत्यायने साहाय्यं करोतीति सार्थक इति विवक्षां विना प्रयोगानुपपत्तेरभावादत्र प्रत्ययवाच्यैकत्वसंख्याया अविवक्षा युक्तैव इति सकलग्रहसंमार्जनविधिः सिध्यति। ग्रहोऽत्र सोमरसाद्याधारपात्रमुच्यते। 'यस्योभयं हविरार्तिमार्च्छेत् ( स ) ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्रावयवद्वयारब्धः समुदाय उभयशब्दवाच्यो, न तु द्वित्वसंख्यावाच्युभयशब्द इत्येकावयवविनाशेऽपि समुदायस्य विनाशात्तन्निमित्तक 'ऐन्द्रोदननिर्वापः क्रियत एवेति नात्र संख्याया विवक्षाऽविवक्षयोर्विमर्शावसर इति। उदाहृतवाक्ये 'आर्तिमार्च्छेत्' इत्यस्य विनाशं गच्छेदित्यर्थः। पञ्चशरावः पञ्चसु शरावेषु संस्कृत इत्यर्थः ।।५४।।

**यजेत पशुनेत्यत्र संस्कारस्यापि सम्भवे ।**
**यथा जातिस्तथैकत्वं साधनत्वेन गम्यते ॥५५॥**

**शब्दसंस्कारार्थत्वं यद्यप्यत्र विभक्तेः संभाव्यते, तथापि पशुजातेर्यथा प्रातिपदिकवाच्यायाः क्रियाङ्गभावः, 'तथैकत्वम्' अपि विभक्तिवाच्यमेकपदोपादानान्न त्यज्यते। जातिवदेकत्वमपि क्रियाङ्गमित्यर्थः। एकपदोपादानो ह्यर्थ एकत्वेन बुद्धौ विपरिवर्तमानः कथं भेदेन 'पशुना यजेत', 'एकेन च' इति सम्बध्येत। प्रकृतिप्रत्ययाभ्यां हि यो विशिष्टः पदार्थोऽभिधीयते तेनाभिन्नयैव प्रवृत्त्या संस्पृश्यते यज्यर्थः। एकपदत्वेऽन्तःपदसम्बन्धस्यापौरुषेयत्वात्। अतश्चोभयमपि शक्यविधानम्। भेदेन तु संस्पर्शे वाक्यभेदप्रसङ्गादशक्यविधानं स्यात्। भिन्नपदोपादानं तु कदाचिद् भेदेन सम्बध्येतापि, शक्यविधानत्वात्। यथा रक्तमश्वमानयेति, तत्र च वाक्यभेदो रक्तमानय, अश्वमानयेति वाक्ययोरसमन्वयः। एकपदोपादाने तु शोणमानयेतिवद्**

---

सांप्रतमनुपदमेव यदुक्तम्—'व्यापारः कार्यसिद्धये' इति तद् विभज्यते = विषयविभागेन व्याख्याय प्रदर्श्यते। तत्र द्वित्वमेव विवक्ष्यते, नैकत्वबहुत्वे इति पूर्वमुक्तम्। इदानीन्तु एकत्वमपि क्वचिद् विवक्ष्यत इत्याह—यजेत पशुनेत्यत्रेति।

अस्यार्थः—'पशुना यजेत' इत्यत्र पशुनेति शब्दसंस्काररूपस्य विभक्तिफलस्य संभवेऽपि = संभवेन विभक्तेः सार्थक्येऽपि, विभक्त्यर्थसंख्याविवक्षां विना विभक्तिप्रयोगानुपपत्तेरभावेऽपि यथा जातिः—पशुत्वरूपो धर्मः, पशुत्वव्याप्या छागत्वरूपा जातिर्वा, क्रियायाः साधनत्वेन प्रतीयते, तथा एकत्वमपि स्वाश्रयपरिच्छेदद्वारा तत्साधनत्वेन प्रतीयत इति।

अयं भावः—यद्यपि पशुना यजेत इत्यत्र शब्दसंस्कारार्थत्वं टाविभक्तेः संभाव्यत इति न तदर्थसंख्याया विवक्षितत्वं सभवति तथापि प्रातिपदिकवाच्यायाः पशुत्वजातेर्यथा स्वाश्रयपरिच्छेदद्वारा क्रियायां साधनतयाऽङ्गभावः, तथा विभक्तिवाच्यस्यैकत्वस्यापि समानपदोपात्तत्वात् क्रियायां स्वाश्रयपरिच्छेदद्वारा साधनतयाऽङ्गभावः, न तत्वविवक्षया त्यागः। एकपदोपात्तत्वेन पशुत्वजातिवदेकत्वस्यापि क्रियाङ्गत्वौचित्यात्। न च पशुत्वं न जातिर्लोमवल्लाङ्गूलरूपस्य तस्य पश्ववयवत्वेन पशावसमवेतत्वात् 'नित्यमेकमनेकसमवेतं सामान्यम्' इति जातिलक्षणादिति वाच्यम्। पशुत्वस्यानुगतैकाकारप्रतीतिसिद्धस्य लोमवल्लाङ्गूलसमनियतत्त्वेऽपि घटत्वादिवदखण्डत्वात्। नहि प्रतीतिसिद्धं घटत्वं कम्बुग्रीवादिमत्त्वसमनियतत्वेऽपि तद्रूपमभ्युपेयते। एवं सति जातिमात्रापलापप्रसंगात्। पशुनेत्येकेन पदेनोपादीयमानः = अभिधीयमानः, हि एकत्वविशिष्टपशुरूप एकोऽर्थः एकत्वेनैव बुद्धावुपतिष्ठन् कथं पशुना यजेत, एकेन च यजेत इत्येवं वाक्यभेदेन यजिना संबध्येत। यो हि विशिष्टः पदार्थः प्रकृतिप्रत्ययाभ्यां संभूयाभिधीयते, तेन विशिष्टेन पदार्थेन साकमभिन्नयैव प्रवृत्त्या एकयैव पदशक्त्या, यज्यर्थः संबध्यते। प्रकृतिप्रत्ययकल्पनाया

**औपादानिको विनियोगः। 'ग्रहं सम्मार्ष्टि' इत्यत्र तु यथा न शक्यविधानं तथा दर्शयिष्यते। अनेन च पशुशब्दार्थस्य पूर्वमनिर्ज्ञातत्वमप्रधानत्वं च विवक्षानिबन्धनं ध्वनयति। अस्मादेव वाक्यात् साधनत्वेन प्रतीयत इत्यर्थः। अग्रे तु स्फुटमेव दर्शयिष्यति।**

**ननु विनियोजिकया श्रुत्या द्रव्यस्य क्रियासाधनत्वं विहितम्, न तु गुणस्य सङ्ख्यायाः, विनियोजकप्रमाणस्य द्रव्य एवोपक्षीणत्वाद् गुणविनियोगे प्रमाणाभावः। सत्यम्। श्रुत्यादिप्रमाणषट्कव्यतिरिक्तोऽयमुपादानाख्यः। न हि सङ्ख्यारहितं द्रव्यमात्रं विधिरुपादत्ते। एकपदोपात्तस्य गुणस्य त्यक्तुमशक्यत्वात्। प्रतीयते हि सगुणं द्रव्यमेकरसया शाब्द्या प्रतीत्येति यथायोगं गुणद्रव्ययोरन्वयः॥ ५५॥**

**तदेवमयं वादी बाधकमन्तरेणाविवक्षां न मन्यते। ये तु शब्दसंस्कारार्थत्वमेव सङ्ख्यायाः प्रतिजानते ते कथमत्रैकत्वं विवक्षन्तीत्याह—**

---

अनियतत्वेन वस्तुगत्याऽखण्डैकपदत्वे व्यवस्थिते, कल्पितावान्तरपदसंबन्धस्य कल्पकभेदेनाव्यवस्थितस्य वक्तृपुरुषाभिप्रायगोचरत्वासंभावात्। विशिष्टस्य पदार्थस्य यज्यर्थसंबन्धाच्च प्रकृत्यर्थः प्रत्ययार्थश्च इत्युभयमपि विधातुं शक्यते। तदुक्तम्—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥इति॥

प्रागुक्तरीत्या भेदेन तु प्रकृत्यर्थप्रत्ययार्थरूपस्य पदार्थद्वयस्य यज्यर्थसंबन्धे वाक्यभेदप्रसङ्गात्तदुभयमशक्यविधानं स्यात्। एकेन पशुनेत्येवं भिन्नपदोपात्तन्तु पदार्थद्वयं वाक्यीयं समन्वयमाश्रित्य कदाचिद् भेदेन संबध्येतापि, शक्यविधानत्वात्। यथा रक्तमश्वमानय इति। तत्र च रक्तमानय, अश्वमानय इति वाक्यभेदेन वाक्यीयः समन्वयः। दर्शिता चेयं रीतिः कटं भीष्मं कुरु इत्यत्र कटं कुरु, भीष्मं कुरु इत्येवं वाक्यीयं सम्बन्धं दर्शयता भाष्यकृता। भीष्माभिन्नं कटं कुरु इत्येवमेकवाक्यतया संबन्धस्तु पाष्ठिक इत्यपि दर्शितं तत्रैव। पदार्थद्वयस्य पशुनेत्येकपदेनाभिधाने तु विशिष्टस्य वाक्यीयविनियोगसत्त्वेऽपि उभयस्यौपादानिको विनियोगः = अर्थापत्तिकृतो विधिः। अनुपपन्नस्योपादानेन कृतः उत्प्रेक्षित उपपादकस्य विधिरौपादानिक इति। उभयविधिं विना विशिष्टविधेरसंभवात्। यथा शोणमानयेत्येकपदोपादाने विशिष्टविधानेऽपि अर्थापत्त्या शोणरूपतदाश्रयाश्वरूपस्यार्थद्वयस्य अर्थाद् विधानमानयनकर्मतया।

नन्वेवं 'ग्रहं संमार्ष्टि' इत्यत्रापि एकत्वविशिष्टस्य ग्रहस्य संमार्जनकर्मतया विधाने उभयविधानसिद्धया प्रागुक्ता एकत्वस्यात्राविवक्षा विरुध्येतेति चेत्, यथा तत्र नैकत्वं शक्यविधानं तथा दर्शयिष्ते ५८, ५९ कारिकयोः। मूलकृच्चानेन पद्येन यज्यर्थसंबन्धात्पूर्वं पशुशब्दार्थस्य साधनत्वेनानिर्ज्ञातत्वमप्रधानत्वञ्च विवक्षानिबन्धनम् = विवक्षायां निमित्तं ध्वनयति। अनिर्ज्ञातं हि वस्तु परस्य ज्ञानाय विवक्षितं भवति। अप्रधानमपि प्रधान-

**लिङ्गात्तु स्याद् द्वितीयादेस्तदेकत्वं विवक्षितम्।**
**एकार्थविषयत्वे च तल्लिङ्गं जातिसङ्ख्ययोः ॥ ५६ ॥**

**शब्दसंस्कारार्थमेव पशुनेत्येकत्वम्। विवक्षा तु लिङ्गाज्ज्ञापकाद्वाक्यान्तरगतात्। तथा हि—'आग्नेयमजमग्निष्टोम आलभेत' इत्युक्त्वा 'ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं पृश्निं तृतीयं षोडशिनि' इति द्वितीयादित्वेनाजो विशेष्यते। यदि चाजमित्येकत्वमविवक्षितं स्यात् तदा द्वितीयादित्वस्यासिद्धत्वाद् द्वितीयमित्यादि पुनर्विधानं न स्यादित्यस्मादभिधानसामर्थ्याद् विवक्षितमेकत्वम्, इति निश्चीयते।**

---

स्योपकारकत्वेनापेक्षितत्वाद् विवक्षितं भवतीति। पशुना यजेत इति वाक्यादेव पशुत्वं जातिस्तथैकत्वमपि साधनत्वेन प्रतीयत इत्युत्तरार्धार्थः। अग्रे त्वेतत् स्फुटमेव दर्शयिष्यति।

ननु विनियोजिकया तृतीयाश्रुत्या (विनियोजकेन विधायकेन श्रुतिरूपेण प्रमाणेन, स्वार्थबोधनेऽन्यानपेक्षः शब्दः श्रुतिरिति मीमांसकाः) पशुरूपस्य द्रव्यस्यात्र क्रियासाधनत्वं विहितम्, न तु गुणरूपायाः संख्यायाः, तस्या द्रव्य एव संबन्धात्, प्रत्ययार्थे करणत्वेऽसंबन्धाच्च। श्रुतिरूपस्य विनियोजकप्रमाणस्य विशेष्यतया प्रधानीभूते द्रव्य एवोपक्षीणत्वाद्, गुणविनियोगे = गुणरूपायाः संख्याया विधाने, प्रमाणाभावाच्चेति चेत्, सत्यम्। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रोदितश्रुत्यादिप्रमाणषट्कव्यतिरिक्तोऽयमुपादानाख्यो विधिरर्थापत्तिरूपं प्रमाणम्। नहि संख्यारहितं द्रव्यमात्रं क्रियासाधनत्वेन विधिरुपादत्ते। पशुनेत्येकारोपात्तस्य संख्यारूपस्य गुणस्य त्यक्तुमशक्यत्वात्। तथा च केवलस्य द्रव्यस्य विधातुमशक्यत्वाद् गुणविशिष्टं द्रव्यमेव विधिः स्वविधेयत्वेनोपादत्ते। प्रतीयते हि सगुणं द्रव्यमेकरसया = गुणे द्रव्ये च समपक्षपातया शाब्द्या प्रतीत्येति स्वाश्रयद्वारा साक्षाद्वा यथायोगं गुणद्रव्ययोः क्रियायां साधनत्वेनान्वय इति ॥ ५५ ॥

तदेवमयं वादी शब्दसंस्कारार्थत्वरूपम्, संभवदन्यफलार्थत्वं वा यद्विवक्षायां बाधकं तद् विनाऽविवक्षां न मन्यते। ये तु शब्दसंस्कारार्थत्वमेव संख्यायाः प्रतिजानते, ते संख्याबोधातिरिक्तफलसत्त्वात् कथमत्रैकत्वं विवक्षन्तीत्याह—लिङ्गात्तु स्यादिति।

अस्यार्थः—द्वितीयादेर्लिङ्गात्तु 'द्वितीयमुक्थ्ये', 'तृतीयं षोडशिनि' इत्यादौ द्वितीयत्वतृतीयत्वादेर्लिङ्गात्तु, तदेकत्वम् = 'पशुना यजेत' इत्यत्र पशुगतमेकत्वं विवक्षितं स्यात्। जातिसंख्ययोरेकार्थविषयत्वे च समानाश्रयपरिसमाप्तत्वे चापि, तत् = द्वितीयत्वादिकं लिङ्गम्। 'पशुना यजेत' इत्यत्र एकत्वस्याविवक्षितत्वे तु अनियतसंख्याप्रसंगे द्वितीयत्वादेरसिद्धत्वाद् द्वितीयमित्यादि पुनर्विधानं न स्यात्।

अयं भावः—शब्दसंस्कारार्थमेव पशुनेत्येकत्वम् = एकत्ववाचकैकवचनोपादानम्। नत्वेकवचनोपादानेनैकत्वस्य विवक्षा लभ्यते। तस्य विवक्षा तु वाक्यान्तरगताल्लिङ्गाज्

**नन्वविवक्षायामप्येकत्वस्यात्र द्वितीयं तृतीयमित्युपपद्यत एव। अनियतसङ्ख्याप्रसंगे द्वितीयादित्वेन विशेषणात्। नैतदस्ति। एवं हि पक्षेऽनुवाददोषः स्यात्। लिङ्गत्वे तु द्वितीयादित्वमपूर्वमेव विहितं नित्यमविकल्पितं श्रुतं नोपरुध्यते। पक्षेऽनुवादे हि श्रुतस्य वैकल्पिकत्वं स्यादित्यविकल्पितं श्रवणं परित्यक्तं भवेदिति दोषप्रसङ्गः। एकाश्रये परिसमाप्तत्वे चैकत्वसङ्ख्याया जातेश्चैतदेव लिङ्गमिति प्रसङ्गादाह—यथा**

---

ज्ञापकात् प्रतीयते। तथाहि—'आग्नेयमजमग्निष्टोम आलभेत' इत्युक्त्वा 'ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं पृश्निं तृतीयं षोडशिनि' इति द्वितीयत्वतृतीयत्वाभ्यामजो विशेष्यते। यदि चात्र अजमित्येकत्वमविवक्षितं स्यात् तदा संख्याया अनियमे द्वितीयत्वतृतीयत्वयोरसंभवाद् अत्राजमालभेत इत्युक्त्वा पुनर्द्वितीयं तृतीयमिति विधानं न स्याद् इति, अतोऽभिधानसामर्थ्यादेकत्वं विवक्षितमिति निश्चीयते।

नन्वेकत्वस्यात्राविवक्षितत्वेऽपि द्वितीयं तृतीयमित्युपपद्यत एव। तथा सति चतुर्थादिरूपानियतसंख्येयबुद्धिप्रसङ्गे नियमार्थं द्वितीयत्वतृतीयत्वाभ्यां विशेषणादिति चेत्, नैतदस्ति। एवं हि = एकत्वस्याविवक्षयाऽनियतसंख्याबुद्धिप्रसंगे हि द्वितीयत्वादिप्राप्तिपक्षे द्वितीयं तृतीयमित्यादावनुवाददोषः स्यात्। द्वितीयत्वादेरेकत्वविवक्षाया लिङ्गरूपत्वे तु द्वितीयत्वादिकमपूर्वमेव विहितमतोऽविकल्पितमत एव नित्यम् = नित्यविधिकम्, श्रुतम् = श्रुत्या निरपेक्षस्वरूपया विहितम्, इत्यनुवाददोषेण नोपरुध्यते = न पीड्यते। एकत्वस्याविवक्षितत्वे द्वितीयत्वादेः प्राप्तिपक्षे द्वितीयमित्यादेरनुवादरूपत्वे हि श्रुतस्य द्वितीयत्वादेः प्राप्त्यप्राप्तिभ्यां भावाभावोभयात्मको विकल्पः स्यात्, इत्यविकल्पितम् = विकल्पबोधकवादिपदराहित्येन नित्यम्, द्वितीयत्वादिश्रवणं परित्यक्तं स्यादिति श्रुतस्य द्वितीयत्वादिनित्यत्वस्य हानिः, अश्रुतस्य च परार्थस्य विकल्पस्य कल्पनमिति दोषद्वयप्रसङ्गः। एकत्वसंख्याया जातेश्चैकाश्रये परिसमाप्तत्वेऽपि एतदेव = द्वितीयत्वादिकमेव लिङ्गमिति प्रसङ्गादाह—एकार्थविषयत्वे चेति। यथा ह्येकत्वं प्रत्येकपर्याप्तं तथा सत्यप्यनेकार्थसमवाये = समवायसंबन्धेनानेकाश्रयवृत्तित्वे सत्यपि जातिरपि प्रत्येकपर्याप्ता इति = पर्याप्तिसंबन्धेन प्रत्येकं वर्तत इति। अस्मादेव द्वितीयत्वादिरूपाल्लिङ्गादवसीयते। तथैकत्वसंख्यया एकः समानोऽर्थो विषय आश्रयोऽस्या जातेरित्यत्रापि तदेव द्वितीयत्वादिकं लिङ्गम्। अन्यथा = जातेः प्रत्येकपर्याप्त्यभावे, प्रत्येकमाश्रयेषु जातेरेकदेशेन प्रवृत्तौ यो द्वयोः पूरणो नासौ तज्जातीयः स्यात्, अपि तु जात्येकदेश एव द्वितीयः स्यात्। न च जात्येकदेशो जातिर्भवति। जात्येकत्वयोः समानाश्रयत्वे च व्यवस्थिते जातिः प्रकृत्यर्थः साकल्येन। प्रकृत्यादित्वात्तृतीया। वैशिष्ट्यं तृतीयार्थः, सकलेति यावत्। आलम्भनादिक्रियाङ्गतया परिगृह्यते। अन्यथैकत्ववत्तत्राधारे सर्वात्मना जातेः पर्याप्त्यभावेन एकत्वमशक्यपरिग्रहम्, एकस्मिन् जातेः सर्वात्मनाऽपर्याप्तत्वात्। अतश्च द्वितीयादित्व न संभवेत्।

ह्येकत्वं प्रत्याश्रयपरिसमाप्तं तथा सत्यप्यनेकार्थसमवाये जातिरपीत्यस्मादवसीयते। तथैकत्वसङ्ख्यया एकः समानोऽर्थो विषय आश्रयोऽस्या जातेरित्यत्रापि तदेव द्वितीयादित्वं लिङ्गम्। अन्यथाश्रयेषु जातेरेकदेशेन प्रवृत्तौ यो द्वयोः पूरणो नासौ तज्जातीयः स्यात्, अपि तु जात्येकदेशः। न च जात्येकदेशो जातिर्भवति। समानाश्रयत्वे च जात्येकत्वयोर्जातिः प्रकृत्यर्थः साकल्येन क्रियाङ्गतयोपादीयते। अन्यथैकत्ववत्तत्राधारे सर्वात्मना जातेः परिसमाप्त्यभावे ( न ) एकत्वमशक्योपादानम्, एकस्मिन् सर्वात्मना जातेरपरिसमाप्तत्वात्। अतश्च द्वितीयादित्वं विघटेत। तस्मादेकत्वमनुमापयत् तदाश्रये सर्वात्मना जातेस्समाप्तिमप्यनुमापयत्येतल्लिङ्गम्। यावता हि विना नोपपद्यते तावतोऽर्थस्यैतल्लिङ्गम्। यथा चैकत्वविवक्षां विना नोपपद्यते तथा जातेस्तत्समानविषयत्वमपि विनेति। अन्यथा तत्र जातेः समाप्त्यभावे साकल्येन प्रकृत्यर्थः क्रियाङ्गतया नोपात्तः स्यादिति प्रकृत्यर्थोपरोधप्रसङ्गः। द्वित्वादेरनेकाश्रयवृत्तित्वात् प्रत्याश्रयपरिसमाप्त्यभावान्न तेन सह जातेरेकार्थविषयत्वे लिङ्गमेतत्। एवं ह्यनेकाश्रितत्वमेव ज्ञापितं स्यात्। तच्च जातित्वादेव सिद्धमित्येकत्वेनैव सह जातेरेतदेकार्थसमवाये लिङ्गमवगन्तव्यम् ॥ ५६ ॥

इदानीं यदुक्तं 'यजेत पशुना' इत्यत्रैकत्वं जातिवद् विवक्ष्यत इति तत्र पूर्वसूचितं विवक्षानिबन्धनं ग्रहवैलक्षण्येन प्रकटयति—

---

अयं भावः—जातेरस्ति सदृशं रूपद्वयम्। प्रत्येकपर्याप्तञ्चानेकसमवेतञ्च। तत्र प्रत्येकपर्याप्तं व्यक्तिभेदेनानन्तम्। द्वितीयन्तु एकम्। रूपद्वयस्यापि एकत्वविभ्रमस्तु सादृश्यमूलकः। तस्माद् द्वितीयत्वादिकं लिङ्गं जात्याधारस्यैकत्वमनुमापयत् तदाश्रये = एकत्वाश्रये, जातेः सर्वात्मना परिसमाप्तिमपि अनुमापयति। यावता हि विना द्वितीयत्वादिकं नोपपद्यते तावतोऽर्थस्यैतल्लिङ्गम्। यथा चैकत्वविवक्षां विना द्वितीयत्वादिकं नोपपद्यते, तथा जातेस्तत्समानाश्रयकत्वं विनाऽपीति। अन्यथा तत्र = एकत्वाधारे जातेः परिसमाप्त्यभावे जातिरूपः प्रकृत्यर्थः साकल्येन क्रियाङ्गतया शब्दतो नोपात्तः स्यादपितु कश्चिदेक एवेति सकलस्य जातिरूपस्य प्रकृत्यर्थस्य आलम्भनादिक्रियायामुपरोधप्रसङ्गः। उपरोधोऽत्र संबन्धाभावः। द्वित्वादेस्तु अनेकाश्रयवृत्तित्वनियमात् प्रत्येकपर्याप्त्यसंभवात् न द्वित्वादिना सह जातेरेकार्थाश्रितत्वे द्वितीयत्वादिकं लिङ्गं स्यात्। एवं हि जातेरनेकाश्रितत्वमेव ज्ञापितं स्यात्। तच्च जातिस्वरूपानुपपत्त्यैव सिद्धमिति एकत्वेनैव सह जातेरेकार्थाश्रितत्वे द्वितीयत्वादिकं लिङ्गमित्येतत्सर्वमवधानगम्यमिति ॥ ५६ ॥

यदुक्तम् 'यजेत पशुना' इत्यत्रैकत्वं पशुत्वजातिवद् विवक्ष्यत इति, तत्र पूर्वसूचितमन्यत्र विधानाभावोऽङ्गत्वञ्चेत्येवं लक्षणं विवक्षानिबन्धनं 'ग्रहं सम्मार्ष्टि' इत्यत्रोदितग्रहवैलक्षण्येन इदानीं प्रकटयति—अन्यत्राविहितस्यैवेति।

अन्यत्राविहितस्यैव स विधिः प्रथमं पशोः ।
क्रियायामङ्गभावश्च तत्त्वेतस्माद् विवक्षितम् ॥ ५७ ॥

यजेः कर्तव्यता वाक्यान्तरात् सिद्धेति 'पशुना यजेत' इति गुणविधिस्तात्पर्यतः । तथा चाज्ञातस्य पशुगुणस्य प्रमाणान्तरात् प्रथमम् अनेनैव ज्ञापनमित्युत्पत्तिविधिरयं पशोः । अस्माद् वाक्यात् प्रथममुत्पन्न इव पशुरनेनैव ज्ञापितत्वात् । ज्ञप्तिरेव हि प्रथमोत्पत्तिर्भण्यते । स चोत्पत्तिविधिरत्राङ्गत्वेन यजिक्रियाविषयेण नाङ्गित्वेन इत्यस्मात् कारणद्वयात् तत एकत्वमत्र विवक्षितम् । तथा हि शब्दप्रमाणका वयम् । शब्देन चैकत्वविशिष्टोऽर्थश्चोदित इति कथं तदेकत्वं त्यज्यताम् । तदुक्तम्—

'यथा जातिस्तथैकत्वं साधनत्वेन गम्यते' इति ।

यथा शब्दचोदिता जातिस्तथैकत्वमपीतीहत्यस्तत्र न्यायस्सूचितः । शब्दश्च प्रथममिदमाह न तु शब्दान्तरं सङ्ख्यान्तरयुक्तं ग्रहादिवदस्तीति प्रथमोपदेशो विवक्षाकारणम् । अङ्गत्वोपदेशश्च यागस्य प्राधान्यात् । यदि ह्याङ्गितयोपदेशः स्यात् पशोः तदा 'ग्रहं सम्मार्ष्टि' इतिवद्भवेदविवक्षेत्यर्थः । तस्माच्छ्रुतसङ्ख्याहाने हेत्वभावादेकत्वविशिष्टसाधनसाध्यत्वेन नियतरूपं प्रधानमवगतं भवतीत्यनियतानेकसङ्ख्योपादानमप्रमाणकम् ।

अत्र केचित् 'क्रियायामङ्गभावस्य' इति पठन्तः प्रथमं क्रियायामङ्गभावस्य विधिरिति योजितवन्तः ॥ ५७ ॥

एतन्न्यायवैपरीत्येन 'ग्रहं सम्मार्ष्टि' इत्यत्र लक्षणाख्यं व्यापारमाह—

---

अस्यार्थः—अन्यत्र = वाक्यान्तरेऽविहितस्यैव, प्रमाणान्तरादज्ञातस्यैवेति यावत् । पशोः पशुरूपस्य गुणस्य, सः = पशुना यजेत इति, प्रथमं विधिः = प्रथमं विधायकः । अनेनैव वाक्येन प्रथमं ज्ञापनमित्युत्पत्तिविधिरेवायं पशोः । क्रियायाम् = यागक्रियाया-मङ्गभावश्च पशोः । एतस्मात्कारणद्वयात्, तत्तु = पशुविशेषणीभूतमेकत्वमपि । तुशब्दोऽप्यर्थः । पशुत्ववद् विवक्षितमिति ।

अयं भावः—यद्यपि 'पशुना यजेत' इत्यत्र यजिधातुसंबद्धो लिङ् श्रूयते, तथापि यजेः = यागस्य कर्तव्यताया वाक्यान्तरात् सिद्धत्वात् तदनुवादेन तात्पर्यतः पशुरूपगुणस्य विधिरेवायम् । तथा च प्रमाणान्तरादज्ञातस्य पशुगुणस्य प्रथममनेनैव वाक्येन ज्ञापनमित्युत्पत्तिविधिरेव अयमेकत्वविशिष्टस्य पशोः, अज्ञातज्ञापनस्यैव विधित्वात् । अस्माद् वाक्यात् प्रथमं ज्ञायमानः पशुरुत्पन्न इव भवति, अनेनैव वाक्येन ज्ञापितत्वात् । प्रथमो ज्ञप्तिरेव हि उत्पत्तिरुच्यते । स चायमत्र पशोरुत्पत्तिविधिः पशोर्यजिक्रियाविषयकेणाङ्गत्वेन, न त्वङ्गित्वेन = प्राधान्येन, इत्यस्मात् = अन्यत्र विहितत्वाभावात्, यजिक्रियाया-मङ्गत्वाच्च, कारणद्वयात्, तत् = पशुगतमेकत्वं पशुनेत्यत्र विवक्षितम् । तथा हि—अर्थाव्यभिचारित्वादाप्तवाक्यरूपः शब्द एवास्माकं वैयाकरणानां मुख्यं प्रमाणम् । पशुनेति

**ग्रहास्त्वन्यत्र विहिता भिन्नसङ्ख्याः पृथक् पृथक् ।**
**प्राजापत्या नवेत्येवमादिभेदसमन्विताः ॥ ५८ ॥**
**अङ्गत्वेन प्रतीतानां सम्मार्गे त्वङ्गिनां पुनः ।**
**निर्देशं प्रति या सङ्ख्या सा कथं स्याद्विवक्षिता ॥ ५९ ॥**

**'प्राजापत्या नव ग्रहा भवन्ति, दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति, ऐन्द्रवायवं ग्रहं गृह्णाति, मैत्रावरुणं ग्रहं गृह्णाति' इत्यादावुत्पत्तिवाक्ये ग्रहाणां सोमाधाराणां**

---

शब्देन चैकत्वविशिष्टः पशुरूपोऽर्थश्चोदितः = विहित इति कथं तदेकत्वम् = पश्वेकत्वम् त्यज्यताम् । तदुक्तम्--यथा जातिस्तथैकत्वं साधनत्वेन गम्यते' इति ।

अयमर्थः—यथा पशुत्वरूपा जातिः साक्षात् साधनत्वेन = यजिक्रियाकरणत्वेन-गम्यते, तथा पशुगतमेकत्वमपि तद्द्वारा साधनत्वेन गम्यते = पशुनेति शब्दात् प्रतीयत इति । यथाऽत्र पशुत्वरूपा जातिः पशुशब्देन चोदिता = अपूर्वतया बोधिता तथा पशुगत-मेकत्वमपि इतीहत्यो न्यायः = एतत्कारिकार्धप्रतिपादितः सिद्धान्तः पशुना यजेत इत्यत्र सूचितः । पशुनेति शब्दश्चैकत्वसंख्यायुक्तं पशुरूपं द्रव्यं प्रथममेवाह, न तु द्वित्वादिसंख्या-युक्तपशुबोधकं शब्दान्तरं ग्रहादिवदस्ति ।

तथाहि—'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहगतैकत्वं न विवक्षितम् । अस्ति हि 'दशैतान-ध्वर्युः प्रातः सवने ग्रहान् गृह्णाति' इत्यत्र दशत्वसंख्यायुक्तानां ग्रहाणां बोधकं शब्दान्तरम्, नत्वेवमस्ति प्रकृते संख्यान्तरयुक्तपशुबोधकं शब्दान्तरम् । इत्येवमत्रास्ति एकत्वसंख्या-युक्तपशोः प्रथमोपदेशोऽत्र एकत्वसंख्याविवक्षाकारणम् । पशोर्यागाङ्गत्वोपदेशोऽपि स्व-गतैकत्वविवक्षाया द्वितीयं कारणमस्ति । यदि ह्यत्र पशोरङ्गितयोपदेशः स्यात्तदा 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहगतैकत्वस्येव पशुगतैकत्वस्यापि अविवक्षा भवेत् । न त्वेतदस्ति । ग्रहे हि उद्देश्यत्वलक्षणमार्थं प्राधान्यम्, ग्रहमुद्दिश्य सम्मार्जनविधानात् । नत्वेवं प्रकृते पशु-मुद्दिश्य यागो विधीयते, किन्तु यागमुद्दिश्य तदङ्गतया पशुर्विधीयत इति । तस्मात् पशु-नेत्यत्र श्रुतैकत्वसंख्यापरित्यागे कारणाभावादेकत्वसंख्याविशिष्टपशुरूपसाधनसाध्यत्वेन नियतरूपं यागरूपं प्रधानमवगतं भवतीति पशावनियतानेकसंख्यापरिग्रहोऽप्रामाणिकः । अत्र कारिकायां केचित्—'क्रियायामङ्गभावस्य' इति पठन्तः अन्यत्राविहितस्यैव पशोः प्रथमं क्रियायामङ्गभावस्य विधिरिति योजितवन्तः । न चैषा योजना युक्ता । पशोरङ्ग-भावस्यार्थत्वेनाश्रुतत्वेन चाविधेयत्वादिति ॥ ५७ ॥

एवं 'पशुना यजेत' इत्यत्र पशुगतैकत्वसंख्याविवक्षाया हेतुरस्ति न्यायद्वयम् । भिन्नसंख्याकस्य पशोरन्यत्र विधानाभावे सति एकत्वसंख्याविशिष्टस्य तस्य प्राथम्येन विधानम्, यागक्रियायां तस्याङ्गभावश्चेति । एतन्न्यायवैपरीत्यन्तु अस्ति 'ग्रहं सम्मार्ष्टि' इत्यत्र ।

**पात्राणां भिन्नसङ्ख्यानां पृथक् पृथक् तेषु प्रकरणेषु भेदेनोपात्तानां तथैवानुभूतानां 'ग्रहं सम्मार्ष्टि' इत्यत्र स्मृत्योपस्थापितानां यथोत्पत्तिवाक्यानुभवमेवात्र स्मृतिबुद्धावुपस्थानं युक्तमिति भिन्नसंख्या एव प्रतीयन्ते। उत्पत्तिवाक्ये हि ग्रहाणाम् अङ्गत्वेन सोमधारणार्थमुपदेश इति तत्राप्राधान्याद्विवक्ष्यते सङ्ख्या। अपूर्वोपदेशाच्च 'पशुना' इतिवत् 'नव दश' इति प्रातिपदिकार्थत्वादपि तत्र नियोगतो विवक्षा। सम्मार्गे तु वास्तवेन रूपेण सम्मार्गस्य ग्रहशुद्ध्युत्पादनार्थत्वात् संस्कार्या ग्रहा एवाङ्गिनः प्रधानभूताः शाब्देन रूपेण क्रियाप्राधान्येऽपि। ततश्चोत्पत्तिवाक्यापेक्षया सम्मार्गवाक्येन पुनर्योऽयं 'ग्रहम्' इति निर्देशः तत्र पूर्वश्रुता एव ते सम्मार्जनविषयभावार्थमुपात्तास्तात्पर्यत इति पूर्व-**

---

तथाहि—भिन्नसंख्यानां ग्रहाणामन्यत्र विधानमस्ति। दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णातीति। संमार्जनक्रियायां तेषामङ्गभावश्च नास्ति, समार्जनक्रियाया ग्रहार्थत्वाद् इत्येकत्वविशिष्टग्रहवाचकस्य ग्रहमिति द्वितीयान्तपदस्य ग्रहमात्रे लक्षणा। यथा 'सोऽयं देवदत्तः' इत्यत्र तत्ताविशिष्टवाचकस्य तत्पदस्य व्यक्तिमात्रे लक्षणा। इयमेव लक्षणा अद्वैतिभिर्जहदजहल्लक्षणेति, भागत्यागलक्षणेति च व्यवह्रियत इत्येतत्सर्वं मनसि निधायाह—ग्रहास्त्वन्यत्र विहिता इत्यादियुग्मेन।

अस्य पद्ययुग्मस्यायमर्थः—ग्रहास्तु भिन्नसंख्याः 'ग्रहं सम्मार्ष्टि' इत्यत्रोक्तैकत्वसंख्यातो विरुद्धसंख्याः, अन्यत्र 'प्रजापत्या नवग्रहा भवन्ति' इत्यादौ पृथक् पृथग् विहिता ये प्राजापत्या नवेत्येवमादिभेदसमन्विताः='प्राजापत्या नवग्रहा भवन्ति' दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति, ऐन्द्रवायवं ग्रहं गृह्णाति, मैत्रावरुणं ग्रहं गृह्णाति इत्यादिभिर्भेदयुक्तैर्वाक्यैर्बोधिताः। किञ्च पूर्वोक्तवाक्येषु ग्रहणाङ्गत्वेन प्रतीतानां ग्रहाणां प्रकृते तु पुनः सम्मार्गे=संमार्जनक्रियायामङ्गिनां तेषां निर्देशं प्रति=निर्देशवाक्ये=ग्रहं संमार्ष्टीत्यत्र उपात्ता या एकत्वसंख्या सा कथं विवक्षिता स्यात्; संख्याविवक्षाहेतुप्रागुक्तन्यायद्वयाभावाद् इति।

अयं भावः—'प्राजापत्या नवग्रहा भवन्ति' इत्यादिषु पूर्वोदाहृतेषु द्रव्यदेवताबोधकत्वाद् ग्रहणक्रियोत्पत्तिवाक्येषु ग्रहाणां=सोमाधारपात्राणाम् भिन्नसंख्यानां तत्तत्प्रकरणेषु पृथग्-पृथग् भेदेनोपात्तानां भिन्नसंख्याकत्वेनैवानुभूतानां 'ग्रहं संमार्ष्टि' इत्यत्र स्मृतिरूपया बुद्ध्या गोचरीकृतानामुत्पत्तिवाक्यीयानुभवानुसारेणैव 'ग्रहं संमार्ष्टि' इत्यत्र स्मृतिबुद्धावुपस्थानं युक्तमिति भिन्नसंख्याका एव ग्रहाः प्रतीयन्तेऽत्रापि, नत्वत्रैकत्वसंख्या ग्रहस्य विवक्षिता। उत्पत्तिवाक्ये हि पूर्वोदाहृते ग्रहाणां ग्रहणक्रियाङ्गत्वेन सोमधारणार्थमुपदेश इति तत्र तेषामप्राधान्याद् विवक्ष्यते संख्या। पशुना यजेत इतिवद् 'नवग्रहा भवन्ति' 'दशग्रहान् गृह्णाति' इत्यत्रोत्पत्तिवाक्येषु भिन्नसंख्यानां ग्रहाणां प्राथम्येनोपदेशात् नव दश इति प्रातिपदिकार्थत्वादपि तत्र भिन्नानां ग्रहसंख्यानां नियमतो विवक्षा। संमार्गविधौ तु वस्तुतः संमार्गस्य ग्रहशुद्ध्यर्थत्वात् संस्कार्यत्वेन ग्रहा एवाङ्गिनः प्रधानभूताः

सङ्ख्यान्वयिनः। प्रकरणार्थपर्यालोचनया हि वाक्यार्थोऽवतिष्ठते न तु यथाश्रुते पदार्थमात्रेऽवस्थातव्यम्—

'स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः।
पदानां प्रविभागेन यादृशः परिकल्प्यते'।

इति न्यायात् अवान्तरवाक्यान्वयेन महावाक्यार्थानुसरणेन पदार्थापोद्धार इत्यत्र प्रकरणानुभूतभिन्नसंख्याकग्रहग्रहणम्। तदनेनाविवक्षायां हेतुद्वयमुक्तम्। अन्यत्र विधानं प्राधान्यं च। यद्यपि बहुष्वेकत्वमप्यविरुद्धमनुभूतं तथाप्यनेकमध्यपात्येकत्वमनुभूतं न तु केवलमित्यनेकसहचारिण एवात्र स्मृतिः। अत एव 'पृथक् पृथक्' इत्यनेकसङ्ख्याया भूयोदर्शनेन तत्प्रभववासनोत्पत्तिस्थैर्यं स्मृत्यव्यभिचारस्थापनार्थमाह। पृथक् पृथग्भिन्नसङ्ख्यानामनुभूतत्वात् तथैव स्मृतिः सम्मार्गे अनुवादेऽत्रेत्यर्थः। 'ग्रहैर्जुहोति' इति हवने ग्रहाणामुपयोगात् संस्कार्यत्वम्। अङ्गानां प्रधानोपकाराय संस्कारार्हत्वात्। न च ग्रहैकत्वविशिष्टसम्मार्गविधिर्न्याय्यः। गुणस्य द्रव्यसमकक्ष्यतया क्रियायामङ्गभावाभावाद् द्रव्यद्वारेणाङ्गत्वात् द्रव्यानुयायित्वेऽनुभूतद्रव्यभेदाश्रयणात्। 'चित्रगवीर्बध्नाति', 'शोणं योजय' इत्यत्र तु चित्रशोणश्रुत्यन्यथानुपपत्त्या गुणविवक्षौत्पत्तिकी॥ ५८, ५९॥

इदानीमविवक्षौत्सर्गिकी सर्वत्र; शब्दसंस्कारार्थं विभक्त्युपादानादिति यत्नाद्विवक्षामाह—

---

तेषां हि उद्देश्यत्वलक्षणमार्थं प्राधान्यम्। शाब्दं प्राधान्यन्तु संमार्जनक्रियाया एव, भावप्रधानमाख्यातमिति यास्कवचनात्। आर्थं प्राधान्यमेव च वस्तुभूतं लोके व्यवहारोपयोगि, शाब्दं प्राधान्यन्तु प्रतीतिमात्रसिद्धं संदिग्धञ्चेति प्राधान्याद् ग्रहगतैकत्वसंख्याया अविवक्षा। ततश्चोत्पत्तिवाक्येषु भिन्नसंख्याकान् ग्रहान् निर्दिश्य संमार्गवाक्येन योऽयं ग्रहमित्येकत्वसंख्याविशिष्टस्य तस्य पुनर्निर्देशस्तत्र पूर्वं श्रुता एव भिन्नसंख्याका ग्रहा उद्देश्यत्वेन संमार्जनविषयत्वार्थं तात्पर्येत उपात्ता ग्रहमित्यनुवादवाक्य इत्यत्रापि पूर्वसंख्यान्वयिन एव, नत्वेतद् वाक्योपात्तैकत्वान्वयिनः। प्रकरणार्थपर्यालोचनया हि वाक्यार्थो व्यवस्थितो भवति, अन्यथोक्तोच्यमानवक्ष्यमाणानां परस्परं विरोधः स्यात्। तद्यथा प्रकृते एव 'ग्रह संमार्ष्टि' इत्यत्रैकत्वविशिष्टग्रहपदार्थविवक्षणे नवग्रहा भवन्ति इत्युक्तेन सहास्य विरोधः स्यात्, अतो न यथाश्रुते पदार्थमात्रेऽवस्थानं युक्तम्। तदुक्तम्—

स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः।
पदानां प्रविभागेन यादृशः परिकल्प्यते॥ इति॥

अस्यार्थः—स्तुतिप्रधानेषु 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिषु-निन्दाप्रधानेषु 'सोऽरोदीत्' इत्यादिषु वाक्येषु पदानां प्रविभागेन = व्याख्यानेन, यादृशोऽर्थः प्रतीयते तादृशोऽर्थो न परिकल्प्यते। किन्तु प्रकरणार्थपर्यालोचनया यादृशोऽर्थोऽपेक्ष्यते, न विरुध्यते च, तादृशोऽर्थो लक्षणादिना परिकल्प्यते। अत एव स्तुतिप्रधानेषु वाक्येषु विध्यपेक्षितः

**नान्यत्र विधिरस्तीति संस्कारो नापि चाङ्गिता ।**
**हेतुः सङ्ख्याऽविवक्षायां यत्नात् सा हि विवक्षिता ॥ ६० ॥**

**वाक्यान्तरे ग्रहणां भिन्नसङ्ख्यानां विधिरस्ति इति, अतो हेतोरत्र 'ग्रहं सम्मार्ष्टि' इत्येकवचनं शब्दसंस्कारार्थमात्रमित्येतन्न युक्तम् । नाप्यत्र सम्मार्गे ग्रहाणां अङ्गिता प्राधान्यम्, एकत्वस्य विवक्षाभावे हेतु निमित्तम्, अपि तु—**

**'न विना सङ्ख्यया कश्चित्'** ( वा० का० ३ । जाति० ५१ )

**इत्युक्तान्न्यायात् सर्वत्रैव प्रातिपदिकार्थस्योपलक्षणार्थं वचनमित्यविवक्षितम् । यत्र तु कश्चिन्न्यायो युक्तिरूपोऽस्ति तत्र तस्मात् यत्नात् सङ्ख्या विवक्ष्यते इत्यौत्सर्गिक्या अविवक्षाया विवक्षापवादः ॥६०॥**

**न च विवक्षाहेतुर्यत्नोऽस्ति 'ग्रहम्' इत्यादावित्याह—**

---

कर्मस्तुतिरूपोऽर्थः, निन्दाप्रधानेषु च वाक्येषु निषेधापेक्षितो निन्दारूपोऽर्थो वाक्यलक्षणया परिकल्प्यत इति । अवान्तरवाक्यानां परस्परान्वयेन महावाक्यं परिकल्प्य महावाक्यार्थानुसारेण अवान्तरवाक्यार्थेषु पदार्थापोद्धार इत्यभ्युपगमेन 'ग्रहं संमार्ष्टि' इत्यत्र नवत्वदशत्वसंख्याविरोधेन ग्रहैकत्वस्याविवक्षया प्रकरणानुभूतानां भिन्नसंख्याकानामेव ग्रहाणां सम्मार्जनोद्देश्यतया ग्रहणम् । नत्वेकत्वसंख्याविशिष्टस्य ग्रहस्य संमार्गः । तदनेन पद्यद्वयेन संख्याया अविवक्षायां हेतुद्वयमुक्तम् । अन्यत्र विधानं प्राधान्यञ्च । यद्यपि बहुष्वेकत्वमप्यस्तीति, एकत्वमप्यविरुद्धत्वादनुभूतमिति 'ग्रहं संमार्ष्टि' इत्यत्र पूर्वानुभूतैकत्वस्मृतौ को विरोध इति वक्तुं शक्यते, तथाप्यनेकमध्यपाति एकत्वमनुभूतं न तु केवलमित्यनेकसहचारिण एवैकत्वस्यात्र स्मृतिरिति केवलस्यैकत्वस्याविवक्षैवात्र युक्ता । अत एवानेकसंख्याया 'नवग्रहा भवन्ति, दश ग्रहान् गृह्णाति' इत्यादौ भूयोदर्शनेन तत्प्रभूतवासनोत्पत्तिदार्ढ्यं स्मृतिनियमोपपत्तये पृथक् पृथगिति पदद्विरुक्त्याऽऽह । पृथक् पृथग् भिन्नसंख्यानामनुभूतत्वात्तथैव स्मृतिरनुवादभूते संमार्गवाक्ये इत्यर्थोऽभिप्रेत पूर्वार्धवाक्यस्य । 'ग्रहैर्जुहोति' इति हवने ग्रहाणां हविर्धारणार्थमुपयोगात् संमार्जनेन संस्कार्यत्वम् । अङ्गानां प्रधानोपकाराय संस्कारस्यौचित्यात् ।

न चैकत्वविशिष्टस्य ग्रहस्य विध्यभावेऽपि ग्रहैकत्वविशिष्टस्य संमार्गस्य विधिर्न्याय्य इति वाच्यम् । यथा द्रव्यस्य क्रियायां साक्षादङ्गभावस्तत्समकक्ष्यतया तथा गुणस्य क्रियायामङ्गभावाभावाद् द्रव्यद्वारेणैव तस्य तदङ्गत्वाद् गुणस्य द्रव्यानुयायित्वे = द्रव्यान्वितत्वे द्रव्यसम्बन्धित्वे स्थितेऽनुभूतस्य द्रव्यभेदस्य = ग्रहानेकत्वस्य, प्रकरणपर्यालोचनया समाश्रयणात् । 'चित्रगवीर्बध्नाति, शोणं योजय' इत्यत्र तु चित्रशोणशब्दोपादानान्यथाऽनुपपत्त्या तयोर्गुणयोर्विवक्षा स्वाभाविकी ।

न चैवं ग्रहमित्यत्र विभक्त्युपादानान्यथाऽनुपपत्तिः, विभक्त्युपादानस्य पदसाधुत्वेनाप्युपपत्तेः ॥ ५८ ॥ ५९ ॥

**सम्मार्जने विशेषश्च न ग्रहे कश्चिदाश्रितः ।**
**विहितास्ते च संस्कार्याः सर्वेषामाश्रयस्ततः ॥६१॥**

**'ग्रहं सम्मार्ष्टि' इत्यनुपात्तविशेषस्य पूर्वावधृतस्य ग्रहस्य संस्कारश्चोदितः । पूर्वं च भिन्ना ग्रहा दृष्टाः । तदाह—विहितास्ते इति । न ह्येको ग्रहः स्वोत्पत्तिवाक्ये विहितः । अपि तु बहवो 'नव दश' इत्येवं विहिताः । न च तेषां मध्यात् कश्चिदेव संस्कारार्हः, अपि तु सर्वं एव ते तथेत्याह ते च संस्कार्याः इति । सर्वेषां संस्कार उपयुज्यते, उत्तरत्र सोमधारणे सर्वेषां संस्कृतानामुपयोगात् । ततश्च भूयसां विहितानां यद्येको विवक्षितोऽभविष्यत् तदा तस्य चिह्नभूतः कश्चिद्विशेषो निरदेक्ष्यत । 'आर्कमाश्विनं मैत्रावरुणं वा ग्रहं सम्मार्ष्टि' इति । न चासौ निर्दिष्टः । एकवचनं तु न विशेषः । तस्य प्रतिनियतैकविषयत्वाभावादनियतैकोपादाने कस्येति विशेषावधारणाभावादशक्यानुष्ठानार्थोपदेशप्रसङ्गादिति जाताविदमेकवचनं बोद्धव्यं न तु व्यक्ताविति नास्माद्यत्नाद्विवक्षासिद्धिः । किञ्च सर्वत्र शब्दसंस्कारार्थमेकवचनमित्येवमिदमुपक्रान्तम् । तथा चैकवचनं न यत्नः । तस्मात् सामान्योपदेशात् संस्कार्यत्वस्य च समानत्वादुत्पत्तिवाक्यावधृतसङ्ख्यानां सर्वेषामेव ग्रहाणां संस्कार्यत्वपरिग्रह इति सिद्धम् ॥६१॥**

**'पशुना यजेत' इत्यत्र को यत्नः सङ्ख्याविवक्षायामित्याह—**

---

संख्याया अविवक्षा सर्वत्रौत्सर्गिकी = स्वाभाविकी शब्दसंस्काररूपफलार्थत्वाद् विभक्त्युपादनस्येति यत्नात्तस्या विवक्षामिदानीमाह–नान्यत्रेति ।

अस्यार्थः—अन्यत्र=वाक्यान्तरे,ग्रहाणां भिन्नसंख्यानां विधिरस्तीति हेतोरत्र 'ग्रहं संमार्ष्टि' इत्येकवचनस्य शब्दसंस्कारः फलम्, न तु तदर्थसंख्याविवक्षा इत्येतत्न युक्तम् । नापि च संमार्गापेक्षया ग्रहाणामङ्गिता = प्राधान्यमेकत्वस्य विवक्षाया अभावे हेतुरिति युक्तम् । हि = यतः विभक्त्यर्थभूता संख्या कुतश्चिद् युक्तिरूपाद् यत्नाद् विवक्षिता । बिभक्त्यर्थसंख्याऽविवक्षाया औत्सर्गिकत्वाद् विवक्षाया अपवादत्वादिति ।

अयं भावः—'न विना संख्यया कश्चित्' इत्युक्तान्यायात् सर्वत्रैव प्रातिपदिकार्थस्योपलक्षणीभूतसंख्यारूपार्थबोधकं वचनम् = विभक्तिरिति संख्योपलक्षणत्वात् सर्वत्राविवक्षिता । यत्र तु कश्चिन्न्यायो युक्तिरूपोऽस्ति, तत्र तस्माद् यत्नात् संख्या प्रातिपदिकार्थविशेषणतया विवक्ष्यत इति ॥६०॥

तदेवं विवक्षाया हेतुर्यत्नः स च 'ग्रहं संमार्ष्टि' इत्यादौ नास्तीत्याह-संमार्जने इति ।

अस्यार्थः—चो हेतौ । यतः संमार्जने संमार्जनविधायके 'ग्रहं संमार्ष्टि' इति वाक्ये, ग्रहे कश्चिद्विशेषः आर्कत्वाश्विनत्वादिरूपः नाश्रितः । उत्तरार्धेऽपि चो हेतौ । यतो ये ग्रहा उत्पत्तिवाक्येन नव दश इत्येवं विहितास्ते सर्वेऽपि संस्कार्याः, सोमधारणे सर्वेषां संस्कृता-

**प्रत्याश्रयं समाप्तायां जातावेकेन चेत्क्रिया ।**
**पशुना न प्रकल्पेत तत् स्यादेवं प्रकल्पनम् ॥६२॥**

**जातेः प्रत्याश्रयपरिसमाप्तत्वं पूर्वं लिङ्गेनापि साधितमित्येकत्रापि पशुत्वजाते-रवैकल्यात् क्रियाङ्गतोपपत्तौ किमर्थं द्वितीयाद्युपादीयेत । यदि हि जातिराश्रय एक-**

---

नामविशेषेणोपयोगात् ततः संमार्जनरूपसंस्कारविधायके 'ग्रहं संमार्ष्टि' इति वाक्ये सर्वेषां ग्रहाणां संस्कार्यत्वेनाश्रयः = आश्रयणं परिग्रह इति यावदिति । अत्र पद्ये द्वितीयपादे 'न ग्रहे क्वचिदाश्रितः' इति पाठः क्वचिद् दृश्यते, स तु न युक्तः । 'तस्य चिह्नभूतः कश्चिद् विशेषो निरदेक्ष्यत' इत्यत्र हेलाराजीयव्याख्यानानुरोधादिति ।

अयं भावः—आर्कत्वाश्विनत्वादिभिर्विशेषैर्नवत्वादिसंख्याभिश्चोत्पत्तिवाक्येष्ववधृतस्य = निर्धारितस्य 'ग्रहं संमार्ष्टि' इत्यत्रानुपात्तविशेषस्य ग्रहत्वेन सामान्यरूपेणोपात्तस्य ग्रहस्य संमार्जनरूपः संस्कारश्चोदितः = विहितः । पूर्वञ्चोत्पत्तिवाक्येषु संख्यया विशेषैर्वा भिन्ना ग्रहा दृष्टाः, न त्वेकः । तदाह—विहितास्ते । स्वोत्पत्तिवाक्ये हि बहवो ग्रहा नव दश इत्येवं विहिताः, न त्वेको ग्रहः । सर्वे च ते संस्कार्याः सर्वेषां संस्कारस्योपयोगात् । उत्तरत्र सोमधारणे संस्कृतानामेवोपयोगात् । न तु तेषां मध्यात् कश्चिदेक एव संस्कार्यः, सर्वेषां संस्कारोपयोगस्याविशेषात् । ततश्च बहूनां विहितानां यद्येकः संस्कार्यत्वेन विवक्षितोऽभविष्यत्तदा तस्य चिह्नभूतः कश्चिदार्कत्वादिरूपो विशेषो निरदेक्ष्यत, 'आर्कमाश्विनं मैत्रावरुणं वा ग्रहं संमार्ष्टि' इति । ग्रहमित्येकवचनोपात्तमेकत्वन्तु न विशेषः । तस्य प्रतिनियतैकग्रहनिष्ठत्वाभावादनियतैकग्रहोपादाने कस्यैकस्य ग्रहस्य संमार्ग इति विशेषावधारणाभावादशक्यानुष्ठानस्यार्थस्य कर्तव्यतयोपदेशप्रसङ्गादिति जाताविदमेकवचनं, न तु व्यक्ताविति नास्मादेकवचनरूपाद् यत्नाद् ग्रहगतैकत्वस्य विवक्षासिद्धिः । किञ्च सर्वत्र शब्दसाधुत्वार्थमौत्सर्गिकमेकवचनं प्रयुज्यते इत्येवमिदमपि एकवचनं शब्दसंस्कारार्थमेवोपात्तमिति वक्तुं शक्यते । तथा च प्रकृते एकवचनं न विवक्षाहेतुभूतो यत्नः । तस्माद् विशेषानुपादानात् सामान्यस्य चोपदेशात् संस्कार्यत्वस्य च सर्वेषां समानत्वात् स्वोत्पत्तिवाक्येषु परिगणितसंख्यानां सर्वेषामेव ग्रहाणां संस्कार्यत्वेन 'ग्रहं संमार्ष्टि' इत्यत्र परिग्रह इति सिद्धम् ॥६१॥

ननु 'ग्रहं संमार्ष्टि' इत्यत्रार्कत्वादिरूपविशेषनिर्देशरूपयत्नाभावादेकत्वमविवक्षितमित्युक्तम् । 'पशुना यजेत' इत्यत्र तु एकत्वसंख्याविवक्षायां हेतुभूतः को यत्नः इत्याशङ्क्याह—प्रत्याश्रयमिति ।

अस्यार्थः—जातौ = पशुत्वजातौ प्रत्याश्रयम् = प्रतिव्यक्ति, समाप्तायाम् = पर्याप्तायां सत्याम्, एकेन पशुना क्रिया = यागक्रिया चेत् = यदि, न प्रकल्पेत = न संपद्येत, ततः तत् = अनेक संख्योत्प्रेक्षणरूपम्, प्रकल्पनमत्रापि एवम् = ग्रहवत्स्यात् न त्वेतदस्ति, वैषम्यात् । तथाहि—एकस्मिन् ग्रहे संमार्जनक्रियाकर्मता नोपपद्यते, उत्पत्तिवाक्याव-

**देशेन वर्तेत तदैकव्यक्त्युपयोगे जातिः पदार्थो बाध्येत जात्यंशस्याजातित्वादिति प्रकृत्यर्थसामर्थ्याद् द्वितीयाद्युपादीयेत। न चैवम्, एकत्रापि जातेर्निष्ठितत्वात्। स्यादेतत्। भवत्वेकत्रापि प्रकृत्यर्थोपपत्तिः। वाक्यार्थभूता तु क्रिया नैकसाधनसाध्येति प्रधानानुरोधादङ्गान्तरमुपादीयेतेत्याशङ्क्याह—एकेन चेत्क्रिया पशुना न प्रकल्पेत इति। अदृष्टफलस्य यागस्य पशुनैकेनाप्यवदानद्वारेणोपकारान्निष्पत्तेरसम्पत्तिर्नास्ति, यतस्तदनेकत्वप्रकल्पनमत्र भवेत्। सामर्थ्याद् बुद्धिस्थमनेकसङ्ख्योत्प्रेक्षणं 'तद्' इत्यनेन निर्दिदशति। अस्मादेव 'पशुना यजेत' इति प्रमाणभूताद्वाक्यादेकस्य क्रियासाधनतावसीयते। अन्यथा ग्रहवद्वाक्यान्तरात् सङ्ख्यान्तरस्यानवसायेऽनियतैकपरिग्रहेऽशक्यानुष्ठानोऽर्थ उपदिष्टः स्यात्॥ ६२॥**

**नन्वङ्गभूयस्त्वात् फलभूयस्त्वमिति यथासम्भवं पश्वन्तरोपादानं भविष्यतीत्याशङ्क्याह—**

---

वधृतबहुत्वसंख्याविरोधात्। सर्वेषां ग्रहाणां संमार्जनसंस्कृतानामुत्तरत्र सोमधारणे उपयोगाच्च। पशुना त्वेकेनापि यागक्रिया संपद्यते। 'पशुना यजेत' इति प्रमाणभूताद् वाक्यादेकस्य क्रियासाधनतावसायादिति।

अयं भावः—जातेः प्रतिव्यक्तिपर्याप्तत्वं प्रतिव्यक्तिजात्यनुभवेन सिद्धम्, द्वितीयत्वादिलिङ्गेनापि पूर्वं साधितमित्येकव्यक्तावपि पशुत्वजातेरवैकल्यात् = अन्यूनत्वात्-परिसमाप्तत्वात् एकस्यापि पशोर्यागक्रियासाधनतोपपत्तौ किमर्थं द्वितीयादिः पशुरुपादीयेत। यदि हि जातिर्व्यक्तौ एकदेशेन वर्तेत, न तु सर्वात्मना, तदैकस्याः पशुव्यक्तेर्यागक्रियासाधनतयोपयोगे पशुपदार्थो जातिर्बाध्येत, जात्यंशस्याजातित्वात्। पशुत्वजातेश्चात्र स्वाश्रयपरिच्छेदद्वारा क्रियासाधनत्वावगमादिति प्रकृत्यर्थसामर्थ्यात् = पशुत्वजातिरूपप्रकृत्यर्थान्वयबाधात्, द्वितीयादिः पशुरुपादीयेत, नत्वेतदस्ति। एकस्यामपि व्यक्तौ जातेः परिसमाप्तत्वात्।

नन्वस्त्वेकत्रापि व्यक्तौ पशुत्वरूपप्रकृत्यर्थस्य परिसमाप्त्योपपत्तिः, वाक्यार्थत्वेन प्रधानीभूता तु यागक्रिया नैकपशुरूपसाधनसाध्या, अङ्गभूयस्त्वफलभूयस्त्वदर्शनादिति प्रधानीभूतक्रियाऽनुरोधात् पश्वन्तररूपमङ्गान्तरमुपादीयेतेत्याशङ्क्याह—एकेन चेत्क्रिया पशुना न प्रकल्पेत इति।

यागस्यावान्तरफलमदृष्टं धर्माख्यम्, चरमफलस्य स्वर्गस्य द्वारभूतम्, तच्चैकेनापि पशुना अवदानद्वारेणोपकृताद् यागान्निष्पद्यत इति नास्ति यागस्यासंपत्तिरूपमप्रकल्पनं येन पश्वनेकत्वप्रकल्पनमत्र भवेत्। अत्र कारिकायां तदित्यनेन सामर्थ्याद् = योग्यत्वात् बुद्धिस्थमनेकसंख्योत्प्रेक्षणं निर्दिशति। सर्वनाम्नां बुद्धिस्थपरामर्शकत्वस्यापि प्राचुर्येण दर्शनात्। पशुना यजेत इत्यस्मादेव प्रमाणभूताद् वाक्यादेकस्य पशोः क्रियासाधनताऽवधार्यते। अन्यथाऽत्र वाक्यान्तरात् संख्यान्तरस्य ग्रहवदनवसायेनैकत्वसंख्याया विवक्षा-

**एकेन च प्रसिद्धायां क्रियायां यदि सम्भवात् ।**
**पश्वन्तरमुपादेयमुपादानमनर्थकम् ॥ ६३ ॥**

**अयमर्थः—इहैकस्य पशोः क्रियासिद्धौ हेतुभावोऽस्ति न वा। द्वितीये पक्षे शास्त्रोल्लङ्घनमित्याद्यः पक्षः। तत्र च लाघवादेकेनैव क्रियानिष्पत्तावधिगतसमीहिताः किमर्थं साधनान्तरान्वेषणप्रयासमनुभवेयुरधिकारिणः। न हि यथासम्भवमिति शास्त्रचोदना। अचोदितानुष्ठाने च शास्त्रोल्लङ्घनादानर्थक्यमिति फलभूयस्त्वस्याप्यभावः। न ह्येकेनानेकेन वा यज्ञो निष्पाद्यायां फलहेतुः कश्चित् स्वरूपातिशयः। तस्मादुपायलाघवात् प्रथमेनैव पशुनावदानगणस्य निष्पत्तेरेकस्य पशोरालम्भेऽपरस्यालम्भो निष्प्रयोजनः ॥ ६३ ॥**

**क्व निष्पन्नस्य निष्पत्त्यर्थं यत्नान्तरं नाद्रियत इत्यत्र दृष्टान्तमाह—**

---

यामपि अनियतैकपशुपरिग्रहे सर्वेष्वपि पशुष्वेकत्वसत्त्वेन विनिगमनाविरहेणाशक्यानुष्ठानोऽर्थं उपदिष्टः स्यात्। तस्मादत्र प्रतिव्यक्तिनियतमेवैकत्वं विवक्षितमित्यवधेयम् ॥६२॥

ननु ग्रहवद् वाक्यान्तरात् संख्यान्तरानवसायेनानियतैकपशुपरिग्रहेऽपि नाशक्यानुष्ठानोऽर्थं उपदिष्टो भविष्यति, किन्त्वङ्गभूयस्त्वात् फलभूयस्त्वमिति यथासंभवं पश्वन्तरोपादानं भविष्यतीत्याशङ्क्याह-एकेन चेदिति।

अस्यार्थः—एकेन च = एकेन पशुना तु यागलक्षणायां क्रियायां प्रसिद्धायाम् = फलसाधनयोग्यतया निष्पन्नायाम् यदि संभवात् = पश्वन्तरस्यापि फलसाधनत्वसंभवात् फलभूयस्त्वार्थं पश्वन्तरमुपादेयमिति कश्चिद् ब्रूयात्तदोपादानम् = पश्वन्तरोपादानमनर्थकम्। तथाह्येकेन पशुना क्रियासिद्धौ संभवन्त्यां पश्वन्तरोपादानेऽचोदितानुष्ठानेन शास्त्रोल्लङ्घनादानर्थक्यमिति नास्ति फलभूयस्त्वमपीति।

अयं भावः—'पशुना यजेत' इति शास्त्रेण एकस्य पशोर्यागे करणत्वं ज्ञाप्यते, न वा। तत्र न द्वितीयः शास्त्रविरोधात्! तथा चाद्यः पक्षः परिशिष्यते। तत्र च लाघवादेकेनैव पशुना यागक्रियासिद्धौ सत्यां शास्त्रं तद्बोधितमवश्यंभावि स्वर्गरूपं फलं प्रति च श्रद्दधाना अधिकारिणः किमर्थं पश्वन्तरोपादानप्रयासं कुर्युः।

न च पशुनेत्यत्रानियतैकपशुपरिग्रहेण फलभूयस्त्वार्थं यथासंभवं पश्वन्तरोपादानं युज्यत इति वाच्यम्। यथासंभवमित्यस्य 'पशुना यजेत' इति शास्त्रचोदितत्वाभावात्। अचोदितस्य च पश्वन्तरकरणकयागस्यानुष्ठाने शास्त्रोल्लङ्घनात् स्वर्गरूपफलाभाव इति का फलभूयस्त्वं प्रत्याशा। नह्येकेनानेकेन वा पशुना निष्पाद्ये यागस्वरूपे फलवैषम्यहेतुः कश्चिदतिशय उपलभ्यते। देवतोद्देशेन द्रव्यत्यागरूपस्य यागस्वरूपस्योभयत्राविशेषात्। तस्मादुपायलाघवात् प्रथमेनैव पशुना हृदयग्रीवावक्षोऽवदानरूपस्यावदानगणस्य सिद्धेरेकस्य पशोरालम्भे कृतेऽपरस्यालम्भो निष्प्रयोजनः शास्त्राबोधितश्चेति उपादानमनर्थकमित्यनेन सूचितम् ॥ ६३ ॥

**यथैवाहितगर्भायां गर्भाधानमनर्थकम् ।**
**तथैकेन प्रसिद्धायां पश्वन्तरमनर्थकम् ।। ६४ ।।**

**आहितः बीजात्मनोपक्षिप्तः गर्भो यस्यां तत्र पुनः गर्भाधानम् अफलम्, आहितस्याधाने विशेषाभावात् । एवमेकपशुसाध्ये यागे पश्वन्तरम् अफलम्, सिद्धस्य साधनवैफल्यात् । पश्वन्तरोपादाने तु तत्साधनं क्रियान्तरमेव स्यात् । न च तत्र विप्रतिपत्तिः । इत्थं दार्ष्टान्तिकानुगुण्याद् गर्भाधानमनर्थकम् इत्युक्तं नाशक्यमिति । आनर्थक्यस्य साध्यस्य प्रक्रमे निदर्शने सम्भवदप्यशक्यत्वं साध्येन समन्वितं न स्यात् । गर्भाधानार्था वा संस्कारा गर्भाधानशब्देनात्र विवक्षिताः शास्त्रचोदिता इति तेषामाहितगर्भायामानार्थक्यमिति दृष्टान्तदार्ष्टान्तिकयोः साम्यं सुष्ठु संगच्छते ।। ६४ ।।**

**तदेवं लाघवाच्चोदितमेकत्वं पशावाश्रीयत इत्येकीयं मतम् । अन्ये तु न्यायान्तरमत्राहुरिति प्रदर्शयति—**

---

निष्पन्नस्य निष्पत्त्यर्थं क्व यत्नान्तरं नाद्रियत इति जिज्ञासायामत्र दृष्टान्तमाह **यथैवाहितगर्भायामिति** ।

अस्यार्थः—यथैव = यथा । अत्रैवकारो वाक्यालङ्कारे पादपूर्त्यर्थोऽनर्थकश्चेति । आहितगर्भायाम् = आहितो बीजात्मनोपन्यस्तो गर्भो यस्यां सा तथाभूता तत्र पुनर्गर्भाधानमनर्थकम् = अफलम्, आहितस्याधाने विशेषाभावात् । तथा = एवम् एकेन पशुना योगक्रियायां प्रसिद्धायाम् = निष्पन्नायां सत्याम्, पश्वन्तरमनर्थकम् = अफलम् पिष्टपेषणवत् सिद्धस्य साधनवैफल्यात् । किञ्च यागक्रियानिष्पत्तये पश्वन्तरोपादाने पश्वन्तरसाधनकं क्रियान्तरमेव तत् स्यात्, न तु सैव क्रिया । न च तत्र = पश्वन्तरसाध्ये क्रियान्तरे पश्वन्तरमनर्थकं साधकं वेति विप्रतिपत्तिरस्ति । तथा च प्रकृतदृष्टान्तानुगुण्यादयमत्रानुमानप्रयोगः । एकपशुसिद्धायां यागक्रियायां सिषाधयिषयोपात्तं पश्वन्तरमनर्थकम्, सिद्धक्रियानिरूपितसाधनत्वस्याभावात् आहितर्भायां गर्भाधानवत् । अत्र गर्भाधानपदेन 'गर्भं आधीयते येन' इति करणव्युत्पत्त्या गर्भाधानसाधनं गृह्यते, भावसाधनत्वे दृष्टान्तत्वानुपपत्तेः । एवमेकपशुसिद्धक्रियायां सिषाधयिषयोपात्ते पश्वन्तरे आनर्थक्यमेव संभवति, नाशक्यत्वमिति दार्ष्टान्तिकस्य = पक्षस्य पश्वन्तरस्यानुगुण्याद् दृष्टान्तेऽपि गर्भाधानमनर्थकमित्युक्तम्, न तु भावव्युत्पत्त्या तत्राशक्यत्वस्य संभवेऽपि गर्भाधानमशक्यमित्युक्तम् । आनर्थक्यस्य साध्यस्य प्रक्रमे सति = पक्षीभूते पश्वन्तरे प्रथममुपन्यासे सति, दृष्टान्ते भावव्युत्पत्त्या समाश्रीयमाण गर्भाधाने संभवदप्यशक्यत्वं, साध्येन = पक्षेण ( 'पर्वतो वह्निमान्' इत्यादौ तादात्म्येन वह्निमत एव साध्यत्वात् । अतएवोक्तमभियुक्तैः—

संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ।
कुतस्तस्य परित्राणमुत्पतन्नेव यो हतः ।। इति । ).

तावतार्थस्य सिद्धत्वादेकत्वस्याव्यतिक्रमम् ।
केचिदिच्छन्ति न त्वत्र सङ्ख्याङ्गत्वेन गृह्यते ॥ ६५ ॥

नात्रैकत्वसङ्ख्या पशुविषये विवक्ष्यते, अपि तु प्रातिपदिकार्थोपलक्षणमेव सा । सङ्ख्यामात्रयुक्तः प्रातिपदिकार्थः साधनम् । तस्य तु पूर्वं लाघवमेकत्वस्योपादाने निमित्तमभिहितम् । इदानीं त्वेकत्वपूर्वकत्वादनेकत्वस्य क्रमव्यतिक्रमे प्रयोजनाभावादेकसङ्ख्याकस्यैवोपादानं कथ्यते, तत्परिमाणेनैव क्रियासिद्धिरिति सामर्थ्यादेकत्वस्य अव्यतिक्रमः अत्यागः । तदेवं लाघवे पूर्वोक्ते सामर्थ्ये वेहोपात्ते शेषभूतमिदम् न त्वत्र सङ्ख्याङ्गत्वेन गृह्यत इति । एकवाक्यतयैवोपपत्तेर्वाक्यभेदेन व्याख्यानं पूर्वैर्दूषणरसिकतया कृतम् । सामर्थ्यादेकत्वस्याव्यतिक्रमे तु न सङ्ख्याङ्गत्वेन गृह्यते । न वचनप्रापितः सङ्ख्यायाः क्रियाङ्गभावः स्यात्, सामर्थ्यादव्यतिक्रममात्रमिति शब्देनाविहितमेकत्वमित्यचोदितार्थानुष्ठानप्रसङ्ग इति दूषणं कारिकावयवाद्विभज्य पूर्वैः कल्पितम् । ग्रन्थकारस्त्वत्र मते कारिकान्तरेणैव—

'अन्वयव्यतिरेकाभ्याम्' ( वा० का० ३ जा० ६७ )

इत्यादिना दूषणं दास्यति ॥ ६५ ॥

कथं तर्हि द्वितीयादि लिङ्गमेकत्वविवक्षायामन्यत्रोक्तमित्याह—

---

अनर्थकेन पश्वन्तरेण समन्वितं न स्यात् । एकपशुसिद्धक्रियायां सिषाधयिषयोपात्ते पश्वन्तरेऽशक्यत्वस्याभावात् । यदि तु प्रसिद्ध्या भावव्युत्पत्तिसमाश्रयणेन गर्भाधानमनर्थकमित्यत्र गर्भाधानरूपा क्रियैव परिगृह्यते तदा क्रियासाधनयोर्विषमयोर्दृष्टान्तदार्ष्टान्तिकभावासंभवात्, तादर्थ्यात् ताच्छब्द्यमिति न्यायेन लक्षणया गर्भाधानार्थाः शास्त्रविहिताः संस्कारा अत्र गर्भाधानशब्देन विवक्षिता इति तेषां संस्काराणामाहितगर्भायामानर्थक्यमिति दृष्टान्तदार्ष्टान्तिकयोः साम्यं साधु संभवतीति ॥ ६४ ॥

तदेवं 'पशुना यजेत' इति चोदितम् = वचनप्रापितम् पशावेकत्वं साधनलाघवादाश्रीयत इत्येकीयं मतम् । अन्ये त्वत्र पशावेकत्वविवक्षायां प्रथमोपस्थितस्यैकत्वस्याव्यतिक्रमरूपं न्यायान्तरमाहुरिति प्रदर्शयति-तावताऽर्थस्येति ।

अस्यार्थः = एकत्वपूर्वकत्वादनेकत्वस्य क्रमव्यतिक्रमे प्रयोजनाभावादेकसंख्याकस्यैव पशोर्यागसाधनतयोपादानमिति तावता = एकसंख्याकेनैव पशुनाऽर्थस्य = यागक्रियारूपस्य सिद्धत्वे सति सामर्थ्यादेकत्वस्याव्यतिक्रममत्यागं केचिदिच्छन्ति । सामर्थ्यादेकत्वस्याव्यतिक्रमे तु नैकत्वसंख्या यागाङ्गत्वेन गृह्यते । संख्यायाः शब्दानुपात्तत्वादिति ।

अयं भावः—'पशुना यजेत' इत्यत्र पशुगतैकत्वसंख्या न विवक्ष्यते । संख्यासामान्ययुक्तस्य पशुरूपस्य प्रातिपदिकार्थस्य यागे साधनत्वसंभवात्, किन्तु विभक्त्युपात्तमेकत्वं प्रातिपदिकार्थे उपलक्षणम् । तस्य त्वेकत्वस्य शब्दत उपादाने पूर्वं लाघवरूपं निमित्तमभिहितम् । इदानीन्त्वनेकत्वस्यैकत्वपूर्वकत्वात् क्रमव्यतिक्रमे फलाभावाच्चैकत्व-

**द्वितीयादिषु यल्लिङ्गमुक्तं न्यायानुवादि तत् ।**
**न सङ्ख्या साधनत्वेन जातिवत्तेन गम्यते ॥ ६६ ॥**

**एकत्वविवक्षासिद्ध्यर्थं नैतल्लिङ्गम्, अपि तु लाघवादेकेन सिद्धत्वात् क्रियाया अनेकोपादानस्य निष्प्रयोजनत्वात्, क्रमव्यतिक्रमे प्रयोजनाभावाच्चैकत्वसङ्ख्यापरिग्रह इति यदेतन्न्यायद्वयमुक्तं तदनुवादपरम्, उक्थ्ये द्वितीयमित्यादि लिङ्गं नापूर्वमर्थं गमयति यस्मात्तेनानन्तरोक्तेन न्यायद्वयेनैकत्वस्यापरित्यागाच्छाब्देन रूपेण न सङ्ख्या साधनत्वेन गम्यते शब्दसंस्कारमात्रार्थत्वादेकवचनस्य । तेन वा कारणेन सङ्ख्यात्र न विवक्ष्यते, यस्मादविवक्षायामपि न्यायादिष्टसिद्धिः । यद्वा तेन लिङ्गेन सङ्ख्यासाधनत्वेन नावेद्यते न्यायादेवेष्टसिद्धेरनुवादमात्रं तदित्यर्थः । जातिवदिति वैधर्म्यदृष्टान्तः यथा शब्दचोदिता जातिरङ्गमिति गम्यते । नैवमेकत्वमुक्तादेव न्यायात् तदनङ्गत्वेऽपि समीहितसिद्धेः ॥ ६६ ॥**

**केचिदिति वचनात् परमतम्, एतद् दूषयति—**

---

संख्याया उपादानमिति कथ्यते । एकत्वसंख्यापरिमितेनैव पशुना यागसिद्धौ सामर्थ्यादेकत्वस्याव्यतिक्रमोऽत्यागः ।

तदेवं पूर्वोक्ते लाघवे, इहोपात्ते सामर्थ्ये वा, नत्वत्र संख्याऽङ्गत्वेन गृह्यत इति वाक्यं शेषभूतम् । एतदर्थस्तु अत्र मते संख्या यागाङ्गत्वेन न गृह्यते । यागाङ्गभूते प्रातिपदिकार्थे उपलक्षणत्वादिति । इदञ्च वस्तुवृत्तकथनम् न त्वेतन्मतदूषणपरम् अन्वयव्यतिरेकाभ्यामिति कारिकया दूषणस्य वक्ष्यमाणत्वात् । एवं सत्येकवाक्यतयैवोपपत्तिरस्य पद्यस्य । वाक्यभेदेनास्य वाक्यस्य पूर्वेषां टीकाकाराणां व्याख्यानन्तु एकत्वसंख्याप्रातिपदिकार्थोपलक्षणमिति मतदूषणरसिकत्वप्रयुक्तम् । दूषणपरतया व्याख्यातॄणां वाक्यभेदेन व्याख्याप्रकारस्त्वेवम्—सामर्थ्यादेकत्वस्य पशुगतस्यात्यागे त्वेकत्वसंख्या यागाङ्गत्वेन न गृह्यत इति संख्यायाः क्रियाङ्गभावो वचनप्रापितो न स्यात्, सामर्थ्यादव्यतिक्रममात्रमिति । एकत्वस्य शब्देनाविहितत्वादविहितार्थस्य एकपशुकरणकयागस्यानुष्ठानप्रसङ्ग इति । ग्रन्थकारस्य तु नैतद् वाक्यभेदेन व्याख्यानमभीष्टम् । यतः अन्वयव्यतिरेकाभ्यामिति कारिकया दूषणं स वक्ष्यति ॥ ६५ ॥

कथं तर्हि पशुना यजेत इत्यत्रैकत्वविविक्षायां द्वितीयत्वादिरूपं लिङ्गमन्यत्रोक्थ्ये द्वितीयमित्यादिनोक्तमित्याशङ्क्याह—द्वितीयादिष्विति ।

अयमर्थः—द्वितीयादिषु = द्वितीयादिपशुगतं यल्लिङ्गं द्वितीयत्वादिकमेकत्वविवक्षायां लिङ्गमुक्तं तन्न्यायानुवादि = लाघवक्रमव्यतिक्रमे प्रयोजनाभावश्चेत्येतद्रूपं यन्न्यायद्वयं तदनुवादि, अतो न तदेकत्वविवक्षायां लिङ्गम् । तेन = प्रागुक्तन्यायानुवादित्वेन हेतुना संख्या = पशुनेत्यत्रैकत्वसंख्याजातिवदिति वैधर्म्ये दृष्टान्तः । पशुत्वजाति-

अन्वयव्यतिरेकाभ्यां सङ्ख्याभ्युपगमे सति ।
युक्तं यत्साधनत्वं स्यान्न त्वन्यार्थोपलक्षणम् ।। ६७ ।।

**विभक्तिः प्रत्ययमन्वेति अनुवर्तते, तस्मिन् सति प्रतीयते तदभावे व्यतिरिच्यते, व्यावर्तते न प्रतीयते सङ्ख्येति पशुमालभेतेत्यादौ शब्दोपादानायास्तस्याः प्रतीतिश्चेद-भ्युपगम्यते । विधानमपि कथं नास्तीति शब्दोपात्तायास्त्यागो न युक्तः, अपि त्वेतदेव युक्तं यत्साधनत्वं क्रियाङ्गत्वम् न त्वन्यार्थोपलक्षणं प्रकृत्यर्थोपलक्षणं युक्तमित्यर्थः । सत्त्व-भूतस्यार्थस्य शब्देनाभिधाने तत्संस्कारप्रतिपत्तये वचनमिति प्रकृत्यर्थोपलक्षणमात्रं तद्भवति । न चैतन्न्याय्यम् । यथा ह्यन्वयव्यतिरेकाभ्यां प्रकृतिवाच्या जातिः**

---

वत् = पशुत्वजातिर्यथा स्वाश्रयपरिच्छेदद्वारा साधनं तथा साधनत्वेन न गम्यते । एक-त्वविवक्षायामपि प्रागुक्तन्यायद्वयादेवेष्टसिद्धेरति ।

अयं भावः—अन्यत्र द्वितीयादिपशुगतं यद्द्वितीयत्वादिकमुक्तम्, उक्थ्ये द्विती-यमित्यादिना, न तद् 'पशुना यजेत' इत्यत्रैकत्वविवक्षासिद्धयर्थं लिङ्गम् । किन्तु लाघ-वात्, एकेन पशुना यागक्रियायाः सिद्धेरनेकपशुपरिग्रहस्य वैयर्थ्यात्, क्रमव्यतिक्रमे मानप्रयोजनयोरभावाच्चैकत्वसंख्यापरिग्रह इति यल्लाघववैयर्थ्यरूपं न्यायद्वयमुक्तं तद-नुवादकम्, न त्वपूर्वमर्थं गमयति । कारिकायां तेनेत्यस्यार्थत्रयम् । तत्र तेन = अनन्तरो-क्तेन न्यायद्वयेन इत्येकोऽर्थः, तेन कारणेनेति द्वितीयः । तेन = लिङ्गेन इति तृतीयः । तत्राद्ये पशुनेत्येकत्वस्यापरित्यागाच्छाब्दबोधविषयतां प्राप्य एकत्वसंख्या साधनत्वेन न गम्यते, शब्दसंस्कारमात्रार्थत्वादेकवचनस्य । द्वितीये तु तेन = न्यायद्वयलब्धत्वरूपेण कारणेन एकत्वसंख्याऽत्र न विवक्षया गम्यते, अविवक्षायामपि न्यायादिष्टसिद्धेः । तृतीये तु तेन = लिङ्गेन एकत्वसंख्या न साधनत्वेन गम्यते । न्यायादेवेष्टिसिद्धेरेकवचनस्या-नुवादमात्रत्वात् । अत्र प्रथमेऽर्थे एकत्वस्यापरित्यागाच्छाब्दबोधविषयतां प्राप्य इत्यध्या-हारे गौरवम् । तृतीयेऽर्थे लिङ्गस्यानुवादकत्वेऽपि संख्यानिष्ठस्य साधनत्वस्य गमकत्वसंभ-वात्, संख्यासाधनत्वेन न गम्यते इत्युक्तेर्व्याहृतिः । अतो द्वितीयं व्याख्यानमेव युक्तम् । जातिवदिति वैधर्म्ये दृष्टान्तः । यथा पशुशब्देन विशेषणतयोपस्थापिता पशुत्वजातिः स्वाश्रयपरिच्छेदद्वारा यागाङ्गमिति गम्यते, नैवं पशुनेत्येकवचनोपात्तमेकत्वं यागाङ्गम्, तस्यानङ्गत्वेऽपि न्यायद्वयादेव समीहितसिद्धेरिति ।।६६।।

पञ्चषष्टिसंख्याकायां कारिकायां केचिदिच्छन्तीति वचनादिदं परमतमिति सूचि-तम् । तदेतद्दूषयति—अन्वयव्यतिरेकाभ्यामिति ।

अस्यार्थः—विभक्तिसत्वे संख्याप्रत्ययसत्त्वं विभक्त्यभावे संख्याप्रत्ययाभाव इत्य-न्वयव्यतिरेकाभ्यां संख्याऽभ्युपगमे सति = संख्याया एकवचनार्थत्वाभ्युपगमे सति तस्या यागसाधनत्वं स्यादिति यत् तद् युक्तं, अन्यार्थे = प्रातिपदिकार्थे उपलक्षणं सा इति तु न युक्तमिति ।

शब्दवती न त्यज्यते, तथा सङ्ख्यापीति न्याय्यम्। न ह्येकयोगक्षेमस्याङ्गाङ्गितया एकपदोपात्तस्यार्थस्य खण्डशो विनियोगाविनियोगौ युक्ताविति भावः। शब्देनाचोदिते त्वेकत्वे सामर्थ्यात् प्रतिपत्तौ यदैकपशूपात्तानामेकादशानामवदानानां दैवान्मानुषाद्वा वैगुण्यादन्यतमविलोपः तदा पश्वन्तराण्यवदानार्थमुपादीयेरन्। न ह्येवं काचिच्छब्दार्थबाधा तदानीं भवति, शब्देनाचोदितत्वादेकत्वस्य। तथा च तत्कर्माज्येन न निर्वर्त्येतेति प्रतिनिध्यभावः। मुख्याभावे हि प्रतिनिधिरुपादीयते। मुख्यं च वचनेन सङ्ख्यानुपादाने विद्यत एव।

यस्य पुनः शब्दचोदितमेकत्वं तस्योपपन्नोऽत्र प्रतिनिधिरित्यवदानलोपे तत्कर्माज्येन सम्पाद्यते, न तु पश्वन्तरमुपादीयते, चोदितैकत्वत्यागप्रसङ्गात्, यद्येवं वपाविनाशेऽपि पश्वन्तरं नोपादीयेत्। नैतदस्ति। यस्मान्नालम्भनमात्रसम्पत्त्यर्थं पशोरुपादनम्, अपि तु यागार्थम्। तत्रैव च तदेकत्वं विवक्ष्यते। यागश्च वपां विना न सम्पद्यते। तस्मात्पश्वन्तरोपादानेऽपि नातिक्रान्तमेकत्वम्। तत्रैकेनैव यागस्य निर्वृत्तत्वात्, अवदानान्तरार्थन्तु पश्वन्तरे चोदिते सत्येकत्वे न लभ्यते इत्यवदानान्तरकार्यं घृतेन सम्पद्यत इति न्यायः॥ ६७॥

यतश्च साधनत्वं युक्तम्, अतः—

---

अयं भावः—विभक्तिः प्रत्ययमन्वेत्यनुवर्तते, विभक्तौ सत्यां संख्या प्रतीयते, तदभावे व्यतिरिच्यते = व्यावर्तते न प्रतीयत इति 'पशुमालभेत' इत्यादौ विभक्तिशब्दोपात्तायास्तस्याः प्रतीत्यभ्युपगमे विधानमप्यभ्युपेयमिति शब्दोपात्तायास्तस्यास्त्यागो न युक्तः अपि तु यत् साधनत्वं यागक्रियाङ्गत्वं तदेव युक्तम्, अन्यार्थोपलक्षणम् = प्रकृत्यर्थोपलक्षणन्तु न युक्तम्। सत्त्वभूतस्य पशुपदार्थस्य पशुशब्देनाभिधाने पशुशब्दस्य साधुत्वज्ञानाय विभक्तिरूपं वचनमिति प्रकृत्यर्थोपलक्षणमात्रं संख्या भवतीति केषाञ्चिन् मतं न न्याय्यम्। किन्तु यथाऽन्वयव्यतिरेकाभ्यां प्रकृतिवाच्या पशुत्वजातिः शब्दचोदिता प्रकृते न त्यज्यते, तथा संख्याऽपीति न्याय्यम्। नह्येकयोगक्षेमस्याङ्गाङ्गितया पशुनेत्येकपदोपात्तस्य एकत्वविशिष्टपशुरूपस्यार्थस्य खण्डशो विशेष्यस्य यागे विनियोगो विशेषणस्यैकत्वस्याविनियोग इति युक्तम्।

किञ्च यदि शब्देनैकत्वं न चोदितं तदा सामर्थ्यात् तस्य प्रतिपत्तौ यदा शब्देन चोदितानामेकपशौ चिकीर्षितानामेकादशावदानानां मध्ये दैवान् मानुषाद्वा अपराधादेकस्य विलोपः स्यात्तदाऽवदानार्थं पश्वन्तराणामुपादानं समञ्जसं स्यात्। नहि तदानीं काचिच्छब्दार्थबाधा भवति, एकत्वस्य शब्देनाचोदितत्वात्। न चैतदिष्टम्। तथा चावत्तैकपशुसाध्यं कर्म आज्येन न निर्वर्त्येत। किन्त्वत्तेन पश्वन्तरेणेति आज्यस्य पशुप्रतिनिधित्वाभावः प्रसज्येत। मुख्याभावे हि प्रतिनिधरुपादीयते। विभक्त्या संख्याऽनुपादाने च पश्वन्तरमपि मुख्यं विद्यत एव। यस्य तु मते विभक्तिचोदितमेकत्वं तस्य मते कथञ्चिदेकाव-

**साधनत्वे पदार्थस्य सामर्थ्यं न प्रहीयते ।**
**सङ्ख्या व्यापारधर्मोऽतस्तेन लिङ्गेन गम्यते ॥ ६८ ॥**

यदा शब्दोपात्तत्वाज्जातिसङ्ख्ययोस्तुल्यत्वम्, तदा साधनत्वे पदार्थस्य सामर्थ्यं न प्रहीयते । पदस्येति वाक्यशेषः । सकलस्य हि पदार्थस्य साधनत्वे पदस्य तदभिधानलक्षणं सामर्थ्यं न हापितं भवति । अतश्च परिपूर्णस्य पदार्थस्य साधनत्वात् सङ्ख्याया एकत्वलक्षणायां क्रियायां व्यापाराख्यो धर्मः तेन लिङ्गेन गम्यते । यतस्तत्पदस्य सामर्थ्यमप्रहेयम्, अतस्तेन सामर्थ्यलक्षणेन, लिङ्गेन हेतुना गम्यते सङ्ख्या व्यापारधर्मः । यतस्तदप्रहेयम्, अतस्तद्भवति हेतुः सङ्ख्याव्यापाराधिगतौ । यथा यतोऽविनाभूतो धूमः अतस्स भवत्यग्न्यधिगमहेतुः । अथवा—तेन लिङ्गेन द्वितीयादिना एतद्गम्यते न तु पूर्वोदितस्य सामर्थ्यादपरिग्रहमात्रस्य तदनुवादि लिङ्गं यथा तैरुक्तम्, अपि तु मदीयन्यायेनैव तत्सङ्गतमित्यर्थः । यत्र तु लिङ्गं नास्ति सङ्ख्याव्यापारसूचकम्, तत्राविवक्षेति भावः । तद्यथा 'ग्रहं सम्मार्ष्टि' इति । अत एव साङ्ख्यायाः क्वचिदव्यापारलक्षणो धर्मः तेन लिङ्गेन गम्यत इत्यकारप्रश्लेषं केचिद्व्याचक्षते किल । लिङ्गाभावे 'ग्रहं सम्मार्ष्टि' इत्यादौ न्यायादविवक्षेति लिङ्गमभवत्तत्र साधकतमम् । यथा साधनभावः

---

दानलोपेऽवदानार्थं पश्वन्तरानुपादानेनोपपद्यतेऽत्र प्रतिनिधिरित्यवदानलोपे पशुसाध्यं कर्म आज्येन क्रियते, न तु पश्वन्तरमुपादीयते, शब्दचोदितैकत्वत्यागप्रसङ्गात् ।

ननु यथाऽवदानलोपे पश्वन्तरं नोपादीयते तथा वपाविनाशेऽपि पश्वन्तरं नोपादीयेत इति चेन्नैतदस्ति । यस्मात् 'पशुमालभेत' इत्यत्रालम्भनमात्रसंपत्त्यर्थम्—हिंसामात्र सिद्धयर्थम् न पशोरुपादानम्, किन्तु यागसंपत्त्यर्थम् । अतः प्रधानीभूतयागसिद्धयर्थमेव पश्वेकत्वं विवक्ष्यते । यागश्च वपां विना न सिद्ध्यति । तस्माद् वपालाभाय पश्वन्तरोपादानेऽपि न पशुगतं शब्दचोदितमेकत्वं यागेऽतिक्रान्तं भवति । तत्र यागस्यैकेनैव पशुना निर्वृत्तत्वात्, अवदानान्तरार्थन्तु पश्वन्तरे उपादीयमाने, एकत्वे च शब्दचोदिते सति न लभ्यते यागाङ्गभूतावत्तपशुगतमेकत्वमित्यवदानान्तरकार्यं घृतेन पशुप्रतिनिधिना संपाद्यत इति न्याय्यम् ॥६७॥

यतश्च पूर्वकारिकोक्तरीत्या संख्यायाः साधनत्वं युक्तम्, अत आह—साधनत्वे पदार्थस्येति ।

अयमर्थः—अत्र पूर्वार्धे पदस्येत्यध्याहारः । जातिसंख्ययोरुभयोः शब्दोपात्तत्वात् पदार्थस्य साधनत्वे पदस्य सामर्थ्यं न प्रहीयते । अतो जातिसंख्याभ्यां परिपूर्णस्य पशुपदार्थस्य साधनत्वात् संख्याया एकत्वलक्षणाया यागक्रियायां स्वाश्रयसाधनावच्छेदद्वारा उपकाररूपव्यापाराख्यो धर्मः, तेन पदस्य पदार्थाभिधानसामर्थ्यरूपेण लिङ्गेन हेतुना गम्यते । यतः पदस्य पदार्थाभिधानसामर्थ्यमप्रहेयमतस्तद् भवति हेतुः पदाभिधेयायाः संख्याया यागक्रियायां व्यापाराधिगतौ । यथा यतोऽविनाभूतो धूमः अतः स भवत्यग्न्य-

**स्तोकान्मुक्तः इत्यादौ । तदेवमनेन श्लोकद्वयेन स एवार्थो निर्वाहितो यो**

**'अन्यत्राविहितस्यैव" ( वा. का. ३ जा. ५७ )**

**इत्यादौ निर्णीतः ॥**

**ननु च विवक्षां प्रतिजानताभ्युपेतः सङ्ख्यायाः साधनभावः । सङ्ख्या च द्रव्यविशेषणम्, शक्तिस्तु साधनमिति कथमतद्विशेषणं तथा स्यात् । नैष दोषः । शक्तेर्निराधाराया अनुपपत्तेस्तदभेदापन्नं फलतो द्रव्यमेव साधनं न्याय्यम् । तथा च कटः कर्म, देवदत्तः कर्तेति सामानाधिकरण्यं दृश्यते । अथ कर्मादिशब्दैर्द्रव्यायमाणं तदभिधीयते तर्हि 'कर्मणि द्वितीया' इत्यादौ विभक्तिविधाने शक्त्यवच्छिन्नस्य द्रव्यस्यैव सङ्ख्यादि विशेषणम् । युक्तं चैतत् । न हि शक्तिषु सङ्ख्या समवैति । तस्मादाश्रयस्य साधनत्वात् सङ्ख्यापि तथा । एतदेव हि सङ्ख्यायाः क्रियाङ्गत्वं यत्साधनावच्छेद इति सर्वं सुस्थम् ॥ ६८ ॥**

**पूर्वं ग्रहाणां संस्कार्यत्वादार्थेन रूपेण प्राधान्ये सत्यविवक्षोक्ता । अथ पुनः प्रकारान्तरेणात्र विवक्षाविवक्षे व्यवस्थापयितुमाह—**

---

धिगमहेतुरिति । अथवा तेन लिङ्गेन पशुगताद्वितीयत्वादिकं लिङ्गं यथा कैश्चिदुक्तम्, अपि तु एतत् कारिकोक्तमदीयन्यायेनैव पदस्य पदार्थाभिधानसामर्थ्यलक्षणेन सङ्गतं द्वितीयत्वादिकं लिङ्गम् । यत्र तु संख्याव्यापारसूचकमेतल्लिङ्गं नास्ति तत्र संख्याया अविवक्षा । यथा 'ग्रहं संमार्ष्टि' इत्यत्रैकत्वस्याविवक्षा । सर्वग्रहसंमार्गस्यात्र विधेयत्वात् । अत एव संख्याऽव्यापारधर्मः, संख्यायाः क्वचित् क्रियायामव्यापारलक्षणो धर्मः, तेन-पदस्य पदार्थाभिधानसामर्थ्यलक्षणेन लिङ्गेन गम्यते इत्यकारप्रश्लेषं कृत्वा केचिद् व्याचक्षते । वस्तुतस्तु नेदं व्याख्यानं युक्तम्, क्वचिल्लिङ्गाभावे इत्यध्याहारे क्लेशात् प्रतिपत्तिगौरवाच्च ।

तदेवमनेन श्लोकद्वयेन स एवार्थः समर्थितो योऽन्यत्राविहितस्यैव इति कारिकायां निर्णीत इति । ननु विवक्षां संख्यायाः प्रतिजानता भवता संख्यायाः साधनभावः स्वीकृतः । किन्तु संख्या द्रव्यविशेषणम् । द्रव्यं तु न साधनम्, किन्तु शक्तिः साधनमिति साधनाविशेषणीभूतायाः संख्यायाः कथं साधनभाव इति चेन्नैष दोषः । शक्तेः साधनत्वेऽपि निराधारायास्तस्या अनुपत्तेः, शक्तिशक्तिमतोरभेदाभ्युपगमेन द्रव्यमेव साधनमिति फलति । एवं संख्यायाः साधनविशेषणत्वात् साधनभावो युक्तः । तथा च कटः करोतेः कर्म, देवदत्तः कर्तेति कटदेवदत्तादेर्द्रव्यस्य कर्तृकर्मादिरूपसाधनसामानाधिकरण्यमनुभूयते । यदि तु कर्मादिशब्दैर्द्रव्यायमाणं साधनमभिधीयत इत्युच्यते, तर्हि विभक्तिविधायके 'कर्मणि द्वितीया' इत्यादौ साधनरूपशक्त्यवच्छिन्नस्य द्रव्यस्यैव संख्यादिविशेषणमिति युक्तमभ्युपगन्तुम् । यतः शक्तिषु संख्या न समवैति, शक्तेरद्रव्यत्वात् किन्तु द्रव्येषु । तस्माच्छक्तिशक्तिमतोरभेदेनाश्रयस्य साधनत्वात् तद्विशेषणीभूता संख्याऽपि साधनम् । एतदेव हि संख्याया यागक्रियाङ्गत्वम्, यत् क्रियाङ्गद्रव्यरूपसाधनावच्छेद इति ॥६८॥

**अपूर्वस्य विधेयत्वात् प्राधान्यमवसीयते ।**
**विहितस्य परार्थत्वाच्छेषभावः प्रतीयते ॥ ६९ ॥**

**वास्तवेन रूपेण पूर्वं गुणप्रधानभावश्चर्चितः । अयन्तु वाक्यव्यापाराश्रयेणेति विशेषः ।**

**तथा हि—पशोरुत्पत्तिवाक्येन अपूर्वस्य विधेयत्वात् प्राधान्यम् इति यथाश्रुतमेकत्वं न त्यज्यते । विधेयत्वादित्यनेनैवापूर्वस्याक्षेपे सति पुनर्वचनं व्याप्त्यर्थम् । क्रियाया वाक्यार्थत्वेन प्राधान्येऽपि सर्वत्रापूर्वस्य प्राधान्यम्, अप्रज्ञातज्ञापनेन विधीयमानत्वादित्यर्थः । विहितस्य तु ज्ञातस्य सतोऽन्यार्थत्वेनानुवादादप्राधान्यमिति तत्र विधिवाक्यगतरूपानुसरणं न्याय्यम् ॥ ६९ ॥**

**एतदेव प्राकरणिकेऽर्थे योजयति—**

---

'ग्रहं संमार्ष्टि' इत्यत्र ग्रहाणां संस्कार्यत्वादार्थं तेषां प्राधान्यमिति सत्त्वेऽपि लिङ्गाभावेन अप्रधानीभूतायाः संख्याया अविवक्षा पूर्वमुक्ता । अथ पुनरपि प्रकारान्तरेणात्र विवक्षाऽविवक्षे व्यवस्थापयितुमाह—अपूर्वस्येति ।

अस्यार्थः—अपूर्वस्य = मानान्तरेणाप्राप्तस्यार्थस्य विधेयत्वात् प्राधान्यमवसीयते निर्णीयते । यथा 'पशुना यजेत' इत्यत्रैकत्वविशिष्टपशुरूपस्यार्थस्यापूर्वत्वेन विधेयत्वं, विधेयत्वेन प्राधान्यम्, तेन च विवक्षेति तद्विशेषणीभूतायाः संख्याया अपि विवक्षा । विहितस्य मानान्तरेण ज्ञातस्य तु परार्थत्वात् = विधेयार्थत्वात् शेषभावः = अनुवादत्वेन विधेयाङ्गत्वं प्रतीयते । यथा—'ग्रहं संमार्ष्टि' इत्यत्र ग्रहाणां 'प्राजापत्या नव ग्रहा' इति मानान्तरेण प्राप्तत्वादनुवादत्वेन पूर्वत्वेन विधीयमानसंमार्जनक्रियाङ्गत्वमिति तद्विशेषणीभूतसंख्याया अपि तत्त्वेनाप्राधान्यादविवक्षेति ।

अयं भावः—पूर्वमार्थं वस्तुभूतं रूपमाश्रित्य गुणप्रधानभावो विचारितः, इदानीन्तु शाब्दं वाक्यव्यापारमाश्रित्येति विशेषः । तथाहि—मानान्तरेणाप्राप्तस्य पशोः 'पशुना यजेत' इत्युत्पत्तिवाक्येन विधेयत्त्वात् तद्विशेषणीभूतश्रुतमेकत्वं न त्यज्यते । तत एव सर्वत्रापूर्वस्यैव विधेयत्वेन विधेयत्वादित्यनेनैवापूर्वस्याक्षेपेऽपि अपूर्वस्येति पुनर्वचनं सकलापूर्वलाभाय । एवञ्च क्रियाया वाक्यार्थत्वेन प्राधान्येऽपि सर्वत्रैव वाक्येऽपूर्वस्य क्रियारूपस्य तद्भिन्नस्य वा सर्वस्य प्राधान्यम् । अप्रज्ञातप्रज्ञापनरूपविधिविषयत्वादिति 'पशुना यजेत' इत्यत्र पशोरपूर्वत्वेन प्राधान्यमिति तद्विशेषणीभूता संख्या विवक्षिता । विहितस्य तु मानान्तरेण ज्ञातस्य सतोऽन्यार्थत्वेन विधीयमानार्थत्वेन अनूद्यमानत्वादप्राधान्यमिति 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहाणामन्यत्र विहितानामत्र विधिवाक्यगतविधीयमानसंमार्जनक्रियारूपप्रधानीभूतार्थानुसरणं न्याय्यमिति सकलग्रहाणां संमार्जनेन संस्कार्यत्वात् तद्गतैकत्वसंख्याया अविवक्षेति न्याय्यमिति ॥६९॥

**संमार्गस्य विधेयत्वादन्यत्र विहिते ग्रहे।**
**विधिवाक्ये श्रुता सङ्ख्या लक्षणायां न बाध्यते ॥ ७० ॥**

**'ग्रहं सम्मार्ष्टि' इत्यपूर्वस्य सम्मार्गस्य विधेयत्वात् प्राधान्यम्। अन्यत्र प्राजापत्या नव ग्रहाः' इत्यादौ विधिवाक्ये विहिते प्रथमं ज्ञापिते, ग्रहे ग्रहसामान्य इत्यर्थः। तत्र च विधिवाक्ये या श्रुता नव दशेत्यादिका सङ्ख्यापदोपादाना सङ्ख्या सा लक्षणायां 'ग्रहं समार्ष्टि' इत्यत्र पूर्वोद्दिष्टग्रहोपलक्षणपरेऽनुवादवाक्ये न बाध्यते न त्यज्यते, अस्या विधौ प्राधान्यात्। इह त्वनुवादवाक्ये ग्रहमात्रोपलक्षणपरायां चोदनायां नान्तरीयिका द्रव्योपलक्षणार्था शब्दसंस्कारमात्रपरा सङ्ख्या, ग्रहश्रुतिस्त्वनर्थिका मा भूदिति ग्रहजात्युपलक्षार्थेति यथाविहितभिन्नसङ्ख्याकग्रहोपादानार्थं, मा भूद् गुणेन प्रधानोपरोध इति। गुणा हि प्रधानोपकाराय प्रवर्तन्त इति प्रधानसङ्ख्यया गुणसङ्ख्यात्र बाध्यते। ननु च 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णति' इत्युत्पत्तिवाक्यं ग्रहणक्रियाविषयम्। ग्रहं सम्मार्ष्टि' इत्यनुवादवाक्यं सम्मार्जनक्रियाविषयमिति विषयभेदादविरोधे बहवो ग्रहा गृह्यन्ताम्, एकस्तु सम्मार्ज्यतामिति नास्ति बाधः।**

---

पूर्वकारिकोक्तमर्थं प्राकरणिकेऽर्थे ग्रहगतैकत्वलक्षणेऽविवक्षिते योजयति— संमार्गस्येति।

अस्यार्थः–अन्यत्र 'प्राजापत्या नव ग्रहा' इत्यादौ विधिवाक्ये, ग्रहे=ग्रहसामान्ये, विहिते प्रथमं ज्ञापिते सति तत्र प्रागुक्ते विधिवाक्ये या श्रुता नव दशादिसंख्यावाचक पदोपात्ता नवत्वदशत्वादिका संख्या सा लक्षणायाम् 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहानुवादवाक्ये पूर्वविधिवाक्योपदिष्टग्रहाणामुपलक्षणायाम् = अनुवादविधया ज्ञापनायाम्, द्रव्योपलक्षणार्था = अविवक्षितत्वेन द्रव्ये ग्रहसामान्ये उपलक्षणीभूता, ग्रहमिति शब्दसंस्कारमात्रपरा नान्तरीयिका संख्या इति कृत्वाऽनुवादवाक्ये न बाध्यते = न त्यज्यते। नवत्वदशत्वादिसंख्यायाः प्रागुक्ते विधौ विधेयग्रहविशेषणत्वेन विधेयत्वमूलकप्राधान्येन विवक्षितत्वादिति।

अयं भावः—'ग्रहं संमार्ष्टि' इत्यत्र मानान्तराप्राप्तस्य संमार्गस्य विधेयत्ववाक्यार्थत्वाभ्यां प्राधान्यम्। ग्रहाणान्तु 'प्राजापत्या नव ग्रहा' इत्यादौ विधिवाक्ये विहितत्वादत्रानुवादत्वेनाप्राधान्यम्। एवञ्च 'ग्रहं संमार्ष्टि' इत्यत्रानूद्यमानग्रहे शब्दसंस्कारमात्रपरतयोपलक्षणीभूता संख्याऽविवक्षितेति नैतया प्रागुक्तविधिवाक्योपात्ताया नवत्वादिसंख्यायास्त्यागरूपो बाधः। ग्रहमिति ग्रहशब्दस्तु संख्यार्थकविभक्त्यनुपादानेऽनर्थको मा भूदिति तत्सार्थक्यायोपादीयते विभक्तिरिति। तदभिधेया एकत्वसंख्या ग्रहजात्युपलक्षणार्थेति यथाविहितभिन्नसंख्याकग्रहोपादानार्थं ग्रहमित्यत्र ग्रहश्रुतिरिति न गुणीभूतया एकत्वसंख्यया विधेयत्वेन प्रधानीभूताया दशत्वादिसंख्याया बाधः। अपि तु 'गुणा हि प्रधानोपकाराय प्रवर्तन्ते' इति प्रधानसंख्यया दशत्वादिकया गुणीभूतैकत्वसंख्यैवात्र बाध्यते।

**अत्रोच्यते। यद्यपि बहिर्व्यापारभेदाद् भिन्नविषयत्वादविरोधः तथापि प्रतिपत्तौ तयोः सङ्ख्ययोर्विरोध एव। तथा हि—पूर्वं नव दश वा बुद्धौ समवस्थिताः, इदानीं तदुन्मूलनेनैको बुद्धावुपारोहयितव्यः। एवं चान्यथावगते प्रधानेऽन्यथा पुनरप्रधानवेलायामवगमो न युक्तः। अपि तु यथासिद्धस्यैवानुवादात् संमार्गे प्रधानवेलावगतसङ्ख्याकानामेवावधारणं ग्रहाणां युक्तम्। यत्रस्थो हि ग्रहोऽनूदितः तत एवास्य स्वरूपमनुसर्तव्यम्। एवं च साधनप्रचयात् संमार्गस्यापि प्रधानस्योपकारादुभयानुग्रहः सम्पद्यते, बहुषु मध्येऽवस्थितश्चानुभूत इति तथैवात्र स्मृत्या अनुवादो न्याय्यः। तथा च प्रधानोपकारानुरोध एवेहान्यथोक्तः। पूर्वं ग्रहार्थत्वात् संमार्गस्य संमार्गवाक्य एव ग्रहाणां प्राधान्यमुक्तम्, इह तु विधिवाक्यगतं प्राधान्यमभिहितमित्येतावता विशेषः॥ ७०॥**

**'पशुना यजेत' इत्यत्रापि तर्हि यागस्य विधेयत्वात् पशोरप्राधान्यमिति तदीयमेकत्वं त्यज्येतेत्याशङ्क्याह—**

---

ननु 'दशैतानध्वर्युः प्रातः सवने ग्रहान् गृह्णाति' इति ग्रहोत्पत्तिवाक्यं ग्रहणक्रियाविषयम्, ग्रहं संमार्ष्टीति ग्रहानुवादवाक्यं तु संमार्जनक्रियाविषयमिति विषयभेदादविरोधे बहवो ग्रहा गृह्यन्ताम्, एकस्तु ग्रहः संमार्ज्यताम् इति को विरोधः, को वा बाधावसर इति चेदत्रोच्यते। यद्यपि बुद्धेर्बहिर्व्यापारभेदात् = क्रियाभेदात् भिन्नविषयत्वादविरोधः, तथापि बुद्धौ तयोः संख्ययार्विध्यनुवादवाक्योपात्तयोर्विरोध एव। तथाहि—पूर्वम् विधिवाक्यार्थबुद्धौ नव दश वा ग्रहाः समवस्थिताः, इदानीमनुवादवाक्यजबुद्धौ तु पूर्वसंख्योन्मूलनेनैको ग्रहो बुद्धावुपारोहयितव्यः। एवञ्च यस्य प्राधान्यावस्थायां नवत्वादि संख्यावगतिस्तस्यैवाप्राधान्यावस्थयामेकत्वसंख्यावगतिर्न युक्ता, अपि तु यथाविहितस्यैवानुवादात् प्राधान्यावस्थाऽवगतसंख्याकानामेव ग्रहाणां संमार्गे अवधारणं युक्तम्। यद्वाक्यविहितो हि ग्रहोत्रानूदितस्तद्वाक्यबोधितमेव ग्रहस्य स्वरूपमत्रानुसर्तव्यं नान्यादृशम्। एवञ्च विधिवाक्यश्रुतायाः संख्याया अनुवादवाक्यश्रुतसंख्यया प्रागुक्तरीत्याऽबाधे च, साधनप्रचयात् = कर्मसाधनग्रहबाहुल्यात् प्रधानस्यापि संमार्गस्योपकारात् संमार्गेण च ग्रहाणामुपकारादुभयानुग्रहः संपद्यते। 'प्राजापत्या नव ग्रहा' इति विधिवाक्ये बहुषु मध्येऽवस्थितो ग्रहोऽनुभूत इति तथैवात्र स्मरणेनानुवादो न्याय्यः। तथा च विधिवाक्यश्रुतसंख्याया अबाधे हेतुभूतः प्रधानोपकारानुरोध एवेहान्यथोक्तः। तथाहि—पूर्वम् संमार्गवाक्य एव ग्रहाणां प्राधान्यमुक्तम्, संमार्गस्य ग्रहार्थत्वात्। इह तु विधिवाक्यगतं तेषां प्राधान्यमुक्तमित्येतावान् विशेष इति॥७०॥

ननु यथा 'ग्रहं संमार्ष्टि' इत्यत्र संमार्जनस्य विधेयत्वाद् ग्रहस्याप्राधान्यमिति ग्रहगतमेकत्वं त्यज्यते तथा 'पशुना यजेत' इत्यत्रापि यागस्य विधेयत्वात् पशोरप्राधान्यमिति तदीयमेकत्वं त्यज्येतेत्याशंक्याह-विधिवाक्यान्तरे इति।

**विधिवाक्यान्तरे सङ्ख्या पशोर्नास्ति विरोधिनी ।**
**तस्मात् सगुण एवासौ सदैकत्वेन गम्यते ॥७१॥**

पशुगुणविशिष्टो यागो विधियत इत्यज्ञातज्ञापनात् पशोरपि विधानम्। उत्पत्तिवाक्यगता च सङ्ख्या त्यज्यत इत्युत्सर्गः। तद्यथा पशौ। ग्रहे तूत्पत्तिवाक्यापेक्षया संमार्गविधिवाक्ये तद्विरोधिनी सङ्ख्या त्यज्यते। पशौ तु विधिवाक्यान्तरं नास्तीति प्राथमकल्पिकी न त्यज्यते सङ्ख्यैकत्वलक्षणेति, तेन सहासौ क्रियाङ्गभावमनुभवति। सगुण इति। सह लिङ्गलक्षणेन पुंस्त्वाख्येन गुणेन वर्तत इत्यर्थः। यद्वा गुणः शुक्लादिः। यत्र गुणश्रुतिर्नास्ति, यथा—पशुना यजेत' इति। तत्राक्षिप्तगुणसामान्य इत्यर्थः। यत्रापि गुणश्रुतिरस्ति, यथा 'गामभ्याज शुक्लाम्', 'श्वेतं छागमालभेत' इति। तत्रापि तद्गुणः स गृह्यते, एकवाक्योपात्तगुणयुक्त इत्यर्थः। एतच्च वक्ष्यमाणार्थोपोद्घातार्थमुक्तम्।

केचित् पुनराहुः—सगुण इत्येतदेव स्फुटीकृतं सदैकेत्वेनेति। अत्र तु पौनरुक्त्यं दोषः। न हि कारिकाभागस्य भागान्तरेण व्याख्यानं युक्तम्। यदि वा गुणो विशेषणं जातिः पशुत्वलक्षणा, तया सह गम्यते। जातेरिव श्रुतस्यैकत्वस्य त्यागे कारणाभावात्तदेकत्वमपि गम्यत इति दृष्टान्तगर्भं वचनम्। तदेवं न्यायवादिमतानुसारेण सिद्धान्तोऽत्रावस्थापितः। तथा हि न्यायवादिभिः पूर्वपक्षोऽत्र कृतः—

'एकत्वयुक्तमेकत्वस्य श्रुतिसंयोगात्' इति। ( मी० सू० ३।१. ७. १३। )

---

अस्यार्थः—अत्र यस्मादिति पदं पूर्वार्धेऽध्याहार्यम्. उत्तरत्र तस्मादिति पददर्शनात्। यस्माद् विधिवाक्यान्तरे पशुना यजेत इत्यतोऽन्यस्मिन् विधिवाक्ये ग्रहगतविरोधिनवत्वादिसंख्यावत् पशुगतैकत्वसंख्याविरोधिनी सङ्ख्या नास्ति, तस्मात् स गुण एव गुणेन लिङ्गरूपेण पुंस्त्वेन धर्मेण, यद्वा शुक्लादिगुणेन, अथवा पशुत्वजातिरूपेण विशेषणेन सहित एवासौ पशुः सदैकत्वेन संख्यारूपेण गुणेन विशिष्टो गम्यते। पुँस्त्वादिवदेकत्वसङ्ख्याऽप्यत्र विरोधिसङ्ख्याया अभावाद् विवक्षिता प्रतीयत इत्यर्थः।

अयं भावः—'सोमेन यजेत' इत्यत्रेव 'पशुना यजेत' इत्यत्रापि विशिष्टविधिः। तदुक्तम्—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥ इति।

एवञ्चात्र पशुरूपगुणे विशिष्टो यागो विधीयते, इत्यत्रातज्ञापनरूपं पशोरपि विधानम्। विधिवाक्यगता च संख्या प्रायेण न त्यज्यत इत्युत्सर्गः = प्रायिको नियमः। यथा—'पशुना यजेत' इत्यत्र पशुगतैकत्वसंख्या न त्यज्यते, 'ग्रहं संमार्ष्टि' इत्यत्र तु 'प्राजापत्या नव ग्रहा' इति ग्रहोत्पत्तिवाक्यगतनवत्वादिसंख्यापेक्षया तद्विरोधिनी एकत्वसंख्या त्यज्यते, अनूद्यमानत्वेनाप्रधानीभूतग्रहगतत्वेनाविवक्षितत्वात्। पशौ तु ग्रहवद् विधिवाक्यान्तरं

**'य एवं विद्वान् सोमेन यजेत'।**

**इति सोमयागे।**

**'दशापवित्रेण ग्रहं संमार्ष्टि'**

**इति श्रूयते। तत्रैकस्य ग्रहस्य संमार्गः प्राप्तः, एकत्वश्रुतिसंयुक्तो ह्ययं पदार्थः श्रूयते। एवं पूर्वपक्षं कृत्वा सिद्धान्तितम्—**

**'सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्' ( मी० सू० ३।१।७।१४ )**

**प्राप्ते द्वितीयादौ संमार्गो विधीयते। पशोस्तु यागार्थत्वात् परिच्छिन्नेन तेन यागोपकारादेकत्वविवक्षेत्युक्तम्—**

**चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत इति। ( मी० सू० ९।१. १४. ४० )**

**वाक्यविदां राद्धान्तः ॥ ७१ ॥**

**इदानीं सङ्ख्यावदन्यस्यापि गुणस्याश्रयावच्छेदकत्वद्वारेण क्रियाङ्गतयोपादानमनुपादानं वेति सङ्ख्याप्रसङ्गेन विचारयितुं सगुण एवासावित्युपोद्घाते सत्याह—**

---

नास्ति इति प्राथमकल्पिकत्वेनासंजातविरोधित्वादेकत्वलक्षणा संख्या न त्यज्यत इति पशुना सहैव सा यागाङ्गभावमनुभवति। सगुण इत्यस्य सहलिङ्गरूपेण पुंस्त्वाख्येन गुणेन वर्तत इत्येकोऽर्थः। यद्वा गुणः शुक्लादिकं रूपम्, यत्र गुणश्रुतिरस्ति—यथा लोके 'गामभ्याज शुक्लामिति। वेदे 'श्वेतं छागमालभेत' इति। तत्रापि एकवाक्योपात्तश्वेतगुणयुक्त एव पशुर्गृह्यत इत्यर्थः। यत्र तु गुणश्रुतिर्नास्ति—यथा 'पशुना यजेत' इति, तत्र निर्गुणस्य द्रव्यस्यासंभवात् पशुरूपेण द्रव्येणाक्षिप्तं गुणसामान्यं गृह्यत इत्यर्थः। अत्र सगुणपदञ्च समनन्तरवक्ष्यमाणकारिकायाः प्रसञ्जनार्थमुक्तम्।

केचित्त्वाहुः—सगुण इत्यस्य एकत्वसंख्यारूपगुणयुक्त इत्यर्थः। एतदेव च स्फुटीकृतमत्र चतुर्थपादेन—सदैकत्वेन गम्यत इति। वस्तुतस्तु नेदं युक्तम्। तथाहि—अत्र व्याख्याने पौनरुक्त्यं दोषः। नहि कारिकाभागस्य भागान्तरेण व्याख्यानं युक्तम्, समानत्वात्। अन्यस्य ग्रन्थस्य हि ग्रन्थान्तरेण व्याख्यानं भवति। समाने ग्रन्थे तु पौनरुक्त्यं दोषः। यद्वा गुणोऽत्र विशेषणं पशुत्वजातिलक्षणम्, तेन सहित एव पशुः सदैकत्वेन गम्यत इत्यर्थः। इदं दृष्टान्तगर्भं वचनम्, पशुत्वजातेरिव श्रुतस्यैकत्वस्य त्यागे हेत्वभावत्तदेकत्वमपि विशेषणतया गम्यत इति।

तदेवं 'पशुना यजेत' इत्यत्र प्रागुक्तन्यायद्वयमाश्रित्यैकत्वं विवक्षितमिति ये वदन्ति तन्मतानुसारेण सिद्धान्तोऽत्रावस्थापितः। तथाहि—न्यायवादिभिः पूर्वपक्षोऽत्र कृतः 'एकत्वयुक्तमेकत्वस्य श्रुतिसंयोगादिति।

अस्यार्थः—'य एवं विद्वान् सोमेन यजेत' इति श्रुतिविहिते सोमयागे 'दशापवित्रेण ग्रहं संमार्ष्टि' इति श्रूयते! अत्र दशा शाटकप्रान्तभागः। दशापवित्रेणेति च कर्मधारयः। तत्रैकस्य ग्रहस्य संमार्गं प्राप्तः। एकत्वबोधकाम्विभक्तिरूपश्रुति (शब्द) संयुक्तो ह्ययं ग्रहपदार्थः श्रूयते। तथा च—'ग्रहं संमार्ष्टि' इत्यत्रैकत्वसंख्यायुक्तं ग्रहरूपं वस्तु प्रत्येतव्यम्,

**निर्ज्ञातद्रव्यसंबन्धे यः कर्मण्युपदिश्यते ।**
**गुणस्तेनार्थिता तस्य द्रव्येणेव प्रतीयते ॥७२॥**

**निर्ज्ञातः प्रथमं द्रव्यसंबन्धो यस्य तस्मिन् कर्मणि क्रियायां यो गुणः शुक्लादिः विधीयते तेनापि तस्य कर्मणः क्रियालक्षणस्य द्रव्यवद् अर्थिता। तथा च सम्बन्ध इति विचारबीजोपक्षेपः। द्रव्यसम्बन्ध इति च द्रव्यपदार्थपक्षे प्राह। जातिपदार्थपक्षे तु वक्ष्यति—**

**'यदा तु जातिः शक्तिर्वा' [ वा० का० ३ जा० ७७ ]**

**इत्यादि।**

**ननु च क्रियाजनकत्वात् साधनमपेक्षताम्, गुणे तु कापेक्षा तस्याः। अथ सगुणेन द्रव्येण निर्गुणस्यासंभवाज्जन्या क्रियेत्युभयापेक्षा, तर्हि क्रमोऽयं कुतः?।**

---

एकत्वस्य ग्रहपदोत्तराम्विभक्तिरूपशब्दसंबन्धादिति पूर्वपक्षसूत्रार्थः। एकत्वस्याम्-विभक्त्या सह संबन्धश्च वाच्यवाचकभावरूपः। एवं पूर्वपक्षं कृत्वा सिद्धान्तितम्। सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणमिति।

अस्यार्थः—वा = अथवा संमार्गस्य सर्वेषां ग्रहाणां लक्षणत्वाद् = असाधारणधर्मत्वात् सर्वे ग्रहाः संमार्जनीया, न त्वेकः। हि = यतः संमार्गरूपं लक्षणमविशिष्टं तुल्यं सर्वेषु ग्रहेषु। प्राजापत्या नव 'ग्रहा' इति द्वितीयादौ ग्रहे प्राप्ते सति हि संमार्गो विधीयते। स च सर्वेषु ग्रहेषु तुल्य इति। 'पशुना यजेत' इत्यत्र पशोस्तु यागार्थत्वात् पशुसामान्येन च यागोपकारासंभवात्, परिच्छिन्नेनैव = परिमितेनैव तेन यागोपकारादेकत्वविवक्षेत्युक्तम् चोदिते तु परार्थत्वाद् यथाश्रुति प्रतीयत इति।

अस्यार्थः—पशुना यजेत इत्ययं गुणविधिः, न तु कर्मोत्पत्तिविधिः। तथा च यागेऽन्यत्र चोदिते विहिते तु अत्र विधीयमानः पशुरूपो गुणः परार्थत्वात् = यागार्थत्वात्, यथाश्रुति = यथाशब्दम्, एकत्वसंख्यायुक्त एव प्रतीयेत। पशुसामान्येनापरिच्छिन्नेन यागोपकारासंभवादिति वाक्यविदां जरन्मीमांसकानां सिद्धान्त इति ॥ ७१ ॥

संख्यावदन्यस्यापि शुक्लादिकस्य गुणस्य स्वाश्रयद्रव्यावच्छेदकत्वद्वारा क्रियाङ्गतया विवक्षाऽविवक्षा वेति संख्याप्रसङ्गेन विचारयितुं सगुण एवासौ इति पूर्वकारिकायां प्रसज्जितमेवार्थं विशदीकर्तुमिदानीमुपक्रमते—निर्ज्ञात द्रव्यसंबन्धे इति।

अस्यार्थः—निर्ज्ञातो निश्चितः प्रथमं द्रव्यसम्बन्धो यस्य कर्मणः तस्मिन् तथाभूते कर्मणि क्रियायां यो गुणः शुक्लादिः स्वाश्रयद्रव्यविशेषणतयाङ्गत्वेनोपदिश्यते = विधीयते तेनापि गुणेन तस्य कर्मणः क्रियारूपस्य द्रव्येणेव=द्रव्यवत् अर्थिता अपेक्षा प्रतीयत इति। तथा च स्वाश्रयद्रव्यस्य प्राक् क्रियासम्बन्धे निर्ज्ञाते सति तद्विशेषणस्य शुक्लादिकस्य

**निर्ज्ञातद्रव्यसम्बन्धे पश्चाद् द्रव्यवद् गुणेऽप्यपेक्षेति अपेक्षाऽसाम्याच्चोपमा नोपपद्यते। अत्रोच्यते। क्रिया तावत् साध्यस्वभावत्वात् साधनमपेक्षते, तच्च द्रव्यमिति तदपेक्षोपदिश्यमानगुणापेक्षापि तस्य गुणस्य साधनावच्छेदोपयोगाद्विद्यत एव क्रियायाः। तत्र यदव्यवहितमन्तरङ्गम् तत् प्रथममपेक्ष्यम्, तथा च (तच्चात्र) द्रव्यम्। गुणस्तु तदाधारस्तन्मुखेन सम्बन्धसहो बहिरङ्गः पश्चादपेक्षणीयः। अत एव निर्ज्ञात इति भूताभिधानम्। द्रव्यस्य शक्त्याधारत्वात् प्रथमं क्रियासम्बन्ध इत्यर्थः एवं च साक्षादसमन्वयादुपमा। एतच्चार्थक्रमापेक्षयोच्यते न तु शब्दव्यापारापेक्षया।' 'गामभ्याज शुक्लाम्' इति हि वाक्यं सकृदेव गुणप्रधानभावेन सम्बन्धविशिष्टमर्थमाहेति न तत्र कश्चिद् विरम्य व्यापारः॥७२॥**

**एवं गुणद्रव्ययोः श्रौतः क्रियासम्बन्ध उक्तः। इदानीं तयोः परस्परं वाक्यीयसमन्वयप्रतिपादनायाह—**

---

गुणस्य क्रियाङ्गतया संबन्धो भवति नवेति विचारस्योपक्षेपः = प्रसङ्गः, निर्ज्ञातद्रव्यसंबन्धे इत्यनेन कृतः। तत्रापि निर्ज्ञाताश्रयसम्बन्ध इत्यनुक्त्वा = निर्ज्ञातद्रव्यसम्बन्ध इत्युक्तिर्द्रव्यं पदार्थ इति पक्षमभिप्रेत्य। जातिपदार्थपक्षे तु = यदा तु जातिः शक्तिर्वा इत्यादिकं वक्ष्यति।

ननु क्रिया, साधनं जनकत्वादपेक्षताम्, गुणे तु तस्याः कोऽपेक्षाहेतुः। यदि तु सगुणेन द्रव्येण जन्या क्रिया, निर्गुणस्य द्रव्यस्यासंभवादिति द्रव्यगुणयोरुभयोरपेक्षा, इति उच्यते तस्यास्तर्हि निर्ज्ञातद्रव्यसंबन्धे कर्मणि पश्चाद् द्रव्यवद्गुणेऽपि अपेक्षेति अयं क्रमः किंहेतुकः, क्रमिकत्वेनोभयोरपेक्षासाम्याभावाच्च द्रव्येणेव इत्युपमाऽपि नोपपद्यत इति चेदत्रोच्यते। क्रिया तावत् साध्यस्वभावत्वात्साधनमपेक्षते! साधनञ्च द्रव्यमेवेति तस्या द्रव्यापेक्षा। द्रव्यविशेषणस्य गुणस्य च साधनावच्छेदेनोपयोगाद् द्रव्यविशेषणतयोपदिश्यमानगुणाऽपेक्षाऽपि क्रियाया विद्यत एव। तत्र यदव्यवहितं तदन्तरङ्गत्वेन प्रथममपेक्ष्यम्। तच्चात्र द्रव्यम्। गुणस्तु द्रव्याधेयतया द्रव्यमुखेन क्रियायां सम्बन्धसहो बहिरङ्गः पश्चादपेक्षणीयः। अत एव निर्ज्ञातपदे क्तप्रत्ययोपादानेन भूताभिधानम्। द्रव्यस्य साधनत्वशक्त्याधारत्वात् प्रथमं क्रियासम्बन्ध इत्यर्थः। एवञ्च गुणस्य साक्षादसंबन्धाद् द्रव्येणेव इत्युपमोपपद्यते। एष च द्रव्यगुणयोः क्रियायां सम्बन्धक्रम आर्थक्रमापेक्षयोच्यते न तु शब्दव्यापारापेक्षया। 'गामभ्याज शुक्लाम्' इत्यादिवाक्यं हि सकृदेव युगपदेव च गुणप्रधानभावेन गुणसम्बन्धविशिष्टमर्थमाहेति न तत्र कश्चिद् विरम्य व्यापारः। अतएव 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति वाक्यविदां सिद्धान्तोऽपीति॥ २॥

एवं पूर्वकारिकया गुणद्रव्ययोः श्रौतः = स्वार्थबोधनेऽन्यानपेक्षः शब्दः श्रुतिस्तद्रूपप्रमाणज्ञाप्यः क्रियासम्बन्ध उक्तः। इदानीं तयोर्वाक्यीयसमन्वयप्रतिपादनाय = समभिव्याहारो वाक्यं तद्रूपप्रमाणज्ञाप्यसंबन्धप्रतिपादनाय आह—कश्चिदेव गुण इति।

**कश्चिदेव गुणो द्रव्ये यथा सामर्थ्यलक्षणः ।**
**आधारोऽपि गुणस्यैवम् प्राप्तः सामर्थ्यलक्षणः ॥७३॥**

**निर्गुणस्य द्रव्यस्यासम्भवः सामर्थ्यम् तेन लक्ष्यते, तत्र द्रव्ये । आधारोऽपि द्रव्यं गुणस्य सामर्थ्येन निराधारगुणासम्भवस्वभावेन लक्ष्यते, गुणमात्रं च द्रव्येणापेक्षितं द्रव्यमात्रं च गुणेन, अस्मात् सामर्थ्यादित्याह—कश्चिदेवेति । अपरामृष्टजातिभेदौ द्रव्य-गुणौ परस्परेणापेक्षितौ । प्राप्त इति । प्रतीतिलब्ध इत्यर्थः । सामान्यमात्रे प्रतीत्यव्यभि-चारात्, विशेषाणां व्यभिचारात् ॥७३॥**

**एवमाधाराधेयसामान्यसंसर्गे लब्धे श्रुतयोरेव तयोरेकवाक्यत्वाद्वाक्यीयेन समन्व येन परस्परसम्बन्धमाह—**

---

नन्वत्र कारिकायां गुणः सामर्थ्यलक्षण इति आधारोऽपि सामर्थ्यलक्षण इति चोच्यते । सामर्थ्यञ्च लिङ्गम् । तदाहुः—शब्दसामर्थ्यं लिङ्गमिति । किञ्च लिङ्गम् वाक्यापेक्षया प्रबलम्, श्रुतिरूपैकप्रमाणकल्पनया विनियोजकत्वात् । वाक्यन्तु लिङ्गश्रुती कल्पयित्वा विनियोजकमिति प्रमाणद्वयव्यवधानेन विनियोजकत्वाद् दुर्बलम् । तदुक्तम्—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् इति । एवञ्च 'वाक्यीयसमन्वयप्रतिपादनायाह' इति कथमुच्यत इति चेदत्राभिधीयते । नात्र शब्द-सामर्थ्यरूपं लिङ्गम् । किन्तु निर्गुणस्य द्रव्यस्यासम्भवः, निराधारस्य गुणस्यासम्भश्चात्र 'सामर्थ्यम् । तच्चार्थत्वान्न प्रमाणम् । शब्दसामर्थ्यस्यैव प्रमाणत्वात् । किन्तु प्रकृते वाक्य-रूपप्रमाणानुग्राहकमिति वाक्यीय एवात्र गुणद्रव्ययोः सम्बन्धोऽभिप्रेतो हरेरिति । यदि तु 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इत्युच्यते तदा तु लैङ्गिक एवात्र विनियोगो द्रष्टव्य इति । कारिकार्थस्तु—यथा द्रव्ये कश्चिदेव गुणः अपरामृष्टजातिभेदः सामान्यरूपः सामर्थ्यलक्षणः = निर्गुणस्य द्रव्यस्यासम्भवः सामर्थ्यम्, तेन लक्ष्यते ज्ञाप्यत इति सामर्थ्य-लक्षणः प्राप्तः । एवं गुणस्य आधारोऽपि कश्चिदेवापरामृष्टजातिभेदः सामान्यरूपः सामर्थ्य-लक्षणः = निराधारस्य गुणस्य असम्भवरूपं, सामर्थ्यं लक्षणं ज्ञापकं यस्य स तथाभूतः प्राप्तः = प्रतीतितो लब्ध इत्यर्थः । अपरामृष्टजातिभेदौ सामान्यरूपौ द्रव्यगुणौ प्रागुक्त-सामर्थ्याभ्यां परस्परेणापेक्षितौ । तयोः सामान्यमात्रविषयकप्रतीतेः परस्परमव्यभिचारात् विशेषाणाञ्च परस्परं व्यभिचारेण तत्प्रतीत्योरपि परस्परं व्यभिचारादिति ॥७३॥

एवमाधाराराधेयभावरूपे सामान्यसंसर्गे = सर्वसंसर्गव्यापके संसर्गे, लब्धे श्रुतयो-रेव तयोः = द्रव्यगुणयोः एकवाक्यत्वाद् वाक्यीयसमन्वयरूपं = वाक्यप्रमाणलभ्यसंसर्ग-रूपम् परस्परसम्बन्धमाह—तयोस्तु इति ।

अस्यार्थः—तयोः द्रव्यगुणयोः, पृथगर्थित्वे तु प्रागुक्तरीत्या पृथक्-पृथक् परस्परा-पेक्षित्वे च यः परस्परं सम्बन्ध आधाराधेयभावरूपस्तादात्म्यसम्बन्धावच्छिन्नतद्रूपो वा

**तयोस्तु पृथगर्थित्वे सम्बन्धो यः प्रतीयते ।**
**न तस्मिन्नुपघातोऽस्ति कल्प्यमन्यन्न चाश्रुतम् ॥७४॥**

**पूर्वोपवर्णितेन सामर्थ्येन पृथक् परस्परं गुणद्रव्ययोराकाङ्क्षायां सत्यामेकवाक्योपात्तयोरेव समन्वयो यः प्रतीयते न तत्र बाधः, श्रौतेऽर्थे त्यागाभावात् । असति तत्परित्यागहेतावश्रुतपरिकल्पनानन्याय्या । अत एव प्रतीयत इति निर्बाधप्रतीतिप्रमाणतामाह । अपोद्धारबुध्याश्रयणे चैतदुच्यते । निरंशे हि वाक्ये पूर्वमेव विशेषविवक्षा । तथा हि—निरवयवेन वाक्येन विशिष्ट एवार्थः प्रतिपादितः । तत्र प्रतिपत्त्यर्थमंशांशिकतया अपोद्धारपदार्थः परिकल्प्यते सामान्यात्मा । स एव विशेषो भवति विशेषसम्बन्धे सतीति प्रतिपादनोपायक्रमः । तथा च विशेषसम्बन्धेऽपि सामान्यात्मा पदार्थो न स्वरूपात् प्रच्यवते, अपि तु तद्विशेषनिष्ठ एवावतिष्ठते । न तु सत्यतः सामान्येऽवस्थितानां पदानां विशेषेऽवस्थानमुपपद्यते । सामान्यवृत्तीनामुच्चरितानां तथाभूतानामेव तिरोभावादुत्तरकालं कोऽसौ विशेषेऽवतिष्ठताम् । न च सामान्यविशेषयोर्युगपद् विवक्षा सम्भवति । विशेषविवक्षायां हि सर्वस्यां नियमेन सामान्यादवच्छेदो विज्ञायत इत्युपात्तस्य सामान्यस्य त्यागप्रसङ्गः । स च नित्ये**

---

वाक्यरूपात् प्रमाणात् प्रतीयते । तस्मिन् = आधाराधेयभावरूपे तादात्म्यसम्बन्धावच्छिन्नतद्रूपे वा संसर्गे उपघातः = बाधो नास्ति । न चात्रान्यत् संसर्गातिरिक्तं प्रतियोग्यनुयोगिरूपमश्रुतं कल्प्यमस्ति इति ।

अयं भावः—पूर्वकारिकोक्तेन सामर्थ्यद्वयेन पृथक्-पृथक् परस्परं गुणद्रव्ययोराकाङ्क्षायां सत्यामेकवाक्योपात्तयोरेव तयोर्यः परस्परं संसर्गः प्रतीयते तत्र बाधो नास्ति, असति श्रुतार्थपरित्यागहेतावश्रुतकल्पनाया अन्याय्यत्वेन श्रुतस्यार्थस्य परित्यागाभावात् । अतएव कारिकायां प्रतीयत इत्यनेन निर्बाधप्रतीतेः प्रामाण्यमत्राह ।

ननु वाक्यमखण्डमिति पूर्वकाण्डे सिद्धान्तितत्वेन वाक्यस्य विशिष्टार्थविबोधकत्वेन गुणद्रव्ययोः सामान्यरूपयोरवबोधात् पूर्वमेव विशेषरूपयोस्तयोरवबोधात् कथं सामान्यरूपयोस्तयोः परस्परमपेक्षा प्रागुच्यत इति चेत्सत्यम् । वाक्यवाक्यार्थयोरखण्डत्वेऽपि तत्प्रतिपत्त्यर्थं पदपदार्थापोद्धारबुद्ध्याश्रयेणैतदुच्यत, इत्यवेहि । तथाहि—यद्यप्यखण्डेन वाक्येन पदार्थद्वयविशिष्ट एवार्थः प्रतिपादितो भवति, तथापि तत्प्रतिपत्त्यर्थं वाक्यवाक्यार्थयोरंशांशिभावकल्पनया सामान्यात्माऽपोद्धारपदार्थः परिकल्प्यते । स एव च सामान्यरूपः पदार्थ वाक्यप्रमाणबलात् परस्परं सम्बन्धविशेषभाने सति विशेषो भवतीति वाक्याद् विशिष्टार्थप्रतिपत्तावुपायक्रमः । तथा च विशेषसम्बन्धेन विशेषपदार्थस्य भाने सत्यपि सामान्यात्माऽपोद्धारपदार्थो न स्वरूपात् प्रच्यवते, किन्तु तद्विशेषनिष्ठ एवावतिष्ठते । प्राक्सामान्येऽवस्थितानां पदानां पश्चाद् विशेषे सत्यतोऽवस्थानन्तु नोपपद्यते ।

**शब्दार्थसम्बन्धे न युक्तः। तिरोभूतश्च निवृत्तोऽनवधार्यमाणात्मा शब्दोऽन्यस्यापि पदस्य सामान्यनिष्ठत्वात् केनचिदप्यप्रतिपादिते विशेषे निर्विषयः क्वावतिष्ठताम्। यदुक्तम्—**

**सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।**
**उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥इति॥**
**( वा० का० २।१५ )**

**तस्माद्विशिष्ट एवार्थो वाक्यादवगन्तव्य इत्यश्रुतस्य कल्पितस्य कल्पनावकाश एव नास्ति। नापि श्रुतस्यार्थस्य त्यागसम्भवः। अपोद्धारपदार्थाश्रयेण त्वयं विचारः प्रस्तुतः। तथा च श्रुत्यादीन्यखण्डवाक्यपक्षे नोपपद्यन्त इत्याक्षिप्य वाक्यकाण्डेऽपोद्धारपदार्थकल्पनेनैवोपपादितानि। श्रुतिप्रतिपादितस्य योग्यस्य त्यागेऽश्रुतकल्पना न युज्यते इत्येकवाक्योपात्तत्वमत्र संबन्धहेतुः। परस्परसंबन्धे हि एकवाक्यतापीष्यते वाक्यार्थेन प्रधानेन गुणानामाक्षेपादश्रुतपरिग्रहे सर्वत्र वाक्यभेदप्रसङ्गान्न क्वचिदेकवाक्यता भवेत् ॥७४॥**

**ननु च क्रियाकारकसंबन्धे विशेषणविशेष्यभावे च प्रतिपाद्ये वाक्यभेदप्रसङ्गः। न चासौ न्याय्यः। नैष दोषः। गुणप्रधानभावेनात्र संबन्धद्वयसंभवः। स चैकस्मिन् वाक्येऽविरुद्धः। तथा हि—श्रुतिवाक्यलक्षणमत्र प्रमाणद्वयमस्तीत्याह—**

---

उच्चारणेनाभिव्यक्तानां सामान्यनिष्ठानां पदानां तथाभूतानामेव तिरोभावादुक्तकालेऽवस्थानासंभवात्। सामान्यविशेषयोर्युगपद् विवक्षा तु न सम्भवति। सर्वस्यां हि विशेषविवक्षायां सामान्याद् व्यावृत्तिर्नियमेन विज्ञायते, विशेषस्य सदा व्यावृत्तरूपत्वादित्युपात्तस्य सामान्यस्य त्यागप्रसङ्गः।

न च नित्ये शब्दार्थसम्बन्धे एव एष मार्गो युक्तः। सामान्यार्थकश्च शब्दस्तस्यामवस्थायां तिरोभूतो निवृत्तो वाऽनवधार्यमाणस्वरूपोऽपरस्यापि पदस्य प्रतियोग्यनुयोग्यन्यतरवाचकस्य सामान्यनिष्ठत्वात् वाक्यस्थेन केनचिदपि पदेन विशेषेऽप्रतिष्ठापित इति निर्विषयः क्वावतिष्ठताम्। तदुक्तम्—

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥इति॥
( वा० का० २।१५ )

अस्यार्थः—सामान्यार्थकश्च शब्द उच्चारितः सामान्यनिष्ठ एव तिरोभूतोऽतो न विशेषेऽवतिष्ठते। उपात्तस्य=श्रुतस्य च सामान्यार्थस्य त्यागहेतोरभावात् कुतः कारणात् त्यागः। निवृत्तश्च सामान्यार्थकः शब्दोऽन्यस्यापि शब्दस्य सामान्यनिष्ठत्वात् केनचिदप्यप्रतिपादिते विशेषे निर्विषयः क्वावतिष्ठतामिति। तस्माद् विशिष्ट एव वाक्यार्थो वाक्यादवगन्तव्य इति नास्त्यश्रुतस्यार्थस्य कल्पनाऽवकाशः। न च श्रुतस्यार्थस्य शब्दार्थसम्ब-

**क्रियया योऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः ।**
**आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ॥७५॥**

**श्रुत्या कारकविभक्त्या क्रियायां संबन्धो द्रव्यगुणयोः समशीर्षकतया प्रतिपादितः वाक्यादखण्डप्रतिभोत्पत्तावप्यपोद्धारेण 'गामभ्याज', 'शुक्लामभ्याज' इति पदार्थविभजनात् । 'गामेव' शुक्लामेव' इति गुणगुणिनोरेकवाक्योपात्तयोर्विनियोगो वाक्यस्य प्रामाण्येनावतिष्ठते । अश्रुतगुणद्रव्यपरिकल्पने हि प्रतिपदार्थं क्रियाभेदात् 'गामभ्याज, शुक्लां च' इति वाक्यभेदः स्यादित्येकरसयैव प्रवृत्त्योपात्तगुणविशिष्टस्य द्रव्यस्य क्रियासमन्वये तदेकवाक्यत्वं पोषितं भवति । नियमो द्रव्यगुणयोराधेयान्तरादाधारान्तराच्च व्यवच्छेदः सति परस्परसंबन्धे । न चान्यनिवृत्तेः शब्दान्तरमस्ति**

न्धानां नित्यत्ववादे शास्त्रसम्मते त्यागसंभवः । अयन्तु एतत्कारिकोक्तो विचारोऽपोद्धारपदार्थाश्रयेण प्रारब्धः । तथा चाखण्डवाक्यपक्षेऽनुपपद्यमानानि श्रुत्यादीनि प्रमाणानि वाक्यकाण्डेऽपोद्धारपदार्थाश्रयेणैवोपपादितानि । श्रुतिप्रतिपादितस्य = शब्दोपात्तस्य अबाधितस्य चार्थस्य त्यागोऽश्रुतस्य च कल्पना न युज्यत इत्येकवाक्योपात्तत्वमत्र द्रव्यगुणयोः परस्परं संबन्धहेतुः । तयोः परस्परं संबन्धे हि इष्टैकवाक्यता सिध्यति, अन्यथा वाक्यभेदे गौरवम् । वाक्यार्थेन हि विशेष्यतया प्रधानेन द्रव्यरूपेण गुणानामाक्षेपादश्रुतपरिग्रहे वाक्यभेदप्रसङ्गान्न क्वचिदेकवाक्यता भवेत् । तस्माद् वाक्यभेदपरिहाराय द्रव्यगुणयोः परस्परं संबन्धो वाक्यीयोऽभ्युपगन्तव्य इति ॥ ७४ ॥

ननु वाक्यवाक्यार्थयोरखण्डत्वेऽपि तत्प्रतिपत्त्यर्थमंशांशिभावकल्पनया पदपदार्थयोरपोद्धारबुद्धिसमाश्रयेण द्रव्यगुणयोः परस्परं संबन्धो वाक्यरूपात् प्रमाणात् प्रतीयत इत्युक्तं प्राक् । तत्र क्रियया सह क्रियाकारकभावरूपे तयोः सबन्धे परस्परं च तयोर्विशेषणविशेष्यभावरूपे संबन्धे प्रतिपाद्ये वाक्यभेदप्रसङ्गः, संबन्धद्वयरूपस्य विधेयद्वयस्य संभवात् । स चैकवाक्यत्वसंभवे न न्याय्य इति चेत्, नैष दोषः । सम्बन्धद्वयस्यात्र गुणप्रधानभावेनावस्थित्या विशिष्टरूपतया विधेयैक्येन वाक्यभेदाभावात् । तथाहि—क्रियाकारकभावसम्बन्धावच्छिन्नो विशेषणविशेष्यभावरूपः सम्बन्ध एव विशिष्टोऽत्र प्रतिपाद्यो न तु संबन्धद्वयम् । तस्य च प्रतिपादकं श्रुतिवाक्यलक्षणं प्रमाणद्वयमत्रास्ति इत्याह—क्रियया योऽभिसंबन्ध इति ।

अस्यार्थः—तयोर्गुणद्रव्ययोः क्रियया सह योऽभिसंबन्धः साध्यसाधनभावलक्षणः स श्रुतिप्रापितः = श्रुतिरूपेण, विभक्तिश्रुतिरूपेण प्रमाणेन प्रापितः । आश्रयाश्रयिणोः = आधाराधेयरूपयोस्तयोर्विशेषणविशेष्यभावलभ्यो नियमस्तु आधेयान्तरादाधारान्तराच्च व्यावृत्तिरूपो व्यवच्छेदस्तु वाक्याद् = वाक्यरूपात् प्रमाणादवतिष्ठत इत्येवं श्रुतिवाक्यरूपप्रमाणद्वयलभ्यस्तयोर्विशिष्टः संबन्ध इति ।

**वाचकमित्येकवाक्याख्यशब्दोपादानासौ न श्रौतीति वाक्योयावतिष्ठते। तदुक्तं न्यायवादिभिः—**

**'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' इति।**

**(मी. सू. ३।१६।१२)**

**यत्रार्थैकत्वं श्रूयते वाक्ये तत्र द्रव्यगुणयोर्नियमो भवति परस्परसंबन्धात्मकः। कुतः? ऐककर्म्यात्। एकं हि कर्म वाक्यार्थभूतं क्रियालक्षणम्। प्रधानमुद्दिश्य द्रव्यगुणौ शेषभूतौ विधीयेत इति तयोः परस्पराकांक्षत्वादेकवाक्यतायां सामानाधिकरण्यान्यथानुपपत्त्या असत्यपि संबन्धवाचकषष्ठीलक्षणविभक्तिश्रवणे विशेषणविशेष्यभावसंबन्धावसाय इति सूत्रार्थोऽस्मन्नयानुगुणः॥७५॥**

**एवमवस्थिते सतीदमत्रापततीत्याह—**

---

अयं भावः—कारकविभक्तिरूपया श्रुत्या द्रव्यगुणयोः क्रियायां संबन्धः समशीर्षकतया = साम्येन प्रतिपादितो न तु गुणप्रधानभावेन। तथाहि—वाक्यादखण्डवाक्यार्थविषयकप्रतिभोत्पत्तावपि अपोद्धारेण 'गामभ्याज' 'शुक्लामभ्याज' इति पदार्थविभजनेन क्रियायां विनियोगात्।

एकवाक्योपात्तयोर्गुणगुणिनोः परस्परं 'गामेव', 'शुक्लामेव' इत्येवं सामानाधिकरण्येन विनियोगः = संबन्धस्तु वाक्यलक्षणप्रमाणबलादवतिष्ठते। यदि तु वाक्यार्थयोरनंशत्वेन वाक्ये श्रुते गुणद्रव्ये विहायाश्रुते गुणद्रव्ये परिकल्प्येते तर्हि प्रतिपदार्थं संबन्धिभेदेन क्रियाभेदाद् 'गामभ्याज, शुक्लाञ्च' इत्येवं समुच्चितयोरन्वयेन वाक्यभेदः स्यादिति एकरसयैव प्रवृत्त्या = वाक्यस्य यौगपद्येनैव प्रवृत्त्या, उपात्तगुणविशिष्टस्य द्रव्यस्य क्रियासमन्वये वाक्यप्रमाणादभ्युपगते सति तदेकवाक्यत्वं पोषितं भवति। एकवाक्योपात्तयोर्द्रव्यगुणयोः परस्परं संबन्धे सति आधेयान्तरादाधारान्तराच्च व्यवच्छेदरूपः = व्यावृत्तिरूपः नियमस्तु अन्यनिवृत्तिरूपस्य स्वस्य वाचकशब्दान्तराभावादेकवाक्यनामकशब्दोपादानक एव = एकवाक्यरूपशब्दप्रमाणलभ्य एव, न तु श्रौतः, पदार्थद्वयसंबन्धस्य वाक्यवृत्तिगम्यत्वेन श्रुतिशक्त्यगोचरत्वाद् इत्येवं वाक्यीया एव = वाक्यप्रमाणलभ्या एव अन्यनिवृत्तिर्मूलोक्तनियमरूपाऽवतिष्ठते। तदुक्तं न्यायवादिभिः—अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति।

अस्यार्थः—वाक्यवाक्यार्थयोरखण्डत्वेन एकस्मिन् वाक्ये कारकविभक्तिरूपया श्रुत्योपात्तगुणविशिष्टस्य द्रव्यस्य क्रियान्वयेनार्थैकत्वे प्राक् प्रतीते सति पश्चादपोद्धारकल्पनया द्रव्यगुणयोर्वाक्यप्रमाणेन परस्परं संबन्धे सति आधेयान्तरादाधारान्तराच्च व्यवच्छेदरूपो नियमः प्रतीतः स्यात्। तत्र हेतुः—ऐककर्म्यादिति। एकं कर्म वाक्यार्थभूतं क्रियारूपं यस्मिन् वाक्ये तदेककर्म तस्य भावस्तत्त्वं तस्मादिति।

अयं भावः—वाक्यार्थभूतं क्रियारूपं प्रधानमुद्दिश्य द्रव्यगुणौ शेषभूतौ = तदङ्गभूतौ विधीयेत इत्येकत्र शेषत्वेन तयोः परस्पराकाङ्क्षत्वाद् परस्परं संबन्धेनैकवाक्यतायां

**तत्र द्रव्यगुणाभावे प्रत्येकं स्याद् विकल्पनम् ।**
**श्रुतिप्राप्तो हि संबन्धो बलवान् वाक्यलक्षणात् ।।७६।।**

**श्रुतिप्राप्तः श्रुत्योपस्थापितः क्रियाकारकसंबन्धः वाक्यं लक्षणं लक्ष्यतेऽनेनेति प्रतिपादकं यस्य तस्माद् बलवान् इति तस्य सर्वथा त्यागाभावः । साक्षाद् द्वितीयाश्रुतिस्तिङ् विभक्तिश्च श्रौतसंबन्धावेदिका, अन्योन्यस्वरूपानुविद्धयोः क्रियाकारकयोः प्रतीतेः । वाक्यीयस्य तु संबन्धस्य साक्षाद्वाचकं नास्ति । केवलमुभयस्यैकवाक्योपादानाद् योग्यार्थसमन्वयपदान्तरसमवधानात् परस्परेण संबन्धो व्यवस्थाप्यत इति श्रुत्यपेक्षया दुर्बलत्वम् । पदान्तरापेक्षणाच्च पदान्तरस्य नियतस्य सन्निधानाभावान्नावश्यं वाक्योयसंबन्धो विशेषणविशेष्यभावलक्षण इति तस्मिन् बहिरङ्गे निवृत्तेऽपि श्रौतस्यान्तरङ्गस्यानिवृत्तिः । एवं च श्वेतं छागमालभेत' इति वाक्ये श्वेताभावे कृष्णस्यालम्भनवच्छागाभावे पिष्टपिण्डीमालभ्य कृती स्यादिति चोद्यमत्र दर्शने ।।७६।।**

**जातिपदार्थनये तु सिद्धचतीष्टव्यवस्थेत्याह—**

---

सत्यामसत्यपि संबन्धवाचकषष्ठीलक्षणविभक्तिश्रवणे सामानाधिकरण्यान्यथाऽनुपपत्त्या इतरसंबन्धानवच्छिन्नस्य सामान्यभूतस्य विशेषणविशेष्यभावरूपस्य संबन्धस्यावसायः = निश्चय इत्येवमेतत् सूत्रार्थोऽस्मत् सिद्धान्तानुगुणः ॥ ७५ ॥

एवं द्रव्यगुणयोः क्रियायां साध्यसाधनभावरूपस्य संबन्धस्य श्रौतत्वे तयोः परस्परं संबन्धस्य च विशेष्यविशेषणभावरूपस्य वाक्यीयत्वे वा स्थिते श्वेतच्छागाभावे कृष्णच्छागालम्भनवत् छागाभावे पिष्टपिण्डोमालभ्य कृती स्यादिति चोद्यमत्र दर्शने आपततीत्याह—तत्र द्रव्यगुणाभावे इति ।

अस्यार्थः—तत्र = तस्मिन्, प्रागुक्ते दर्शने, द्रव्यगुणाभावे = द्रव्यगुणयोरन्यतरस्याभावे, प्रत्येकं द्रव्ये गुणे वा, विकल्पनम्-प्रतिनिधिविषयकं विशेषरूपेण कल्पनं स्यात् । हि = यतः, श्रुतिप्राप्तः = विभक्तिश्रुतिप्राप्तः, साध्यसाधनभावलक्षणः संबन्धो वाक्यलक्षणात् = वाक्यप्रतिपाद्यात् विशेष्यविशेषणभावलक्षणात् संबन्धाद् बलवान् = वाक्यप्रमाणापेक्षया श्रुतिरूपप्रमाणबलवत्त्वस्य पूर्वतन्त्रे व्यवस्थापितत्वात् । एवं श्रुत्या द्रव्यगुणयोरुभयोः प्रत्येकं क्रियान्वये तत्तदभावे प्रतिनिधिकल्पनं स्यात् । वाक्यलक्षणस्य संबन्धस्य बलवत्त्वे तु विशेषणयोरुभयोर्नियतत्वान्न प्रतिनिधिकल्पनं स्यादिति ।

अयं भावः—'श्वेतं छागमालभेत' इत्यत्र द्वितीया श्रुतिस्तिङ्विभक्तिश्रुतिश्च श्रौतस्य संबन्धस्य साध्यसाधनभावलक्षणस्य साक्षादावेदिका, परस्परानुविद्धयोः क्रियाकारकयोस्ताभ्यां प्रतीतेः । वाक्यीयस्य तु संबन्धस्येतरसंबन्धानवच्छिन्नविशेषणविशेष्यभावलक्षणस्य साक्षाद् वाचकं प्रकृते किमपि नास्ति, केवलं क्रियाकारलक्षणस्योभयस्यैकवाक्योपादानात् परस्परसमन्वययोग्यार्थकपदान्तरसमवधानात् परस्परेण संबन्धो व्यवस्थाप्यत इति श्रौतसबन्धापेक्षया वाक्यीयसंबन्धस्य दुर्बलत्वम् । पदान्तरापेक्षणादपि

**यदा तु जातिः शक्तिर्वा क्रियां प्रत्युपदिश्यते ।**
**सामर्थ्यात् संनिधीयेते तत्र द्रव्यगुणौ तदा ।।७७।।**

**'केषांचित्साहचर्येण जातिः शक्त्युपलक्षणम्' इति ।**
**( वा० का० ३ जा० ३ )**

**जात्युपलक्षिता शक्तिः जातिपदार्थे प्रतिनिध्युपादानार्थं क्रियासाधनत्वेन चोद्यते इत्युक्तत्वाज्जातिः शक्तिर्वेत्याह । अत्र दर्शने न द्रव्यगुणयोः श्रौतः क्रियाभिसंबन्धः, अपि तु जातिक्रिययोः, शक्तिक्रिययोर्वा विभक्तिप्रापितः संबन्धः । निराधारयोश्च जातिशक्त्योरसंभवात् सामर्थ्यात् संनिधापितं स्वाधारं द्रव्यं, तेनापि स्वाधेयो गुण इति द्वयोरपि द्रव्यगुणयोः सामर्थ्यप्राप्तत्वम् ।।७७।।**

**ततश्च प्रतिनिधिविषये—**

---

तदपेक्षया तस्य तत्त्वम् । तथाहि—पदान्तरस्य समानाधिकरणस्य नियमेन सन्निधानाभावात् नावश्यं वाक्यीयः संबन्धः संबन्धान्तरानवछिन्नविशेषणविशेष्यभावलक्षण इति तस्मिन् वाक्यीये बहिरङ्गे निवृत्तेऽपि श्रौतस्यान्तरङ्गस्य तस्यानिवृत्तिः । एवञ्च प्रकृतवाक्ये श्वेताभावे कृष्णस्यालम्भनवत् छागाभावे पिष्टपिण्डकमालभ्याऽपि कृतकृत्यः स्यादिति द्रव्यपदार्थवादे चोद्यमापततीति ॥ ७६ ॥

जातिपदार्थवादे तु नेदं चोद्यम्; किन्तु सिध्यतीष्टव्यवस्था इत्याह—यदा तु जातिरिति ।

अस्यार्थः—यदा तु जातिपदार्थवादे जातिर्जात्युपलक्षिता शक्तिर्वा साधनाख्याऽऽलम्भनादिक्रियां प्रति साधनत्वेनोपदिश्यते 'श्वेतं छागमालभेत' इति वाक्ये विधीयते तदा तत्र वाक्ये निराधारयोर्जातिशक्त्योरसम्भवलक्षणात् सामर्थ्यात् तयोराधारभूतं द्रव्यं तदाधेयभूतो गुणश्च सन्निधीयेत इति द्वयोरपि द्रव्यगुणयोः सामर्थ्यप्राप्तत्वमत्र दर्शन इति तयोः परस्परं सबन्धो न श्रौतो विभक्त्युपस्थापितत्वाभावात्, किन्तु वाक्यीयः । जातिक्रिययोस्तदुपलक्षितशक्तिक्रिययोर्वा संबन्धस्तु सुप्तिङ्विभक्तिभ्यां प्रापितः श्रौतः । श्रौतसंबन्धस्यान्तरङ्गत्वबलवत्त्वाभ्याञ्च न जातेराधारभूतस्य द्रव्यस्य प्रतिनिधिः । वाक्यीयसंबन्धस्य तु सामर्थ्यप्राप्तस्य बहिरङ्गत्वदुर्बलत्वाभ्यां विशेषणीभूतस्य गुणस्य प्रतिनिधिरिति विवेकः । जात्युपलक्षितशक्तेराधारभूतस्य द्रव्यस्य प्रतिनिधिस्तु संभवत्येव । द्रव्यान्तरे तज्जातेरभावेऽपि तत्र तत्क्रियासाधनत्वसंभवादित्यभिप्रेत्य जातिः शक्तिर्वेति मूले उक्तम् । 'केषाञ्चित् साहचर्येण जातिः शक्त्युपलक्षणम्' इति जात्युपलक्षिता शक्तिः प्रतिनिध्युपादानार्थं क्रियासाधनत्वेन चोद्यते 'जातेर्विशेषणत्वोपलक्षणत्वयोरन्तरदाश्रित्य जातिः पदार्थ इति वादे' प्रागुक्तत्वादिति ।।७७।।

ततश्च प्रतिनिधिविषये एषा व्यवस्था भवतीत्याह-जातीनाञ्चेति ।

**जातीनां च गुणानां च तुल्येऽङ्गत्वे क्रियां प्रति ।**
**गुणाः प्रतिनिधीयन्ते छागादीनां न जातयः ॥ ७८ ॥**

**द्रव्यव्यवधानाद् द्वावपि जातिगुणौ क्रियाङ्गभावमनुभवत इति तुल्यत्वम् । तत्र तथापि छागादीनां सम्बन्धिन्यो जातयो न प्रतिनिधीयन्ते । छागाभावे मेषो नालभ्यते, अपि तु गुणानामेव प्रतिनिधिः प्रसिद्धः । श्वेताभावे कृष्णोऽपि छाग आलभ्यते ॥ ७८ ॥**

**कात्र युक्तिरित्याह—**

---

अस्यार्थः—द्रव्यपरिच्छेदद्वारा जातीनाञ्च गुणनाञ्च क्रियां प्रति क्रियानिरूपितेऽङ्गत्वे तुल्ये सत्यपि छागादीनां गुणाः श्वेतादयः प्रतिनिधीयन्ते = प्रतिनिधिना विनिमीयन्ते, जातयो न प्रतिनिधीयन्ते । अत्र हेतुस्त्वग्रिमपद्येन वक्ष्यते ।

अयं भावः—जातिगुणौ द्वावपि स्वाश्रयद्रव्यव्यवधानात् क्रियाङ्गभावमनुभवतो न साक्षादिति क्रियाङ्गभावे द्वयोस्तुल्यत्वम् । तथापि तत्र छागादीनां संबन्धिन्यो जातयो न प्रतिनिधीयन्ते क्रियाशक्तयावत्स्वाश्रयद्रव्यं, यावद्द्रव्यकालञ्च तत्र तासां सन्निधानात्, जात्याश्रयद्रव्यस्यैव च क्रियाशक्तत्वात् । अतश्छागाभावे मेषो नालभ्यतेऽपितु गुणानामेव प्रतिनिधिः प्रसिद्धः. तेषामयावद्द्रव्यभावित्वादयावद्द्रव्यकालभावित्वाच्च । अतः श्वेताभावे कृष्णोऽपि छाग आलभ्यत इति ॥७८॥

काऽत्रोपपत्तिरित्याह—व्यक्तिशक्तेरिति ।

अस्यार्थः—यथा जातयो व्यक्तिशक्तेः = शक्तस्य द्रव्यस्येति यावत् । समासन्नाः = सम्यक्-संबद्धाः यावद्द्रव्यभावित्वाद् यावद्द्रव्यकालभावित्वाच्च, तथा गुणा न, उक्तहेतुद्वयाभावात् । किञ्च द्रव्यं साक्षात् क्रियोपयोगि, गुणस्तु तद्द्वारेति अप्रधानत्वाद् गुणो विकल्पते = प्रतिनिधीयते, न तु द्रव्यम्; तत्प्रतिनिधेस्तत्क्रियायामसामर्थ्यात् । तत्सदृशे तु द्रव्ये तज्जात्यारोपेण तत्क्रियासामर्थ्यमस्त्येवेति कदरादीनां खदिरादिसदृशानां खदिरादिप्रतिनिधित्वसम्भव इति ।

अयं भावः—अशक्तस्य क्रियोपयोगादर्शनात् शक्तिपरतन्त्रो द्रव्यस्य क्रियोपयोग इत्यभिप्रेत्य व्यक्तिशक्तेरित्युक्तम्, न तु व्यक्तेरिति । द्रव्यस्योत्पत्तिमारभ्याविनाशाद् द्रव्यजातेरन्वयात्तस्याद्रव्याधिष्ठानसम्बन्धयोश्चैककालत्वाद् द्रव्ये आसन्ना जातिरित्युपेयते । गुणास्तु तन्निष्ठोत्तरकालभाविनः = द्रव्यस्थित्युत्तरकालभाविनः 'उत्पन्नं द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठति' इति नैयायिकैरभ्युपगमात्, कालान्तरपरिवासादन्योन्यस्वभावपरिणामिनः = कालान्तरेऽपि स्थितेः परस्परं स्वभावेन परिणामिन इत्ययावद्द्रव्यभावित्वेन द्रव्याद् विप्रकृष्टाः ।

व्यक्तिशक्तेः समासन्ना जातयो न तथा गुणाः ।
साक्षाद् द्रव्यं क्रियायोगि गुणस्तस्माद् विकल्पते ।। ७९ ।।

व्यक्तिशक्तेः द्रव्यशक्तेः, शक्तस्य द्रव्यस्येत्यर्थः । शक्त्यायत्तो द्रव्यस्य क्रियोपयोग इति शक्तिग्रहणम् । उत्पत्तिप्रभृत्याविनाशादन्वयावधिष्ठानसंबन्धयोश्चैककालत्वादासन्ना द्रव्ये जातिः । गुणास्तु तन्निष्ठोत्तरकालभाविनः कालान्तरपरिवासादन्योन्यस्वभावपरिणामिन इति द्रव्याद् विप्रकृष्टाः । यदि नाम न समासन्ना गुणाः कथमेतावता विकल्प इत्याह—साक्षाद् द्रव्यं क्रियायोगि इति ।

एतदुक्तं भवति । यदि द्रव्यमनपेक्ष्य गुणः साक्षात् क्रियायोगी स्यान्न विकल्पेत । यदा तु द्रव्यं साक्षात् क्रियायोगि, जातिगुणौ तु तद्द्वारेण तदा प्रत्यासत्तिविप्रकर्षचिन्ता जायते । तथा हि—द्रव्यं साक्षाच्छक्तं क्रियासंबन्धक्षममिति तद्द्वारेण समन्वययोग्यं तत्रासन्नं न विकल्पते जातिरूपमित्यन्यजातीयस्य न प्रतिनिधिः, अपित्वन्यगुणस्य । कृष्णेऽपि छागे छागबुद्धिरन्वेत्येव । अन्यजातीयस्योपादाने तु जातेरात्मकल्पायास्त्यागे सर्वथैव साधनभेदात् क्रियान्तरमेव स्यात् । कदरे तु सादृश्यात् खदिरबुद्धेरनपगमः । एतच्च जातिपक्षे युज्यते, श्रौतस्य जातिरूपस्यात्यागात् । द्रव्यपदार्थपक्षे तु जातेरनभिधेयाया उपलक्षणत्वात्तत्यागेऽपि नास्ति श्रौतार्थत्याग इति अन्यजातीयस्यापि प्रतिनिधित्वप्रसङ्गः । श्रौतस्य संबन्धस्य च द्रव्यपदार्थपक्षे पूर्वं गुणद्रव्ययोः साम्यमुक्तम्, इह तु सामर्थ्यादाक्षेपे प्रत्यासन्ना जातिर्न त्यज्यत इति जातिपदार्थमुत्कर्षयितुमेवं विचारितम्, अत एव 'यदा तु जातिः' इति तुशब्दः पूर्वस्माद् विशेषणार्थः । तदेतद्भाष्येऽभिहितम्—

'यत्र ह्यन्यतरद् द्रव्यं तत्प्रधानम्, न हि शुक्लामालभेतेति पिष्टपिण्डीमालभ्य कृती भवति' इति । ( म० भा० २।१।५६ )

प्रत्यासन्नतरत्वाज्जातेस्तद्वाची द्रव्यशब्दोऽभिप्रेतः, न गुणोपसर्जनद्रव्यवाची । अनिर्धारितरूपस्य हि द्रव्यस्य जातिरात्मरूपनिर्धारणोपयोगिनो स्वात्मप्रदानेनारोपिता तदाकारतां प्राप्नोति । तत्प्रतिनिधौ वस्त्वन्तरभावाच्चोदितस्य त्यागप्रसङ्गः ।। ७९ ।।

पूर्वोक्तं पक्षमन्यमतत्वेनोपसंहरति—

---

ननु यदि द्रव्यस्य न समासन्ना गुणाः, कथमेतावता तेषां विकल्पः=प्रतिनिधिरिति प्राप्ते आह—साक्षाद् द्रव्यं क्रियायोगीति । अयमभिसन्धिः—यदि द्रव्यमनपेक्ष्य गुणः साक्षात् क्रियायोगी स्यात्तदा प्राधान्येन साक्षात् क्रियायोगित्वेन च द्रव्यवत् स न विकल्पेत=न प्रतिनिधीयेत । यदा तु द्रव्यं साक्षात् क्रियायोगि, जातिगुणौ तु तद्द्वारेण तद्योगिनौ तदा तयोः प्रत्यासत्तिविप्रकर्षचिन्ता जायते । तथाहि—तत्क्रियाशक्तं द्रव्यं साक्षात् तत्क्रियासम्बन्धक्षममिति तद्द्वारेण क्रियायां समन्वययोग्यं तत्रासन्नञ्च जातिरूपं न विकल्पते=प्रतिनिधीयत इत्यन्यजातीयस्य द्रव्यस्य न प्रतिनिधिः । अपि तु अन्यगुणस्य

**साम्येनान्यतराभावे विकल्पः कैश्चिदिष्यते ।**
**अतद्गुणोऽतश्छागः स्यान्मेषो वा तद्गुणो भवेत् ॥ ८० ॥**

**यथा जातिर्द्रव्योपलक्षणम्, निरुपाधेरर्थस्याव्यवहार्यत्वात्, एवं गुणोऽपि । तथा जातिवदाधारनियतो गुणो नीलादिर्वाय्वाकाशादेस्तदभावादिति सति साम्ये ये द्रव्यवद्भेद्यत्वाद् द्रव्यलक्षणप्राप्तं गुणमप्यभिधेयं मन्यन्ते व्याडिदर्शनस्थिता द्रव्यपदार्थिकाः, तेषां गुणोऽपि क्रियासंबन्धं जातिवद् द्रव्यद्वारेणार्हतीति श्रौतसंबन्धपरिशेषार्थं वाक्यीयसमन्वयत्यागेन द्वयोरपि गुणद्रव्ययोः प्रतिनिध्युपपत्तिरित्यनभिमतमपि पक्षं मतान्तरत्वेन निर्दिशति कैश्चिदिति । द्रव्यस्य हि प्रतिनिधिर्भाष्यकारप्रभृतिभिः शिष्टैर्नाङ्गीकृतः ॥ ८० ॥**

**एवं प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसन्धातुमाह—**

---

सः । कृष्णेऽपि छागे छागबुद्धेरन्वयात् । अन्यजातीयस्य मेषादेरुपादाने तु द्रव्यात्मभूताया जातेस्त्यागे सर्वथैव क्रियासाधनकर्मभेदात् क्रियान्तरमेव स्यादिति तत इष्टफलासिद्धिः । कदरे तु खदिरसदृशे सादृश्यात् खदिरत्वारोपेण खदिरबुद्धेरनपगम इति खदिरस्य कदरः प्रतिनिधिर्भवत्येव, अन्यजातीयत्वबुद्धेरभावात् । एतच्च सर्वं जातिपदार्थपक्षे युज्यते । श्रौतस्यार्थस्य जातिरूपस्यात्यागात् । द्रव्यपदार्थपक्षे तु जातेरपदार्थत्वेन पदार्थभूते द्रव्ये विशेषणत्वाभावेन तत्रोपलक्षणत्वात् तत्त्यागेऽपि नास्ति श्रौतार्थत्याग इत्यन्यजातीयस्यापि प्रतिनिधित्वप्रसङ्गः । द्रव्यपदार्थपक्षे गुणद्रव्ययोः क्रियायां श्रौतस्य सम्बन्धस्य च पूर्वम् पञ्चसप्ततितम्यां कारिकायां साम्यमुक्तम् । अस्यां कारिकायान्तु तत्रैव पक्षे जातिगुणयोः सामर्थ्यादाक्षेपे स्वाश्रयद्रव्यस्य प्रत्यासन्ना जातिर्न त्यज्यत इत्येवं जातिपदार्थमुत्कर्षयितुमेवं विचारितम् । अत एव 'यदा तु जातिः' इत्यत्र तु शब्दः पूर्वस्माद् द्रव्यपदार्थपक्षाद् विशेषणार्थः = व्यावृत्त्यर्थः । तदेतत् सर्वं भाष्येऽभिहितम्—यत्र ह्यन्यतरद् द्रव्यं तत्प्रधानम्, नहि 'शुक्लामालभेत' इति पिष्टपिण्डोमालभ्य कृती भवतीति । जातिगुणयोरुभयोरपि स्वाश्रयद्रव्ये प्रत्यासन्नत्वेऽपि जातेस्तत्र प्रत्यासन्नतरत्वात् तद्वाचीद्रव्यशब्दोऽत्र भाष्येऽभिप्रेतः, न तु गुणोपसर्जनद्रव्यवाची, उत्तरवाक्यविरोधात् । जातेरविशेषणत्वदशायां हि द्रव्यसामान्यस्यानिर्धारितरूपस्यात्मस्वरूपनिर्धारणोपयोगिनी जातिर्द्रव्ये आरोपिता = विशेषणतया विनिवेशिता सती स्वात्मप्रदानेन तदाकारतां = द्रव्याकारताम् प्राप्नोति । द्रव्यप्रतिनिधौ तु प्रतिनिधेर्वस्त्वन्तरत्वाच्चोदितस्य = शास्त्रविहितस्य छागस्य त्यागप्रसङ्ग इति जातिपदार्थवादोपपत्तिः ॥७९॥

पूर्वोक्तं द्रव्यपदार्थपक्षमन्यमतत्वेनोसंहरति—साम्येनेति ।

अस्यार्थः—द्रव्यपदार्थपक्षे जातिगुणयोरुभयोरपि द्रव्योपलक्षणत्वसाम्येन तयोरन्यतराभावे विकल्पः = प्रतिनिधिः कैश्चिद् = द्रव्यपदार्थिकैर्व्याडिदर्शनस्थितैरिष्यते ।

**जातेराश्रितसंख्यायाः प्रवृत्तिरुपलभ्यते ।**
**संख्याविशेषमुत्सृज्य क्वचित् सैव प्रवर्तते ।। ८१ ।।**

**प्रासङ्गिकेन पूर्वप्रस्तुतस्य व्यवधानादुक्तमप्येतत् पुनः स्मारितं सामान्येनाधिकं विशेषं वक्तुम् ॥ ८१ ॥**

**तथा हि—**

---

अतश्छागोऽतद्गुणो = श्वेतगुणोऽपि प्रतिनिधिः स्यात्, तद्गुणः = श्वेतगुणो मेषो वा । मेषोऽपि छागाभावे प्रतिनिधिर्भवेदिति ।

अयं भावः—विशेषणोपलक्षणोपाधीनां स्वाश्रयव्यवच्छेदकानामभावेऽर्थस्याव्यवहार्यत्वाद् यथा जातिर्द्रव्योपलक्षणम्, एवं गुणोऽपि । तथा जातिर्यथा नियताधारे वर्तते तद्वद् गुणोऽपि नीलादिर्नियताधारे वर्तते, वाय्वाकाशादावभावादित्येवं साम्ये सति ये व्याडिदर्शनस्थिता द्रव्यपदार्थिका द्रव्यवद् भेद्यत्वरूपं = विशेष्यत्वरूपम् द्रव्यलक्षणं प्राप्तं गुणमपि तत एवाभिधेयं मन्यन्ते । तेषां मते जातिवद् गुणोऽपि द्रव्यद्वारेण क्रियासम्बन्धमर्हति । 'श्वेतमालभेत', 'छागमालभेत' इति वाक्यभेदमाश्रित्य इति श्रौतस्य सम्बन्धस्य साध्यसाधनभावस्य प्रबलस्य परिपोषार्थं दुर्बलस्य वाक्यीयसमन्वयस्य परस्परं विशेष्यविशेषणभावलक्षणस्य परित्यागेन द्वयोरपि गुणद्रव्ययोः प्रतिनिध्युपपत्तिरिति स्वानभिमतं पक्षं मतान्तरत्वेन निर्दिशति—कैश्चिदिति । अत्रारुचिबीजन्तु द्रव्यस्य प्रतिनिधिर्महाभाष्यकारादिभिः शिष्टैर्नाभ्युपेत इति । एतेन लाघवानुगृहीते जातिपदार्थपक्ष एव स्वसम्मतिर्हरिणा दर्शिता ॥८०॥

संख्यावदन्यस्यापि गुणस्याश्रयावच्छेदकत्वद्वारेण क्रियाङ्गतयोपपादनमित्येवं प्रासङ्गिकं परिसमाप्य संख्याया आश्रयावच्छेदकत्वद्वारेण क्रियाङ्गत्वमिति प्रकृतमेवानुसन्धातुमाह—जातेरिति ।

अस्यार्थः—आश्रितसंख्यायाः = संख्यामाश्रितवत्याः जातेः क्वचिद् गुणस्य विधेयत्वे 'पशुना यजेत' इत्यादौ क्रियाङ्गतया प्रवृत्तिः शास्त्रेषूपलभ्यते । क्वचिद् गुणस्यानुवाद्यत्वे 'ग्रहं संमार्ष्टि' इत्यादौ सैव= जातिरेव संख्याविशेषम्-एकत्वसंख्यामुत्सृज्य क्रियाङ्गतया प्रवर्तत इति । प्रागुक्तेन प्रासङ्गिकेन प्रागुक्तस्य पूर्वप्रकृतस्य व्यवधानेन विस्मरणादुक्तमपि एतत्कारिकोक्तं वस्तु अधिकं विशेषं वक्तुं पुनः सामान्येन स्मारितमित्यवगन्तव्यम् ॥८१॥

तानेव विशेषान् वक्तुमुपक्रमते—पराङ्गभूतमिति ।

अस्यार्थः—'पशुना यजेत' इत्यादौ पराङ्गभूतम् = स्वाश्रयावच्छेदकत्वद्वारेण क्रियाङ्गभूतम्, पशुत्वादिरूपं सामान्यं द्रव्यसंख्यया = पश्वादिगतयैकत्वादिकया संख्यया युज्यते । 'ग्रहं संमार्ष्टि' इत्यादौ उद्देश्यत्वलक्षणमार्थं प्राधान्यमाश्रित्य स्वार्थम् = स्वस्य

**पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया ।**
**स्वार्थं प्रवर्तमानं तु न संख्यामवलम्बते ॥ ८२ ॥**

पूर्वं शाब्देन व्यापारेण विधीयमानानूद्यमानत्वेन गुणप्रधानभावमाश्रित्य गुणेऽपि ग्रहे सङ्ख्याविवक्षितेति प्रतिपादितम् । इदानीं तु वास्तवं गुणप्रधानभावमाश्रित्य गुणे सङ्ख्या विवक्ष्यत इति न्यायोऽवतार्यते ॥८२॥

**यजेत पशुनेत्यत्र यज्यर्थायां पशुश्रुतौ ।**
**कृतार्थैकेन पशुना प्रधानं भवति क्रिया ॥८३॥**

यागस्य प्राधान्यात् तत्साधनभूतः पशुरित्येकेन यागसम्पत्तौ प्रधानस्य क्रियालक्षणस्य वाक्यार्थस्य निष्पत्तेर्गुणभेदं प्रत्यनादरात् पराङ्गभूतमत्र पशुसामान्यं द्रव्यसङ्ख्यया युज्यत इति जातेराश्रितसङ्ख्याया अत्र प्रवृत्तिः । तथा हि—प्रधानं गुणभेदे सत्यावर्त्तेतेति क्रियान्तरमेवैतत् स्यात् ॥८३॥

ततश्च न प्रधानानुयायिनो गुणाः स्युः, अपि तु प्रधानं गुणानुयायीत्येतदनिष्टं प्रसज्येतेत्याह—

---

संमार्जनलक्षणमर्थं प्रयोजनं संपादयितुं प्रवर्तमानं तु तदेव सामान्यं ग्रहत्वादिलक्षणमेकत्वादिकां संख्यां विवक्षया नावलम्बते नाश्रयत इति । पूर्वं शाब्दं व्यापारमाश्रित्य विधीयमानत्वानूद्यमानत्वाभ्याञ्च गुणप्रधानभावमाश्रित्य गुणेऽपि ग्रहे 'प्राजापत्या नवग्रहा' इत्यादि विधिवाक्योपात्ता नवत्वादिका संख्या विवक्षितेति प्रतिपादितम् । इदानीन्तु 'पशुना यजेत' इत्यादौ शाब्दं वास्तवञ्च गुणप्रधानभावमाश्रित्य गुणे पशौ संख्या विवक्ष्यत इत्येतदर्थं न्यायोऽत्रावतार्यते ॥८२॥

उदाहरति-यजेत पशुनेत्यत्रेति ।

अस्यार्थः—'यजेत पशुना' इत्यत्र पशुश्रुतौ = पशुशब्दे यज्यर्थायाम् = यागाङ्गभूते, यागाङ्गभूतार्थवाचके सतीति यावत् । प्रधानं यागक्रिया एकेन पशुना कृतार्था भवति = स्वार्थसंपादने समर्था भवति । अतो न पश्वन्तरमपेक्षते । पश्वन्तरापेक्षणे हि क्रियान्तरत्वसंपत्या गुणानुरोधेन प्रधानभेदः कल्पितः स्यात्, स चानिष्ट इति ।

अयं भावः—वैयाकरणनये क्रियामुख्यविशेष्यकबोधस्य स्वीकारेण यागस्यात्र प्राधान्यात् पशुस्तत्साधनभूत इत्येकेन पशुना यागसंपत्तौ प्रधानस्य क्रियारूपस्य वाक्यार्थस्य सिद्धेः पशोर्गुणत्वेन तद्भेदं प्रत्यनादराद् यागाङ्गभूतमत्र पशुत्वरूपं सामान्यं स्वाश्रयद्रव्यसंख्यया सामानाधिकरण्येन युज्यत इति संख्यामाश्रिताया एव पशुत्वजातेरत्र स्वाश्रयव्यवच्छेदकतया यागाङ्गत्वेन प्रवृत्तिः । तथाहि-पशुना इत्यत्र शब्दोपात्तायाः संख्याया अविवक्षया पशुरूपस्य गुणस्य भेदाभ्युपगमे सति तदनुरोधेन प्रधानं क्रियाऽऽवर्ते-

**यावतां संभवो यस्य स कुर्यात्तावतां यदि ।**
**आलम्भनं गुणैस्तेन प्रधानं स्यात् प्रयोजितम् ॥८४॥**

**यस्य इति । अधिकारिणः । अङ्गप्रयुक्ते च प्रधाने प्रधानत्वमेव तस्य न स्यात्, तत्प्रति गुणानां च गुणत्वमिति संरक्ष्योऽयं नय इत्यभिप्रायः ॥८४॥**

**'स्वार्थं प्रवर्तमानं तु न सङ्ख्यामवलम्बते' इत्यत्रोदाहरणमाह—**

**संमृज्यमानतन्त्रे तु ग्रहे यत्र क्रियाश्रुतिः ।**
**सङ्ख्याविशेष ग्रहणं नैव तत्राद्रियामहे ॥८५॥**

**संमृज्यमानो ग्रहार्थस्तन्त्रं यत्र ग्रहे ग्रहशब्दे । विशेषणसमासो वायम् । संमृज्यमानं च तन्त्रं च तस्मिन् ग्रहे संस्कार्यत्वात् प्रधाने सम्मार्जनक्रियायाः शब्देन प्रधानभूतायाः यत्र श्रुतिः 'ग्रहं सम्मार्ष्टि' इत्यत्र, तत्र स्वशब्देन प्रतिपादितस्यापि सङ्ख्याविशेस्यैकत्वलक्षणस्य विवक्षा न भवति । उत्पत्तिवाक्यानुसारेणानेकसङ्ख्यस्यैव तस्यात्र विवक्षितत्वात् । न हि संमार्गोऽत्र तन्त्रम्, येनैकेनापि ग्रहलक्षणेन साधनेन तस्य सम्पत्तावनेकोपादानं पशुवन्निष्फलं स्यात्, अपि तु ग्रहस्तन्त्रमिति यथासम्भवं तस्य संस्कार इति सङ्ख्याविशेषमुत्सृज्य जातिः प्रवर्तते ॥८५॥**

**तदेवं 'गुणे संख्या विवक्ष्यते' न तु प्रधानभूत इत्यत्र शास्त्रीयं ज्ञापकमाह—**

---

तेति पश्वन्तरसाधनकं क्रियान्तरमेवैतत् स्यात् । ततश्च गुणा न प्रधानानुरोधिनः स्युः, अपि तु प्रधानमेव गुणानुरोधि स्यादित्येतददिष्टं प्रसज्येतेति ॥८३॥

एतदेवाह—यावतां संभव इति ।

अस्यार्थः—अधिकारिणां द्रव्यसामर्थ्यभेदेन यस्य यागाधिकारिणो यावतां पशूनामालम्भनस्य संभवः स्यात् स यदि तावतां पशूनामालम्भनं कुर्यात् तदा तेनाधिकारिणा प्रधानीभूता यागक्रिया स्वस्मिन् गुणभूतैः पशुभिरावर्तनार्थं प्रयोजिता स्यात्, तच्चानिष्टमिति । अयमभिसन्धिः—प्रधानं यद्यङ्गेन प्रयुक्तं स्यात्तदा तस्य प्रधानत्वमेव न स्यात्, गुणानाम्=अङ्गानाञ्च तत्प्रति गुणत्वं न स्यात्, उभयनिरूप्यत्वादुभयस्येति प्रागुक्तो गुणेऽपि संख्याविवक्षाविषयको नयः संरक्ष्य इति ॥८४॥

'स्वार्थं प्रवर्तमानन्तु न संख्यामवलम्बते' इत्यत्रोदाहरणमाह—संमृज्यमानतन्त्रे इति ।

अस्यार्थः—यत्र तु संमृज्यमानतन्त्रे=संमृज्यमानो ग्रहपदार्थस्तन्त्रं विवक्षितं यत्र ग्रहे ग्रहशब्दे तस्मिंस्तथाभूते । यद्वा संमृज्यमानतन्त्रे इति कर्मधारयः । संमृज्यमाने तन्त्रे च=विवक्षिते च, ग्रहे संस्कार्यत्वात् प्रधानेऽपि 'ग्रहं संमार्ष्टि' इति क्रियाश्रुतिः= संमार्जनक्रियायाः शब्दतः प्रधानीभूतायाः श्रुतिस्तत्र स्वशब्देन ग्रहमित्यनेन प्रतिपादितस्यापि संख्याविशेषस्यैकत्वलक्षणस्य ग्रहणं नैवाद्रियामहे । 'प्राजापत्या नवग्रहा' इत्या-

**शिष्यमाणपरे वाक्ये यदेकग्रहणं कृतम् ।**
**शेषे विशिष्टसंख्येऽपि व्यक्तं तल्लिङ्गदर्शनम् ॥ ८६ ॥**

**'सरूपाणामेकशेषः' इत्यत्र शिष्यत इति शेष इति कर्मसाधनशेषशब्दाश्रयेण शिष्यमाणः अवतिष्ठमानः, परः प्रधानम् एकशेषलक्षणेन संस्कारेण संस्कार्यत्वाद् भवतीत्येकवचनान्तत्वादेकसंख्यायुक्तेऽपि प्रतीते शेषशब्दे यत्पुनरेकशब्दोपादानं तत् स्वार्थं प्रवर्तमानं प्रधानभूतं सामान्यमाधारगतसंख्याश्रयेण न प्रवर्तत इत्यस्यार्थस्य ज्ञापकं स्फुटम् । भावसाधने तु शेषशब्दे शेषणक्रियायाः प्राधान्यम्, न शिष्यमाणस्येति द्विबह्वोरपि ( द्वयोर्बहूनामपि ) शेषणमेकमेवेति, एकत्वे विवक्षितेऽपि द्विबह्वोर्निवारणार्थमेकशब्दोऽर्थवानेवेति न ज्ञापकं स्यात् ॥ ८६ ॥**

**एवं 'गुणे संख्या विवक्ष्यते' इति न्यायं वैदिकोदाहरणपृष्ठपातितयावस्थाप्य प्रकृतोपयोगितां दर्शयितुं व्याकरणेऽप्युदाहरणमत्राह—**

---

व्युत्पत्तिवाक्यानुसारेणानेकसंख्यस्यैवात्र ग्रहस्य विवक्षितत्वात् । नहि संमार्गक्रिया 'ग्रहं संमार्ष्टि' इत्यत्र प्राधान्येन विवक्षिता येनैकेनापि ग्रहलक्षणेन साधनेन तस्या निष्पत्तौ अनेकग्रहोपादानं 'पशुना यजेत' इत्यत्र यागे पश्वन्तरोपादानवन्निष्फलं स्यात्, अपि तु संमार्गकियया संस्कार्यत्वेन प्राधान्याद् ग्रहस्तन्त्रम्=विवक्षितमिति यथासंभवं तस्य संस्कार इति संख्याविशेषमेकत्वलक्षणमुत्सृज्यात्र ग्रहत्वजातिः स्वाश्रयव्यवच्छेदद्वारा संमार्गक्रियाङ्गतया प्रवर्तते । 'पशुना यजेत' इत्यत्र तु न यागः पश्वर्थः, किन्तु पशुरेव यागार्थं इति प्रकृताद् वैपरीत्यमिति तत्र पशुत्वजातिः संख्याविशेषमाश्रित्यैव क्रियाङ्गतया प्रवर्तत इति ॥८५॥

तदेवं 'पशुना यजेत' इत्यत्र शब्दतोऽर्थतश्च गुणेऽर्थे संख्या विवक्ष्यते, न त्वर्थतः प्रधानभूते, शब्दतश्च गुणभूते ग्रहे इत्यत्र शास्त्रीयं ज्ञापकमाह—शिष्यमाणपरे इति ।

अस्यार्थः—शिष्यमाणपरे = शिष्यमाणोऽवतिष्ठमानः शब्दः परः प्रधानम्, एकशेषरूपेण संस्कारेण संस्कार्यत्वाद् भवति यत्र तत्र वाक्ये शेषे = शेषशब्दे शेषे इत्येकवचनान्तत्वाद् विशिष्टसंख्ये = एकत्वसंख्यायुक्ते प्रतीते सत्यपि यदेकग्रहणं कृतम्, तद् व्यक्तम् = स्फुटम्, स्वार्थं प्रवर्तमानं = स्वप्राधान्येन प्रवर्तमानं न तु पराङ्गतया, अतएव प्रधानभूतं सामान्यं स्वाधारगतसंख्याश्रयेण न प्रवर्तत इत्यस्यार्थस्य लिङ्गदर्शनम् = ज्ञापकदर्शनमिति ।

अयं भावः—'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रे शेषशब्दः शिष्यत इति शेष इति कर्मसाधनस्तत्रैकवचनोपादानादेव एकत्वलाभे सिद्धे पुनरेकपदोपादानं प्रागुक्तार्थस्य ज्ञापकमिति । यदि तु शेषशब्दो भावसाधनः स्यात्तदा शेषणक्रियायाः प्राधान्यम् न तु शिष्यमाणस्येति द्वयोर्बहूनामपि शब्दानां शेषणमेकमेवेति शेषगते एकत्वे विवक्षि-

**समासप्रत्ययविधौ यथा निपतिता श्रुतिः ।**
**गुणानां परतन्त्राणां न्यायेनैवोपपद्यते ॥८७॥**

**'सुप्सुपा' इत्यत्र समासस्य विधिरिति तस्यैव प्राधान्यम् । न ह्यवयवानामिदमनुशासनम्, समुदाये तेषामन्तर्भूतत्वात् स्वातन्त्र्याभावात् । न चाप्यवयवाः केचनात्र वस्तुतः सन्ति । विशिष्टेऽर्थे समासपदस्याभिन्नस्यैव प्रवृत्तेः । यथोक्तं वाक्यकाण्डे—**

**'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले' इति । ( वा० का० २।१४ )**

**अभिन्नस्य समासपदस्यैव परिकल्पितपूर्वपरावयवविभागस्य सञ्चिकीर्षितत्वम् । अन्वयव्यतिरेकाभ्यां हि विशिष्टार्थशब्दावधारणम् । तौ चात्र समासपदे राजपुरुषादौ स्तः । समुदायेन विशिष्टस्य संबन्धस्य प्रतिपादनात्, अवयवाभ्यामप्रतिपादनात् । समुदायसंस्कारप्रयुक्त एव चावयवानां विभक्तिलोपह्रस्वत्वपुंवद्भावादिसंस्कारः । अवयवसंस्कारनान्तरीयकत्वात् समुदायसंस्कारस्य । तस्मादत्र समासविधौ येन प्रकारेणैकत्वसङ्ख्यामुपादायैकत्वं प्रतिपादयन्ती श्रुतिः 'सुप्सुपा' इति शब्दोपनिपतिता श्रोत्रविषयभावमागता, तेनैव प्रकारेण न्यायेनोपपद्यते युज्यते । श्रुतमेकत्वं**

---

तेऽपि द्वयोर्बहूनाञ्च शब्दानां शेषनिवारणार्थमेकपदं सार्थकं स्यादिति वैय्यर्थ्याभावे ज्ञापकं न स्यादिति ॥८६॥

एवं 'गुणे संख्या विवक्ष्यते' इति न्यायं 'पशुना यजेत' इति वैदिकोदाहरणपृष्ठपातितयाऽवस्थाप्यास्य न्यायस्य व्याकरणे उपयोगितां दर्शयितुमत्राप्युदाहरणमाह—समासप्रत्ययविधाविति ।

अस्यार्थः—समासप्रत्ययविधौ, समासविधौ = सुप्सुपेत्यादौ, प्रत्ययविधौ = ङ्याप्प्रातिपदिकादित्यत्र, यथा = येन प्रकारेणैकत्वं प्रतिपादयन्ती श्रुतिस्तत्तद्विभक्त्यन्तपदरूपः शब्दः, श्रोत्रयोर्निपतिता = श्रोत्रविषयभावमागता, तथैव = तेनैव प्रकारेण गुणानामवयवानां विधिरूपप्रधानपरतन्त्राणां संख्या विवक्ष्यत इति न्यायबलेनोपपद्यते = संख्याविशेषेण युज्यते, श्रुतमेकत्वं विवक्ष्यत इत्यर्थः । यद्वा—यथा निपतिता = येनैव प्रकारेणार्थवच्छब्दस्वरूपं स्वरूपमात्रेण प्रतिपादयन्ती श्रोत्रयोर्निपतिता तथैव गुणानां परतन्त्राणामित्यादिरर्थः पूर्ववत् ।

केचित्तु 'ङ्याप्प्रातिपदिकात्' इति ग्रहणकवाक्याद् यथाश्रुतिर्निपतिता = निर्गता ङ्यन्तादाबन्तात् प्रातिपदिकादिति तथैव गुणानां परतन्त्राणामिति न्यायबलेनोपपद्यते = संख्याविशेषेण युज्यते । तत्र श्रुतमेकत्वं विवक्ष्यत इति व्याचक्षते । किन्तु यथानिपतिता श्रुतिरिति इदं वाक्यमस्यार्थस्यावाचकमितीदं व्याख्यानमुपेक्ष्यम् । नहि ङ्याप्प्रातिपदिकादिति वाक्यमाश्रित्योपप्लवमानं प्रातिपदिकं वाक्यश्रुतिविषयम्, किन्तु वाक्यम् । तत्रैव तस्याः श्रुतेस्तात्पर्यात् । तदत्र संख्याविवक्षायां बहुभ्यो ङ्याप्प्रातिपदिकेभ्यः स्वा-

**विवक्ष्यत इत्यर्थः। कोऽसौ न्याय इत्याह 'गुणानां परतन्त्राणाम्' इति। प्रधानवशवर्तित्वाद् गुणानाम् अवयवानां यां सङ्ख्यामुपादायार्थे प्रवृत्ता अस्ति, 'सुप्सुपा' इति श्रुतिस्तत्संख्यायोगिनमेवार्थं प्रतिपादयतीत्येकैकस्य सुबन्तस्य समासः कष्टश्रित इत्यादौ भवति, न तु बहूनां महत्कष्टं श्रित इति। द्वितीयान्तजातेराश्रयादनेकस्य हि समासे तस्यानियतत्वादनवस्थानात् प्रधानभूतः समासोऽनियमेन प्रतीयेत इति विप्लवात्तस्यानुग्रहो निराकृतः स्यादिति प्रत्ययवयवं समासभेदात् गुणायत्तं प्रधान स्यात्, न तु गुणाः प्रधानानुयायिन इत्यर्थः।**

**द्वन्द्वबहुव्रीह्योस्तु 'अनेकम्' इति वचनसामर्थ्यादनेकपदावयवः समासोऽभ्युपगत एव। अत एव च लिङ्गादन्यत्र संख्याविवक्षासिद्धिः। प्रत्ययविधौ अपि 'ङ्याप्प्रातिपदिकाद्' इत्यत्र समाहारद्वन्द्वनिर्दिष्टायाः प्रातिपदिकलक्षणायाः प्रकृतेः सिद्धरूपाया अनुवादात् स्वादिविधिवाक्येऽधिकारादपूर्वस्य स्वादेरेकवाक्यतया प्रत्ययस्य विधानमिति तस्य प्राधान्यात्तदङ्गे प्रातिपदिके यथाश्रुतसंख्याङ्गीकारः।**

---

देरेकस्य प्रत्ययस्य परत्वासंभवात् प्रकृतित्रयानुरोधेन त्रिरावर्तेत प्रत्ययः। तथा च विधेयत्वेन प्रधानं प्रत्ययो गुणभूतः प्रकृत्यनुयायि स्यान्न तु गुणास्तदनुयायिन इति। अयन्तु कारिकाऽर्थोऽभिसंहितः। सुप्सुपेत्यत्र विधेयत्वेन समासस्यैव प्राधान्यं, नत्ववयवानाम्। नहीदमवयवानामनुशासनम्, तेषां समुदायेऽन्तर्भूतत्वेन तद्गुणत्वात्। किञ्चाखण्डे विशिष्टेऽर्थे अखण्डस्यैव समुदायस्य प्रवृत्तेर्न समासे वस्तुतोऽवयवाः सन्ति इति समुदाये परिकल्पितत्वेनापि तेषां गुणत्वम्।

तदुक्तं वाक्यकाण्डे—

'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले' इति। (वा० का० २।१४)

अभिन्नस्य = अखण्डस्य हि समासपदस्यैवान्वयव्यतिरेकाभ्यां परिकल्पितपूर्वपरावयवविभागस्य संस्कार इष्टो न त्ववयवानाम्। अवयवीभूतशब्दतदर्थाश्रिताभ्यां हि अन्वयव्यतिरेकाभ्यामवयवार्थावधारणे सति विशिष्टशब्दाश्रिताभ्यामन्वयव्यतिरेकाभ्यां विशिष्टार्थावधारणम्। तौ चात्र समासपदे राजपुरुषादावन्वयव्यतिरेकौ स्तः। विशिष्टार्थस्य विशिष्टसंबन्धस्य पदसमुदायेन प्रतिपादनात्, अवयवाभ्यामप्रतिपादनात्। अवयवानां विभक्तिलोपह्रस्वत्वपुंवद्भावादिरूपः संस्कारश्च समुदायसंस्कारप्रयुक्त एव। समुदायसंस्कारस्यावयवसंस्काराविनाभूतत्वात्। तस्मादत्र समासविधौ येन प्रकारेणैकत्वसंख्यामुपादाय एकत्वं प्रतिपादयन्ती विभक्तिश्रुतिः सुप्सुपा' इति शब्दोपनिपतिता सुप्पदसमीपंगता सती श्रोत्रविषयतां गता, तेनैव प्रकारेण गुणानां परतन्त्राणामिति न्यायबलेन संख्याविशेषेणोपपद्यते = युज्यते, विभक्तौ श्रुतमेकत्वं विवक्ष्यत इति यावत्। अवयवानां गुणानां प्रधानवशवर्तित्वाद् यां संख्यामुपादायार्थे प्रवृत्ताऽस्ति सुप्सुपेति श्रुतिस्तत्संख्यायोगिनमेवार्थं प्रतिपादयतीत्येकैकस्य सुबन्तस्य समासः 'कष्टश्रितः' इत्यादौ

**ननु च 'सुप्सुपा' इति विभक्त्यैकत्वस्य प्रतिपादितत्वादस्तु संख्याविवक्षा, ङ्याप्प्रातिपदिकाद्' इत्यत्र तु कासावेकत्वसंख्या श्रुता यस्या विवक्षोच्येत। यदि समाहारैकत्वं, तदयुक्तम्, तस्य समुदायसंबन्धित्वात्, समुदायाच्च प्रत्ययोत्पत्तेरविवक्षितत्वान्न तस्यैकत्वमत्र विवक्षितत्वेन प्रतिपाद्यम्, अपि तु प्रत्येकमवयवानाम्। तेषां चात्र वृत्तावन्तर्गतत्वाद् द्वित्वादिप्रतियोग्येकत्वं न प्रतीयते, अपि त्वनिर्ज्ञातसख्याविशेषाणि स्वरूपमात्रेण ङ्याप्प्रातिपदिकानि। भवतैव तर्ह्यस्माकं दिक् प्रदर्शिता। वयमप्यधुना तर्ह्येवं व्याचक्ष्महे —'यथा निपतिता श्रुतिः' येनैव प्रकारेण निपतिता अर्थवच्छब्दरूपं च स्वरूपमात्रेण प्रतिपादयन्ती निपतिता। तथा च तावति तात्पर्यमिति न द्वितीयमपेक्षते, द्विवचनबहुवचनान्तानामसमासाद् वृत्तौ संख्याविशेषानवगतेः प्रतियोग्यपेक्षामन्तरेण च द्वित्वाद्यनुत्पत्तेः। अतश्चार्थात् प्रत्येकमेकत्वं 'ङ्याप्प्रातिपदिकाद्' इति वदतो विवक्षितम्।**

**अन्ये तु ग्रहणकवाक्यादस्माद् यत् प्रातिपदिकं जायते ङ्यन्तादाबन्तात् प्रातिपदिकादिति, तत्र श्रुतमेकत्वं विवक्ष्यत इति व्याचक्षते, अत्र तु 'यथा निपतिता श्रुतिः' इत्यवाचकम्। न हि प्रातिपदिकमुपप्लवमानं वाक्यश्रुतिविषयम्। तदत्र संख्याविवक्षायां बहुभ्यो ङ्याप्प्रातिपदिकेभ्यः स्वादेः प्रत्ययस्य परत्वासंभवाद्यथाप्रकृत्यावर्तेत प्रत्ययः। तथा च गुणानुयायि प्रधानं स्यान्न तु गुणास्तदनुयायिनः।**

---

भवति, न तु बहूनां 'महत्कष्टंश्रितः' इति। द्वितीयान्तजातेराश्रयादनेकस्य हि समासे तस्यानियतत्वादनवस्थानात् = अव्यवस्थानात् प्रधानभूतः समासोऽनियमेन प्रतीयेतेत्यनिष्टप्रसङ्गात् तस्यानुग्रहो निराकृतः स्यादिति प्रत्यवयवं समासभेदात् समासरूपं विधेयत्वेन प्रधानमवयवरूपगुणायत्तं स्यात्, नतु गुणाः प्रधानानुयायिनः स्युरिति। द्वन्द्वबहुव्रीहिसमासयोस्तु सुप्सुपेत्यनुवृत्तावपि अनेकमित्युपात्तवचनसामर्थ्यादनेकपदावयवः समासोऽभ्युपगम्यत एव। विरुद्धसंख्याबोधकपदाभावे चास्मादेव लिङ्गात् संख्याविवक्षासिद्धिः। प्रत्ययविधावपि 'ङ्याप्प्रातिपदिकात्' इत्यत्र समाहारद्वन्द्वनिर्दिष्टायाः प्रातिपदिकलक्षणाया सिद्धरूपायाः प्रकृतेरनुवादात् स्वादिविधिवाक्ये तस्या अधिकारादपूर्वस्य स्वादेः प्रत्ययस्य विधानमिति तस्य प्राधान्यात्तदङ्गप्रातिपदिके श्रुतायाः संख्याया अङ्गीकारः।

ननु सुप्सुपेति विभक्त्यैकत्वस्य प्रतिपादितत्वादस्तु संख्याविवक्षा, 'ङ्याप् प्रातिपदिकात्' इत्यत्र तु समाहारद्वन्द्वे समुदायैकत्वं श्रूयते। समुदायाच्च प्रत्ययोत्पत्तेरविवक्षितत्वान्न तस्यैकत्वमत्र विवक्षितत्वेन प्रतिपाद्यम्। अपि तु प्रत्येकमवयवानामेकत्वमत्र विवक्षितम्। अवयवानाञ्चात्र वृत्तावन्तर्गतत्वाद् द्वित्वादिविरोध्येकत्वं न तेषां प्रतीयते। किन्त्वत्र वृत्तावनिर्ज्ञातसंख्याविशेषाणि ङ्याप्प्रातिपदिकानि स्वरूपमात्रेण प्रतीयन्ते। तदुक्तम्—

'अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः'

इति चेत्तर्हि सांप्रतमेवं व्याचक्ष्महे। यथा निपतिता श्रुतिः, यथा = येनैव प्रकारेण निपतिता = अर्थवच्छब्दस्वरूपं स्वरूपमात्रेण प्रतिपादयन्तो निपतिता। तथा च तावति

**ननु च स्वादीनां प्रकृतिसंबन्धस्य विधीयमानत्वात् कथं तेषां प्राधान्यम् । एवमपि प्रकृतीनां तावद् गुणत्वं सिद्धमिति तत्र 'गुणे संख्या विवक्ष्यते' इति सिद्धोऽस्मन्नयः । न च प्रकृतिरेव प्रत्ययपरतया संचिकीर्षिता । प्रकृतिप्रत्ययपरिकल्पनेन पदस्यैवान्वाख्येयत्वात् तस्यैव लोके प्रयोगात् । यद्यपि च प्रत्ययपरत्वेन संस्कृता प्रकृतिरेव पदम्, तथापि तात्पर्यदृशा प्रकृतेः प्रक्रियाभेदेनासत्यत्वादविकल्पं पदमेव सत्यमुद्दिश्य संस्कारप्रवृत्तिः । वाक्यार्थप्राधान्ये त्वपूर्वस्य प्रत्ययस्यैव विधीयमानत्वात् प्राधान्यम् । अत एव 'समासप्रत्ययविधौ' इत्याह । इत्थं**

---

तात्पर्यमिति न संख्याविशेषावगमार्थं द्वितीयमपेक्षते । द्विवचनबहुवचनान्तानामसमासे च न वृत्तौ संख्याविशेषावगतिः । प्रतियोग्यपेक्षामन्तरेण च न द्वित्वाद्युत्पत्तिः ।

'अपेक्षाबुद्धिजन्यास्तु सर्वे द्वित्वादयो मताः ।'

इति शास्त्रस्थितेः । अतश्च ङ्याप्प्रातिपदिकादिति वदतोऽर्थात् प्रत्येकमेकत्वं विवक्षितमिति । यद्यपि स्वादीनां प्रकृतिसंबन्धस्य विधीयमानत्वेन तदपेक्षया गुणत्वम्, तथापि स्वादीनामपि विधीयमानत्वेन तदपेक्षया प्रकृतीनां गुणत्वमिति 'गुणे संख्या विवक्ष्यते' इत्यस्मन्नयस्तत्र सिद्धः ।

न च प्रकृतिरेव प्रत्ययपरत्वेन संस्कर्तुमिष्टेति प्रकृतेः प्राधान्यमिति वाच्यम् । प्रकृतिप्रत्ययपरिकल्पनेन पदस्यैवान्वाख्येयत्वात् तस्यैव लोके प्रयोगात् । ननु प्रत्ययपरत्वेन संस्कृता प्रकृतिरेव पदमिति रीत्याऽपि प्रकृतेरेव प्राधान्यमिति चेन्न । प्रक्रियाभेदविकल्पेन प्रकृतेरसत्यत्वाद् विकल्परहितं पदमेव सत्यमुद्दिश्य तात्पर्यदृष्ट्या तत्र संस्कारप्रवृत्तेः । 'शक्तं पदम्' इति रीत्या प्रकृतिप्रत्ययसंघातस्य वाक्यत्वेन वाक्यार्थप्राधान्ये तु विध्यन्तराप्राप्तत्वेन अपूर्वस्य प्रत्ययस्यैव विधीयमानत्वात् प्राधान्यमिति सर्वथा प्रकृतेर्गुणत्वमेवेति तदर्थे संख्याविवक्षासिद्धिः । अत एवात्र कारिकायां समासप्रत्ययविधावित्युक्तम् । तदुक्तमभियुक्तैः—

'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति भूषणसारे । अत्र प्रत्ययविधावित्युक्त्या प्रत्ययस्य विधीयमानत्वेन प्राधान्यं स्पष्टमेवोक्तम् । ततः प्रकृतेर्गुणत्वम् । इत्थञ्चात्र प्रत्ययस्य विधेयत्वेऽभ्युपगते सति न वाक्यभेदेन ङ्याप्प्रातिपदिकरूपभिन्नसंबन्धिविधानम् । लोके पदस्यानंशत्वे सत्यत्वेऽपि च प्रक्रियायां प्रकृतिप्रत्यययोरन्वयव्यतिरेककल्पितायां प्रागुक्तानेकप्रकृत्यनुवादेनैकवाक्यतया स्वादीनां समुदायस्यैकत्वेन विधानात् । विधेयभेदे हि वाक्यभेदो, न तु अनूद्यमानभेद इति हि मीमांसकानामुद्घोषः ।

न च सुप्तिङोरविशेषविधानादित्युक्तमाकरे, ततश्च सुप्तिङ्रूपप्रत्ययभेदेन प्रत्ययविधावपि वाक्यभेदोऽभ्युपगत एवेति वाच्यम् । तस्य वाक्यस्य सुप्तिङ्रूपप्रत्ययनिष्ठद्वित्वसंख्याप्रयुक्तवाक्यभेदाभिप्रायेण प्रवृत्तत्वात् । न तु ङ्याप्प्रातिपदिकरूपप्रकृतिवाक्येनापि

**च नात्र भिन्नवाक्यतया संबन्धिविधानम्, प्रक्रियायां प्रकृत्यनुवादेनैकवाक्यतया स्वादीनां विधानात् । सुप्तिङोरविशेषविधानादिति तु संख्यावाक्यभेदाभिप्रायम्, न तु प्रकृतिवाक्येनापि नैकवाक्यतात्र विवक्षितेति मन्तव्यम् । न चैकवाक्यतया विधाने प्रत्ययसंज्ञासम्बन्धो विलक्षणः प्रवृत्तिभेदेन विना न शक्यते विधातुम्, विधिसंबन्धो हि पूर्वम् ततो विधानाल्लब्धसत्तानां स्वादीनां प्रत्ययसंज्ञासंबन्धः, सतो हि कार्यिणः कार्येण भवितव्यमिति वाच्यम् । भाविनोऽपि बुद्धया विषयीकरणाद् भाव्यमानावस्थानामेव प्रत्ययादिसंज्ञासमन्वयादित्येकवाक्यतयैवात्र प्रत्ययविधिग्रंन्थ-काराभिमतः ॥ ८७ ॥**

**किमेष एवोत्सर्गः 'गुणे संख्या विवक्ष्यत' इति । नेत्याह—**

---

नैकवाक्यताऽत्र त्रिवक्षितेति मन्तव्यम् । न च ङ्याप्प्रातिपदिकरूपभिन्नप्रकृत्यैकवाक्यतया स्वादीनां विधाने तेषां विलक्षणः प्रत्ययसंज्ञासबन्धः प्रकृतिभेदप्रयुक्तविधिशास्त्रप्रवृत्तिभेदेन विना न शक्यते विधातुम् । पूर्वं हि स्वादीनां विधिस्तेषां प्रकृतिसंबन्धश्च । ततः पश्चाद् विधानाल्लब्धसत्ताकानां तेषां प्रत्ययसंज्ञासंबन्धः सतो हि कार्यिणः कार्येण भवितव्यमिति अस्यैव युक्तत्वादिति वाच्यम् । भाविनोऽपि बुद्धया विषयीकरणाद् भाव्यमानावस्थामुप-गतानामेव स्वादीनां प्रकृत्या प्रत्ययसंज्ञया च युगपत् संबन्धाभ्युपगमेनैकवाक्यतयैवात्र प्रत्ययविधिर्ग्रन्थकाराभिमतः, न त्वत्र पूर्वपक्षोक्तरीत्या विधेयभेदकालभेदाभ्यां विधिशास्त्र-प्रवृत्तिभेदमाश्रित्य वाक्यभेदः प्रत्ययविधौ हरेरभिप्रेत इति ॥८७॥

ननु गुणे संख्या विवक्ष्यत इति नियमः किमित्याशङ्क्य प्रायिकत्वेनोत्सर्ग एष इत्याह—गुणेऽपीति ।

अस्यार्थः—प्रधानान्तरसिद्धये = एकस्मादन्यस्य प्रधानस्य सिद्धये गुणेऽपि संख्या नाङ्गीक्रियते । यथा 'कर्तुरीप्सिततमं कर्म' इत्यत्र कर्मसंज्ञायाः कर्मसंज्ञया संस्क्रियमाणस्य कर्मणो वा प्राधान्यात् कर्ताऽप्रधानं = गुणः । एवं तस्य गुणत्वेऽपि तद्गतैकत्वसंख्या न विवक्ष्यते । तथाहि—प्रधानगता संख्या न विवक्ष्यत इति गुणे संख्या विवक्ष्यत इत्युत्स-र्गाल्लब्धम् । यदि प्रधानगता संख्या विवक्ष्येत तदा प्रधानसंकोचः स्यात् । स चानुचितः । अतोऽत्र प्रधानप्रचयार्थं प्रधानगतसंख्याया अविवक्षणे एकस्मादन्यस्य प्रधानस्य सिद्धये गुणेऽपि कर्तरि संख्या नाङ्गीक्रियते = न विवक्ष्यते । गुणे कर्तरि संख्याविवक्षायां हि प्रधानस्य संकोचः स्यादिति प्रधानप्रचयासिद्धौ गुणेन भूयान् प्रधानानुग्रहो न स्यात् । तथैवं प्रकृते गुणे कर्तरि संख्याया अविवक्षणे, कर्मण्यनुग्राह्योऽविशिष्टः सूत्रे कर्तृपदोत्तरो-पात्तलिङ्गसंख्याभ्रामनवच्छिन्नः कर्ता भूयः प्रधानानुग्रहाय प्रतीयत इति ।

अयं भावः—कारिकायां तथेत्यस्य तथा सति एवं च सति इत्यर्थः । एवञ्च सति कर्ता कर्मणि अनुग्राह्योऽविशिष्टः प्रतीयत इति संबन्धः । अत्र सूत्रे कर्ता गुणः । ईप्सिततमं तु कर्म कर्मसंज्ञाद्वारेण संस्क्रियमाणं प्रधानम् । कारिकायां कर्मणीत्यत्र अनुग्राह्य इति शेषः ।

गुणेऽपि नाङ्गीक्रियते प्रधानान्तरसिद्धये ।
संख्या कर्ता तथा कर्मण्यविशिष्टः प्रतीयते ॥ ८८ ॥

तथा कर्तेति । एवं च सति कर्ता अविशिष्टः प्रतीयत इति संबन्धः । स हि गुणः । ईप्सिततमं तु कर्म संज्ञाद्वारेणाधीयमानसंस्कारं प्रधानम् । 'कर्मणि' इति । 'कर्तुरीप्सिततमं कर्म' इत्यत्र कर्मसंज्ञायां विधीयमानायां तस्या एव, तया वा संस्क्रियमाणस्य कर्मणः, प्राधान्यात् कर्तुः क्रियया ईप्सिततममिति स्वाश्रयक्रियासंबन्धितया कर्ता निर्दिश्यमानो गुणोऽविशिष्टः सूत्रोपात्तलिङ्गसंख्याभ्यामनवच्छिन्नः, कर्त्रोः कर्तॄणां च क्रियये-प्सिततमस्यापि कर्मसंज्ञासिद्ध्यर्थं भूयः प्रधानानुग्रहाय प्रतीयते अवगम्यते । समासप्रत्ययविधौ तु बहूनां सुबन्तानां समासेऽव्यवस्था स्यात्, बहुत्वस्यानियतत्वात् । कर्मसंज्ञा तु बहुविषया प्रचयमनुभवतीति न दोषः । प्रत्ययविधिरपि बहुभ्यः प्रकृतिभ्यो नास्ति, परत्वस्यानिर्वाहात् । तथा च सरूपवार्तिक उक्तम्—

'एकविभक्ताविति चेन्नाभावाद् विभक्तेः' इति । ( वा०१।२।६४ )

तदेवं प्रधानप्रचये भूयाननुग्रहः कृतो भवतीति प्रधानस्याविवक्षितसंख्यत्वे सिद्धे न गुणगता संख्याश्रीयते । अन्यथा प्रधानसङ्कोचे तदुपरोधः स्यादिति न प्रधानान्तरसिद्धिः । प्रयोजनमेतद्युक्तिगर्भं द्रष्टव्यमिति गुणानां पारतन्त्र्यादेव न्यायात् 'कर्तुरीप्सिततमं कर्म' इत्यत्र न विवक्ष्यते संख्येत्युक्ता युक्तिः ॥ ८८ ॥

अत्रैवोपोद्बलनार्थमाह—

---

'कर्तुरीप्सिततमं कर्म इत्यत्र कर्मसंज्ञा विधीयत इति तस्याः प्राधान्यम् । यद्वा तया संस्क्रियमाणस्य कर्मणः प्राधान्यम् । कर्तुः क्रियया ईप्सिततममिति योजनया स्वाश्रितक्रियासंबन्धितया निर्दिश्यमानः कर्ता गुण इति गुणत्वेऽपि तद्गता संख्या भूयः प्रधानानुग्रहाय न प्रतीयते । किन्त्वविशिष्टः=सूत्रोपात्तलिङ्गसंख्याभ्यामव्यावृत्तः कर्ता प्रतीयत इति कर्त्रोः= कर्तॄणाञ्च क्रिययेप्सिततमस्यापि कर्मसंज्ञासिद्धिः । समासप्रत्ययविधौ तु गुणगतसंख्याया अविवक्षायां बहूनां सुबन्तानां समासेऽव्यवस्था स्यात्, बहुत्वस्यानियतत्वात् । कर्मसंज्ञा तु गुणीभूतबहुकर्तृसाध्यकर्मविषया प्रचयमनुभवतीति नाव्यवस्थारूपो दोषः, प्रत्ययविधिरपि बहुभ्यः प्रकृतिभ्यो नास्ति, परश्चेत्युपात्तपरत्वस्यानिर्वाहात् । तदुक्तं सरूपसूत्रे वार्तिके 'एकविभक्ताविति चेन्नाभावाद् विभक्तेः' इति । एकविभक्तौ परत एकशेष इति चेन्न, बहुभ्यः सरूपेभ्यः परस्या एकस्या विभक्तेरभावादिति तदर्थः । तदेवमत्र गुणे कर्तरि संख्याया अविवक्षायां सत्यां प्रधानप्रचये भूयाननुग्रहः कृतो भवतीति प्रधानगतसंख्याया अविवक्षितत्वे सिद्धे गुणगतसंख्याया विवक्षा नाश्रीयते । अन्यथा = प्रधानगतसंख्याया अविवक्षितत्वे, विवक्षितत्वे वा गुणगतसंख्याया विवक्षणे प्रधानसंकोचे प्रधानोपरोधः = गुणेन प्रधानपीडनरूपः स्यादिति न प्रधानान्तरसिद्धिः=न प्रधानप्रचयरूपाऽनेकप्रधानसिद्धिः । कारिकायां—'प्रधानान्तरसिद्धये' इति प्रयोजनोक्तिश्च प्रागुक्तयुक्तिगर्भैव । सा

यस्यान्यस्य प्रसक्तस्य नियमार्था पुनः श्रुतिः ।
निवृत्तौ चरितार्थत्वात् सङ्ख्या तत्राविवक्षिता ॥ ८९ ॥

यस्य पुनः श्रुतिरिति संबन्धः । पूर्वं सामान्येनाक्षेपादेकैव श्रुतिः पुनः श्रुतिरित्युच्यते । यथेह कर्तुः । पुनःशब्दो वा तुशब्दार्थे । स पूर्वप्रधाने विवक्ष्यते संख्येत्युक्तम्, तदपेक्षयेह विशेषद्योतनार्थः । किमर्थमसौ पुनः श्रुतिरित्याह अन्यस्य कर्मादेः प्रसक्तस्य प्राप्नुवतः नियमार्था निवृत्त्यर्था । तथा हि ईप्सिततमस्य संबन्धिशब्दत्वाद्येनेप्सिततमं कर्म तस्याक्षेपस्तावत् सिद्ध इति करणादेरपीप्सिततमसाधनत्वप्रसङ्गे कर्तुरित्युच्यमानं कारकान्तरनिवृत्तितात्पर्यान्नियमार्थमिति । द्वौ बहवो वा कर्तारो न निवारिताः, तथापि कारकान्तरनिवृत्तिर्विवक्षिता सिद्ध्यत्येवेति निर्देशार्थैवात्र संख्या । नन्वेवमनेनैव न्यायेन यजिना अनियताङ्गाक्षेपात् पशुनेति करणान्तरनिवृत्तितात्पर्येणोच्यमानमविवक्षितसंख्यं प्रसज्येत ।

---

च युक्तिर्गुणानां प्रधानपारतन्त्र्यादेव न्यायात् 'कर्तुरीप्सिततमं कर्म' इत्यत्र प्रधानगतसंख्येव न गुणगता संख्या विवक्ष्यत इत्येवं प्रागुक्तैवेति ॥८८॥

पूर्वपद्योक्तमेवार्थं समर्थयितुमाह—यस्यान्यस्येति । यस्य पुनः श्रुतिरन्यस्य प्रसक्तस्य नियमार्था तस्य पुनः श्रुतेः प्रसक्तस्यान्यस्य निवृत्तौ चरितार्थत्वात् तत्र संख्याऽविवक्षितेति रीत्या पदानामत्र परस्परं सम्बन्धः । पूर्वं सामान्येन साधनमात्राक्षेपादेकैव श्रुतिः 'पुनः श्रुतिः' इत्युच्यते । यथा 'कर्तुरीप्सिततमं कर्म' इत्यत्र कर्तृपदाभावे साधनमात्राक्षेपे कर्तुरप्याक्षेपात् कर्तुरिति पुनः श्रुतिः । यद्वा तुशब्दार्थे पुनः शब्दः । गुणे संख्या विवक्ष्यत इति पूर्वमुक्तम्, तदपेक्षया विशेषद्योतनार्थ इह तुशब्दः । यस्य तु श्रुतिरित्यर्थः । प्रसक्तस्य प्राप्नुवतः, अन्यस्य = कर्तुरन्यस्य कर्मकरणादेः नियमार्था = निवृत्त्यर्था । तथाहि—ईप्सिततममित्यस्य संबन्धिशब्दत्वेन संबन्ध्यन्तरांशे नित्यसापेक्षत्वाद् येनेप्सिततमं कर्म तस्याक्षेपस्तावत् सिद्ध इति करणादेरपीप्सिततमसाधनत्वप्रसङ्गे सति कर्तुरित्युच्यमानं कारकान्तरनिवृत्तितात्पर्यान्नियमार्थमिति द्वौ बहवो वा कर्तारो न निवारितास्तथा सत्यपि कारकान्तरनिवृत्तिर्विवक्षिता सिद्ध्यत्येवेति पदसाधुत्वनिर्देशार्थैवात्र कर्तृपदोत्तरविभक्तिप्रतिपाद्या संख्येति न विवक्षिता ।

नन्वेवमनयैव युक्त्या यजिना = यागेन अनियतकरणाक्षेपात् करणान्तरनिवृत्तितात्पर्येणोच्यमानं 'पशुना' इत्यप्यविवक्षितसंख्यं स्यादित्यनिष्टप्रसङ्ग इति चेन्न; वैषम्यात् ।

तथाहि—ईप्सिततममित्यस्य संबन्ध्यंशे नित्यसाकाङ्क्षार्थकसंबन्धिशब्दत्वेनावश्यं साधनसामान्याक्षेपेण कर्तुरप्याक्षेपे सिद्धे कर्तुरिति पुनः श्रुतिर्भवति । नैवं; यजेः साधनमात्राक्षेपेण करणाक्षेपोऽवश्यंभावी येन पशुनेति पुनः श्रुतिर्भवेत् । देवतोद्देशेन हविः

नैष दोषः। यथेप्सिततमस्य सम्बन्धिशब्दत्वादवश्यं साधनमात्राक्षेपे सिद्धे कर्तुरिति पुनः श्रुतिर्भवति, नैवं यजेः करणाक्षेपोऽवश्यंभावी। देवतोद्देशेन हविःप्रक्षेपमात्रस्य यज्यर्थत्वात्त्यज्यमानस्यैवाक्षेपो न करणस्येति करणाक्षेपनान्तरीयकत्वाभावान्न पशुनेति पुनः श्रुतिः, अपि त्वपूर्व एवायमङ्गविधिः। पशुरेवात्र त्यज्यमान इति चेत्, त्यागमात्रेऽपि तर्हि यजेः प्रयोगो दृश्यते—'अग्नौ सुष्ठु यजत' इति। अत्रापि हविष आक्षेप इति चेत्, एवं तर्हि दृष्टार्थानां क्रियाणां लोके भवेन्नाम सामर्थ्यात् साधनाक्षेपः। अदृष्टार्थासु तु शब्दप्रमाणकत्वाद् यजेतेत्यतो यागः कर्तव्य इत्येव प्रतीतेः पशोरपूर्वैव चोदनेयमिति यथाश्रुतसंख्याविवक्षैव न्याय्या। न च तस्मिन् यागे द्वाभ्यां प्रधानान्तरसिद्धिरस्ति। नापि यागान्तरे, एकेनैव सर्वस्य यागस्य सिद्धेः। ननु च कारकान्तरनिवृत्तितात्पर्ये कर्तुः 'सार्थाद्धीयते पथिक' इत्यपादानेन सार्थेनेप्सिततमस्य पथिकस्य कर्मसंज्ञाभावाद्धीयत इति कर्मणि लकारोत्पत्तिः कथम्? न चायं कर्मकर्तृविषयः, कर्मस्थक्रियाणां कर्मवद्भावस्योक्तेः। जहातिश्च त्यागमात्रवचनः कर्तृस्थक्रियः। सार्थो हि त्यजति पथिकम्. तं नानुगच्छति। ततश्च पथिकस्या-

---

प्रक्षेपमात्रस्य यज्यर्थत्वात् त्यज्यमानस्यैवाक्षेपो, न तु करणस्येति करणसामान्याक्षेपाविनाभूतत्वाभावान्न पशुनेति पुनः श्रुतिः। अपि त्वपूर्व एवायं करणविधिः।

नन्वत्र यजेर्हविःप्रक्षेपमात्रार्थकत्वेऽपि पशुरेवात्र हवीरूपस्त्यज्यमान इत्यस्त्येवात्रापि साधनसामान्याक्षेपपूर्विका पशुरूपस्य द्रव्यस्य पुनः श्रुतिः। न च नात्र हविःप्रक्षेपमात्रार्थको यजिः, किन्तु प्रक्षेपमात्रार्थकः 'अग्नौ सुष्ठु यजते' इतिवदिति वाच्यम्। दृष्टान्तेऽप्यत्र यजेःहविःप्रक्षेपार्थकत्वादिति चेत्; लौकिकवैदिकक्रिययोर्दृष्टार्थत्वादृष्टार्थत्वाभ्यां वैषम्यात्।

तथाहि—लोके दृष्टफलानां क्रियाणां साधनं विना फलं प्रत्यसामर्थ्याद् फलानुत्पत्तिसामर्थ्याद् भवेन्नाम तत्र क्रियाभिः साधनाक्षेपः। वेदे त्वदृष्टार्थासु क्रियासु शब्दमात्रप्रमाणकत्वाद् यजेत इत्यतो यागः कर्त्तव्य इत्येव प्रतीतेः साधनाक्षेपाभावे पशोरपूर्वैव चोदनेयमिति यथाश्रुतसंख्याविवक्षैव समुचिता। न च तस्मिन् यागे द्वाभ्यां पशुभ्यां प्रधानान्तरस्य = उद्देश्यत्वेन प्रधानीभूतस्य श्रुतात् स्वर्गरूपफलादन्यस्य फलस्य सिद्धिरस्ति, तत्र फलान्तरस्याश्रवणात्। नापि यागान्तरे द्वाभ्यां पशुभ्यां प्रधानस्य फलरूपस्य सिद्धिः। प्रतियागमेकेनैव पशुना सर्वस्य यागस्य शब्दप्रमाणबलेन सिद्धेः।

ननु 'कर्तुरीप्सिततमं कर्म' इत्यत्र कर्तृपदस्य कारकान्तरनिवृत्तौ तात्पर्यं प्रागुपवर्णितमिति 'सार्थाद् हीयते' इत्यत्रापादानेन सार्थेनेप्सिततमस्य पथिकस्य कर्मसंज्ञाया अभावाद् हीयत इति कर्मणि लकारसिद्धिः कथम्? न चात्र कर्मकर्तरि कर्मवद्भावेन लकार इति वाच्यम्। कर्मस्थक्रियाणां कर्मकर्तरि कर्मवद्भावस्य भाष्यादावुक्तेः। हाधातुश्च त्यागमात्रवचनः कर्तृस्थक्रियः। कृताकृतकटवत् त्यागक्रियाकृतविशेषाणां कर्मणि

पायस्तत्फलं न धातुवाच्यः। किञ्च पूर्वं कर्मणः सतः कर्तृत्वं कर्मकर्तृत्वम्। इह तु सार्थापेक्षमेव पथिकस्य कर्मत्वम्, स च सार्थोऽपादानमिति कथं तदपेक्षं कर्मत्वमित्येतदेव चोद्यते।

अत्रोच्यते—इह कारकाणां स्वव्यापारे स्वातन्त्र्यं सर्वेषामेव विद्यते, अकिञ्चित्करस्य क्रियाङ्गभावायोगात्। तथा च सामान्यसंज्ञापूर्वको विशेषसंज्ञासंभव इति सार्थस्य जहातौ स्वातन्त्र्यमपादानस्यानपगतमेव। सार्थो हि पथिकं जहदपाये साधनभावमनुभवति। यथा ज्वलन्ति काष्ठानि पाके। ततश्च सामर्थ्यात् प्रतीयमानं स्वातन्त्र्यं कर्मसंज्ञाहेतुरत्रोपपद्यते। यथा—प्रविश पिण्डीमिति। यद्येवं कर्मादीनामपि स्वव्यापारे स्वातन्त्र्यमस्त्येवेति तदाश्रयापि कर्मसंज्ञा स्यात्, 'माषेष्वश्वं बध्नाति' इत्यनर्थकं कर्तुरिति विशेषणम्। नैतदस्ति। सदपि तत्र स्वातन्त्र्यं प्रधानेन कर्त्रा न्यग्भावितमिति न कर्मसंज्ञाहेतुः। इह तु सार्थस्यापगमाङ्गे त्यागे जहातेर्वर्तनादपगमेऽपादानत्वं न्याय्यम्। त्यागे तु स्वातन्त्र्यं न विरुध्यत इति भवति तदपेक्षं कर्तृत्वम्।

नन्वेवमपि स्वातन्त्र्यस्यात्र न्यग्भावाभावे
'अपादानमुत्तराणि' इति ( वा० १।४।१ )
कर्तृसंज्ञया अपादानसंज्ञाया बाधनात् कर्तृतृतीयैव स्यात्। तद्यथा 'धनुषा विध्यति' इति करणे तृतीया। नैष दोषः। नान्तरीयकयोः शक्त्योः शब्दसामर्थ्यादुभयोः प्रतीतौ युगपद् विवक्षायां बाध्यबाधकभावः।

---

पथिकेऽनुपलब्धेः। सार्थो हि त्यजति पथिकं, न तु तमनुगच्छति, येन कृताकृतकटयोरिवानुगताननुगतपथिकयोर्विशेष उपलभ्येत, यतोऽत्र कर्मकर्तरि लकारः सिद्ध्यत। ततश्च पथिकस्य सार्थादपायस्त्यागफलं तच्च न धातुवाच्यम्, येनापेतानपेतपथिकयोर्विशेषमालक्ष्य कर्मकर्तरि लकारोऽत्र स्यात्।

किञ्च पूर्वं कर्मणः सतः पश्चात् क्रियासौकर्यविवक्षया कर्तृत्वं कर्मकर्तृत्वम्। इह तु सार्थापेक्षमेव पथिकस्य कर्मत्वम्, स च सार्थोऽपादानमेव, न तु कर्तेति कथमपादानापेक्षं पथिकस्य कर्मत्वं संभवीत्येतदपि चोद्यत इति चेदत्रोच्यते। इह सर्वेषामेव कारकाणां स्वव्यापारे स्वातन्त्र्यं विद्यते, किञ्चिदकुर्वतः कस्यापि साधनस्य क्रियाङ्गत्वासंभवात्। तथा च कर्तृसंज्ञा सर्वषामेव साधनानां सामान्यमपादानत्वादिकन्तु विशेषः, सामान्यसंज्ञापूर्वकश्च विशेषसंज्ञासंभव इति अपादानस्य सतोऽपि सार्थस्य जहातौ स्वातन्त्र्यमनपगतमेव। सार्थो हि पथिकं जहत् पथिकगते स्वावधिकापाये साधनभावमनुभवति। यथा प्रज्वलने स्वातन्त्र्येण कर्तृभूतानि काष्ठानि पाके करणभावमनुभवन्ति। ततश्च सार्थे सामर्थ्यात् प्रतीयमानं स्वातन्त्र्यमत्र कर्मसंज्ञाहेतुरुपपद्यते। यथा 'प्रविशपिण्डीम्' इत्यत्र सामर्थ्यात्प्रतीयमानं देवदत्तादिगतं भुजिक्रियाकर्तृत्वं पिण्ड्याः कर्मसंज्ञाभावे हेतुः।

**तथा हि—धनुषः शरनिस्सरणेऽवधिभावगमनं विना, व्यधने साधकतमता नोपपद्यत इति द्वयोर्युगपद् विवक्षायां करणसंज्ञया अपादानसंज्ञाबाधनात् तृतीया। कृतायामपि तृतीयायामस्यावधिभावः प्रतीयत एवेति अभिन्नफलत्वे सति तुल्यबलत्वात् परत्वेन व्यवस्था। 'सार्थेन हीयत' इति तूक्ते सार्थस्य कर्तृत्वमेव गम्येत, नापादानत्वम्, अपायस्याप्रतीतेः। सार्थेन हि पथिको हीयते। यावच्चासावपि ततोऽनपेतस्तावत्सार्थस्य कुतस्तं प्रत्यपादानत्वमिति तदभिधातुमपादाने पञ्चम्येवात्र न्याय्या। तत्र च त्यागफलरूपापायस्य प्रतीतेस्त्यागे स्वातन्त्र्यमवगम्यत एव।**

**ननु सार्थेन हीयत इत्यत्रापायो गम्यत एव। तथा हि—हीयत इति कोऽर्थः? त्यज्यत इति। यदि च ततः सार्थादपेयात् पथिकः, ततोऽस्य सार्थस्य तस्यां जहातिक्रियायां कर्तृत्वमुपपद्यते, नान्यथा। सत्यमेतत्; किन्तु सार्थेन हीयत इत्युक्ते संशयो जायते—किं सार्थेनात्मनः सकाशात् पथिकः परित्य-**

---

ननु यदि सामर्थ्यात् प्रतीयमानपि स्वातन्त्र्यं कर्मसंज्ञाप्रयोजकं स्वीक्रियते तदा कर्मादीनामपि स्वव्यापारे स्वातन्त्र्यमस्त्येवेति तदाश्रित्यापि स्यात्। तथा च 'माषेष्वश्वं बध्नाति' इत्यत्र कर्मणोऽश्वस्येप्सिततमानां माषाणामपि कर्मत्वं स्यादिति कर्तुरिति ईप्सिततमविशेषणं व्यर्थमिति चेन्न। सदपि माषभक्षणे अश्वस्य स्वातन्त्र्यं प्रधानेन कर्त्रा देवदत्तादिनाऽत्र न्यग्भावितम् = तिरस्कृतमिति नादो माषाणां कर्मसंज्ञा हेतुः। 'सार्थाद् हीयते पथिकः' इत्यत्र तु अपायाङ्गे त्यागे हाधातोर्वृत्तेऽपायप्रयुक्तमपादानत्वं सार्थस्य न्याय्यम्। त्यागे तु सार्थस्य स्वातन्त्र्यमपादानत्वेन सह विरुध्यत इति भवति त्यागापेक्षं कर्तृत्वम्।

नन्वेमपि 'सार्थाद् हीयते पथिकः' इत्यत्र सार्थगतस्यस्वातन्त्र्यस्य न्यग्भावाभावे—'अपादानमुत्तराणि कारकाणि बाधन्ते' इति परया कर्तृसंज्ञयाऽपादानसंज्ञाया बाधनात् कर्तृतृतीयैव स्यात्। यथा 'धनुषा विध्यति' इत्यत्र धनुषोऽपादानसंज्ञां बाधित्वा करणे तृतीयेति चेन्नैष दोषः। परस्परं व्याप्यव्यापकभावापन्नस्य शक्तिद्वयस्य शब्दसामर्थ्यादेकत्र प्रतीतौ युगपद् विवक्षायां बाध्यबाधकभावो भवति, अयौगपद्ये तु न कालभेदेनाविरोधसम्भवात्। तद्यथा प्रकृते शरनिस्सरणे धनुषोऽवधित्वप्राप्ति विना शरस्यव्यधने साधकतमता नोपपद्यत इति करणत्वापादानत्वशक्त्योर्युगपद् विवक्षायां परया करणसंज्ञया अपादानसंज्ञाया बाधनात् तृतीयैव। कृतायामपि तृतीयायां धनुषोऽवधिभावस्तु प्रतीयत एवेति द्वयोः संज्ञयोरेकफलत्वे सति तुल्यबलत्वेन = विप्रतिषेधपरत्वेन व्यवस्था। 'सार्थाद् हीयते' इत्यत्र तु द्वयोः संज्ञयोर्नैकफलत्वं, न वा तुल्यबलत्वम्। तथाहि—'सार्थेन हीयते पथिकः' इत्युक्तौ सार्थस्य कर्तृत्वमेव गम्येत, नापादानत्वम्, अपायस्य तदा प्रतीतेः। 'सार्थेन हि पथिको हीयते' यावच्च पथिकोऽपि सार्थान्नापगतस्तावत् सार्थस्य कुतः पथिकं प्रत्यपादानत्वमित्यपायमभिधातुमपादाने पञ्चम्येवात्र युक्ता। पञ्चम्यां कृतायान्तु त्यागफलस्यापायस्य प्रतीतेस्त्यागे स्वातन्त्र्यमवगम्यत एवेति न तदर्थं कर्तृतृतीयापेक्षा।

**ष्यते, किं वा अन्यतः सार्थेनापकृष्यत इति। अवधिभावे तु सार्थस्य पञ्चम्या प्रतिपादिते तस्यैव कर्तृत्वं नियतमवगम्यते। तस्मादनन्यथासिद्धावधिभावप्रतिपत्त्यर्थमपादानसंज्ञैव तत्र विधेया न तु विप्रतिषेधः फलभेदे सत्यतुल्यबलत्वादाश्रयितुं शक्यः। धनुषा विध्यति' इत्यत्र तृतीयायां कृतायां धनुषः शरावधिभावोऽपि प्रतीयते। तन्नान्तरीयकत्वात् साधकतमत्वस्येति अभिन्नफलत्वे सति तुल्यबलत्वेन परत्वाद् 'अपादानमुत्तराणि कारकाणि बाधन्त, इति युक्तम्। सार्थे तु विवक्षितार्थप्रतिपादनसामर्थ्यात् कर्तृसंज्ञा न प्रवर्तते। यद्येवं कर्तुरिति कर्तृसंज्ञकेनेप्सिततमस्य कर्मसंज्ञायां पथिकस्य तदभाव इति तदवस्थं चोद्यम्। नैतत्। कर्तृग्रहणस्य स्वातन्त्र्योपलक्षणार्थत्वात्।**

**न च स्वातन्त्र्यमात्रं कर्तृशब्देन लक्ष्यते, येन सकलकारकसाधारणत्वादस्य विषयव्यावृत्तिविषयेऽपि कर्मसंज्ञा प्रसज्येत। प्रधानभूतस्वातन्त्र्योपलक्षणादिति सामान्येन कर्तृसंज्ञकत्वात् कर्तृसंज्ञकत्वमनपेक्ष्य प्रधानभूतं स्वातन्त्र्यमात्रं यस्यास्ति कर्तृसंज्ञकस्याकर्तृसंज्ञकस्य च तस्योभयस्याप्येकवाक्यतया सङ्ग्रह इति वाक्यभेदानवतारात् सर्वं सुस्थम्। एवम्—**

---

ननु यथा सार्थाद् हीयते' इत्यत्र सार्थस्य त्यागे स्वातन्त्र्यमवगम्यते, तथा 'सार्थेन हीयते' इत्यत्रापि अपायो गम्येत एव। तथापि–'हीयते' इत्यस्य त्यज्यत इत्यर्थः। यदि च सार्थान्नापेयात् पथिकस्तदा तस्यां हानक्रियायां सार्थस्य कर्तृत्वं नोपपद्येत इत्यत्रापि परा कर्तृतृतीयैव धनुषा विध्यतीत्यत्रेव कुतो नेति चेत् सत्यमेतत्। किन्तु 'सार्थेन हीयते' इत्युक्तौ संशयो जायते, किं सार्थेनात्मनः सकाशात् पथिकः परित्यज्यते, किं वाऽन्यतः सार्थेन पथिकोऽपकृष्यत इति सार्थस्यापायं प्रत्यवधिभावो न नियमेन प्रतीयते। पञ्चम्या सार्थस्यावधिभावे तु प्रतिपादिते सार्थस्यैव कर्तृत्वं नियमेन प्रतीयते। तस्मात् सार्थस्यानन्यथासिद्धाववधित्वप्रतिपत्त्यर्थमपादानसंज्ञैव कर्तव्या न तु परविप्रतिषेधमाश्रित्य कर्तृसंज्ञा, प्रागुक्तरीत्या फलभेदे सति अतुल्यबलत्वात्। धनुषा विध्यतीत्यत्र तु तृतीयायां कृतायां धनुषः शरावधिभावोऽपि प्रतीयते। धनुर्निष्ठस्य व्यधने साधकतमत्वस्य तदविनाभूतत्वादिति एकफलत्वे सति तुल्यबलत्वेन परत्वाद् 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति न्यायाश्रयणं युक्तम्। सार्थे त्वनन्यथासिद्धावधिभावप्रतिपादनसामर्थ्यादपादानसंज्ञैवेति पराऽपि कर्तृसंज्ञा न प्रवर्तते।

नन्वेमपि कर्तुरीप्सिततममित्यस्य कर्तृसंज्ञकेनेप्सिततमस्य कर्मसंज्ञा इत्यर्थस्याभ्युपगमेन पथिकस्यापादानसंज्ञकेन सार्थेनेप्सिततमत्वात् कर्मसंज्ञाया असिद्धौ हीयते' इति कर्मणि लकारानुपपत्तिस्तदवस्थैवेति चेन्नैष दोषः। सूत्रे कर्तृग्रहणस्य स्वतन्त्रोपलक्षणार्थत्वात् सार्थस्य च त्यागे स्वातन्त्र्यस्य प्रागुपपादनेनादोषात्। कर्तृशब्देन च नात्र स्वातन्त्र्यमात्रं लक्ष्यते किन्तु प्रधानीभूतं स्वातन्त्र्यम्। तेन स्वव्यापारे स्वातन्त्र्यस्य सकलकारकसाधारणत्वात्तदादाय अस्य विषयत्वव्यावृत्तिविषयेऽपि कर्मसंज्ञा न प्रसज्यते।

'लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० ३।४।६९ )

इति वचनात् भावकर्मकर्तृषु सामान्येन विधानात् परस्मैपदात्मनेपदयोरविशेषेण प्रसक्तौ भावकर्मणोः 'शेषात् कर्तरि' इति नियमार्था पुनः श्रुतिर्निवृत्तितात्पर्यादविवक्षितसंख्येति प्रत्ययनियमपक्षे नियम्यमानत्वात् प्रत्ययस्य प्राधान्येऽर्थानां गुणत्वाद् गुणेऽपि संख्या नाङ्गीक्रियतेऽत्रेति द्विबहुष्वपि कर्मादिष्वात्मनेपदपरस्मैपदसिद्धिरत्रोदाहरणत्वेन योजनीया। अयमेव ह्यस्य मुख्यो विषयः, पूर्वश्रुत्यैव विधावुपादानात्, पुनश्शब्देन नियमार्थमेवानुवादात्। तथा च 'यजेत पशुना' इत्यादावतिप्रसङ्गो न भवति। पशोरुत्पत्तिवाक्यं किलेदं प्रथममित्यविषय एवायमस्य श्लोकस्य। एवम्—

'सरूपाणामेकशेषः' ( पा० १।२।६४ )

इत्यत्र शिष्यमाणपरे वाक्ये विरूपनिवृत्त्यर्थत्वाद् सरूपश्रुतेः श्रुतसंख्याऽविवक्षायां द्वयोरप्ये ( रीत्ये ) कशेषः सिद्ध्यति ॥ ८९ ॥

गतमदः। उक्तमिदम्—

'समासप्रत्ययविधौ यथा निपतिता श्रुतिः।
गुणानां परतन्त्राणां न्यायेनैवोपपद्यते ॥' इति।

( वा० का० ३ जा० ८७ )

तथा च प्रातिपदिकेभ्य एकस्या विभक्तेरभावात्

'एकविभक्ताविति चेन्नाभावाद्विभक्तेः' ( वा० १।२।६४ )

इति प्रातिपदिकैकशेष एकविभक्तिनिमित्तो दूषितः। अत्र तु भाष्ये

'अथवा पुनरस्त्वेकविभक्तावेकशेषः'

इति स एव सिद्धान्तितः, तत्कथमुपपद्यत इत्युपपादयितुमाह—

---

एवञ्च सकलकारकस्य सामान्येन स्वव्यापारमादाय कर्तृसंज्ञकत्वमनपेक्ष्य प्रधानभूतं स्वातन्त्र्यमात्रं यस्य कर्तृसंज्ञकस्याकर्तृसंज्ञकस्य वाऽस्ति तस्योभयस्यापि कर्तुरिति कर्तृपदेन सग्रह इति न वाक्यभेदो न वा 'सार्थाद् हीयते' 'धनुषा विध्यति' इत्यादौ अव्याप्त्यतिव्याप्ती इति सर्वमुपपन्नम्। एवं 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति वचनाद् भावकर्मकर्तृषु सामान्येन लस्य विधानात् तत्र परस्मैपदात्मनेपदयोरप्यविशेषेण प्राप्तौ सत्यां 'शेषात् कर्तरि परस्मैपदम्' इत्यत्र भावकर्मणोर्निवृत्त्यर्था कर्तरीति पुनः श्रुतिर्निवृत्तिमात्रपरत्वेनाविवक्षितसंख्याकेति प्रत्ययनियमपक्षेऽत्र प्रत्ययस्य नियम्यमानत्वेन प्राधान्ये कर्त्रादिरूपाणामर्थानां गुणत्वाद्, गुणेऽपि कर्त्रादौ संख्या नाङ्गीक्रियत इति द्विबहुष्वपि कर्मादिषु आत्मनेपदपरस्मैपदसिद्धिरत्र मुख्यमुदाहरणम्। कर्मणि च, भावे च' इति पूर्वश्रुत्यैव कर्मकर्त्रादीनां विधावुपादानात् कर्तरीति पुनः शब्देन नियमार्थमेवानुवादात्। एवञ्च 'पशुना यजेत' इत्यादौ गुणे संख्याया अविवक्षारूपोऽतिप्रसङ्गो न भवति। अस्य वाक्यस्य पशोरुत्पत्तिविधित्वेन पशुश्रुतेः प्रथममेवोपादानेन पुनः श्रुतित्वाभावेनास्य श्लोकस्याविषयत्वात्। एवं 'सरूपाणामेकशेष एकविभक्तौ' इत्यत्र वाक्ये एकशेषस्य

सरूपसमुदायात्तु विभक्तिर्या विधीयते ।
एकस्तत्रार्थवान् सिद्धः समुदायस्य वाचकः ॥ ९० ॥

सहविवक्षायामेकशेषवचनात् परस्परापेक्षावयवार्थोपपादितसमुदायार्थप्रादुर्भावात् सरूपप्रातिपदिकविषयेऽवयवानां समुदायस्य च पृथगेवार्थवत्त्वाद् भिन्नैव प्रातिपदिकसंज्ञा । ततश्च समुदायात् प्रातिपदिकादस्त्येका विभक्तिः
'ङ्याप्प्रातिपदिकात्' ( पा० ४।१।१ )
इत्यत्र संख्याविवक्षायामपि ।

ननु च समुदायात् प्रातिपदिकादिवावयवेभ्योऽपि प्रातिपदिकेभ्यो विभक्तेरुत्पत्तिरत्र स्यात् । तथा च समुदायविभक्तेरन्त्यावयवविभक्त्या व्यवधानात् कथं

---

विधेयत्वेन प्राधान्यात्. सरूपाणामिति सरूपश्रुतेर्विरूपनिवृत्त्यर्थत्वेन गुणत्वात्, श्रुताया बहुत्वसंख्याया अविवक्षणेन द्वयोरपि सरूपयोरेकशेषः सिद्ध्यतीत्यवधेयमिति ॥ ८९ ॥

गुणे संख्या विवक्ष्यत इत्युत्सर्गः । क्वचित्तु गुणेऽपि संख्या न विवक्ष्यते । यत्र प्रधानस्याविवक्षितसंख्यत्वं निश्चीयत इति च विचारद्वयं समाप्तम् । अथैष विचारः प्रस्तूयते ।

समासप्रत्ययविधौ यथा निपतिता श्रुतिः ।
गुणानां परतन्त्राणां न्यायेनैवोपपद्यते ॥ ( वा० का ३ जा० ८७ )

इतीदमत्रैव प्रकरणे प्रागुक्तम् । एतत्पद्यनिर्धारितन्यायवशाच्च विधेयत्वेन प्रधानीभूतप्रत्ययमनुरुध्य प्रकृतेरावृत्त्या प्रत्येकं 'ङ्याप् प्रातिपदिकात्' प्रत्येकं वा प्रातिपदिकेभ्य एकैकः प्रत्यय इति प्रातिपदिकेभ्यो बहुभ्य एकस्या विभक्तेरभावः । अत एव 'एकविभक्ताविति चेन्नाभावाद् विभक्तेरिति एकविभक्तिनिमित्तः प्रातिपदिकानामेकशेषो दूषितः । अत्र तु भाष्ये—'अथवा पुनरस्त्वेकविभक्तावेकशेषः' इत्येवं स एव पक्षः सिद्धान्तितः । तत् कथमुपपद्यत इति मनसि निधायोपपादयितुं प्रक्रमते—सरूपसमुदायात्तु इति ।

अस्यार्थः—या तु सरूपसमुदायात् = सरूपयोः समुदायात् सरूपाणां वा समुदायात्, राम राम औ इति, राम राम राम जस् इति विभक्तिर्विधीयते । तत्रैकोऽर्थवतोः समुदायः अर्थवतां वा समुदायः, समुदायार्थमादायर्थवान् समुदायस्यार्थवत्समुदायस्य वाचकः सिद्धः । ततश्च समुदायादेकविभक्तिसिद्धिरिति भावः । अयं तु निगूढोऽभिसन्धिः । एकशेषस्य द्वन्द्वापवादत्वेनोत्सर्गापवादयोः समानविषयकत्वेन द्वन्द्वस्येवैकशेषस्यापि सहविवक्षायामेव संभवेन परस्परसापेक्षैरवयवार्थैरुपपादितत्वेन समुदायार्थस्यापि संभवात् सरूपप्रातिपदिकविषयेऽवयवानां समुदायस्य च प्रातिपदिकसंज्ञा । ततश्च सरूपसमुदायात् प्रातिपदिकादस्ति वृक्षप्रचलनन्यायेनैका विभक्तिः 'ङ्याप् प्रातिपदिकात्' इत्यत्र प्रातिपदिके एकत्वसंख्याविवक्षायामपि सरूपसमुदायस्यैकप्रातिपदिकत्वात् ।

ननु सरूपसमुदायस्थले यथा सरूपसमुदायात् प्रातिपदिकाद् विभक्तिस्तथाऽवयव-

'एकविभक्तौ' इत्यस्योपपत्तिः। अथ सुबन्तानां सरूपाणामेकशेषो न प्रातिपदिकानामिति नास्ति व्यवधानम्, एवमपि योऽसावेकः सुबन्तः शिष्यते तदीया विभक्तिरपि शिष्यत इति सा समुदायविभक्तिश्चेति द्वे श्रूयेयाताम्।

अत्रोच्यते—समुदायावयवसन्निधाने समुदायकार्यमेव प्रवर्तते नावयवकार्यम्। समुदायपारतन्त्र्यादवयवानाम्। अस्ति च समुदायकार्येण विभक्त्याख्येनात्रावयवानामनुग्रहः। तथा हि—समुदायादुत्पद्यमाना विभक्तिरवयवार्थगतमपि संख्याविशेषं विभजति स्पष्टम्। अवयवार्थानामेव परस्परापेक्षितरूपाणां समुदायार्थत्वादिति लाघवेनैकेनैव प्रयत्नेन तन्त्रलक्षणेनावयवानुग्रहः कृतो भवतीति नावयवेभ्यः पृथग् विभक्त्युत्पत्तिः। तद्यथा—पपाचेत्यत्र समुदायैकाच एव द्विर्वचनेनावयवैकाचामप्यनुग्रहः। विरूपसमुदायविषये तु सहविवक्षासम्भवेऽपि न समुदायार्थप्रादुर्भावः। तथा ह्युक्तम्—

---

प्रातिपदिकेभ्योऽपि विभक्तिः स्यात्। एवञ्च समुदायादुत्पन्नविभक्तेरन्त्यावयवरूपप्रातिपदिकविभक्त्या व्यवधानात् कथमेकविभक्ताविरयस्योपपत्तिः। यदि तु सुबन्तानां सरूपाणामेकशेष इति पक्षः समाश्रीयते तदाऽपि योऽसावेकः सुबन्तः शिष्यते तदीया विभक्तिरपि शिष्यत इति सा समुदायविभक्तिश्चेति द्वे श्रूयेयातामिति चेदत्रोच्यते। समुदायावयवसन्निधानेऽवयवानां समुदायपारतन्त्र्यात् समुदायकार्यमेव प्रवर्तते; नावयवकार्यम्। तद्यथा 'पपाच' इत्यत्र समुदायैकाच एव द्विर्वचनेनावयवैकाचामप्यनुग्रह इति समुदायैकाच एव द्विर्वचनम्। अस्ति च प्रकृतेऽपि सरूपसमुदायरूपप्रातिपदिककार्येण विभक्तिरूपेणावयवप्रातिपदिकानामप्यनुग्रहः। तथाहि—समुदायरूपात् प्रातिपदिकादुत्पद्यमाना विभक्तिरवयवार्थगतमपि संख्याविशेषमभेदैकत्वसंख्यारूपं स्पष्टमवयवार्थेषु विभज्य बोधयति। परस्परसापेक्षत्वेऽवयवार्थानामेव समुदायार्थत्वादिति लाघवादेकेनैवानेकसंख्याबोधकैकविभक्तिरूपेणार्थतन्त्रलक्षणेन प्रयत्नेनावयवप्रातिपदिकानुग्रहः कृतो भवतीति नावयवेभ्यः पृथग् विभक्त्युत्पत्तिः। एवं समानार्थकविरूपविषयेऽपि घट-कलश-कुम्भ जस् इत्यत्रैकविभक्तावेकशेषो बोध्यः। अत एवोक्तम्—'विरूपाणामपि समानार्थानामेकशेष' इति। भिन्नार्थकविरूपसमुदायविषये तु आम्रप्लक्षन्यग्रोधानां सह-विवक्षासंभवेऽपि द्वन्द्व एव, नैकशेषः। तत्रावयवार्थानां भिन्नजातीयत्वेनार्थक्रियाकारिसमुदायार्थप्रादुर्भावे उपादानसंभवात्। सजातीयेभ्य एव तन्तुभ्यः पटजन्म, सजातीयेभ्यश्च तृणेभ्यः कटजन्म दृष्टम्, न तु विजातीयेभ्यस्तन्तुतृणकपालेभ्यः कस्यचिदर्थवतः समुदायस्य जन्म दृष्टम्। एवञ्च द्विविधः प्रातिपदिकसमुदायः प्रकृते, सरूपावयवारब्धो, विरूपावयवारब्धश्च। तत्र सरूपावयवारब्धोऽर्थवान्, विरूपावयवारब्धश्चापेक्षाबुद्धिविशेषविषयत्वरूपसाहित्यविशिष्टोऽनर्थक इति न तत्र समुदायादेकविभक्तिरिति तत्रावयवेभ्य एव विभक्त्युत्पत्त्या द्वन्द्व एव, नैकशेषः। तथाहि उक्तम्—याभ्याञ्चैकमनेकार्थं ताभ्यामेवापरमिति।

अस्यार्थः—याभ्यामेव द्वाभ्यामवयवाभ्यां सरूपाभ्यामेकं समुदायरूपं प्राति-

'याभ्यां चैकमनेकार्थम् ताभ्यामेवापरम्' इति ।

अवयवार्थानां प्राधान्यात् प्रत्ययवयवं तत्र विभक्त्युत्पत्तौ द्वन्द्वः सुबन्तानां सिद्धयति ।

ननु च सरूपविषयेऽपि परस्परापेक्षैवावयवानां समुदायप्रादुर्भावबीजम्, न तु सरूपार्थसमवेतजातिसम्भवात् समुदायस्य, तद्वाचकत्वेऽभिन्नसमुदायार्थोपपत्तिः, जातिपदार्थदर्शने प्रत्याख्यानादेकशेषस्य । किञ्च जातेरभिधेयत्वे द्विवचनबहुवचनानुपपत्तिः, एकत्वात्तस्याः । कामं बहुवचनं तान्त्रिकं भवेत्, न तु बहुद्रव्यावसायः । तस्मादुद्भूतावयवार्थभेदः समुदायोऽपेक्षितेतरेतरावयवार्थाभिधायित्वात् सरूपविरूपविषयेऽपि समान एव । एवं तर्हि सुबन्तानां द्वन्द्ववचनसामर्थ्यात्तन्त्रेण विरूपसमुदायादेकाविभक्तिर्नोत्पद्यते । सरूपविषये तु न किञ्चिद्बाध्यत इति तत्रैवायं न्यायः । यदि वा व्यक्तिपदार्थनयेऽप्यारब्धे एकशेषे जातिरनभिधीयमानापि संबन्धव्युत्पत्त्यर्थमवश्यमुपलक्षणत्वेनापेक्षणीयेति तन्निबन्धना सरूपाणां सङ्घटना प्रातिपदिकानाम् । विरूपाणां त्वेकक्रियाविषयत्वेनापेक्षितसुबन्तावस्थायां संघटनम्, न प्रातिपदिकावस्थायां परस्परंसंबन्ध इति सुबन्तानामेव द्वन्द्वः । वर्णानां तु निरर्थकत्वाद् 'वनं धनम्' इत्यादौ

---

पदिकमनेकार्थकम्, ताभ्यामेव द्वाभ्यां विरूपाभ्यामवयवाभ्यामपरमपि समुदायरूपं प्रातिपदिकमनेकार्थम् ।

इयांस्तु विशेषः । पूर्वत्र समुदायार्थस्य सरूपावयवारब्धस्य वस्तुभूतत्वेन प्राधान्यम्, अवयवार्थानान्तु तत्र गुणीभाव इति समुदायादेकविभक्तावेकशेषः । उत्तरत्र तु समुदायार्थास्यापेक्षाबुद्धिविशेषकल्पितत्वेन गुणीभाव इत्यवयवार्थानां प्राधान्यात् प्रत्ययवयवं तत्र विभक्त्युत्पत्तौ सुबन्तानां द्वन्द्वः सिद्धयति । अस्मिन् वाक्ये सारूप्यवैरूप्याभ्यामवयवानां भेदेऽपि द्वित्वसंख्याकृतमभेदमादाय यत्तच्छब्दाभ्यामैक्येन निर्देशः ।

ननु सरूपविषये विरूपविषयेऽपि च अवयवानां परस्परापेक्षैव समुदायार्थप्रादुर्भावबीजम्, न तु सरूपविषये समुदायार्थस्य सरूपार्थगतजातिमत्त्वात् सरूपसमुदायस्य तादृशसमुदायार्थवाचकत्वेनैकसमुदायार्थोपपत्तिरिति जातिः पदार्थ इति पक्षे एकशेषस्य प्रत्याख्यानात् ।

किञ्च जातेरभिधेयत्वे तस्या एकत्वेन द्विवचनबहुवचनानुपपत्तिः । जातिपदार्थपक्षेऽपि शब्दतन्त्रस्थले 'अक्षा भज्यन्तां, भुज्यन्तां, दीव्यन्ताम्', इत्यादौ तान्त्रिकम् = शब्दतन्त्रप्रयुक्तम् बहुवचनं कामं भवतु न तु ततोऽन्यत्रात्र पक्षे विरूपैकशब्दतो बहुद्रव्यावगमः । तस्मात् परस्परापेक्षितावयवार्थाभिधायित्वेनोद्भूतावयवार्थभेदः समुदायः सरूपशब्दविषयेविरूपशब्दविषयेऽपि चोभयत्रापि समान एवेति कुतो विरूपविषये द्वान्द्वावतार इति चेत्, एवं तर्हि सुबन्तानां द्वन्द्ववचनसामर्थ्यात् संख्याविषयेऽर्थतन्त्रमाश्रित्य विरूपसमुदायादेका विभक्तिर्नोपपद्यते । सरूपविषये तु सुबन्तानां द्वन्द्ववचनबाधवत् न किञ्चिद् बाध्यत इति तत्रैव संख्याविषयेऽर्थतन्त्ररूपन्यायप्रवृत्त्या सरूपसमुदायादेकाविभक्तिरुत्पद्यते ।

**समुदायस्यैवार्थवात्वान्नायं तन्त्राख्यो न्यायः संभवतीत्यतः सत्यां प्रातिपदिकसंज्ञायामर्थवद्ग्रहणेऽवयवेभ्योऽप्यनर्थकेभ्यो विभक्त्युत्पत्तौ नलोपादिचोद्योद्भावनं युक्तमेव। अप्रयोगसमवायिनोऽपि च प्रातिपदिकस्य परस्परार्थापेक्षा प्रयोक्त्राकाङ्क्षायत्ता पदवदुपचर्यंत एव। न हि पदमपि, वाक्यमपि वा अप्रयोगसमवायि स्वतः किञ्चिदपेक्षते। प्रयोक्त्रधीना ह्याकाङ्क्षापरपर्यायेच्छा योग्येषु शब्देष्वध्यारोप्यते। असति च प्रातिपदिकस्यापेक्षणे नियतक्रियाविषयसाधनभावापरिज्ञानाद् द्वितीयाद्यनुपपत्तेः पदमेव नावतिष्ठेत इत्यपेक्षासिद्धौ समुदायार्थोपपत्तिः। सामर्थ्ये च समासविधानात् प्रातिपदिकार्थानामपेक्षानुमानम्। सर्वत्रैव च प्रकृतिप्रत्ययादीनामपोद्धारार्थेनार्थवत्ताभ्युपगमे परस्परमन्वयोपपत्तिः। तदेवं समुदायार्थोपपत्तौ तस्य वाचकः प्रातिपदिकसमुदायोऽर्थवत्त्वात् प्रातिपदिकसंज्ञकः सिद्धः। समासग्रहणेन तुल्यजातीयविषयत्वान्नियमस्य, सुबन्तसमुदायस्य वाक्यस्यैव प्रातिपदिकसंज्ञा निवार्यत इत्येकविभक्तौ प्रातिपदिकैकशेषः समर्थितः संख्याविवक्षायामपि॥ ९०॥**

**एवं च कृत्वा भूयान् प्रधानस्यानुग्रहः कृतो भवतीत्याह—**

---

यद्वा व्यक्तिपदार्थपक्षे सरूपसमुदायादेकाविभक्तिरुत्पत्तुमर्हति, न तु विरूपसमुदायात्। तथाहि—व्यक्तिपदार्थपक्षे आरब्धेऽपि एकशेषे जातिरनभिधीयमानाऽपि स्वाश्रयद्रव्यरूपाणामवयवानां परस्परं संबन्धग्रहोपपत्तयेऽवश्यं स्वाश्रयोपलक्षणत्वेनापेक्षणीयेति जातिनिबन्धना सरूपाणां प्रातिपदिकानां संघटना। विरूपाणान्त्ववयवानामेकक्रियाविषयत्वेनैकार्थीभावोपपत्तयेऽपेक्षितसुबन्तावस्थायां संघटनम्, न तु प्रातिपदिकावस्थायां तेषां परस्परं संबन्धस्तदा तेषामेकक्रियासंबन्धाभावादिति सुबन्तानामेव द्वन्द्वः। प्रातिपदिकावयवानां वर्णानान्तु निरर्थकत्वाद् 'वनं धनम्' इत्यादौ वर्णसमुदायस्यैवार्थवत्त्वात् सरूपप्रातिपदिकसमुदायविषय इव अत्र समुदायोत्तरजातविभक्त्याऽवयवार्थानुग्रहाभावेन नायं तन्त्राख्यो न्यायः संभवतीत्यतोऽर्थवत् सूत्रेऽर्थवद्ग्रहणाभावे द्वन्द्वावयवानामिव प्रत्येकं वर्णानां सत्यां प्रातिपदिकसंज्ञायामवयवेभ्योऽप्यनर्थकेभ्यो विभक्त्युत्पत्तौ तत्र तत्र नलोपाद्यापत्तिरूपचोद्योद्भावनं समुचितमेव।

ननु सरूपप्रातिपदिकसमुदायविषयेऽवयवप्रातिपदिकानामेकजात्युपलक्षितपरस्परार्थापेक्षत्वेन समुदायभावोपपत्तिरित्युक्तं प्राक्, तन्न युज्यते, सुबन्तानामेव प्रयोगसमवायित्वदर्शनात्, प्रातिपदिकानाञ्च तददर्शनेन परस्परार्थापेक्षाया अनुपपत्तेरिति चेदत्रोच्यते। प्रयोगासमवायिनामपि प्रातिपदिकानां प्रयोक्त्राकाङ्क्षाधीना परस्परार्थापेक्षा पदवत् खण्डवाक्यवच्चारोप्यत एव। नहि वाक्यप्रयोगासमवायिपदमपि, खण्डवाक्यमपि वा स्वतः पदान्तरं वा किञ्चिदपेक्षते, किन्तु प्रयोक्त्राकाङ्क्षामाश्रित्यैव। प्रयोक्तृसमवेता हि आकाङ्क्षापरपर्यायेच्छा परस्परान्वययोग्येषु पदेषु खण्डवाक्येषु वा अध्यारोप्यते। किञ्च प्रातिपदिकस्यासति प्रातिपदिकान्तरापेक्षणे पदान्तरापेक्षणे च नियतस्य क्रियाविषयस्य साधनभावस्यापरिज्ञानाद् द्वितीयाद्यनुपपत्तेः पदमेव न व्यवतिष्ठेतेति परस्परं पदान्तरस्य

**प्रत्ययस्य प्रधानस्य समासस्यापि वा विधौ ।**
**सिद्धः संख्याविवक्षायां सर्वथानुग्रहो गुणे ॥ ९१ ॥**

**'ङ्याप्प्रातिपदिकात्' इति प्रकृत्यनुवादेनापूर्वस्य प्रत्ययस्य विधौ विवक्षितायामपि संख्यायां गुणे केवलात् प्रातिपदिकात् समुदायाच्चोत्पत्तिः तस्य सिद्धेति सर्वथा सर्वेण प्रकारेण, प्रधानस्य प्रत्ययस्य सर्वप्रातिपदिकरूपविषयव्याप्तिलक्षणः अनुग्रहः सिद्धः। तथा 'सुप्सुपा' इति समासस्यापि प्रधानस्य विधौ विवक्षितायामपि गुणे संख्यायां द्वन्द्वेऽनेकग्रहणात् बहूनां समासः करिष्यते । बहुव्रीहौ त्वनेकपदावयवे**

---

चापेक्षासिद्धौ समुदायार्थोपपत्तिः। किञ्च पदानामेकार्थीभावरूपसामर्थ्ये सति परस्परं समासो विधीयते, तेषां परस्परापेक्षाया अभावे च सामर्थ्यासंभवात् प्रातिपदिकार्थानां परस्परापेक्षाया अनुमानम्। किञ्च सर्वत्रैव प्रकृतिप्रत्ययादीनामपोद्धारार्थेनार्थवत्ताऽभ्युपगमे परस्परापेक्षयैव परस्परमन्वयोपपत्तिः।

तदेवं सरूपप्रातिपदिकसमुदायस्थले समुदायार्थोपपत्तौ तस्य वाचकः सरूपप्रातिपदिकसमुदायोऽर्थवत्त्वात् प्रातिपदिकसंज्ञकः सिद्धः। कृत्तद्धितसमासाश्चेति सूत्रे समासग्रहणेन सरूपप्रातिपदिकसमुदायस्य प्रातिपदिकसंज्ञावारणं तु न, नियमस्य सजातीयविषयत्वात्। साजात्यञ्चार्थवत्सुबन्तसमुदायत्वेनेति। सुबन्तसमुदायस्य वाक्यरूपस्यैव प्रातिपदिकसंज्ञा वार्यत इति सरूपप्रातिपदिकसमुदायादेकविभक्तौ प्रातिपदिकैकशेषपक्षो गुणे संख्याविवक्षायामपि समर्थित इति ॥९०॥

एवञ्च कृत्वा ङ्याप्प्रातिपदिकादित्यत्र प्रत्ययविधौ, सुप्सुपेत्यत्र समासस्य वा विधौ गुणे संख्याविवक्षायामपि प्रत्ययरूपस्य समासरूपस्य वा प्रधानस्य सर्वविषयव्याप्तिलक्षणः प्रधानस्य भूयाननुग्रहः कृतो भवतीत्याह-प्रत्ययस्येति।

अस्यार्थः—ङ्याप्प्रातिपदिकादित्यत्र प्रत्ययस्य, वा = अथवा, सुप्सुपेत्यत्र समासस्य वा सर्वविषयव्याप्तिलक्षणोऽनुग्रहः सिद्ध इति।

अयं भावः—ङ्याप्प्रातिपदिकादित्यत्र प्रकृतेरन्यतः सिद्धत्वात् तदनुवादेनापूर्वस्य प्रत्ययस्य विधौ गुणे प्रकृतौ संख्याविवक्षायामपि एकत्वसंख्यावत्त्वेन केवलात् प्रातिपदिकात् सरूपप्रातिपदिकसमुदायाच्च प्रत्ययस्योत्पत्तिः सिद्धेति सर्वथा = सर्वप्रकारेण प्रधानस्य प्रत्ययस्य सर्वसरूपप्रातिपदिकसमुदायरूपविषयव्याप्तिलक्षणोऽनुग्रहः = उपकारः सिद्धः। तथा सुप्सुपेति समासस्यापि प्रधानस्य विधौ गुणे संख्याविवक्षायामपि द्वन्द्वविधायकसूत्रेऽनेकग्रहणसामर्थ्याद् बहूनां सुबन्तानां द्वन्द्वसमासः करिष्यते। अनेकमन्यपदार्थे' इति विहिते बहुव्रीहावपि अनेकपदसामर्थ्यादनेकपदावयवे यः स्वरसमासान्तपुंवद्भावेषु दोषः समापतति, सोऽवयवे तत्पुरुषसमासस्य समाश्रयणेन निवारित इति नास्ति किमप्यनिष्टम्। तत्र समासान्तपुंवद्भावयोर्दोषाभावो यथा—जरच्चित्रगवीकः। अत्र

**स्वरसमासान्तपुंवद्भावेषु दोषोऽवयवतत्पुरुषाश्रयेण निवारित इति नास्त्यनिष्टम् । अविवक्षितायां संख्यायां बहूनामव्यवस्थितत्वान्नियमेन समासो न विज्ञायेतेत्युपरोधस्तस्य कृतः स्यात् । उत्तरपदे द्विगुविधानाच्च लिङ्गात् सुसूक्ष्मजटकेशादावनेकपदो बहुव्रीहिः सिद्धः । द्वयोश्च द्वन्द्वे कृते पुनरपरेण सह द्वन्द्व इत्यनेकवचनमुपसर्जनार्थमित्युक्तम् ॥ ९१ ॥**

**एवं पूर्वं प्रातिपदिकार्थभूतां जातिं निरूप्य विभक्त्यर्थोऽपि संख्याजातिरित्युक्त्वा तत्प्रसङ्गेन विवक्षाविवक्षे विचार्य, इदानीं तस्यामेव जातौ यदधिकं विचार्यमवशिष्यते तदेव विचारयितुमाह—**

---

चित्रा गौश्चित्रगवी, जरती चित्रगवी यस्य स, जरच्चित्रगवीक इति तत्पुरुषगर्भो बहुव्रीहिरित्युभयत्र पुंवद्भावः समासद्वयनिबन्धनः सिद्धः । गर्भे तत्पुरुषस्वीकाराच्च 'गोरतद्धितलुकि' इति समासान्तश्च सिद्धः । स्वरे दोषाभावस्यापीदमेवोदाहरणम् । तथाहि—अत्र यदि नियमेन तत्पुरुषगर्भोऽनेकपदाश्रयो बहुव्रीहिर्न स्यात्तदा बहुव्रीहिप्रयुक्तः पूर्वपदप्रकृतिस्वरोऽत्र नियमेन न स्यात् । किन्तु जरच्चित्रगुरिति बहुव्रीहिगर्भे तत्पुरुषे समासान्तोदात्तत्वमेवात्र स्यात् । अनेकमिति गुणे संख्याया अविवक्षायां तु अनेकत्वस्याव्यवस्थितत्वान्नियमेन बहूनां समासो न विज्ञायेतेत्युपरोधः = प्रतिबन्धः बहूनां समासस्य कृतः स्यादिति स्वरादिषु प्रागुक्तो दोषः । तद्धितार्थोत्तरपदसमाहारे च' इत्युत्तरपदे द्विगुविधानरूपादनेकपदावयवकसमासलिङ्गाच्च सुसूक्ष्मा जटा येष्वीदृशाः केशा यस्येति विग्रहे सुसूक्ष्मजटकेशादौ अनेकपदावयवो बहुव्रीहिः सिद्धः ।

नन्वेवमपि द्वन्द्वेऽनेकवचनं व्यर्थम्, घटपटकटमठा इत्यत्रापि सुप्सुपेत्यनुवृत्त्यैव द्वन्द्व समाससिद्धेः । तथाहि—घटपटौ, कटमठाविति द्वयोर्द्वयोर्द्वन्द्वे कृते द्वयोर्द्वन्द्वपदयोः पुनः समासे रूपसिद्धेरिति चेन्न । घटस्य पटस्य कटस्य मठस्य च समूहो घटपटकटमठमित्यत्र समूहे उपसर्जनानां समासे क्रियमाणेऽनेकग्रहणं विना रूपासिद्धेरित्येवमुपसर्जनार्थं द्वन्द्वेऽनेकग्रहणमिति उक्तमन्यत्र ।

न चात्रापि घटपटस्य, कटमठस्य च समूह इति समाहारद्वन्द्वयोर्द्वयोः समाहारद्वन्द्वे रूपसिद्धिरनेकग्रहणं विनाऽप्यस्त्येवेति वाच्यम् । एवं विवक्षायां रूपसिद्धावपि प्रागुक्तविवक्षायां रूपासिद्धेः । इदन्तु प्रयोजनमितरेतरयोगद्वन्द्वेऽपि संभवतीति व्यर्थः सुदूरनुधावनप्रयासः श्रीहेलाराजस्येत्यवधेयम् ॥ ९१ ॥

एवं प्राक् प्रातिपदिकार्थत्वेन जातिं निरूप्य विभक्त्यर्थोऽपि संख्यागता जातिरेवेत्युक्त्वा तत्प्रसङ्गेन तस्या गुणे, प्रधाने च यथासंभवं विवक्षाऽविवक्षे विचार्य, इदानीं तस्यामेव जातावधिकं विचारयितुमाह—अभेदरूपमिति ।

अस्यार्थः—व्यक्तनामभेदरूपम् = अभेदात्मकं व्यक्तीनामव्यतिरिक्तमवयवसंस्थानरूपं स्वरूपं तं सादृश्यम्, व्यक्तीनामभेदो रूप्यते निरूप्यते येन तद् व्यक्तीनामेकप्रत्ययवमर्श-

**अभेदरूपं सादृश्यमात्मभूताश्च शक्तयः ।**
**जातिपर्यायवाचित्वमेषामप्युपवर्ण्यते ॥ ९२ ॥**

**इयमत्र शङ्का । अन्वयविज्ञानोन्नीयमानसद्भावा जातिरित्युद्घोष्यते । सा च व्यक्तिभ्यो व्यतिरेकेणात्मानं नो दर्शयति । तदेता एव व्यक्तयः सादृश्यादेकाकारप्रत्ययप्रसवहेतवः प्रकृत्यैवैकप्रत्यवमर्शजननसामर्थ्यादध्यासाद्वा सन्तु, किमपरेण सामान्येन कृत्यम् । तदेतदभ्युपगच्छति । अभेदरूपम् अव्यतिरिक्तं व्यक्तीनां यत्सादृश्यम् एकप्रत्यवमर्शजनकं वा व्यतिरिक्तमेव शक्तिलक्षणं सामार्थ्यं तदपि जातिरिति व्यपदिश्यत एव । अन्विताकारज्ञानजनकं हि व्यक्तीनां किञ्चन रूपं सामान्यमिति सर्वपार्षदो न्यायः । ततश्च सादृश्यं शक्तिरित्यपि नामान्तरेणोच्यताम्, न काचिदनुपपत्तिः । व्यतिरेकाव्यतिरेकचिन्ता तु प्रवादिनां ग्रह एवेत्यभिप्रायः ॥९२॥**

**अत्र वैशेषिकदर्शनाश्रयेण व्यतिरेकपक्षं जातीनां समर्थयितुमाह—**

---

जनकं च व्यक्तीनां तत्तत्कार्यानुकूलशक्तिरूपं व्यक्तीनामात्मभूतं सामर्थ्यं तत्तद्व्यक्तिनिष्ठं नानाविधमेषामुभयेषामपि उभयवाचिनामिति यावत् ।

जातिपर्यायवाचित्वम् = जातेः पर्यायेण वाचकत्वम् । कदाचिज्जातिशब्दस्तमर्थमाह कदाचित् सादृश्यशब्दः शक्तिशब्दो वेति भावः । उपवर्ण्यते शिष्टैरिति । अस्याः कारिकायाः समुत्थाने बीजभूतेयमत्र शङ्का । ननु यद्यपि 'अयं घटोऽयं घटः' इत्येवं सर्वासु घटव्यक्तिषु एकस्य धर्मस्यान्वयविज्ञानेन जातेः सत्तोन्नीय = अनुमाय उद्घोष्यते जातिवादिभिः, तथापि व्यक्तिव्यतिरिक्तं जातिस्वरूपं न केनापि प्रमाणेनोपलभ्यते । अतो व्यक्तय एवानुगतसंस्थानरूपात् सादृश्यात् स्वस्वरूपाव्यतिरिक्ताद् एकाकारान्वयविज्ञानजनिकाः सन्तु । यद्वा स्वाभाविकं यतासामेकप्रत्यवमर्शजननसामर्थ्यं शक्तिपदव्यपदेश्यं तन्मूलकात् तासामेकत्वाध्यारोपात्ता अनुगतप्रत्ययजन्महेतवो भवन्तु किं जातिस्वरूपेण-प्रमाणतोऽनुपपद्यमानेन इति चेदोमिति ब्रूमः ।

अयं भावः—अभेदरूपम् = व्यक्तिभ्योऽव्यतिरिक्तं व्यक्तीनां स्वरूपभूतं यत् सादृश्यमनुगतसंस्थानरूपं तत्प्रयुक्तं वा तदेव तासामेकप्रत्यवमर्शजनकम् । यद्वा व्यक्तिस्वरूपव्यतिरिक्तमेव तत्तत्कार्यानुकूलशक्तिरूपं सामर्थ्यं तदपि जातिरिति व्यपदिश्यते = व्यवह्रियते एव । यतोऽन्वितैकाकारप्रत्ययजनकमेव व्यक्तीनां किञ्चन रूपं सामान्यमिति सर्वेषु शास्त्रेषु संमन्यते । ततश्च सादृश्यं शक्तिर्वा जातिरिति नामान्तरेण यद्युच्यते तदा न काचिदनुपपत्तिः । व्यक्तिस्वरूपाद् व्यतिरिक्ता जातिः, अव्यतिरिक्ता वेति विचारे वादिनां नियमेनैकतरपक्षपरिग्रहस्तु आग्रहप्रयुक्त एव । जातिव्यक्त्योर्भेदाभेदरूपस्य तादात्म्यस्यैव युक्तत्वात् । तथाहि—जातिव्यक्त्योः सहोपलम्भनियमादभेदः । अत एवोक्तं बाह्यैः 'सहोपलम्भनियमादभेदो नीलतद्धियोरिति' । विशेषणविशेष्यभावाधाराधेयभावप्रतीत्या च भेद इत्युभयोर्युक्तत्वमिति ॥ ९२ ॥

दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते ।
न तस्मादेव सामर्थ्यात् स दण्डोति प्रतीयते ॥ ९३ ॥
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्तते ।
तस्मात् सत्यपि सामर्थ्यं बुद्धिरर्थान्तराश्रया ॥ ९४ ॥

अयमत्रार्थः—इहानुगताकारे ज्ञाने व्यक्तीनां व्यावृत्ताकाराणां हेतुत्वं नोपपद्यत इति सामान्यं परिकल्प्यते । सादृश्यसामर्थ्ये तु व्यक्त्यव्यतिरिक्ते । तद्वदनुयायिनी व्यतिरिक्ता जातिरभ्युपगन्तव्या । ननु च सापि कथमनवयवेन व्यक्तिं नानुयायात् । तथा च गवाश्वादौ सांकर्यप्रसङ्गः । नैतदेवम्, प्रतिनियताश्रयवृत्तित्वात् सामान्यानाम् । किमत्र निमित्तमिति चेत्, विशिष्टसंस्थानयोगित्वं व्यक्तोनाम् । अन्यो ह्यवयवसन्निवेशो गवाम्, अन्यस्त्वश्वानामिति गोत्वाश्वत्वयोराधारनियमसिद्धिः । तत एव तर्हि

---

अत्र न्यायवैशेषिकदर्शने आश्रित्य जातीनां व्यक्तिव्यतिरेक इति पक्षं समर्थयितुमाह—दण्डोपादित्सयेति ।

अस्यार्थः—यद्यपि दण्डोपादित्सया-दण्डजिघृक्षया दण्डं प्रतिपद्यते । दण्डोपादित्सा दण्डप्रत्यये निमित्तमिति यावत् । सत्यपि चक्षुःसन्निकर्षादिरूपपुष्कलकारणे दण्डोपादित्सा भावाभावाऽनुविधायित्वाद् दण्डप्रत्ययभावाभावयोरिति भावः । तथापि तस्मादेव दण्डप्रत्ययनिमित्ताद् दण्डोपादित्सारूपात् सामर्थ्यात् सदण्डो दण्डीति न प्रतीयते । कार्यभेदे कारणभेदस्यावश्यकत्वात् । अत्र सामर्थ्यदण्डोपादित्सयोः कारणकार्ययोरभेदेन व्यपदेशः । कार्यभेदे कारणभेदस्यौचित्यमेव समर्थयन्नाह—नेच्छानिमित्तादिति । इच्छाया दण्डोपादित्साया निमित्ताद् दण्डनिष्ठतत्तत्कार्यानुकूलसामर्थ्यरूपाद् 'दण्डोपादित्सावान्' इति ज्ञानं यतो न प्रवर्तते, तस्मात्तत्तत्पदार्थेषु तत्तत्कार्यानुकूलसामर्थ्ये सत्यपि सामान्यस्याश्रयावच्छेदहेतौ = आश्रयनियामकहेतावनुगतैकाकारप्रत्ययरूपा बुद्धिः, अर्थान्तराश्रया-सामर्थ्याद् भिन्नो योऽर्थ सामान्यरूपस्तदाश्रया = तन्निमित्ता । अतः सादृश्यसामर्थ्याभ्यां व्यक्त्यतिरिक्ताभ्यामतिरिक्ता अनुगतैकाकारप्रत्ययहेतुर्जातिरास्थेयेति हृदयम् ।

अयं भावः—लोके अयं गौः, अयं गौरित्यादिरनुगताकारः प्रत्ययो निर्बाधो दृश्यते । तत्रास्त्यंशद्वयम् । विशेषणं विशेष्यञ्च । तत्र विशेष्यभूतानां व्यक्तीनां परस्परं व्यावृत्ताकाराणां तत्र हेतुत्वं नोपपद्यते, व्यावृत्ताकारत्वादेव, अतो विशेषणभूतं सामान्यं सर्वव्यक्त्यनुगतं तादृशप्रत्ययहेतुतया परिकल्प्यते । सादृश्यसामर्थ्ये तु न तादृशप्रत्ययहेतू व्यक्त्यव्यतिरिक्तत्वात् । अतः सादृश्यसामर्थ्यवदनुगता व्यक्तिस्वरूपव्यतिरिक्ता जातिः स्वीकार्या ।

ननु जातिरपि सकलव्यक्त्यनुगतेति गवाश्वादौ जातिसांकर्यप्रसक्तिः, तत्तद्देशस्थस्वाश्रयव्यक्त्यनुगमे विजातीयव्यक्तिसंबन्धस्यापि संभवादिति चेन्नैवम् । सामान्यानाम् =

विशिष्टात् सन्निवेशात् सादृश्यापरपर्यायात् प्रतिनियमेनानुगताकारप्रत्ययोऽस्तु। यथा ह्यवयवसन्निवेशः प्रतिव्यक्ति भिन्नोऽपि सामान्यस्याभिन्नस्याश्रयावच्छेदहेतुः तथा अनुगताकारस्यापि ज्ञानस्य हेतुर्भवत्वित्यलमन्तर्गडुना सामान्येन। तदुक्तम्—

'तुल्यभेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥' इति।

अत्रोच्यते—इह कार्याणां प्रतिनियतकारणजन्यत्वान्न सर्वो जनकः सर्वत्र कार्यं व्यापारयितुं पार्यते। तथा हि—दण्डीति प्रत्यये दण्डसंबन्धो निमित्तम्। स तु दण्डसंबन्धः सर्वत्र किं न भवतीत्युक्ते दण्डजिघृक्षा तस्य निमित्तं भण्यते। न चैतदत्र वक्तुं शक्यते। दण्डोपादानेच्छाया एव दण्डसंबन्धं प्रति नियमहेतोरस्तु दण्डीति प्रत्ययः किमपरेण तत्र दण्डसंबन्धेन निमित्तेन कृत्यमिति। दण्डोपादित्सा दण्डसंबन्धस्य निमित्तम्। तस्या अपि किं निमित्तमित्युक्ते दण्डस्य यत्र कार्ये विनियोगः तत्र सामर्थ्यादिदर्शनं तदुपादित्सानिमित्तं वक्तव्यम्। तथा च तत एवेच्छानिमित्ताद् दण्डोपादित्सावानित्यस्तु प्रत्ययः, किमत्रेच्छासमवायः स्वात्मनि निमित्तमुद्घोष्यत इति नैतच्छक्यतेऽभिधातुम्। अनुरूपं कार्य अनुरूपकारणजन्यमितीच्छासंबन्धादिच्छावानिति ज्ञानम्, न दण्डीति। एवं सादृश्यादेः सामान्यस्य विषयनियमसामर्थ्ये सत्यपि न तस्मादेव सामर्थ्यादनुगताकारज्ञानजनकत्वं युक्तं तत्सदृशमित्यादिज्ञानवदिति तन्निमित्तं व्यतिरिक्तं सामान्यमवश्याश्रयणीयमिति सिद्धम् ॥ ९३, ९४ ॥

अन्यथा अतिप्रसङ्ग इत्याह—

---

जातीनाम् प्रतिनियताधारवृत्तित्वात्। तेषामाधारनियमे निमित्तञ्च व्यक्तीनां विलक्षणावयवसंयोगविशेषरूपसंस्थानवत्त्वमेव। अन्या ह्यवयवसन्निवेशो गवाम्, अन्यश्चाश्वानामिति गोत्वाश्वत्वयोराधारनियमसिद्धिः।

नन्वेवं सति सादृश्यापरपर्यायाद् विलक्षणसन्निवेशादेव प्रतिनियमेनानुगताकारप्रत्ययोऽस्तु। तथाहि—प्रतिव्यक्तिभिन्नोऽप्यवयवसन्निवेशोऽभिन्नस्य यथाऽऽधारनियमहेतुः स्वीक्रियते तथाऽनुगताकारस्य ज्ञानस्यापि हेतुर्भवतु किमन्तर्गडुवद् व्यर्थीभूतेन सामान्येन। तदुक्तम्—

तुल्यभेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥ इति।

अस्यार्थः—तुल्यभेदे सति = गवाश्वयोर्भेदे तुल्ये सत्यपि गवाश्वयोरेकतरवृत्तित्वे विनिगमनाविरहे सत्यपि गोत्वरूपा जातिः यथाऽऽकृत्याऽनुगतसंस्थानरूपया हेतुभूतया प्रत्यासत्त्या समवायेन तादात्म्येन वा क्वचिद् गवि प्रसर्पति = प्रसृप्य सम्बद्धा भवति अन्यत्र अश्वे न प्रसर्पति, सैव जात्याधारनियामिकाऽऽकृतिरेव, शब्दज्ञाननिबन्धनम् = गौर्गौरित्यनुगतशब्दस्य तथाभूतस्य ज्ञानस्य च निबन्धनम् = निमित्तमस्त्विति।

**स्वभावोऽव्यपदेश्यो वा सामर्थ्यं वावतिष्ठते ।**
**सर्वस्यान्ते यतस्तस्माद् व्यवहारो न कल्पते ।। ९५ ।।**

इह कार्याणां प्रतिनियतकारणानभ्युपगमे कारणकारणादेव सिद्धावभ्युपगम्यमानायां तत्रापि तत्कारणादित्यनवस्थायामापादितायां सर्वान्ते मूलकारणेऽवस्थातव्यम् । तच्च मूलं कारणं सर्वस्य वादिनोऽन्ते पर्यनुयोगावसाने नित्यस्य प्रधानादेः कारणस्य 'स्वभावोऽव्यपदेश्यो'ऽयमस्य स्वभावोऽस्माद्धेतोरित्येवं व्यपदेष्टुमशक्योऽवतिष्ठते । अत

---

अत्रोच्यते—इह कार्याणां प्रतिनियतकारणजन्यत्वमिति निर्बाधोऽभ्युपगमः, तेन च न सर्वो जनकः सर्वत्र कार्ये नियोजयितुं शक्यते । तथाहि—दण्डीति ज्ञाने दण्डसंबन्धो निमित्तम् । ज्ञानस्य बौद्धबाह्यान्यतरविषयजन्यत्वनियमात् । स तु दण्डसंबन्धो दण्डाभाववति कुतो न भवतीति जिज्ञासायां दण्डग्रहणेच्छा तस्य नियामकत्वेन अभ्युपेयते । तत्र नैवं वक्तुं शक्यते, दण्डसंबन्धनियामिकाया दण्डजिघृक्षाया एव दण्डीति प्रत्ययेऽपि निमित्तत्वमस्त्वलं तत्रान्तर्गडुभूतेन दण्डसंबन्धरूपेण निमित्तेनेति । किञ्च दण्डग्रहणेच्छा क्वचिद् दण्डसंबन्धस्य निमित्तम् । दण्डोपादित्सायाश्च दण्डस्य यत्र कार्ये विनियोगस्तत्र सामर्थ्यादिदर्शनं निमित्तमिति वक्तव्यम् । एवञ्च नेदमपि वक्तुं शक्यते, दण्डोपादित्सानिमित्तात् तत्तत्कार्यानुकूलसामर्थ्यादेव दण्डोपादित्सावानिति प्रत्ययोऽस्तु, किं तत्र दण्डजिघृक्षासमवायः स्वस्य संबन्धान्तराभावेन स्वात्मनि निमित्तमुद्घोष्यत इति ।

एवञ्चेदं बलादापतति—अनुरूपं कार्यम् = योग्यं कार्यम् अनुरूपकारणजन्यम् = योग्यकारणजन्यमिति दण्डोपादित्सासमवायाद् दण्डोपादित्सावानिति ज्ञानमेव जायते, न तु ततो दण्डीति प्रत्ययोऽपीति । एवं चाकृतिरूपसादृश्यस्य व्यक्तौ तत्तत्कार्यानुकूलसामर्थ्यस्य च सामान्यस्याधाररूपविषयनियमनसामर्थ्ये सत्यपि न तस्मादेव सादृश्यात्, सामर्थ्याद्वाऽनुगताकारशब्दज्ञानयोर्जन्माभ्युपगमो युक्तः । यथा तत्सदृशम्-तत्समर्थमिति प्रत्यये यथायोगं तयोरन्यतरस्य निमित्तत्वाभ्युपगमो युक्त इति । अतोऽनुगताकारशब्दज्ञानयोर्निमित्तं सादृश्यसामर्थ्याभ्यां व्यतिरिक्तं तत्तद्व्यक्त्यनुगतं सामान्यमवश्यमाश्रयणीयमिति ।। ९३ ।। ९४ ।।

कार्याणां प्रतिनियतकारणानभ्युपगमे कारणकारणादेव कार्यसिद्धेरभ्युपगमे च वक्ष्यमाणातिप्रसङ्ग इत्याह—स्वभावोऽव्यपदेश्यो वेति ।

अस्यार्थः—यतः कारणात् कार्याणां प्रतिनियतकारणानभ्युपगमे कारणकारणादेव कार्यसिद्धावभ्युपगम्यमानायां कारणप्रश्नपरम्परायां सत्यां सर्वस्य वस्तुनोऽन्ते सर्वस्य वादिनः पर्यनुयोगावसाने वाऽव्यपदेश्योऽव्यवहार्यमूलकारणस्वभावो वाऽव्यपदेश्यं सामर्थ्यं वा हेतुशक्तिर्वाऽवतिष्ठते, तस्मात् कारणात् तेन स्वभावेन सामर्थ्येन वा व्यवहारः—गामानय ओदनं भुङ्क्ष्व इत्यादिरूपः अव्यपदेश्यत्वादेव न कल्पते = न प्रसिद्ध्यतीति ।

एवास्मिन्नवधौ हेतुप्रश्नपरम्परा निवर्तते। येषां त्वनित्यं कारणम्, तेषां सामर्थ्यं हेतु-शक्तिः प्रश्नपरम्परावसानेऽवतिष्ठते। तदपि सामर्थ्यमव्यपदेश्यमेव, वैलक्षण्येन 'इदं तत्' इति शब्देन व्यपदेष्टुमशक्यत्वात्।

अथवा नित्यकारणपरिग्रह एव तस्यात्यन्तपरोक्षत्वात् स्वभावोऽव्यपदेश्यः। अनेकशक्त्यात्मकत्वे तु सामर्थ्यमप्यस्य परोक्षत्वादेवाव्यपदेश्यम्। एकमेव वा वस्तु स्वभावशब्देन; सामर्थ्यशब्देन च व्यवहरन्तीति तदुक्तिभिरेव प्रतिपादयति। एवम-व्यपदेश्यस्वभावेऽवस्थानात् तस्मादव्यपदेश्याच्छाब्दो व्यवहारो न प्रकल्पते। वाक्ये यथानुज्ञा (या)तवस्तुनिबन्धनो हि परिदृश्यमानः स्थूलार्थाश्रयो 'गामानय', 'ओदनं भुंक्ष्व' इति व्यवहारः सोऽन्त्यहेतुवश इति स्वभावः सामर्थ्यं वा 'आनय, भुंक्ष्व च' इत्येवं व्यवहारस्य मूलकारणं वक्तव्यम्। अव्यपदेश्यत्वाच्च स्वभावादेस्तेन व्यवहारो नोपपद्यत इत्युक्तमव्यवहार्यं वस्तूपक्षेप्तुमित्यर्थः। तदेवमभिन्नव्यवहारनिबन्धनानि सामान्यान्यभ्युपगन्तव्यानि। सादृश्यात्तु 'सदृश' इति व्यवहारः शक्तिमत्त्वात्तु 'शक्ति-मान्' इति। अन्यच्च सादृश्यज्ञानं सामान्यज्ञानाद्भिन्नजातीयेष्वपि गोगवयादिषु

---

अयं भावः—इह कार्याणां प्रतिनियतकारणानभ्युपगमे स्वकारणमन्यथासिद्धी-कृत्य कारणकारणादेव कार्यसिद्धावभ्युपगम्यमानायां तत्रापि तत्कारणादित्येवमनवस्था-यामापादितायां सर्वान्ते मूलकारणेऽवस्थातव्यम्। तच्च मूलं कारणं नित्यस्य प्रधानादेः संसारमूलकारणस्याव्यपदेश्यः 'अयमस्य स्वभावोऽस्माद् हेतोः' इत्येवं व्यपदेष्टुमशक्यः तस्यैवाव्यपदेश्यं सामर्थ्यं वा सर्वस्य कारणवस्तुनः सर्वस्य वादिनो वाऽन्ते पर्यनुयोगाव-सानेऽवतिष्ठते। अत एव तथाविधे मूलकारणरूपे प्राङ्निर्दिष्टेऽवधौ हेतुप्रश्नपरम्परा निवर्तते। येषां तु क्षणभङ्गवादिनां मतेऽनित्यं मूलकारणपरमाणुरूपम्, तेषां मते सामर्थ्यम् हेतुशक्तिरूपमनित्यमेव प्रश्नपरम्पराऽवसानेऽवतिष्ठते। तदपि सामर्थ्यं परस्परं वैलक्षण्येनेदं तदित्येवं शब्देन व्यपदेष्टुमशक्यत्वादव्यपदेश्यमेव।

अथवा नित्यं मूलकारणमिति पक्षपरिग्रह एव मलकारणस्यानैन्द्रियकत्वेनात्यन्त-परोक्षत्वात् तत्स्वभावोऽव्यपदेश्यः। मूलकारणस्यानेकशक्त्यात्मकत्वे तु तस्य सामर्थ्यमपि परोक्षत्वादेवाव्यपदेश्यम्।

अथवा कारिकायां वाशब्दः शब्दविकल्पे, न त्वर्थविकल्पे। एवञ्चैकमेव वस्तु-स्वभावशब्देन सामर्थ्यशब्देन च व्यवहरन्तीति तदुक्तिभिरेवात्र प्रतिपादयति ग्रन्थकृत्। एवमव्यपदेश्ये स्वभावे सामर्थ्ये वा हेतुप्रश्नपरम्पराया अवस्थाने तस्मादव्यपदेश्यात् शाब्दो व्यवहारस्तन्मूलक आर्थो वा न प्रकल्पते। तथाहि—'यन्मनसा मनुते तद्वाचा वदति' इत्यभ्युपगमेन शब्दप्रत्यययोर्जन्यजनकयोः समानविषयकत्वनियमेन च यथाऽ-नुज्ञातवस्तुनिबन्धनो हि लोके परिदृश्यमानः स्थूलार्थाश्रयः = स्थूलार्थनिमित्तकः, 'गामा-नय', 'ओदनं भुङ्क्ष्व' इत्येवंविधो वाक्ये यो व्यवहारः सोऽन्त्यहेतुवशः = मूलकारणाधीन

**भावात्। अथ नावधार्यन्ते विवेकेन जातय इत्यनुगतस्य ज्ञानस्य निमित्तपरिकल्पनायां यदेव किञ्चिन्निमित्तं स्यादिति को ग्रहो जातिष्विति। उच्यते—तत्र रूपिसमवायात् चाक्षुषाण्येव सामान्यानीति ब्रूमः। विप्रतिपन्नं तु प्रति कार्यकल्प्यत्वमुच्यते। न च ज्ञानं नाम कार्यं जडाङ्कुरादिसदृशम्, अपि तु बोधरूपमिति। तस्य तत्सामान्यं न चक्षुरादिवदधिपतिप्रत्ययरूपं कारणम्, अपि त्वालम्बनप्रत्ययरूपम्। आलम्बनं च संवेद्यमानम्। अतश्चेहापि तदेवायातं संवेद्यते तस्य स्वरूपमुपयुज्यमानमिति।**

**अथ विकल्पस्य सामान्यं विषयो न तु प्रत्यक्षस्य। तदयुक्तम्। असति सामान्ये विकल्पो न प्रत्यक्षम् न सति, सत्यविषयत्वात्! विकल्पविषयत्वाच्च तस्यासत्यत्वम्, असत्यविषयत्वाच्च तस्य सत्यविकल्पत्वमिति इतरेतराश्रयता।**

**किञ्च प्रतिकर्मव्यवस्थायां ज्ञानस्य बौद्धैरुच्यते-यतो नीलाकारमतो नीलस्य संवेदनमिति। तद्वत् सामान्यवादिभिरप्युच्यते—यतोऽभिन्नाकारमतोऽभिन्नस्य**

---

इति स्वभावः सामर्थ्यं वा आनय', 'भुङ्क्ष्व च' इत्येवं विधव्यवहारस्य मूलकारणं वक्तव्यम्। स्वभावसामर्थ्ययोः प्रागुक्तदिशाऽव्यपदेश्यत्वाच्च ताभ्यां शाब्द आर्थो वा व्यवहारो नोपपद्यत इत्ययुक्तमव्यवहार्यं = व्यवहारानर्हं वस्तुव्यवहार्यवस्तुनः कारणत्वेनोपक्षेप्तुम् = वर्णयितुमिति। तदेवमनुगताकारशब्दप्रत्ययोभयरूपव्यवहारनिमित्तानि सामान्यानि स्वीकर्तव्यानि। सादृश्यात्तु सदृश इति व्यवहारः स्यात्, शक्तिमत्वात्तु शक्तिमानिति। नत्वनुगतः शब्दरूपः प्रत्ययरूपो वा गौर्गौरिति व्यवहारः। अन्यद्धि सादृश्यज्ञानं सामान्यज्ञानात्, गोगवयादिषु भिन्नजातीयेष्वपि आद्यस्य दर्शनाद्, द्वितीयस्यादर्शनात्। प्रत्ययभेदे विषयभेदस्यौचित्याच्च।

ननु जातयो विवेकेन नावधार्यन्ते, सर्वत्र सर्वदा सामानाधिकरण्येनोपलंभादिति जातीनां विनिगमनाविरहेणानुगतप्रत्ययनियामकत्वाभावे सति तस्य निमित्तपरिकल्पनायां क्रियमाणायां यदेव किञ्चिन्निमित्तं स्यान्नतु जातिष्वेव तन्निमित्तत्वकल्पनाया आग्रहो युक्त इति चेदुच्यते, सामान्यानामैन्द्रियकद्रव्यसमवायादैन्द्रियकाण्येव सामान्यानि न तु अनुगतप्रत्ययरूपकार्यकल्प्यानि परोक्षाणि, तत्र विप्रतिपन्नं प्रति तु तेषां कार्यकल्प्यत्वमुच्यते। किञ्चानुगतज्ञानं नाम सामान्यकार्यं नाङ्कुरादिरूपजडकार्यसदृशं जडम्, किन्तु बोधरूपम्, तस्य कारणीभूतं तत्सामान्यन्तु न चक्षुरादिवदधिपतिप्रत्ययरूपम्, किन्त्वालम्बनप्रत्ययरूपम्। आलम्बनं विषयः। आलम्बनञ्च नीलादिप्रत्ययेषु संवेद्यमानमेवदृष्टमिति संवेद्यते सामान्यस्य स्वरूपमुपयुज्यमानमिति बलादायातमिति न सामान्यस्वरूपे संवेद्यमाने कल्पनाया एवैश्वर्यमिति।

ननु सामान्यमसदपोहरूपं विकल्पप्रत्ययस्याप्रमारूपस्यैव विषयो न तु प्रत्यक्षस्य निर्विकल्पस्य प्रमारूपस्येति यदि ब्रूयात्तदयुक्तम्। तथाहि—सामान्यस्यासद्रूपत्वे तद्विषयको विकल्पप्रत्ययः स्यान्न तु प्रत्यक्षम्। तस्य सद्रूपत्वे तु प्रत्यक्षमेव तस्य भवति न तु

**संवेदनमिति। कोऽनयोरुक्त्योर्विशेषः ? येन नीलं प्रत्यक्षं सामान्यमीदृशमेवाप्रत्यक्षमिति। एवमस्य न कश्चिद्विशेषो दण्डादिभ्य इति नास्ति वैसादृश्यं निदर्शनैः। एकार्थकारित्वाच्च भिन्नः प्रत्ययो नास्ति हेतुभेदात् कार्याणामपि भेदात् इत्येकप्रत्यवमर्श एवासति सामान्ये नोदियात्। रूपादिव्यतिरेकेण च द्रव्यानभ्युपगमात् प्रत्यर्थमपि नास्त्येकार्थसाध्या काचिदर्थक्रिया, किमुतार्थभेदे भवेत्। उदकाहरणाद्यपि रूपादिसमुदायसाध्यमेकमिति तत्र समुदायबुद्धिर्भवेन्नैकबुद्धिः, यथैकाङ्कुरजनकत्वेऽपि क्षितिबीजादीनाम्। मिथ्यारूपादिसंविच्चैकबुद्धिरित्यपि क्वचित् सम्यक् संवेदनमूलत्वान् मिथ्याबुद्धेरवश्यं काचिदभेदबुद्धिः सत्याप्येष्टव्येत्यनपह्नवनीयानि प्रतिनियतकार्यसाधनानि सामान्यानीति स्थितम्॥ ९५॥**

**अधुना साङ्ख्यनयेनाद्वैतनयेन वा व्यतिरिक्तां जातिं समर्थयितुमाह—**

---

विकल्पप्रत्ययः सत्यविषयकत्वात्। किञ्च विकल्पप्रत्ययविषयत्वात् सामान्यस्यासत्यत्वम्, असत्यविषयकत्वाच्च तस्य प्रत्ययस्य विकल्परूपत्वमिति ज्ञपावितरेतराश्रयतारूपो दोषः। किञ्च ज्ञानस्य प्रतिकर्मव्यवस्थायाम् = कर्मनियमव्यवस्थायां बौद्धैर्हेतुरुच्यते—यतो नीलाकारमतो नीलस्य संवेदनमिति। एवमेव सामान्यवादिभिरप्युच्यते—यतोऽभिन्नाकारं ज्ञानमतोऽभिन्नस्य संवेदनमिति भिन्नव्यक्त्यनुगता भिन्नसामान्यसिद्धिः। कोऽनयोरुक्त्योर्विशेषः, येन नीलं प्रत्यक्षं सामान्यं तु ईदृशोक्तिविषयीभूतमेवाप्रत्यक्षमिति। एवमस्य सामान्यस्य न कश्चिद् विशेषः = भेदः दण्डादिभ्यः।

तथाहि—यथा दण्डसंबन्धाद् दण्डीति प्रत्ययः तथा गोत्वरूपसामान्यधर्मसंबन्धाद् गौरिति प्रत्यय इति निदर्शनैः = दृष्टान्तभूतैः दण्डादिभिर्वैसादृश्यं = सादृश्याभावो नास्ति सामान्यस्य। गौरित्यनुगतप्रत्ययानाञ्चैकार्थक्रियाकारित्वात् प्रत्ययभेदो नास्ति, हेतुभेदे कार्यभेदस्यावश्यकत्वात्। तथा चैकः प्रत्यवमर्श एव स्वहेतोः सामान्यस्याभावेनोत्पद्येत। प्रत्यर्थमपि = प्रतिव्यक्त्यपि नास्त्येकपदार्थसाध्या काचिदर्थक्रिया, रूपादिव्यतिरेकेण द्रव्यानभ्युपगमेन रूपादिसमूहस्यैव द्रव्यपदार्थत्वात्। व्यक्तिभेदे तु न कथमप्येकार्थसाध्या काचिदप्यर्थक्रिया संभवति। उदकाहरणादिरूपा एका घटादीनामर्थक्रियाऽपि रूपादिसमुदायरूपघटादिद्रव्यसाध्येति तत्र रूपादिसमुदाये समुदायबुद्धिर्भवेन्नैकबुद्धिः। 'एको घट' इति जायमानाऽपि एकत्वबुद्धिः समुदायविषयैव, न तु प्रत्येकं रूपादिव्यक्तिविषया, बहुत्वात्। समुदायस्यैवार्थक्रियाकारित्वाच्च। यथा क्षितिबीजादीनामेकाङ्कुरजनकत्वेऽपि तत्र समुदायबुद्धिरेव नैकत्वबुद्धिः। रूपादिविषयकसंविद्रूपा चैकत्वबुद्धिर्मिथ्या रूपादीनां बहुत्वादित्यतोऽपि मिथ्याबुद्धेः क्वचित् सम्यक् संवेदनमूलकत्वादवश्यं काचिदभेदबुद्धिः सामान्यविषया सत्याऽप्येष्टव्येत्यनपलपनीयानि 'गौर्गौः इति, अश्वोऽश्व' इति, 'घटो घट' इति प्रतिनियतप्रत्ययरूपकार्याणामालम्बनरूपेण साधनानि सामान्यानीति स्थितम्॥९५॥

अधुना सांख्यनयेन जगतो मूलकारणं सर्वकारणत्वेन सर्वानुगतत्वेन च सामान्यरूपं

**यदा भेदान् परित्यज्य बुद्ध्यैक इव गृह्यते ।**
**व्यक्त्यात्मैव तदा तत्र बुद्धिरेका प्रवर्तते ।। ९६ ।।**

**इहैकरूपसमन्वयादेककारणपूर्वकं विश्वम्। असदनुत्पत्तेश्च कार्यकारणयोरभेद इति सर्वं किञ्चिद् भेदाभेदात्मकं वस्तु। एकस्यैवानेकधावस्थानात् ततोऽभेदः सामान्यं, भेदो विशेषः। तत्र सर्वाभेदो महासामान्यम्, तस्यैव च यथाभागमवच्छेदादवान्तरसामान्यानि। अवच्छेदकाश्च धर्मास्तस्यैव तथा परिणामा इति न ततोऽतिरिच्यन्ते। सर्वं ह्येकस्यैव परिणामो, विवर्त इति वा। एवं च कृत्वा कार्य-**

---

प्रधानमाश्रित्य, अथवाऽद्वैतनयेन सत्तासामान्यरूपं सर्वकारणं सर्वानुगतञ्च ब्रह्मैव निदर्शनं कृत्वा सादृश्यसामर्थ्याभ्यां व्यतिरिक्तां घटत्वादिजातिं समर्थयितुमाह—यदा भेदानिति ।

अस्यार्थः—यदा भेदान् = व्यक्तिभेदान् परित्यज्य व्यक्त्यात्मैव = व्यक्तिस्वरूपमेव भिन्नोऽपि एक इवाभिन्नत्वबुद्ध्या गृह्यते, तदा तत्रैकालम्बनतया एकपदार्थजन्या बुद्धिर्घट इति प्रवर्तत इति नास्ति तत्र द्वन्द्वैकशेषयोरवसर इति प्रत्याख्यातोऽत्र पक्षे एकशेषविधिरिति ।

अयं भावः—इह सर्वेषु भावेषु प्रत्येतृभेदेन सुखदुःखमोहात्मकत्वस्यानुभवेन कारणत्वेन तदनुगतस्य प्रधानस्यापि सुखदुःखमोहात्मकत्वं गुणत्रयात्मकत्वञ्च कल्प्यत इति सांख्याः ।

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ।।"

इत्यभियुक्तोक्तिप्रतिपादितदिशा सर्वेषु भावेषु सच्चिदानन्दात्मकस्य ब्रह्मस्वरूपस्यानुभवेन तादृशब्रह्मोपादानकत्वं तत्र कल्प्यत इत्यद्वैतिनः । एवं मतद्वयेऽपि जगत्येकरूपस्य प्रधानस्य ब्रह्मणो वा समन्वयात् तादृशैककारणपूर्वकं विश्वमिति स्थितम् । यद्यप्यसत्कार्यवादो नैयायिकवैशेषिकयोरभिमतस्तथापि न स युक्तः । तदभ्युपगमे हि सर्वं सर्वस्मादुत्पद्येत, कारणेऽसत्त्वाविशेषात् । बन्ध्यापुत्रादीनामपि कदाचिज्जन्मप्रसङ्गाच्चेति प्रागुत्पत्तेः कारणे सत एव कार्यस्य कारणकलापेनाविर्भावरूपोत्पत्तिरिति सत्कार्यवादिनः सांख्या अद्वैतिनश्च । असदनुत्पत्तेश्च कार्यकारणयोरभेदोऽपि । तदुक्तम्—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ।।" इति ।।

एवं यत्किञ्चित् सर्वं वस्तु भेदाभेदात्मकम् । एकस्यैव प्रधानस्य ब्रह्मणो वा कार्यरूपेणानेकधावस्थानात् । ततोऽभेदः कारणरूपः सामान्यम्, अनुगतत्वात् । कार्यरूपो भेदस्तु विशेषः, व्यावृत्तत्वात् । तत्र सर्वाभेदो महासामान्यं सत्तारूपं प्रधानं ब्रह्म वा । तस्यैव च सर्वभावानुगतस्य यथाभागम् = यथाप्रदेशं घटादिव्यक्तिभिरवच्छेदाद् घटत्वा-

कारणयोर्धर्मधर्मिणोः सामान्यविशेषयोश्च नात्यन्तं भेदः, एवमप्रतीतेः। नाप्यत्यन्तमभेदः, तथाप्यप्रतीतेः। केवलं स्वसंविज्ञानपदाभावादगत्या भेदाभेदशब्दाभ्यां यदाभिधीयते तदा शब्दसादृश्यमात्रादविवक्षितभेदाभेदरूपाध्यारोपेण परैर्विरोधो निर्विषय इवापाद्यते। तत्र 'यदा भेदान् परित्यज्य' भेदाभेदरूपाविवक्षया 'व्यक्त्यात्मैव' व्यक्तेरात्मैव व्यक्तिरूपमेव बुद्धया एक इव गृह्यते, अभिन्नं प्रतीयते तदा तदेव सामान्यमेकबुद्धिविषयो न ततोऽन्यत् किञ्चित्। व्यक्त्यात्मनो हि मूलभूतमेकतत्त्वमात्मभेदहेतुपरित्यागादविरुद्धम्।

यद्यपि च प्रकृतिरूपान्वयात् सर्वमेकमेव तत्त्वतः तथापि परिणामवैचित्र्याद् विकाराणामनर्थान्तरभूतानामपि सांव्यवहारिकमनेकत्वमप्य (न) वगतमिति इव शब्दः। तत्र यदा समस्तभेदपरित्यागः तदा सद्वस्तुमात्रं पदार्थं इति चैकबुद्धिः प्रवर्तते। धर्मतिरस्कारे तु धर्मिमात्रं द्रव्यमिति बुद्धिः। सजातीयगतभेदहेतुपरित्यागे विजातीयभेदापेक्षायां पृथिव्यापस्तेज इत्यादिव्यवहारः। तत्राप्यर्थान्तराद् भेदापेक्षाणां स्वसदृशाभेदापेक्षणे गौरश्वो घट इत्यादि भेद इति यथायथमुदाहार्यम् ॥९६॥

तदेवं दर्शनद्वयेन भिन्नाकाराया जातिबुद्धेर्विषयमवस्थाप्य जातिपदार्थे प्रत्याख्यानादेकशेषस्य तद्विषये समूहबुद्धेर्विषयमवस्थापयितुमाह—

---

दीन्यवान्तरसामान्यानि परिणामभूतानि, विवर्तभूतानि वा जायन्ते। अवच्छेदकाश्च घटादयस्तस्यैव महासामान्यस्य धर्मास्तत्कार्यत्वात्, न ततोऽतिरिच्यन्ते। सर्वं ह्येकस्यैव, प्रधानस्य परिणाम इति सांख्यैः, एकस्यैव ब्रह्मणो विवर्त इत्यद्वैतिभिरभ्युपगमात्। एवञ्च कृत्वा कार्यकारणयोर्धर्मधर्मिणोः सामान्यविशेषयोश्च नात्यन्तं भेदो, नाप्यत्यन्तमभेदः, 'सन् घट' इति सामानाधिकरण्येन प्रतीतेः। अत्यन्तभेदे 'गौरश्व' इतिवदत्यन्ताभेदे 'घटो घट' इतिवच्च सामानाधिकरण्यप्रत्ययानुपपत्तेः। तथा च तयोः परस्परं भेदाभेदरूपं तादात्म्यं सांख्यैरद्वैतिभिश्च स्वीक्रियते। तस्य च तादात्म्यस्य केवलं स्वसंविज्ञानपदाभावात्=स्वज्ञापकासाधारणपदाभावाद् अगत्या यदा भेदाभेदशब्दाभ्यां तदभिधीयते तदा तत्र भेदाभेदरूपयोरविवक्षायामपि भेदाभेदशब्दसादृश्यमात्रात् तत्र तदध्यारोपेण भेदाभेदयोः परस्परं विरोधोनिर्विषय इव परैर्नैयायिकादिभिर्वादिभिरापाद्यते।

वस्तुतस्तु नास्त्यत्र तयोर्विरोधः। अत एवात्र भेदसहिष्णुरभेद इति सांख्यानामद्वैतिनाञ्च व्याहारः। तत्र सामान्यविशेषयोर्भेदाभेदरूपाविवक्षया भेदान् परित्यज्य व्यक्त्यात्मैव व्यक्तेरात्मैव व्यक्तिस्वरूपमेव भिन्नमपि बुद्धया एक इव गृह्यतेऽभिन्नं प्रतीयते तदा तदेव सामान्यं सत्सदित्येकाकारबुद्धिविषयो न ततोऽन्यत् किञ्चिद् घटपटादिकम्। न च तस्य सामान्यस्य सर्वानुगतस्य कयाऽपि व्यक्त्या सह विरोध इति सर्वव्यक्तिसामानाधिकरण्यं तस्य। व्यक्त्यात्मनो हि सर्वस्य मूलभूतमेकं तत्त्वं महासामान्यं सत्तारूपमात्मभेदहेतुपरित्यागेन सर्वानुगतत्वात् सर्वत्राविरुद्धम्। यद्यपि चैकस्य सांख्यनये प्रधा-

**भेदरूपैरनुस्यूतं यदैकमिव मन्यते ।**
**समूहावग्रहा बुद्धिर्बहुभ्यो जायते तदा ॥९७॥**

**भेदरूपाण्यपि यत्र संचेत्यन्तेऽभेदरूपं च तत्र समूहमवगृह्णाति परिच्छिनत्ति या बुद्धिः सा प्रवर्तते । 'एकमिव' इति । भिन्नेष्वपि एकत्वस्याध्यारोपात् । एवमपि चैकत्वोपसर्जनेभ्यो बहुभ्य एवेयं बुद्धिर्जायते, न तु जातिप्रत्ययवदेकस्मादेव ।**

**अयमाशयः—यद्यपि ता एव व्यक्तभेदा व्यक्तयो जातिरिति दर्शनम् तथापि संभवत्येकशेषस्य विषयो भेदप्राधान्येनैकधर्मावेशनिमित्ताभेदोपसर्जनतया तासां प्रतोतेः । अत एव च द्वन्द्वैकशेषयोर्वचनभेदोपपत्तिः । जातिप्रत्ययस्तु सर्वथा अभेदप्राधान्येनैव ॥९७॥**

**इदानीं सदृशबुद्धेर्विषयमाह—**

---

नस्य अद्वैतिनये सच्चिदानन्दरूपस्य ब्रह्मणः प्रकृतिरूपस्य सर्वत्र व्यक्तिरूपेषु कार्येषु अन्वयात् 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेन सर्वमेकमेव तत्त्वतः, तथापि प्रकृतेः परिणामवैचित्र्याद् विवर्तवैचित्र्याद् वा विकाराणां प्रकृतेरनर्थान्तरभूतानाम् = प्रकृतेरर्थान्तरत्वमप्राप्तानामपि सांव्यावहारिकम् = लोकव्यवहारसिद्धम् । अनेकत्वमप्यवगतमिति कारिकायाम् 'इव' शब्दः । तत्र यदा समस्तानां विकारभेदानां घटपटादीनामविवक्षया निमित्तेन बुद्ध्या परित्यागस्तदा परमप्रकृतिरूपं सद्वस्तुमात्रं ब्रह्मैव सर्वस्य पदस्यार्थ इति कृत्वा तु सर्वेष्वपि भावेषु 'सन्, सन्' इत्येका बुद्धिः प्रवर्तते । किञ्च धर्माणां प्रकृतिविकृतिरूपाणां पृथिव्यप्तेज आदीनां, चरमविकाराणां घटपटादीनाञ्चाविवक्षारूपे तिरस्कारे धर्मिमात्रस्यापरप्रकृतिरूपस्य विवक्षायां द्रव्यमिति बुद्धिरूपो व्यवहारः चरमविकाराणामेव घटपटादीनां पृथिवीत्वादिना सजातीयघटपटादिगतभेदहेतूनां घटत्वपटत्वादीनां धर्माणामविवक्षया परित्यागे पृथिवीत्वादिरूपापरसामान्यस्य विवक्षायां विजातीयेभ्यो हिमकरकाचन्द्रादित्यादिभ्यो भेदविवक्षायाञ्च पृथिव्यापस्तेज इत्यादिर्व्यवहारः । तत्रापि चरमविकारेष्वेव गोघटादिषु अर्थान्तराद् विजातीयाद् भेदविवक्षायां समानजातिमत्तया एकत्वमाश्रित्य स्वसदृशाभेदापेक्षणे च 'गौः' 'अश्वो' 'घट' इत्यादिर्भेदव्यवहारः । इत्येवमादिषु जात्येकत्वविवक्षायामेकवचनान्तैकशब्दोपादानमिति न तत्रैकशेषविधेरावश्यकता इत्यादिकं यथायथमुदाहार्यम् ॥ ९६ ॥

तदेवं सांख्यदर्शनमद्वैतदर्शनञ्चाश्रित्य परमप्रकृतिभूतप्रधानविषयकत्वेन तादृशब्रह्मविषयकत्वेन च 'सन्-सन्' इति धर्माणां तिरस्कारे धर्मिमात्रसामान्यविवक्षया 'द्रव्यं द्रव्यम्' इति, प्रकृतिविकृतिरूपोभयात्मजातिविवक्षया च पृथिव्यापस्तेज इति, व्यक्त्यात्मकविकृतिमात्रस्वरूपजातिविवक्षया च 'गौरश्वो घट' इति भिन्नाकारायाः = भिन्नविषयायाः जातिबुद्धेर्भिन्नं भिन्नं विषयमवस्थाप्य जातिपदार्थपक्षे चैकशेषस्य प्रत्याख्यानात् एक-

**सकृत् प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम् ।**
**भिन्नात्मिकानां व्यक्तीनां भेदापोहात् प्रपद्यते ॥९८॥**

**इह भेदहेतूनां त्यागे सामान्यबुद्धिरित्युक्त्वा तेषामपि च परिग्रहे समूह-**

---

शेषविषये जयमानाया घटा इत्याद्याकारायाः समूहविषयकबुद्धेर्विषयभूमिं व्यवस्थापयितु-माह—भेदरूपैरिति ।

अस्यार्थः—यदा घटा इत्यादौ व्यक्तीनां भेदरूपैरनुस्यूतम् = भेदरूपैस्सह विशेषणतयाऽनुबद्धम्, एकमिव = अभिन्निमिव जातिरूपं मन्यते = जानाति जनः, तदा समूहावग्रहाः = व्यक्तीनां समूहेऽवमत्याऽप्राधान्येन ग्रहणरूपेण तिरस्कारेण गृह्यते = प्रणीयत एकरूपं यस्या सा तथाभूता बुद्धिर्बहुभ्यो विषयभूतेभ्यो जायते ।

अयं भावः—'घटा' इत्यादौ व्यक्तिभेदरूपाणि जात्येकत्वरूपाभेदरूपं च द्वयमपि प्रतीयते। तत्रैकत्वमुपसर्जनम्, भेदरूपाणि तु विशेष्यभूतानीति तत्र सा बुद्धिर्बहुभ्यो जायते, विषयजन्यत्वाद् बुद्धेः। तत्र चानेकघटपदप्रसक्तावेकशेषविधिरारभ्यते। यत्र तु भेदरूपाण्येव प्रतीयन्ते नत्वभेदरूपमपि जात्येकत्वाभावात् तत्र 'घटपटमठा' इत्यादावितरेतरयोगद्वन्द्वः। यत्र तु भेदोऽभेदश्चेत्युभयमेकशेषवत् प्रतीयते किन्तु जातिभेदो विशेषणं समूहरूपाभेदस्तु विशेष्यस्तत्र 'घटपटमठम्' इति समाहारद्वन्द्व इति। यद्यप्येकशेषे समाहारद्वन्द्वे चोभयत्रापि समूहो विशेष्यस्तथाप्येकशेषे उद्भूतावयवभेदः समूहो विशेष्य इति बहुवचनम्। समाहारद्वन्द्वे त्वनुद्भूतावयवभेदः स इति विशेष इति ।

अयं तु निष्कर्षः। यत्र व्यक्तिभेदरूपाणि विशेष्यतया प्रतीयन्ते जातिप्रयुक्तं व्यक्तीनामभेदरूपञ्च विशेषणतया तत्र 'घटा' इत्याद्याकारिका व्यक्तिसमूहमवगृह्णाति, विशेष्यतया परिच्छिनत्ति, विषयीकरोति या बुद्धिः सा प्रवर्तते । श्लोके एकमिवेत्युक्तिस्तु भिन्नेष्वपि व्यक्तिरूपेषु जात्येकत्वप्रयुक्तस्यैकत्वस्याध्यारोपात् । एवं भेदाभेदयोरुभयोस्तत्र भानेऽपि उपसर्जनीकृतैकत्वेभ्यो बहुभ्य एवेयं बुद्धिर्जायते 'घटा' इति, न तु सर्वथाऽभेदप्राधान्ये घट इति जातिप्रत्ययवदेकस्मादेव ।

अयमाशयः—यद्यपि ता एव व्यक्तभेदाः सत्यो व्यक्तय इति व्यवह्रियन्तेऽव्यक्तभेदास्तु जातिरिति दर्शनमिति, सर्वथा सर्वत्र जातिपक्षसंभवेन नास्त्येकशेषविषयसंभवस्तथापि सर्वत्र भेदाभेदोभयभानेऽपि भेदप्राधान्ये संभवत्येकशेषस्य विषयः, एकधर्मसंबन्धहेतुको यस्तासामभेदस्तदुपसर्जनतया तासां प्रतीतेः। अत एव च व्यक्तिसमूहरूपाभेदप्राधान्याप्राधान्याभ्यां 'घटपटमठम्' इति समाहारद्वन्द्वे' 'घटा' इत्येकशेषविषये च वचनभेदोपपत्तिः। बहुघटसत्त्वेऽपि घटासत्त्वनिषेधमात्रपरतया जायमानो 'घटः' इति जातिप्रत्ययस्तु सर्वथाऽभेदप्राधान्यमाश्रित्यैवेति ॥९७॥

जातिबुद्धेः समूहबुद्धेश्च विषयमवस्थाप्येदानीं सदृशबुद्धेर्विषयमवस्थापयितुमाह—सकृत्प्रवृत्ताविति ।

**बुद्धिरिति राश्यन्तराभावान्निर्विषया सादृश्यबुद्धिः स्यादित्याशंक्येदमुच्यते**—भिन्नात्मिकानां व्यक्तीनां सकृत् प्रवृत्तौ भेदापोहाद् **अनालीढभेदं तदनुस्यूतं वा एकत्वं जात्यात्मकं समूहात्मकं वा प्रतिपद्यते बुद्धिः। आवृत्तौ तु सदृशात्मताम्। भेदहेतुपरित्यागेनाभिन्नात्मिका व्यक्तीरवगृह्य कार्यान्तरविषयता गृहीतभेदा एव ता गृह्णातीत्यविश्रान्ता सैव बुद्धिर्भेदापोहान्नान्यं, आवृत्तेरेकधर्मत्वात् सदृशात्मतां प्रतिपद्यते। एवं भेदाभेदावग्रहरूपत्वान्नेयं जातिबुद्धिः, तस्या एकान्तेनाभेदावसायरूपत्वात्। नापि समूहबुद्धिः सकृदेव भेदानुस्यूतस्याभेदस्य तत्र ग्रहणान्नावृत्त्या। समूहावग्रहे हि समूहिनामनावृत्ता सैव बुद्धिः सामान्यं गृह्णाति। गोगवययोस्तु पूर्वं भेदं प्रतिपद्यानन्तरमवयवसन्निवेशायत्तोऽभेदोऽवसीयत इति सादृश्यबुद्धिस्तत्र। एवं च बुद्धिभेदादेव न सादृश्यं सामान्यमित्युक्तं भवति॥ ९८॥**

**तदेवं व्यतिरिक्तजातिदर्शनमव्यतिरिक्तजातिदर्शनं च विस्तरतोऽभिधायेदानीं सौगतानां संबन्धि काल्पनिकं जातिदर्शनमाह—**

---

अस्यार्थः—बुद्धेः सकृत्प्रवृत्तौ भिन्नात्मिकानां व्यक्तीनां भेदापोहात् = अविवक्षया भेदानां परित्यागाद् भेदाननुविद्धं भेदानुविद्धं वा एकत्वं जात्यात्मकं समूहात्मकं वा बुद्धिः प्रपद्यते। विषयीकरोति। बुद्धेरावृत्तौ तु सैव बुद्धिः सदृशात्मतां = सदृशविषयकत्वं प्रपद्यते। तथाहि—व्यक्तिभेदहेतूनां परित्यागेनाभिन्नात्मिका व्यक्तीरवगाह्य कार्यान्तरविषयकत्वेन ता एव व्यक्तीर्गृहीतभेदा गृह्णाति इति अविश्रान्ता सैव बुद्धिर्भेदापोहान्नान्या आवृत्तेरेकधर्मिनिष्ठत्वाद् आवृत्ता सैव बुद्धिः सदृशात्मतां प्रपद्यत इति।

अयं भावः—इह व्यक्तिभेदहेतूनां परित्यागे जातिबुद्धिरिति पूर्वमुक्त्वाऽभेदहेतूनां भेदहेतूनाञ्च परिग्रहे समूहबुद्धिरिति राश्यन्तराभावात् = प्रकारान्तराभावात् सादृश्यबुद्धिर्निर्विषया स्यादित्याशङ्क्येदमुच्यते। वस्तुतः कार्यभेदाद्वा भिन्नरूपाणां व्यक्तीनामविवक्षया भेदपरित्यागादगृहीतभेदमुपसर्जनतया भेदानुस्यूतं वा एकत्वं जात्यात्मकं समूहात्मकं वा सकृत् प्रवृत्ता बुद्धिः प्रतिपद्यते। आवृत्तौ तु सैव बुद्धिः सदृशात्मताम् = सदृशविषयकत्वं प्रागुक्तरीत्या प्रपद्यते।

एवं सादृश्यबुद्धिस्थले पूर्वं व्यक्तीनामभेदग्रहः पश्चात्तु तस्या एव बुद्धेरावृत्त्या भेदग्रह इति भेदाभेदावग्रहरूपत्वान्न सादृश्यबुद्धिर्जातिबुद्धिः जातिबुद्धेर्नियमेन भेदानालीढाभेदग्रहरूपत्वात्। नापीयं समूहबुद्धिः। समूहबुद्धौ भेदानुस्यूतस्याभेदस्य सकृदेव ग्रहणादावृत्त्याऽग्रहणाच्च। समूहिनीनां व्यक्तीनां समूहग्रहे हि एकैव बुद्धिः सामान्यम् = जातिम् गृह्णाति, नत्वावृत्ता। 'गोसदृशो गवय' इति सादृश्यबुद्धिस्थले तु पूर्वं गोगवययोर्भेदं धर्मभेदहेतुकं प्रतिपद्य पश्चादवयवसंस्थानवशात् तयोरभेदोऽवसीयते = निश्चीयते इति सा सादृश्यबुद्धिरेव। एवञ्च जातिबुद्धि-सादृश्यबुद्ध्योः परस्परं भेदादेव, न सादृश्यं सामान्यम्। बुद्धिभेदस्य विषयभेदहेतुकत्वनियमादिति अनायासेनायातं भवतीति ॥९८॥

**अनुप्रवृत्तेति यथा भिन्ना बुद्धिः प्रतीयते ।**
**अर्थो व्यावृत्तरूपोऽपि तथा तत्त्वेन गृह्यते ॥ ९९ ॥**

**इहाभिन्नप्रत्ययावसेया जातिरित्युच्यते । न चाभिन्नः प्रत्ययोऽस्ति । न हि य एवैकस्यां व्यक्तौ गौरिति प्रत्ययः स एव द्वितीयस्याम्, अपि त्वन्य एव, प्रत्यर्थनियतत्वाद् बुद्धीनाम् । अतश्च नैव कश्चिद्भिन्नेष्वभिन्नप्रत्ययः, केवलं भिन्नापि सती बुद्धिरनुप्रवृत्ता अनुगता अभिन्ना प्रतीयते । न च तत्र बुद्धितत्त्वव्यतिरेकेणान्यत् सामान्यं गोत्वाद्विज्ञानत्वाद्यस्ति । तस्याप्यभिन्नप्रत्ययस्य प्रतिबुद्धिभेदात् । तत्राप्यपरसामान्यकल्पनायामनवस्थापातात् । न च बुद्धिष्वपरसामान्यस्यासाधारणः कश्चिद् वाचकोऽस्तीति किं तत्सामान्यं नाम, यतश्चानादिकालीनभेदावग्रहसामर्थ्यप्रतिघातनिमित्तविभ्रमवशाद्यथा बुद्धीनामभेदावसायो भिन्नानामपि वस्तुतः, तथार्थानामपि व्यक्तिलक्षणानां स्वरूपपररूपाभ्यां व्यावृत्तस्वभावानां तत्त्वेन अभेदेन सामान्यावग्रहेणावसायो भविष्यतीति भेद एव परमार्थोऽभेदावसायो मिथ्येति सौगताः ॥ ९९ ॥**

**किमनादिकालीनविभ्रमवशादेवायम्, उत बहिरस्याभेदावसायस्य किञ्चन निमित्तमस्तीत्याह—**

---

तदेवं सादृश्यं सामर्थ्यं व्यक्तिस्वभावो वा जातिरित्यव्यतिरिक्तजातिदर्शनम्, एभ्यो व्यतिरिक्तजातिदर्शनञ्च विस्तरतोऽभिधाय साम्प्रतं सौगतानां संबन्धि काल्पनिकं जातिदर्शनमाह—अनुप्रवृत्तेति ।

अस्यार्थः—अर्थभेदेन बुद्धिभेदाद्यथा वस्तुतो भिन्नाऽपि बुद्धिरनुप्रवृत्ताऽभिन्नेति सदृशविषयकत्वेन कल्पनया प्रतीयते, तथाऽर्थो व्यक्तिलक्षणः स्वरूपपररूपाभ्यां वस्तुतो व्यावृत्तरूपो भिन्नरूपोऽपि सादृश्यमूलिकयाऽभेदकल्पनया तत्त्वेनाभेदेन गृह्यत इति ।

अयं भावः—इहाभिन्नबुद्धिग्राह्या गोत्वघटत्वादिरूपा जातिरिति जातिवादिभिरुच्यते । न च वस्तुतोऽभिन्ना बुद्धिरस्ति, अर्थभेदेन बुद्धीनां भेदात् । नहि य एवैकगोव्यक्तिविषयकः प्रत्ययः स एव द्वितीयगोव्यक्तिविषयको नत्वन्य इति वक्तुं शक्यते । अतो नैव भिन्नेष्वभिन्नः कश्चित् प्रत्ययः । केवलं भिन्नाऽपि वस्तुतो बुद्धिः प्रतिव्यक्त्यनुप्रवृत्ताऽनुगतेति अभिन्ना प्रतीयते । तत्र च न बुद्धिस्वरूपं विहायान्यद् विषयस्य ज्ञानकारत्वे गोत्वादिकं भेदे च ज्ञानत्वादिकं वाऽस्ति । सामान्यस्यापि योऽभिन्नः प्रत्ययस्तस्य प्रतिबुद्धिभेदात् । तत्राप्यन्यसामान्यकल्पनायामनवस्थापातात् । किञ्च न तत्र बुद्धिगतस्य कल्प्यस्यापरसामान्यस्यासाधारणः कश्चिद् वाचकोऽस्ति, येन तत्र किञ्चित् सामान्यं नाम कल्प्येत । यतश्चानादिकालीनो यो भेदावग्रहसामर्थ्यस्य यत्किञ्चिद् हेतुकः प्रतिघातस्तन्निमित्तकस्य विषयाणामभेदविभ्रमस्य वशाद्यथा वस्तुतो भिन्नानामपि बुद्धीनामभेदावसायः = अभेदविभ्रमरूपो निश्चयः, तथाऽर्थानामपि व्यक्तिस्वरूपाणां स्वरूपपररूपाभ्यां परस्परं भिन्नस्वरूपाणां तत्त्वेन = अभेदेन सामान्यप्रत्ययरूपोऽवसायः = निश्चयो भविष्य-

**सरूपाणां च सर्वेषां न भेदोपनिपातिनः ।**
**विद्यन्ते वाचकाः शब्दा नापि भेदोऽवधार्यते ॥ १०० ॥**

प्रख्योपाख्यात्मको द्विविधो व्यवहारः । तत्र समानं रूपमेषां वास्तवस्य भेदस्यानवधारणादर्वाग्दर्शनानां वस्तूनां प्रतिभासते । न हि तत्त्वतो वास्तवं सारूप्यमस्ति, सौगतनये तस्य निराकृतत्वादिति दुरवधारभेदत्वेन यत्सरूपत्वम्, तदेव निर्दिश्यत इति सादृश्यनिबन्धनोऽभेदावसायलक्षणः प्रख्यात्मको व्यवहारः । असाधारणभावरूपनिवेशिसंविज्ञानपदाभावाच्चोपाख्यात्मकोऽप्यभेदेनैव व्यवहारः । उपाख्याया वाचकस्य शब्दस्य सांकेतिकत्वात् स्वलक्षणे वृत्त्यनुपपत्तेः ।

"शब्दाः सांकेतिकं प्राहुः व्यवहाराय संस्मृताः ।
तदा स्वलक्षणे नास्ति संकेतस्तेन तत्र नः ॥"

---

तीति रीत्या भेद एव वास्तवः सामान्यरूपोऽभेदस्तदवसायो वा मिथ्येति अपोहवादिनो बौद्धाः ॥९९॥

किमनादिकालीनविषयाभेदविभ्रमवशादेवायं बुद्धीनामभेदावसाय उतास्याभेदावसायस्य प्रमारूपस्य किञ्चन बहिर्निमित्तमस्तीति जिज्ञासन्नाह—सरूपाणाञ्चेति ।

अस्यार्थः—परस्परं सरूपाणां = समानसंस्थानानाञ्च पदार्थानां सर्वेषामपि भेदोपनिपातिनः = सारूप्याद् भेदस्य दुरवधारत्वेन भेदबोधका वाचका अभिधायकाः शब्दा न विद्यन्त इत्युपाख्यारूपस्य व्यवहारस्य शाब्दस्याभावः, तेनैव च हेतुना नापि = नैव च सरूपाणां पदार्थानां भेदोऽवधार्यते इति प्रख्यात्मकस्य प्रत्ययरूपस्य व्यवहारस्याभाव इति सरूपवस्तूनां भेदविषयकस्य व्यवहारद्वयस्याभावात्, तेषां सादृश्यनिबन्धनोऽभेदविभ्रमरूपो व्यवहार इति नास्ति व्यक्तीनामभेदावसायस्य किञ्चन वास्तवं निमित्तं बहिः । भेदस्य परमार्थत्वादभेदस्य च विभ्रमविषयत्वेन कल्पितत्वादिति ।

अयं भावः—अस्तीह जगति वस्तूनां प्रख्योपाख्यात्मको द्विविधो व्यवहारः । तत्र प्रख्या प्रत्ययः । उपाख्या तु अभिधानमिति । तत्रार्वाग्दर्शनानाम् = अपकृष्टदृष्टीनां पुंसां वस्तूनां वास्तवस्य भेदस्य सादृश्येनानवधारणादेषां समानम् = एकम् रूपं प्रतिभासते । नहि वस्तुतस्तेषां स्वरूपतः सारूप्यमस्ति, बौद्धानां कृतान्ते जातिलक्षणस्य सारूप्यस्य निराकृतत्वादिति वस्तूनां दुरवधारभेदत्वेन गृह्यमाणं यदभेदरूपं सारूप्यं तदेव शब्देन निर्दिश्यत इति तेषामुपाख्यात्मकः शाब्दोऽभेदव्यवहारः । एवमेव सादृश्यनिमित्तकस्तेषामभेदविभ्रमरूपः प्रख्यात्मको व्यवहारः । सरूपाणां वस्तूनामसाधारणधर्मरूपे सङ्केतेन निवेशिनः सन्निविशतः संविज्ञानपदस्य = शक्त्या बोधकपदस्य अभावाच्च तेषां भेदोपाख्याया अभावेन तेषामुपाख्यात्मकोऽपि अभेदेनैव शाब्दो व्यवहारः । उपाख्यायाः= वाचकस्य शब्दस्य साङ्केतिकत्वात् = सङ्केतबलेनैव स्वार्थाभिधानाय प्रवृत्तेः, स्वलक्षणे= व्यक्तावनुगतत्वादानन्त्यव्यभिचारदोषाभ्यां संकेताभावेन प्रवृत्त्यनुपपत्तेः । तदुक्तम्—

**इत्यादिना वेदितत्वात्। यद्यपि चावधारणाभावादेव वाचकाभावोऽवगतः, अवधारणपूर्वकत्वाद् वाचकानाम्, तथापि यत्रापि गवादिष्ववधार्यते भेदः, तत्रापि तस्य वाचका न सन्ति। स्वलक्षणस्य शब्देनाभिधातुमशक्यत्वात्, अपि त्वभेदाध्यवसायानुविधायिन एव ते तत्रापीति दर्शयितुं भेदेन वाचकाभाव उक्तः। इत्थं च विशेषाणामविवेचनादप्यनुगमाभिमानो वाचकाभावाच्चाभिन्ना शब्दप्रवृत्तिर्न तु बहिर्वस्तुभूतं सामान्यं नाम किञ्चनात्र निमित्तमित्युक्तं भवति ॥ १०० ॥**

**सर्वेषामिति व्याप्तिर्ह्यत्रोक्ता, तामेवोपपादयितुमाह—**

---

'शब्दाः सांकेतिकं प्राहुर्व्यवहाराय संस्मृताः।
तदा स्वलक्षणे नास्ति संकेतस्तेन तत्र नः॥' इति।

अस्यार्थः—व्यवहाराय = प्रवृत्तिनिवृत्तिलक्षणाय, संस्मृताः = संस्मृत्य प्रयुक्ताः। संपूर्वकस्य स्मरतेः स्मरणपूर्वके प्रयोगे लक्षणा। शब्दाः सांकेतिकम् = संकेतितमेवार्थं प्राहुर्नासंकेतितम्, तदा स्वलक्षणेऽननुगतत्वादानन्त्यव्यभिचारदोषाभ्यां नास्ति संकेतोऽतो नोऽस्माकं बौद्धानां मते ते शब्दास्तत्र स्वलक्षणे न प्रवर्तन्त इति। यद्यपि च स्वलक्षणेषु दुरवधारत्वेन भेदावधारणाभावादेव वाचकाभावोऽवगतः, भेदावधारणपूर्वकत्वाद् वाचकानां प्रवृत्तेः। ज्ञानपूर्वकस्य शब्दप्रयोगस्य दृष्टत्वान्न्यायसिद्धत्वाच्चेति कारिकायां भेदावधारणाभावात् पृथग् वाचकाभावस्योपादानं न युज्यते, तथापि यत्रापि गवादिष्ववधार्यते भेदस्तत्रापि तस्य भेदस्य वाचका न सन्ति, प्रागुक्तरीत्या स्वलक्षणे संकेताऽनुपपत्त्या तस्य शब्देनाभिधातुमशक्यत्वात्। अतस्तत्रापि सादृश्यमूलकाहार्यभेदविभ्रमानुप्रवृत्ता एव ते शब्दा इति दर्शयितुं कारिकायां भेदावधारणाभावाद् भेदेन = पृथक् वाचकाभाव उक्तः।

इत्थञ्च भेदानामनवधारणादपि व्यक्तीनामनुगमाभिमानो वाचकाभावाच्चाभिन्ना शब्दप्रवृत्तिरुपाख्यारूपा न तु बहिः परमार्थभूतं सामान्यं नाम किञ्चन व्यक्तीनामभेदाध्यवसाये निमित्तमस्तीत्युक्तमनया कारिकया भवतीति ॥१००॥

पूर्वकारिकायां सरूपाणाञ्च सर्वेषामित्यनेन सर्वे पदार्था विशेषानवधारणाद् विशेषवद् वाचकशब्दशून्या अनवधृतभेदाश्चेति व्याप्तिरुक्ता, तामेव व्याप्तिमुपपादयितुमाह ज्ञानशब्दार्थविषया इति।

अस्यार्थः—ज्ञानानां परस्परं शब्दानामर्थानाञ्च ये विशेषा भेदा व्यवस्थितास्तेषां दुःखेनावधार्यत्वाद् ज्ञानानां शब्दानामर्थानाञ्च प्रत्येकं परस्परमेकत्वदर्शनम्। गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमिति।

अयं भावः—ज्ञानानां तावद् विषयीभूतव्यक्तिभेदाद् भेदो न्याय्योऽपि गौर्गौरिति अर्वाग्दर्शिनोऽभेदावसायात् परिच्छेत्तुं = ग्रहीतुं न शक्यते, इत्येकत्वं ज्ञानेषु असदध्यारोपितं पश्यन्ति। एवं शब्दनिष्ठानामनुनासिकत्वादिधर्माणां भेदाद् वक्तृभेदाच्च शब्दानां

ज्ञानशब्दार्थविषया विशेषा ये व्यवस्थिताः ।
तेषां दुरवधारत्वाज्ज्ञानाद्येकत्वदर्शनम् ॥ १०१ ॥

ज्ञानानां तावद्विषयभेदाद् भेदो न्याय्योऽप्यर्वाग्दर्शिनो गौगौरित्यभेदावसाया-दशक्यपरिच्छेद इत्येकत्वमसदध्यारोपितं तत्र पश्यन्ति। एवं च शब्दानामनुना-सिकतादीनां धर्माणां भेदाद् वक्तृभेदाच्च भेदेऽप्यभेदेनावसायः 'स एवायं गोशब्दः' इति। क्रमवताम (व) स्थायिनां शब्दानां न किञ्चित् सामान्यमस्ति। अथाभेदेनावसीयन्ते सूक्ष्माणां विशेषाणां दुरवधारत्वात्, अर्थानामपि खण्डमुण्डादिः स्फुट एव भेदो नादृतोऽर्वाग्दर्शनैः विजातीयव्यावृत्त्या अन्वयिरूपोल्लेखनात्। तथा च मणिमुक्ता-प्रवालादीनामभियुक्तप्रणिधानगम्यो विशेषो न सर्वैर्विविच्यते। अवदातदर्शनास्तु यथातत्त्वं विवेकिन एवेति भेदवादिनयः ॥ १०१ ॥

जातिवादिनस्तु मन्यते—

---

भेदेऽपि अभेदग्रहः स एवायं गोशब्द इति। एवं वर्णक्रमवतामत एवास्थायिनां शब्दानां न किञ्चित् सामान्यमस्ति, आधारविरहात्। तथापि सूक्ष्माणां विशेषाणां दुरवधारत्वाद-भेदेनावसीयन्ते = गृह्यन्ते। अर्थानामपि खण्डमुण्डादिरूपो भेदः स्फुट एव, तथाप्यर्वाग्-दृष्टिभिः पुंभिर्नादृतः, विजातीयव्यावृत्तिरूपस्य = अतद्व्यावृत्तिरूपस्यापोहरूपस्य, अन्व-यिरूपस्य = सर्वव्यक्त्यनुगतरूपस्योल्लेखनात्। तथा च मणिमुक्ताप्रवालादीनामभियुक्त-प्रणिधानगम्यः = मण्यादिपरीक्षाकुशलपुरुषमनःसमाधानगम्यः तारतम्यरूपो विशेषो न सर्वैर्विविच्य ज्ञायते। एवञ्च सर्वेषु पदार्थेषु विशेषानवधारणादभेदाध्यवसाय इति न जातिकल्पना बहिःपदार्थसत्त्वहेतुका युक्तेति। निर्दोषदृष्टयस्तु यथातत्त्वं भेददर्शिन एव, न त्वभेददर्शिन इत्यभेददर्शनं विभ्रम एवेति भेदवादिनां मतम् ॥ १०१ ॥

जातिवादिनस्तु ज्ञानेषु विषयेषु च सर्वत्रैवानुभूयमानोऽभेदाध्यवसायोऽबाधितो न विभ्रमरूपो नापि चापलपितुं शक्य इति मन्यमाना आहुः—ज्ञानेष्वपीति।

अस्यार्थः—वस्तूनां भेदाभेदरूपतादात्म्यस्य समवायस्य वाऽर्थान्तरसंसर्गस्य = जातिसंसर्गस्य दर्शने सति तद्हेतूक्त्यावगम्यते। यथाऽर्थेषु सर्वेषु जातयः सन्ति तथा सर्वेषु ज्ञानेष्वपि जातयः सन्तीति। ताश्च = ता एव ज्ञानगता जातयो व्याप्यव्यापकभेद-भिन्नाः प्रत्यक्षत्वादिका ज्ञानत्वञ्चार्थस्य प्रसाधिकाः—बाह्यानामर्थजातीनां निश्चायिकाः, जातिहेतुकं विषयानुगमं विना जातिहेतुकस्य ज्ञानानुमानस्यानुपपत्तेः। यद्वा ता एव जातयोऽर्थस्यात्मीयस्य कार्यरूपस्य प्रयोजनस्य सामान्यकार्यस्यानुगतबुद्ध्यादेः प्रसाधिकाः सम्पादिका इति।

अयं भावः—अयं विषयेषु ज्ञानेषु च सर्वत्रानुभूयमानोऽबाधितश्चाभेदाध्यवसायः सर्वत्र जातिसद्भावावेदको नापह्नोतुं शक्यते इति ज्ञानानामपि जातिविशेषाः प्रत्यक्ष-

**ज्ञानेष्वपि यथार्थेषु तथा सर्वेषु जातयः।**
**संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः ॥ १०२ ॥**

अनपह्नवनीयोऽयमभिन्नावसायः सर्वत्र जातिसद्भावावेदक इति ज्ञानानामपि सामान्यविशेषाः सन्तु, कानुपपत्तिरिति वस्तूनां भेदाभेदादिरूपमर्थान्तरसंसर्गनिमित्तं मन्यमानाः प्राहुः। ता एव ज्ञानजातयो अर्थस्य प्रसाधिकाः बाह्यानामर्थजातीनां निश्चायिकाः। बुद्धेरन्वितावभाससिद्धौ व्यक्तीनामपि सामान्यावधारणात्। अर्थस्यात्मीयस्य वा सामान्यकार्यस्यानुवृत्त्यादेः प्रसाधिकाः। यत्र यत्र च सत्यप्यवान्तरविशेषेऽभिन्नः प्रत्ययोऽस्ति तत्र तत्र प्रमाणसिद्धानां सामान्यविशेषाणामङ्गीकरणमानन्त्येऽपि न दोषाय। असाधारणसङ्केताभावेऽपि च जात्युत्पलादिगन्धादीनामिव सत्त्वमस्त्येव ॥ १०२ ॥

संसर्गदर्शन एव प्रकारान्तरमाह—

---

त्वादिका ज्ञानत्वञ्च सन्तु न च काचनानुपपत्तिरत्रेति वस्तूनां भेदाभेदादिरूपमर्थान्तरसंसर्गरूपं जातिसिद्धेर्निमित्तं मन्यमानाः प्राहुः। ता एव च ज्ञानजातयोऽन्तःस्था बाह्यानामार्थजातीनां निश्चायिकाः, बुद्धेरनुगतावभाससिद्धौ तद्विषयभूतानां व्यक्तीनामपि तद्हेतुभूतसामान्यसिद्धेः। यद्वाऽर्थस्य स्वप्रयोजनस्य जातिकार्यस्यानुगतप्रतीत्यादेः संपादिका जातयः।

ननु व्यापकजातेर्महासत्तायाः कथञ्चित् स्वीकारेऽपि व्याप्यजातीनां घटत्वादीनां परापरजातीनां द्रव्यत्वपृथिवीत्वादीनाञ्च स्वीकारे आनन्त्यप्रयुक्तं गौरवमिति चेन्न। यत्र यत्र च सत्यप्यवान्तरविशेषेऽभिन्नः प्रत्ययोऽस्ति तत्र तत्र प्रमाणसिद्धानां जातिविशेषाणां तत एव स्वीकारेऽपि आनन्त्यस्यादोषत्वाद् दोषानावहत्वाच्च।

नन्वसाधारणधर्मरूपेषु सामान्यविशेषेषु नास्ति शब्दानां संकेतो दुरवधारत्वात्तेषामिति तद्वाचकशब्दाभावे कथं तत्सत्त्वमवगम्यत इति चेन्न। असाधारणधर्मेषु संकेताभावेऽपि च यथा जातिगन्धोत्पलादिगन्धादिषु प्रत्यक्षप्रमाणसिद्धा गन्धत्वादिसामान्यव्याप्या अवान्तरजातयोऽभ्युपगम्यन्ते तथा तदभावेऽपि प्रमाणसिद्धा अवान्तरजातिविशेषा अभ्युपेयन्त एवेति ॥ १०२ ॥

वस्तूनां भेदाभेदरूपतादात्म्यसंसर्गदर्शन एव ज्ञानगतजातिसिद्ध्यतिरिक्तं प्रकारमाह-ज्ञेयस्थमेवेति।

अस्यार्थः—ज्ञेयस्थमेव सामान्यं ज्ञानानामभेदावसाये उपकारकम्, न तु ज्ञानगतं सामान्यम्। तत्र हेतुमाह-न जात्विति। जातु कदाचिदपि ज्ञानं ज्ञेयवत् पररूपेण परस्य सामान्यस्य रूपेण स्वरूपेण न रूप्यते न निरूप्यते। ज्ञानस्य स्वयंप्रकाशत्वेन ज्ञेयत्वाभावात्। ज्ञानं हि स्वप्रकाशं स्वतन्त्रमतो ज्ञेयमेव न भवति। एवमपि ज्ञानानां यथा स्वभेदावसाये ज्ञेयपरतन्त्रत्वं तथा स्वाभेदावसायेऽपि ज्ञेयगतसामान्यपरतन्त्रत्वमस्त्येवेति।

**ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकम् ।**
**न जातु ज्ञेयवज्ज्ञानं पररूपेण रूप्यते ।। १०३ ।।**

**यथा ज्ञेयं व्यतिरिक्तसामान्यरूपेण रूप्यते रूपवत् क्रियते, नैवं ज्ञानं संविदात्मसमवेतेन व्यतिरिक्तसामान्यरूपेण रूप्यते । ज्ञेयधर्मः किलायं यत् पररूपेण रूपणम्, ज्ञानं तु स्वतन्त्रं ज्ञेयमेव न भवति । ज्ञेयनिष्ठतया हि ज्ञानानां ज्ञेयस्थस्य सामान्यस्याभेदेन तदभेदावसायः प्रत्यर्थनियतत्वेऽप्युपपद्यते । बाह्यपरवशत्वेनास्वाधीनत्वाज् ज्ञानानां स्वत एव वैलक्षण्यानुपपत्तेर्बहिर्भिन्नेन निमित्तेन तत्र भाव्यम् । तद्यथा 'घटो घटः' इति घटाकारे बाह्यं निमित्तं तथाऽभेदेऽपि तद्गतं सामान्यमिति युक्तम् ।। १०३ ।।**

**कथं पुनर्ज्ञानं ज्ञेयं न भवतीति पररूपेण न रूप्यत इत्याह—**

---

अयं भावः-यथा ज्ञेयं स्वव्यतिरिक्तसामान्यरूपेण रूप्यते = विजातीयव्यावृत्तरूपवत् क्रियते, एवं स्वप्रकाशसंविद्रूपं ज्ञानमात्मसमवेतेन स्वव्यतिरिक्तसामान्यरूपेण न रूप्यते, पररूपेण रूपणस्य ज्ञेयधर्मत्वात् । ज्ञानं तु स्वप्रकाशे ज्ञानान्तरनिरपेक्षतया स्वतन्त्रं ज्ञेयमेव न भवति, ज्ञेयस्य स्वप्रकाशे ज्ञानपरतन्त्रत्वात् । ज्ञानानाञ्च स्वभेदावसाय इव स्वाभेदावसायेऽपि ज्ञेयनिष्ठतया = ज्ञेयपरतन्त्रतया ज्ञेयस्थस्य सामान्यस्याभेदेन ज्ञानाभेदाध्यवसायो ज्ञानानां प्रत्यर्थनियत्वेऽपि = प्रतिविषयं भेदेऽप्युपपद्यते । ज्ञानानाञ्च बाह्यविषयपरतन्त्रत्वेनास्वतन्त्रत्वात् स्वत एव वैलक्षण्यानुपपत्तेस्तत्र बाह्येन स्वभिन्नेन निमित्तेन भाव्यम् । तद्यथा -घटो घटः' इति ज्ञाने घटाकारे बाह्यं निमित्तं तथा ज्ञानानामभेदाध्यवसायेऽपि ज्ञेयाभेदाध्यवसाय इव ज्ञेयगतं सामान्यं निमित्तमिति युक्तमिति ।। १०३ ।।

कथं पुनर्ज्ञानं ज्ञेयं न भवतीति कृत्वा पररूपेण न रूप्यत इत्युक्तमिति जिज्ञासायामाह—यथा ज्योतिरिति ।

यथा प्रदीपादिकं ज्योतिरन्येन प्रकाशेन सौरादिनाभिप्रकाश्यते, तथा ज्ञानाकारो ज्ञानस्य स्वरूपमन्येन ज्ञानेन नोपगृह्यते न विषयीक्रियत इति योजना ।

अयं भावः—यथा घटादिप्रकाशकस्य प्रदीपस्य स्वप्रकाशे प्रकाशान्तरनिरपेक्षत्वेन प्रकाशत्वम्, तथैव विषयप्रकाशकस्य ज्ञानस्य स्वप्रकाशे ज्ञानान्तरनिरपेक्षत्वेन स्वप्रकाशत्वम् । इतरप्रकाशकस्य हि प्रकाशस्य स्वप्रकाशत्वरूपं जडवैलक्षण्यं युक्तम्, तस्यापि घटादिवत् परप्रकाश्यत्वे तु जडत्वापत्तिः । किञ्चार्थप्रकाशकं ज्ञानमर्थप्रकाशकाले प्रकाशते न वा ? नान्त्यः; अर्थप्रकाशकस्य ज्ञानस्यार्थप्रकाशकालेऽप्रकाशेऽर्थसंवेदनमेव न स्यात् । प्रकाशकस्याप्रकाशे हि तत्संबद्धार्थप्रकाशासिद्धेः । आद्यपक्षेऽपि स्वेन प्रकाश्यते, परेण वा ? अत्राद्यपक्षे इष्टसिद्धिः । द्वितीयपक्षे तु तदानीं परप्रकाशासंभवः, ज्ञानयौगपद्यानभ्यु-

यथा ज्योतिः प्रकाशेन नान्येनाभिप्रकाश्यते ।
ज्ञानाकारस्तथान्येन न ज्ञानेनोपगृह्यते ।। १०४ ।।

यथा घटादीनां दीपः प्रकाशकः स्व-प्रकाशे दीपान्तरं नापेक्षते, तथार्थस्य प्रकाशकं ज्ञानमात्मप्रकाशनाय प्रकाशान्तरानपेक्षमिति स्वप्रकाशकं सिद्धम् । जडवैलक्षण्यं हि प्रकाशकत्वमिति तस्यापि प्रकाश्यत्वे जडतापत्तिः । अर्थप्रकाशकाले च प्रकाशकस्याप्रकाशेऽर्थसंवेदनमेव न स्यात् । प्रकाशासञ्चेतने तल्लग्नार्थसञ्चेतनासिद्धेः । उत्तरकालं तु वेदनं क्वोपयोगि ? उत्पन्नायां च प्रकटतायां आत्मसमवेतस्य तदानीं ज्ञानस्यासञ्चेतनात् मम प्रकटितोऽर्थ इत्यात्मगामि संवेदनं न स्यात् । तस्माज्ज्ञानान्तरेण स्वप्रकाशकं ज्ञानं न गृह्यते, परप्रकाश्यत्वे प्रकाशकत्वाभावादिति तदाकारस्य परेण रूपणाभावाज् ज्ञेयस्थमेवाभिन्नं सामान्यमस्याभेदनिमित्तम् । तद्वशादस्य ग्राह्याकारस्य ज्ञानान्तरेणाभेदग्रहणात् । स्वसमवेतसामान्यवशेन त्वभेदप्रतिभासे बहिः सामान्यपरिकल्पो निर्निबन्धन एव स्यात् । अन्यथैवाभेदप्रतिभासस्योपपत्तेः । अर्थानान्तु व्यतिरिक्तत्वादभिन्नं सामान्यमुपपद्यते । ज्ञानानां तु सामान्यकारो न व्यतिरिक्त इति नाभिन्न उपपद्यते । प्रत्यर्थनियतत्वेन तेषां भेदात् तदभिन्नस्य तस्यापि तथात्वोपपत्तेरिति नार्थैः साम्यमस्ति । बुद्ध्याकाराणामाकारसाम्यादेव च ज्ञानानामभेदावसायसिद्धेर्न संवेदनभागेऽपि सामान्ययोग इति साकाराः स्वप्रकाशा निःसामान्या बुद्धयः सिद्धाः ।

पगमात् । अर्थप्रकाशोत्तरकालिकंतु ज्ञानसंवेदनं नार्थप्रकाशोपकारकम्, अर्थप्रकाशकाले ज्ञानस्यासंविदितत्वेनार्थप्रकाशकत्वानुपपत्तेः । तदानीमसंविदितेनापि ज्ञानेन कथञ्चिदुत्पन्नायाञ्च प्रकटतायाम् = जातेऽप्यर्थप्रकाशे, आत्मसमवेतस्य ज्ञानस्य तदानीमसंवेदनात् मम प्रकटितोऽर्थः = ममार्थप्रकाशो जातः इत्यात्मगामिसंवेदनं न स्यात् । तस्माज्ज्ञानं स्वप्रकाशकत्वाद् ज्ञानान्तरेण न प्रकाश्यते, परप्रकाश्यत्वे हि घटादिवत् प्रकाशकत्वासंभवादिति ज्ञानस्वरूपस्य स्वप्रकाशस्य परेण प्रकाशेनाप्रकाशेन वा, स्वगतेनान्यगतेन वा निरूपणाभावाद् विषयगतमेवाभिन्नं सामान्यं ज्ञानस्याभेदप्रत्ययनिमित्तम् । निराकारस्य ज्ञानस्यस्वप्रकाशत्वेऽभिन्नत्वेऽपि च ग्राह्याकारस्य तस्य भिन्नस्य ज्ञेयस्थसामान्यवशादभेदग्रहणात् । ज्ञानगतसामान्यवशेन तु ज्ञानस्याभेदप्रतिभासाभ्युपगमे बाह्यविषयगतसामान्यपरिकल्पनं निष्फलमेव स्यात् । अभेदप्रतिभासस्यान्यथैव = ज्ञानगतसामान्यवशेनैवोपपत्तेः । अर्थानान्तु परस्परं स्वगतसामान्यस्वरूपाच्च व्यतिरिक्तत्वात् तेष्वनुगतमभिन्नं सामान्यमुपपद्यते । ग्राह्याकाराणां ज्ञानानान्तु सामान्याकारो न ज्ञानाकाराद् व्यतिरिक्तः स्यादिति नाभिन्नप्रत्ययहेतुरुपपद्येत । प्रत्यर्थनियतत्वेन ज्ञानानां भेदात् तदभिन्नस्य सामान्यस्यापि भेदोपपत्तेरिति न ज्ञानानामर्थैः साम्यमस्ति । ग्राह्याकाराणां परस्परं यत् किञ्चिद् वैजात्येनाभेदप्रत्ययसिद्ध्यर्थं तेषु सामान्ययोगाभ्युपगमेऽपि बुद्ध्याकाराणां

यद्यपि च वैशेषिका ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकमिच्छन्तो न साकारं नापि स्वप्रकाशं विज्ञानमिच्छन्ति, तथापि न वयं दर्शनान्तरप्रक्रियां ब्रूमः। अपि तु यत्प्रमाणोपपन्नमितीदमत्र दर्शनमुपक्षिप्तम् ॥ १०४ ॥

ननु च यथा घटोऽयमिति ज्ञाने घटोऽवसीयते तथा घटज्ञानमेतदिति ज्ञाने घटज्ञानम्। को ह्यत्र विशेषः ? यदि तु विषयसंवेदनरूपा बुद्धिर्नानुभूयेत, शब्देनापि तथा नाभिधीयेत, अनुभवपूर्वकत्वादभिधानस्य। न चात्मना आत्मानमनुभवति बुद्धिः, स्वात्मनि व्यापारविरोधात्। बोधरूपत्वात्तु स्वयमज्ञातैवार्थमवभासयतु। एतावानस्य बाह्याद्विशेषोऽस्तु। तद्बुभुत्सायां तु बुद्ध्यन्तरमेवापेक्ष्यम्। ज्ञानज्ञेय-सिद्धिमात्रनिष्ठत्वाच्च व्यवहारस्य प्रत्ययान्तरानपेक्षणाद् बुद्धिमालापि नानुषज्यत इत्याह—

---

सर्वथाऽऽकारसाम्यादेव च ज्ञानानामभेदावग्रहसिद्धेर्न संवेदनेऽपि सामान्ययोगः कल्प्य इति साकाराः स्वप्रकाशा निःसामान्या बुद्धयः सिद्धाः।

यद्यपि च केचन वैशषिका ज्ञेयस्थमेव सामान्यं ज्ञानानामभेदप्रत्यये उपकारक-मिच्छन्तोऽपि न साकारं नापि स्वप्रकाशं विज्ञानमिच्छन्ति, तथापि न वयं दर्शनान्तर-संमतां प्रक्रियामत्रोदाहरामः, अपि त्वभिनवामेव प्रमाणोपपन्नामितीदमत्राभिनवमेव दर्शन-मुपक्षिप्तमिति। नापि चेदं बौद्धानां दर्शनम्, तैर्ज्ञानस्य साकारत्वस्वप्रकाशत्वयोरभ्यु-पगमेऽपि आत्मरूपत्वाभ्युपगमेनात्मसमवेतत्वानभ्युपगमात्।

वस्तुस्तु इदमद्वैतदर्शनमेव। तत्र दर्शने वृत्तिरूपस्य ज्ञानस्य साकारत्वेन तद्-ग्राहकस्य साक्षिणोऽपि साकारत्वसंभवात्। साक्षिणि स्वप्रकाशत्वन्तु स्वीक्रियत एव तत्र। अद्वैतदर्शनमेव च हरेरभिप्रेतमत्र ग्रन्थ इत्येतद् ग्रन्थोपक्रमोपसंहाराभ्यासैरवसीयत एवेति ॥ १०४ ॥

ननु च यथा 'घटोऽयम्' इति ज्ञाने घटो भासते तथा 'घटज्ञानमेतद्' इति ज्ञाने घटज्ञानम्। न ह्यत्र घट-घटज्ञानयोर्वेद्यत्वे कोऽपि विशेषः। यदि तु विषयसंवेदनरूपा बुद्धिर्नानुभूयेत, तदा 'घटज्ञानमेतद्' इति शब्देनापि तथा नाभिधीयेत। 'यन्मनसा मनुते तद्वाचा वदति' इति नियमेनाभिधानस्यानुभवपूर्वकत्वात्। स्वात्मनि व्यापारविरोधाच्च नाऽऽत्मनाऽऽत्मानमनुभवति बुद्धिः। सा तु बोधरूपत्वादर्थप्रकाशकाले स्वयंप्रकाशान्तरे-णाज्ञातैव स्वार्थमवभासयतु। ज्ञानज्ञेययोरुभयोर्वेद्यत्वाविशेषेऽपि एतावानस्य बाह्याद् विशेषोऽस्तु, यदेकस्यार्थावभासकत्वमपरस्य तु न। ज्ञानस्य बुभुत्सायां तु तद्बोधार्थं ज्ञानान्तरमेवापेक्ष्यम्। जिज्ञासाया अभावे तु न ज्ञानान्तरापेक्षा। तदुक्तम्—

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः। इति।

अर्थव्यवहारस्य च ज्ञानज्ञेयसिद्धिमात्रसाध्यत्वात्। प्रथमज्ञानस्य च द्वितीयज्ञाने-नाज्ञातेनापि सिद्धेस्तत्-सिद्ध्यर्थं प्रत्ययान्तरानपेक्षणाद् बुद्धिमालाऽपि न प्रसज्यत इत्याह—घटज्ञानमितीति।

घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् ।
घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥ १०५ ॥

'घटज्ञानमिति ज्ञानं' घटाद्याकारं ज्ञानं यदा ज्ञानान्तरेण परामृश्यते 'एवं ममात्रानुभवो भूतः' इति प्रत्ययविषयं यत्परामर्शज्ञानं तद्घटज्ञानाद् भिन्नलक्षणं साक्षाद्विषयेणाजनितत्वात् । अनुकार्यप्रत्यया एव हि विषयेण जन्यन्ते नान्ये ज्ञानालम्बनाः, व्यवधानात्; सारूप्यबलेन च ग्राह्यग्राहकभावो, न वैधर्म्येण । न च घटज्ञानं ज्ञानान्तरे प्रतिभासते, अतो न तद् गृह्यते ।

अथोच्यते—सरूपमेव तज्ज्ञानं 'घटः' इत्येवमनुसन्धानादित्याह—'घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ।' न तु ज्ञाने उपनिपतति । अतो न बुद्धिर्बुद्धिमालम्बते, स्वयमेव तु प्रकाशत इत्यर्थः ।

अन्ये व्याचक्षते, घटज्ञानाद् बाह्यविषयात् घटज्ञानमिति, एवं ज्ञानं भिन्नं न विषयप्रविष्टं स्वात्मन्यवस्थितं ज्ञानं सञ्चेत्यते यस्माद् 'घटः' इत्येवमाकारं यद्विच्छिन्नं ग्राह्यप्रसूतं तदपि विषयमनुपतति ग्राह्यपरवशम् । विषयाप्रकाशने ज्ञानास्तिताया एवानिबन्धनत्वात् । एवं च बोधत्वाविशेषात् यद्यपि ज्ञानज्ञानमिति मतं तदपि बाह्यविषयमेवेत्युक्तं भवति ।

---

वस्तुतस्तु नेदं हेलाराजकृतमवतरणं युक्तम्, न्यायमतानुगामित्वात्, अद्वैतदर्शनस्य च प्रागुक्तस्यासमर्थकत्वात् । अतोऽवतरणान्तरमुच्यते ।

ननु नेदमद्वैतदर्शनं युक्तम् एकेनैव ज्ञानेन ग्राह्याकारग्राहकाकारद्वयवता सर्वथोपपत्तिसम्भवे ज्ञानद्वयाभ्युपगमे गौरवादिति वादिनं बौद्धं प्रत्यद्वैतदर्शनाभिप्रेतज्ञानद्वयसमर्थनायाह—घटज्ञानमितीति । तत्राद्वैतदर्शने वृत्तौ ज्ञानत्वमौपचारिकम्, साक्षिणि तु परमार्थभूतमिति विवेकः । कारिकार्थस्तु—घटज्ञानमेतदिति वृत्तिप्रत्ययपरामर्शरूपं यज्ज्ञानं तद् 'अयं घटः' इति वृत्तिप्रत्ययरूपं यद् घटविषयकं ज्ञानं ततो विलक्षणम् । यतः 'अयं घटः' इत्यपि = इति च यज्ज्ञानं तद्विषयोपनिपाति = घटरूपविषयसंबद्धम् । 'घटज्ञानमेतद्' इति ज्ञानन्तु घटज्ञानविषयकमिति भेद इति ।

अयं भावः—'अयं घटः' इति ज्ञानं घटज्ञानमेतद्' इति ज्ञानाद् विलक्षणम् । यत आद्यः प्रत्ययो विषयेण जन्यते । प्रत्यक्षं प्रति विषयः कारणमिति नियमाभ्युपगमात् । द्वितीयस्तु न, घटरूपेण विषयेण साक्षादजनितत्वात् । ये हि प्रत्ययपरामर्शरूपेण ज्ञानेनानुकार्याः = परामृश्याः, प्रत्यया 'अयं घटः' इत्यादिरूपास्त एव विषयेण जन्यन्ते न ज्ञानालम्बनाः, कार्यकारणभावे ज्ञानेन व्यवधानात् । किञ्च सारूप्यबलेन ग्राह्यग्राहकभावो, न वैधर्म्येण । ज्ञानसारूप्यञ्च विषये ज्ञानाकारता । 'अयं घटः' इति ज्ञाने घटस्य ज्ञानाकारता, 'घटज्ञानमेतद्' इति ज्ञाने च घटज्ञानस्य सेति तयोर्ज्ञानयोर्भेदः । किञ्च ज्ञाने प्रतिभासमानमेव = प्रतिबिम्बत्वमापाद्यमानमेव, आलम्बनं ज्ञानेन गृह्यत इति घटादि-

अन्ये तु व्याचक्षते—घटज्ञानमिति ज्ञानं विषयो यस्य तद् घटज्ञान-विलक्षम्, एवंस्वरूपमनाकारम्। न हि संविदाकारस्तज्ज्ञानाभिमते प्रतिबिम्बो-भवति। सारूप्यवशेन ग्राह्यग्राहकभावः, अन्यथा ज्ञानत्वाविशेषादिदमस्य संवेदनमिति प्रतिनियमो न स्यात्। 'घटः' इति तु यदेतद् बाह्यविषयं ज्ञानं तद्विषयोपनिपाति विषयाकारमुपादत्ते। अथ वा—घट ज्ञानमिति ज्ञानं घटज्ञानविलक्षणम्। किंतद्वैलक्षण्य-मित्याह—घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत्। निराकारमपि तद्विषयमनुपतति परिच्छिनत्ति निरूपयति—एवंरूपोऽयमर्थं इति। घटज्ञानमिति तु ज्ञानं न ज्ञान-रूपानुपाति, यतो घटज्ञानगतं विषयं निरूप्य ज्ञानरूपं किमपि तदित्येतावद्यदि परं निरूपयितुं शक्नोति, न तु सा तदीया बोधरूपता तस्य प्रतिभासते परसंवेदन इव। परेण हि घटज्ञानमस्योत्पन्नमिति कयाचिद्युक्त्या ज्ञानं परिच्छिद्यते. न तु स्ववत्प-रस्य प्रतिभासत इति ततो विलक्षणं न तस्य परिच्छेदकम्। उपलम्भात्मकत्वात् स्वयं प्रकाशत इति स्वसंवेदनं ज्ञानमुच्यते। न त्वात्मानमर्थमिव प्रकाशयतीति न स्वात्मन्यस्य कश्चिद् व्यापारः॥ १०५॥

ननु ज्ञानस्य ग्राह्याकारो न व्यतिरिक्तः, स च घटज्ञानमिति ज्ञानेन संवेद्यत इति बुद्धिरेव संवेदिता भवतीत्याशङ्क्याह—

---

कमालम्बनं ज्ञानेन गृह्यते। न च घटज्ञानं ज्ञानान्तरे प्रतिभासते = प्रतिबिम्बतामश्नुते, निराकारत्वात्। अतो न तद् गृह्यते।

यद्युच्यते-घटज्ञानमपि स्वविषयकस्य ज्ञानस्य सरूपमेव 'घटः' इत्येवमनुसन्धान-बलाद्घटस्याकारेण साकारत्वादिति, तदाह—घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत्। न तु 'घटः' इति ज्ञानं ज्ञाने उपनिपतति = संबध्यते। अतो न प्रथमबुद्धिर्द्वितीय-बुद्धिर्वा प्रथमबुद्धिमालम्बते, किन्तु प्रथमबुद्धिः स्वयमेव प्रकाशत इति।

अन्ये व्याचक्षते—'अयं घटः' इति ज्ञानाद् बाह्यवस्तुविषयकाद् घटज्ञानमेतदि-त्याकारकं ज्ञानं भिन्नम्, यतो ग्राह्ये विषये घटादौ प्रविष्टं = ग्राहकतया संबद्धम् स्वा-त्मनि = स्वस्वरूपे तु प्रकाशरूपतयाऽवभासकत्वेन व्यवस्थितं 'घटः' इत्यादिकं ज्ञानं न ज्ञानान्तरेण संवेद्यते। यस्माद् 'घटः' इत्याकारकं यद् विच्छिन्नं = 'घटज्ञानमेतद्' इति ज्ञानाद् विभिन्नम्, ज्ञानं तदपि ग्राह्ये घटादौ प्रसृत्य संबद्धं सद्ग्राह्यपरवशीभूय ग्राह्यं विषयमनुपतति = गोचरीकरोति, न तु स्वात्मानम्, स्वात्मनि वृत्तिविरोधात्। विषया-प्रकाशने च ज्ञानास्तित्वस्यैवानिमित्तत्वेन विलोपापत्तेः। एवञ्च यद्यपि द्वितीयं ज्ञानं घटज्ञानज्ञानमिति मतं तथापि तदपि बोधत्वाविशेषाद् बाह्यविषयकमेव न तु ज्ञान-विषयकमित्युक्तं भवतीति।

अन्ये तु व्याचक्षते-घटज्ञानमेतदिति ज्ञानं घटज्ञानाद् विलक्षणम्। घटज्ञानस्य साकारघटविषयकत्वात्, घटज्ञानज्ञानस्य तु निराकारसंविद्विषयकत्वात्। नहि संविदा-

यतो विषयरूपेण ज्ञानरूपं न गृह्यते।
अर्थरूपविविक्तं च स्वरूपं नावधार्यते ॥१०६॥

निराकारवादेऽप्ययं परिहारो लगति, यतस्तत्रापि घटज्ञानमेतदिति ग्राह्यस्वभावेन ज्ञानं ज्ञानान्तरमुपलक्षयति, न तद्रहितमात्मतत्त्वं तस्यावधारयति। न च ग्राह्याकारो ज्ञानस्वरूपम् औपाधिकत्वात्। तथा स्फटिकस्य नीलादि। न च ग्राह्याकारविविक्तं ग्राहकरूपं ज्ञानान्तरेणोपलक्ष्यते शुद्धबुद्ध्यनुकारेण बुद्ध्यन्तरानुपपत्तेः।

कारस्तज्ज्ञानत्वेनाभिमते द्वितीयज्ञाने प्रतिबिम्बीभवति, संविदो निराकारत्वात्। ज्ञाने विषयस्य प्रतिबिम्बनाच्च तयोर्द्वयोः सारूप्यम्, सारूप्यवशेन च तयोर्ग्राह्यग्राहकभावः। अन्यथा घटज्ञानतज्ज्ञानयोर्द्वयोरपि ज्ञानत्वाविशेषादिदमस्य संवेदनमिति प्रतिनियमो न स्यात्। 'घटः' इति तु यदेतद्बाह्यविषयकं ज्ञानं तद्विषयोपनिपाति विषयेण संसृज्यमानं सद् विषयाकारमुपादत्ते। घटज्ञानज्ञानन्तु विषयाकारं नोपादत्ते, तद्विषयीभूतायाः संविदो निराकारत्वादिति।

अथवा घटज्ञानमितिज्ञानं घटज्ञानविलक्षणमिति प्रतिज्ञायां किं तद् वैलक्षण्यमित्याह-घट इत्यपि यज्ज्ञानं विषयोपनिपाति तदिति। निराकारमपि घटज्ञानं स्वविषयं घटमनुपतति अनुपत्य परिच्छिनत्ति निरूपयति-एवंरूपो घट इति। घटज्ञानमेतदिति तु ज्ञानं न स्वविषयज्ञानरूपानुपाति, यतस्तज्ज्ञानं घटज्ञानगतं घटरूपं विषयं निरूप्य ज्ञानरूपं किमपि तदित्येव केवलं घटज्ञानं कर्मनिरूपयितुं शक्नोति। न तु घटज्ञानीया बोधरूपता घटज्ञानज्ञातुः प्रतिभासते परकीयज्ञानसंवेदन इव। परेण हि यथा घटज्ञानमस्योत्पन्नमिति कयाचिद् युक्त्या ज्ञानं परिच्छिद्यते, न तु स्वस्येव परस्य प्रतिभासत इति परसंवेदनाद् विलक्षणं न घटज्ञानस्य परिच्छेदकं ज्ञानम्। सर्वमपि ज्ञानमुपलम्भात्मकत्वात्तु स्वयं प्रकाशत इति स्वसंवेदनं ज्ञानमुच्यते न त्वर्थमिवात्मानमपि प्रकाशयतीति न ज्ञानस्य स्वात्मनि कश्चिद् व्यापारः। एवञ्च परस्परं प्रागुक्तस्य ज्ञानद्वयस्य वैजात्ये सिद्धेऽद्वैतदर्शनोपपत्त्या न बौद्धमतस्य पादप्रसारिकाऽवसर इति॥ १०५॥

नन्वेकमेव ज्ञानं ग्राह्याकारं ग्राहकाकारञ्च भवति। संवेदितृरूपात्मरूपाऽपीति एकैव बुद्धिः संवेद्या। ग्राह्याकारश्च न वस्तुतो ग्राहकाकाराद् व्यतिरिक्तः, स च = ज्ञानस्य ग्राह्याकारः घटज्ञानमिति ज्ञानेन ग्राहकाकारेण संवेद्यत इति न वृत्तिज्ञानं

**एवं च विषयाप्रकाशने ज्ञानत्वायोगात् ज्ञानज्ञानाभिमतमपि विषयनिष्ठमेव । तथा चोप-सर्जनेन विषय एव तेन विशिष्टोऽवस्थाप्यते 'ज्ञातोऽयमर्थः' इति । नीलज्ञानमित्येतदपि नीलनिष्ठतया विषयप्रभवं ज्ञानं परामृश्यते । एवं च कृत्वा संविदाकारस्य ज्ञानान्तरेणा-ग्रहणान्न व्यतिरिक्तसामान्यरूपेण निरूपणम् । ग्राह्याकारस्य तु ज्ञानान्तरेणाभेदेन ग्रहणं ज्ञेयस्थाभिन्नसामान्यनिमित्तम्, तेन तस्य ग्राह्याकारस्याविलक्षणस्य जनने तथैव बुद्ध्यन्तरेण ग्रहणादिति न तत्र सामान्यान्तरमुपयुज्यते । नापीतरेतराश्रयदोषः । ज्ञेयसामान्यस्याभिन्नज्ञानजनकत्वेनाभिन्नज्ञानस्य च ज्ञेयगताभिन्नसामान्यप्रतिपादकत्वेन**

---

साक्षिज्ञानञ्चाश्रित्य प्रवृत्तमद्वैतदर्शनं युक्तमित्याशङ्कितवन्तं बौद्धं प्रत्याह—यतो विषयरूपेणेति ।

अद्वैतदर्शने यतो ज्ञानरूपम् = ज्ञानस्य स्वरूपं विषयरूपेण = विषयाणां घटपटा-दीनां साधारणेनासाधारणेन वा रूपेण न गृह्यते अनुभवविरोधात् । विषयधर्माणां ज्ञानधर्मत्वे मानाभावाच्च । च शब्दो हेत्वर्थे यतो ज्ञानस्य स्वरूपम् = अर्थरूपविविक्तम् अर्थस्वरूपविरहितं ज्ञानान्तरेण नावधार्यतेऽतो विषयस्यैव संवेद्यता, तदाकारस्य वृत्ति-रूपस्य ज्ञानस्यापीति न ज्ञानस्य साक्षिरूपस्य निराकारस्य संवेद्यता तस्य तु प्रकाश-रूपस्य संवेदितृत्वमेव स्वयंप्रकाशत्वमेव चेति ।

अयं भावः—अयमेतत् कारिकोक्तः परिहारो यथा वृत्तिरूपस्य ज्ञानस्य साकार-त्ववादेऽद्वैतदर्शनसम्मते लगति तथा नैयायिकादिसम्मते ज्ञानस्य निराकारत्ववादेऽपि, यतस्तत्रापि वादे 'घटज्ञानमेतत्' इति द्वितीयं ज्ञानं ग्राह्यस्य घटस्य स्वरूपेणोपरक्तमेव प्रथमं ज्ञानमुपलक्षयति = गोचरयति, न तु ग्राह्यस्वरूपविरहितं प्रथमज्ञानस्य स्वरूप-मवधारयति, अननुभवात् । न च ग्राह्याकारो ज्ञानस्याद्यस्य स्वरूपम्, तदुपाधित्वात् । यथा स्फटिकस्य नीलादिकमुपाधिः । न च ग्राह्याकारविरहितं ग्राहकरूपं ज्ञानस्वरूपम्, ज्ञानान्तरेण गोचरीक्रियते । शुद्धामेव = ग्राह्याकारविरहिताम्, बुद्धिगोचरीकृत्य बुद्-ध्यन्तरस्य स्थित्यनुपपत्तेः बुद्धेर्निराकारत्वेन बुद्धयन्तरगोचरत्वासंभवात् । एवञ्च ज्ञानज्ञानत्वेनाभिमतस्य ज्ञानाप्रकाशकत्वे स्थिते विषयस्याप्यप्रकाशकत्वे ज्ञानत्वायोगात् तदपि = ज्ञानज्ञानमपि, अन्ते विषयग्राहकमेव, न तु ज्ञानग्राहकमुक्तयुक्तेः । तथा च विषये उपसर्जनीभूतेन ज्ञानेन विशिष्ट एव विषयो द्वितीयज्ञानेन विशेषेऽवस्थाप्यते 'ज्ञातोऽयमर्थः इति । यत्रापि च ज्ञानं न विषये विशेषणं किन्तु तत्र विशेष्यं तत्रापि नीलज्ञानमित्येतदपि

व्यापारभेदात् । तेनैतदचोद्यम् । यथा विनैव सामान्यमभेदावसायो बुद्धीनाम्, एवमर्थानामपि भविष्यतीति बुद्धीनामपि सामान्यवशेनैवोक्तप्रकारेणाभेदावसाय इति ।

ननु यदि ज्ञानरूपमर्थरूपविविक्तं नावधार्यते स्वतोऽप्यस्य सिद्धिर्न स्यात् । सत्यम् । सर्वदैव ग्राह्याकारः सहभाव्यनुभूयतेऽस्य, किन्तु तत्पृष्ठभाविनो ह्लादनीयप्रकारा अहङ्कारास्पदविच्छिन्नग्राह्याकारविधर्माण उत्तररूपा अहङ्कारास्पदतया संचेत्यन्त इति स्वतस्तद्विविक्तरूपावधारणमस्ति बुद्धीनाम् । ज्ञानान्तरेण तु ह्लादादयो गृह्यमाणा अपि तथा न संवेद्यन्त इति अनुभवसिद्धमेतदनपह्नवनीयम् । इत्यलमतिविस्तरेण ।

---

'इदं नीलम्' इति ज्ञानवन्नीलविषयकतया विषयजन्यं ज्ञानं नीलज्ञानमेतदितिशब्देन परामृश्यते । एवञ्च कृत्वा संविदाकारस्य = संवित्स्वरूपस्य निराकारस्य स्वप्रकाशस्य च ज्ञानस्य तत एव हेतोर्ज्ञानान्तरेणाग्रहणान्न संविद्व्यतिरिक्तसंविन्निष्ठसामान्यरूपेण निरूपणम् । ग्राह्याकारस्य त्वभेदेन ज्ञानान्तरेण ग्रहणं ज्ञेयगतं यदभिन्नं सामान्यं तद्धेतुकम् । तेन = ज्ञेयस्थाभिन्न सामान्येन, तस्य = वृत्तिरूपस्य ज्ञानस्य, ग्राह्याकारस्याविलक्षणस्य जनने सति तथैव बुद्ध्यन्तरेण = सक्षिरूपेण द्वितीयेन ज्ञानेन ग्रहणादिति न तत्र वृत्तिरूपे ज्ञाने साक्षिरूपे वा घटत्वादिव्यतिरिक्तं ज्ञानत्वादिरूपं सामान्यमभेदप्रत्यय उपयुज्यते ।

ननु ज्ञेयगताभिन्नसामान्यसिद्धावभिन्नज्ञानसिद्धिः अभिन्नज्ञानसिद्धौ च तादृशाभिन्नसामान्यसिद्धिः, सिद्धिश्चात्र ज्ञप्तिरूपेति इतरेतराश्रयदोष इति चेन्न । ज्ञेयगतसामान्यस्याभिन्नज्ञानजनकत्वेनाभिन्नज्ञानस्य च ज्ञेयगताभिन्नसामान्यप्रतिपादकत्वेन व्यापारभेदात् । अत एव चेदमपि चोद्यं नात्रापतति—यथा विनैव सामान्यं बुद्धीनामभेदावसाय एवमर्थानामपि भविष्यतीति बुद्धीनामपि सामान्यवशेनैवार्थानामिवाभेदावसाय इति ।

ननु यद्यर्थरूपविरहितं ज्ञानरूपं कदाऽपि नावधार्यते तर्हि तत एव हेतोः स्वप्रकाशत्वमप्यस्य न स्यादिति चेत्—श्रूयताम् । यद्यपि जातमात्रस्य ज्ञानस्य ग्राह्याकारः सर्वदेव ज्ञानसहभाव्येवाऽनुभूयते, तथापि तत्पृष्ठभाविनो ये तज्जन्याह्लादनीयप्रकाराः = ह्लादनं यत् स्रक्चन्दनवनितादिकं तज्जन्यसुखानुभवसदृशाः आह्लादरूपा अहंकारास्पदत्वेन = अहंकारविषयकत्वेन, ग्राह्याकारस्य विच्छेदात् पूर्वानुभवविधर्माण उत्तररूपा अनुभवा अहंकारालम्बनाः संवेद्यन्ते, तच्च स्वत इति अस्त्यर्थरूपविरहितस्य बुद्धीनां स्वरूपस्य अवधारणम् । ये तु ह्लादादयः—'अहं सुखी' इत्यादिना ज्ञानान्तरेण संवेद्यन्ते

तदेवं प्रमाणपरिशुद्धा जातिः शब्देनाभिधीयमाना दृष्टादृष्टविषयव्यवहारसाधन-समर्थेति जातिपदार्थसिद्धिः ॥ १०६ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
जातिसमुद्देशः
समाप्तः ॥

---

ते तु तथा = उत्तरानुभवेनेव न संवेद्यन्त इत्येतदनुभवसिद्धं नापलाप्यमिति । तदेवं प्रागुक्तरीत्या प्रमाणैः परीक्षया परिशुद्धा जातिर्महासामान्यरूपा तत्र परिणामरूपेण विवर्तरूपेण वा स्थिताऽवान्तरसामान्यरूपा च तत्तत्शब्दैरभिधीयमानत्वादपि अनुभव-गोचरतामापतन्ती दृष्टविषयके भारहरण-हलप्रवहणादिरूपेऽदृष्टविषयके च यागादिरूपे व्यवहारे साधनत्वेन स्वीकार्येति जातिपदार्थसिद्धिरिति ।

इति श्रीब्रह्मीभूतकाशीनाथशर्मतनूजरघुनाथशर्मकृतावम्बाकर्त्र्यां जातिसमुद्देशः प्रथमः ।

---

क्वचित् ९८ श्लोकात् परं अधिकः पाठो दृश्यते ।

तदा सहविवक्षायामामेकबुद्धिनिबन्धनम् ।
बुद्ध्यावयवविच्छेदसमुदायोऽभिधीयते ॥
प्रतिक्रियं समासत्वादेको भेदसमन्वितः ।
द्वन्द्वे धीत्यादिभेदेन तद्वत्त्वेन गम्यते ॥

क्वचित् १०४ श्लोकात् परं अधिकः पाठो दृश्यते ।

नचान्यसमवेतस्य सामान्यस्यावधारणे ।
ज्ञानशक्तिसमर्थः स्याद् ऋतस्यावस्तुनः क्वचित् ॥

# अथ द्रव्यसमुद्देशः ।

**प्रकाशः**

जातिर्वा द्रव्यं वा पदार्थावित्युक्तम् । तत्र वाजप्यायनदर्शनेन जातिं विशेषणभूतां पदार्थं व्यवस्थाप्य व्याडिदर्शनेन विशेष्यरूपं द्रव्यमपि पदार्थं व्यवस्थापयितुं यथादर्शनं तदेव पर्यायान्तरैरुद्दिशति ।

**आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि ।**
**द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ॥ १ ॥**

इहार्थक्रियायां द्रव्यमेवोपयुज्यत इति तदेव प्रवर्तकमर्थिनाम् । अतः शब्देन

---

**अम्बाकर्त्री**

शुण्डादण्डं कुण्डलीकृत्य कूले
क्रीडन् देवो देवनद्याः प्रतीतः ।
आखुं खात्वा भूमिगर्भे विशन्तं
कर्षन् दोर्भ्यां मङ्गलं संतनोतु ॥ १ ॥

बद्धश्रद्धाश्चरणयुगले वत्सला अङ्कपाल्यो-
र्लीनिम्लीना उरसि महति व्याप्तमुण्डेऽतिभीताः ।
कण्ठे मालीकृतफणिपतौ सस्पृहाश्चारुवक्त्रे
पत्युर्मूर्ध्नि प्रणतिपरुषा दृष्टयः पान्तु मातुः ॥ २ ॥

धावद्धूमाभदैत्यप्रकरगलमिलच्चन्द्रहासाऽट्टहास-
प्रत्यासत्तिप्रहृष्यत्परुषरवशिवावर्गसंवीक्षितश्रीः ।
तीव्रातिव्रातघातप्रवगजलकणप्रोतदृक्कोणपात-
प्रत्यासीदत्प्रहर्षप्रसरनिजजनप्रेक्षिता साऽस्तु भूत्यै ॥ ३ ॥

कंसे दैत्यावतंसे कलयति शयनात्तच्छयादुत्पतन्ती
दिव्यं धामाश्रयन्ती भ्रुकुटिकुटिलताकौशलैस्तर्जयन्ती ।
कृष्णं जातं वदन्ती रिपुमवनितले क्वापि संकेतयन्ती
विन्ध्ये विश्वासयन्ती निजजननिकरं पातु मामार्यकन्या ॥ ४ ॥

जात्याकृतिव्यक्तयः पदार्थः (न्या० द० सू०) इति गौतमसूत्रम् । तत्र जात्याकृतिव्यक्तिषु तिसृष्वेकां पदशक्तिमभिप्रेत्य पदार्थ इत्येकवचननिर्देशः । तथा च जात्याकृतिविशिष्टायां व्यक्तौ पदस्य शक्तिरेकेति गौतमीयाः काणादीयाश्च । वैयाकरणानां मते तु जातिर्वा द्रव्यं वा पदार्थौ इत्युक्तं प्राक् (वा० का० ३ जा० २)। तत्र जातिः

तदेवोच्यते। अनभिधीयमाना तु जातिरवच्छेदिका माधुर्यादय इवेति द्रव्यवादिनां दर्शनम्। द्रव्यं च द्विविधम्, पारमार्थिकं सांव्यवहारिकं च। तत्र द्वितीयं भेद्यभेदकप्रस्तावेन गुणसमुद्देशे वक्ष्यते

'वस्तूपलक्षणं यत्र....' ( वा० का० ३ भूयो० ३ )

इत्यादिना। अनेन च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति। इह तु पारमार्थिकं द्रव्यं निरूप्यते। तथा हि आत्मा अद्वैतवादिभिरात्मशब्देन तद् द्रव्यमुक्तम्। आत्मैव ह्युपाधिभिन्नं प्रतिभासमानं 'द्रव्यं पदानामर्थः' इति तेषां दर्शनमिहैव वक्ष्यमाणम्। वस्तुस्वलक्षणमर्थक्रियाकारि द्रव्यमिति शाक्यैरुक्तम्। स्वभाव इति

---

पदार्थं इति मीमांसकमतानुसारिवाजप्यायनदर्शनेन जातिं विशेषणभूतां पदार्थं व्यवस्थाप्य—

आनन्त्येऽपि हि भावनामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति॥

इति रीत्या जातेर्द्रव्ये उपलक्षणत्वमाश्रित्य द्रव्यमेव पदार्थं वदतो व्याडेर्दर्शनेन विशेष्यभूतं द्रव्यमपि पदार्थं व्यवस्थापयितुं यथादर्शनं द्रव्यमेव पर्यायभूतैर्नामान्तरैः संक्षेपेण निर्दिशति—'आत्मा वस्त्वित्यादि।

अयमर्थः—अद्वैतवादिनां मते आत्मा द्रव्यम्। आत्मैव हि तत्तदुपाधिभिन्नः तत्तत्पदैरभिधीयते। वस्तुस्वलक्षणं = व्यक्तिमात्रस्वरूपम्, तत्तद्धर्मैरविकल्पितं तत्तत्पदैरभिधीयमानं द्रव्यमिति शाक्याः। स्वस्य भावः स्वभावः सत्ता, सैव सर्वत्रानुगता नित्यैका, तत्तदुपाधिपरिच्छिन्ना, तत्तत्पदाभिधेया द्रव्यमिति सत्ताऽद्वैतवादिनः। पुरुषस्य वस्तुगत्याऽसङ्गस्यापि शरीरं प्रकृतिः। तत्र तस्य तादात्म्याभिमानात्। तथा च सैव द्रव्यमिति प्रकृतिचिन्तकाः। पृथिव्यप्तेजोवाय्वात्मकानि चत्वारि तत्त्वानि। नास्ति ततो व्यतिरिक्तश्चेतनो नाम कश्चित् तत्त्वान्तरं वेति चार्वाकाः प्रत्यक्षमात्रप्रमाणकाः। एते आत्मादयः शब्दा द्रव्यमित्यस्य पर्यायास्तेन द्रव्यपदसमानार्थकत्वं तेषाम्। तच्च द्रव्यं तत्तन्मते नित्यं व्यवस्थितम्। तदुपाधयो घटादयस्त्वनित्या इत्यवधेयमिति।

अयं भावः—इह प्रवृत्तिनिवृत्तिफलकेऽनादौ वृद्धव्यवहारे तत्तत्सुबन्ततिङन्तपदघटितास्ते ते वाक्यरूपाः शब्दाः प्रयुज्यन्ते। तत्रार्थक्रियायाञ्च जलाहरणादिरूपायां घटादिकं द्रव्यमेवोपयुज्यते न घटत्वादिका जातिरमूर्तत्वादिति घटादिकं द्रव्यमेव शब्दैरभिधीयमानं तत्तदर्थक्रियायां प्रवर्तकमर्थिनाम्, न जातिः। जातिस्तु द्रव्ये उपलक्षणीभूता इतरव्यावृत्तत्वेन तत्परिज्ञानायेति शब्दानभिधेयेति शक्यतानवच्छेदिका गुडे माधुर्यादय इव, इति द्रव्यवादिनां पूर्वेषां व्याडेश्च दर्शनम्। द्रव्यञ्च पारमार्थिकव्यावहारिकभेदेन द्विविधम्। तत्र द्वितीयम्—'वस्तूपलक्षणं यत्र' इत्यादिकया तृतीयकारिकया गुणसमुद्देशे

सत्ताद्वैतवादिभिः स्वभाव आत्मभूता सत्तेति कृत्वा। तथा हि क्रमरूपोपसंहारे सत्तैव सत्त्वमिति स्वसंबन्धिभिरुपहितभेदा सैव द्रव्यम्। प्रकृतेरेकदेशः चेतनः पुरुषः तद्द्वारेण शरीरशरीरिणोरव्यतिरेकात् शरीरम् द्रव्यं प्रधानमेवेति प्राकृतिकैः शरीरमेवैक आत्मा येषां तैः शरीरात्मवादिभिरुच्यते। तत्त्वम् इति चतुर्भूततत्त्ववादिभिश्चार्वाकैर्द्रव्यमुच्यते। पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा इति वचनात्। तदेवमेतैः परमार्थत एकमेव वस्तूच्यते। द्रव्यमित्यस्य इति। द्रव्यं नाम यः पदार्थः, तस्यैत एव पर्यायाः। एतेषामेव पारमार्थिकरूपाभिधायित्वात्। नान्ये घटादिशब्दाः। सत्यपि तदभिधायित्वे वक्ष्यमाणनयेनात्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम्। तथा च भाष्यम्—

'एकोऽयमात्मा उदकं नाम' इति। (म० भा० पस्पश०)

अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचनः। आकृतिद्वारेण चान्ये शब्दा द्रव्ये वर्तन्ते। इमे तु तत्परित्यागेन मुख्यया वृत्त्येति विशेषः।

'सिद्धे शब्दार्थसंबन्धे' (म० भा० पस्पश०) इत्यत्र

---

वक्ष्यते। यत्रोपलक्ष्योपलक्षणयोर्विशेष्यविशेषणयोश्च वर्णना द्रव्यरूपयोः। व्याडिदर्शने चानेन द्रव्येणाभिधेयेन सर्वेऽपि शब्दा द्रव्याभिधायिनो भवन्ति। इह तु द्रव्यसमुद्देशे पारमार्थिकमेव आत्मादिपञ्चकान्यतमरूपं द्रव्यमुपवर्ण्यते। तथाहि—अद्वैतवादिभिरात्मशब्देन तत्तद्द्रव्यमुक्तम्। यत्तत्तदुपाधिपरिच्छिन्नं तेन तेन रूपेण तत्तच्छब्दैरभिधीयते। आत्मैव हि तत्तदुपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थ इति तेषां दर्शनमस्मिन्नेव समुद्देशे वक्ष्यते। वस्तुस्वलक्षणं न्यायमते च विशेषवत्। स्वतो व्यावृत्तस्वभावं स्वतोव्यावृत्तार्थक्रियाकारि च द्रव्यमिति बौद्धैरुच्यते। स्वस्य भावः स्वभाव आत्मभूता सत्ता, तत्तद्व्यक्त्युपाधिपरिच्छिन्ना सर्वत्रानुगता सत्ताऽद्वैतवादिभिर्द्रव्यमित्युच्यते। तथाहि—कार्यवस्तुनः साध्यत्वदशायां जायमानस्य क्रमरूपस्य सिद्धत्वदशायामुपसंहारे सति सत्तैव स्थितिरूपा सत्त्वं द्रव्यमिति स्वसंबन्धिभिः स्वाश्रयभूतैरूपाधिभिरुपहितभेदा = संपादितभेदा सत्तैव द्रव्यमिति। प्रकृतिपुरुषौ संभूय जगतः प्रकृतिः = उपादानकारणमिति प्राकृतिका आहुः। तस्याः प्रकृतेरेकदेशश्चेतनः पुरुषस्तद्द्वारेण शरीरशरीरिणोरभेदात्। शरीरं द्रव्यं प्रधानमेवेति प्राकृतिकैः = प्रकृतिचिन्तकैः प्रधानरूपं शरीरमेवैक आत्मा येषां तैः शरीरात्मवादिभिः सांख्यसयूथ्यैरुच्यते। पृथिव्यप्तेजोवायुरूपचतुर्भूततत्त्ववादिभिश्चार्वाकैस्तत्त्वं द्रव्यमित्युच्यते। पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञेति वचनात्।

तदेवमेतैः पर्यायैः परमार्थत एकमेव वस्तूच्यते—'द्रव्यमित्यस्य पर्यायाः' इति। द्रव्यं नाम यः कोऽपि पदार्थस्तस्य एत एव पर्यायाः, एतेषामेव पारमार्थिकरूपाभिधायित्वात्। नान्ये घटादिशब्दाः पर्यायाः, पारमार्थिकरूपाभिधायिनो वा। सत्यपि

**'द्रव्यं नित्यमाकृतिरन्या चान्या च भवति'**

**इति वदता भाष्यकारेण नित्यं द्रव्यं स्मृतम्। संग्रहोक्तस्य तस्यार्थस्यानुवादात् स्मृतम् इत्याह। यद्यपि शाक्यादिदर्शने नित्यं न भवति द्रव्यं तथापि तन्मतस्यानभ्युपगमाददोषः। केवलं यदस्माकं द्रव्यमन्यैरेवमभिधीयत इत्येवमत्रोपन्यासः। यद्वा भाष्यानुसारेण स्वरूपान्यथात्वानापत्तिः विकारभेदेऽपि नित्यत्वं विवक्षितमेवेति सर्वत्र तत्सिद्धिः॥ १॥**

**एवं दर्शनान्तराश्रयणेनोद्दिष्टेष्वपि द्रव्यभेदेषु स्वसिद्धान्ताश्रयेण सार्वत्रिकीं द्रव्यपदार्थव्यवस्थां कर्तुमाह—**

---

तदभिधायित्वे वक्ष्यमाणयुक्त्याऽऽत्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम्। तथा च भाष्यम्—'एकोऽयमात्मा उदकं नाम' इति। वापीकूपसरित्समुद्रादिरूपैः प्रत्येकं भेदेऽपि एकमिदं द्रव्यमुदकं नामेति तदर्थः। अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचनः। यद्यपि घटादिशब्दा अपि प्रतिनियतद्रव्यवचना द्रव्येषु वर्तन्त एव, तथापि ते कम्बुग्रीवादिरूपाकृतिमभिधाय तद्द्वारेण लक्षणया द्रव्येषु वर्तन्ते। इमे त्वात्मादयः शब्दाः सर्व-द्रव्यसाधारणा आकृतीनां परस्परव्यभिचारित्वात् तत्परित्यागेन मुख्यया वृत्त्या द्रव्यमेवाभिदधति इति विशेषः।

तच्च द्रव्यं नित्यम्। तथाहि पस्पशाह्निके—'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके 'द्रव्यं नित्यमाकृतिरन्या चान्या च भवति' इति वदता भाष्यकारेण द्रव्यं नित्यमिति स्मृतम्। संग्रहग्रन्थोक्तस्य तस्यार्थस्यानुवादात् स्मृतमित्याह। यद्यपि शाक्यादिदर्शने वस्त्वादिशब्दैरभिधीयमानं द्रव्यं नित्यं न भवति, तथापि तन्मतस्य वैयाकरणैरनभ्युपगमान्न दोषः। केवलं यदस्माकमात्मस्वभावशब्दाभ्यामभिधीयमानं द्रव्यं तदन्यैः शाक्यादिभिर्वस्त्वादिशब्दैरभिधीयते इत्येवमत्रोपन्यासः।

यद्वा प्रागुक्तभाष्ये कटककुण्डलादिरूपाणां विकाराणां भेदेऽपि सुवर्णरूपस्य द्रव्यस्य सर्वत्र प्रत्यभिज्ञायमानत्वात् तत्तद्रूपैः परिणाम्यपि सुवर्णरूपं द्रव्यं नित्यमित्युक्तम्। तदनुसारेण तत्तदाकारवत्परिणामकृतविकारभेदेऽपि स्वरूपान्यथात्वानापत्तिर्नित्यत्वं विवक्षितमेवेति शाक्यादिदर्शनेष्वपि एवंविधद्रव्यनित्यत्वसिद्धिरिति ॥१॥

एवं शाक्यादिदर्शनसमाश्रयणेनाप्युद्दिष्टान् द्रव्यभेदाननास्थया परित्यज्य स्वसिद्धान्ताश्रयेण सर्वभावानुगतां द्रव्यपदार्थव्यवस्थां प्रथमपद्योक्तप्रथमपक्षानुगामिनीं कर्तुमाह—सत्यं वस्त्विति।

अयमर्थः—सर्वभावेषु विवर्तोपादानतयाऽनुगतं ब्रह्मरूपं सत्यं वस्तु तदाकारैः—तस्य ब्रह्मणो विवर्तरूपतया तदाकारभूतैरसत्यैर्घटपटादिभिरुपलक्षितं 'सन् घटः, सन् पटः, सन् मठः' इत्यादिप्रत्यक्षप्रत्ययेषु अवधार्यते = असद् व्यावृत्ततया गोचरीक्रियते। किञ्चासत्योपाधिभिः शब्दैरसत्याः स्फोटव्यञ्जका ध्वनयः। त असत्या घटपटपदादिरूपे

सत्यं वस्तु तदाकारैरसत्यैरवधार्यते ।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते ॥ २ ॥

इह सर्वशब्दानां पारमार्थिकं तत्त्वं स्प्रष्टुमशक्तानामनेकोपाधिविषयनिहितपदानां तद्रूपालिङ्गनं व्यवहारे समालक्ष्यते । उपाधीनां चागमापायवशविधुरितनिजस्वरूपाणामर्थिसार्थसमाशापूरणप्रतिहतशक्तित्वान्न तावत्येव पर्यवसानमित्युपलक्षितरूपपृष्ठपातिनः शब्दा व्यवस्थाप्यन्ते । अवधृतरूपनिवेशित्वाच्च शब्दानामवधारणानुसारमर्थे प्रवृत्तिः, अवधृतिश्चाकारद्वारेण । निराकारस्य बुद्ध्युपारोहायोगात् । यथाप्रत्ययं भेदावसायस्य बाध्यमानत्वादनुयाय्यभिन्नमेव रूपं परमार्थतः । तदेव ब्रह्मरूपं सत्यम् ॥ २ ॥

स्यादेतत् । उपाधिषु शब्दानां विश्रान्त्यभावे शब्दार्थोपाधित्वं तेषां न स्यात् । अवाच्यस्य तदुपाधित्वायोगादित्येतद्विचारयितुमाह—

---

स्फोटे आरोपितत्वादुपाधयोऽन्योन्यं व्यावर्तका घटपटपदादिरूपस्य स्फोटस्य, तदुपाधेर्घटपटपदादिरूपैः स्फोटात्मकैः शब्दैः सत्यमेव आत्मरूपं ब्रह्म घटपटाद्युपाध्युपहितमभिधीयते । अविद्यया घटपटादितादात्म्यापन्नं मुख्यया वृत्त्याच्यते ।

अयं भावः—इह हि लोकव्यवहारे पारमार्थिकं तत्त्वं सद्रूपं ब्रह्म वाङ्मनसागोचरतया साक्षात् स्प्रष्टुमशक्तानाम् = साक्षात् संबद्धमशक्तानाम्, अत एवानेकेषां घटपटादिरूपाणामुपाधीनां परिच्छेद्यतया विषयभूते सोपाधिके सद्रूपे ब्रह्मणि निहितपदानामुपाधिद्वारेण संबद्धानां सद्रूपब्रह्मालिङ्गनं = सद्रूपस्य ब्रह्मणो गोचरीकरणं 'सन् घटः, सन् पटः' इत्यादिप्रत्ययेषु समालक्ष्यते । सद्रूपब्रह्मोपाधीनाञ्च घटपटादीनामागमापायौ = उत्पत्तिविनाशौ, तद्वशादनवस्थितनिजस्वरूपाणां जलाहरणादिरूपार्थक्रिययाऽर्थिसार्थसदाशापूरणेन प्रतिहतशक्तित्वान्न तावत्येव = उपाधिस्वरूप एव वाचकतया पर्यवसानं घटपटादिशब्दानामिति घटपटाद्युपाध्युपलक्षितरूपे सद्रूपे ब्रह्मणि पृष्ठपातिनः पृष्ठे पतन्तः = पश्चात्पतन्तः, अभिधया पश्चात् संबध्यमानाः सोपाधिके सद्रूपे ब्रह्मणि घटादिशब्दा व्यवस्थाप्यन्ते । उपाधीन् शक्त्याऽभिधाय पश्चाल्लक्षणया सद्रूपे ब्रह्मणि व्यवस्थाप्यन्त इत्यर्थो वा । अस्मिन् पक्षे कारिकायामभिधीयत इत्यस्य लक्षणया बोध्यत इत्यर्थः । शब्दानाञ्च तत्तदाकारैरवधृते रूपे निवेशित्वस्यानादिलोकव्यवहारसिद्धत्वादवधारणानुसारमर्थे प्रवृत्तिः । अवधारणञ्चाकारद्वारेण, निराकारस्य सद्रूपस्य ब्रह्मणो बुद्ध्युपारोहायोगात् । यथाप्रत्ययं घटपटादिभेदावसायस्य च परस्परव्यभिचारेण बाध्यमानत्वात् सर्वभावानुयायि अभिन्नमेव रूपं परमार्थंसत् । तदेव ब्रह्मरूपसत्यं सर्वशब्दानामर्थमभिदधतां पर्यवसानभूमिरिति ॥२॥

ननु घटपटादिषु परब्रह्मोपाधिषु शब्दानां विश्रान्त्यभावेऽनुपदोक्तरीत्या स्वीक्रिय-

अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।
गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥ ३ ॥

'अदो देवदत्तस्य गृहं यत्रासौ काकः प्रतिवसति' इत्यत्रानियतस्वामिकगृहोपलक्षणायोपलक्षणभूतस्य काकस्योत्पतितेऽपि तस्मिन्नुपलक्षणस्य कृतत्वाद् अध्रुवत्वमनित्यत्वमिति तदनादरेणैव तदुपलक्षितं गृहमभिधीयते गृहशब्देन यथा तथा प्रकृतिसंबन्धादसत्योपाध्युपलक्षितं सत्यमुपाधिरूपानादरेण शब्दैरभिधीयत इत्यनभिधीयमानस्याप्यभिधानविषयनियामकत्वादुपलक्षणत्वे सत्युपाधित्वं निदर्शनेन समर्थितम् । तथा हि—

'क्तक्तवतू निष्ठा' ( पा० १।१।२६ )

इत्यनुबन्धस्याप्रयोगसमवायित्वादध्रुवस्योपलक्षणत्वे तद्रहितस्य शुद्धस्य प्रत्ययरूपस्य संज्ञाऽप्रसङ्ग इत्यत्रेदं भाष्ये निदर्शनमुक्तम् ॥ ३ ॥

---

माणे सति शब्दार्थत्वेनाभ्युपगतेऽभिधाविश्रान्तिधामनि सद्रूपे ब्रह्मणि घटपटादीनां परिच्छेदकत्वेनोपाधित्वं न स्यात्, अवाच्यस्य वाच्योपाधित्वायोगात् । यदि ह्यवाच्यमपि वाच्योपाधिः स्यात्तदा घटादिशब्दवाच्यानां घटादीनां घटत्वादिकमिव सच्छिद्रेतरत्वादिकमपि उपाधिः स्यात् । न चैतदिष्यते । 'घटोऽस्ति' इत्यादौ तदप्रतीतेरित्याशंक्यावाच्यस्यापि उपाधित्वोपलक्षणत्वे संभवत इत्येतन्निदर्शनेन समर्थयितुमाह—अध्रुवेण निमित्तेनेति ।

अयमर्थः—'अदो देवदत्तस्य गृहं यत्रासौ काकः प्रतिवसति' इत्यत्रोत्पतनक्रियया काकस्याध्रुवत्वमित्यध्रुवेण निमित्तेन अध्रुवत्वादेवोपलक्षणभूतेन ध्रुवं हि विशेषणं भवति । यथा देवदत्तगृहं गृहीतं भवति । गृहशब्देन तु काकोपलक्षितं शुद्धमेव गृहमभिधीयते, तथा च यथाऽवाच्यस्य काकस्योपलक्षणत्वं वाच्यगृहं प्रति, एवमवाच्यस्यापि घटादेर्वाच्यब्रह्मोपाधित्वं संभवति । निदर्शनस्योपलक्षणस्याप्युपाधिभेदत्वादिति ।

अयं भावः—'अदो देवदत्तस्य गृहं यत्रासौ काकः प्रतिवसति' इत्यत्रानियतस्वामिकं गृहं गृहशब्देनाभिधीयते । अतो देवदत्तगृहस्योपलक्षणमात्रवाक्ये काकपदमुपादीयते । उपलक्षणस्य काकस्योत्पतनेऽपि तेनेतरव्यावर्तनरूपस्योपलक्षणस्य कारणादनित्यत्वरूपाध्रुवत्वं काकस्येति चाभिधाया अनङ्गीकाररूपानादरेणैव तदुपलक्षितं गृहं यथा गृहशब्देनाभिधीयते शुद्धमेव, न तु काकविशिष्टम् । अन्यत्र गृहशब्दात्तदप्रतीतेः । तथा जगत्प्रकृतिरूपाया अविद्यायाः संबन्धादसत्यघटादिरूपोपाध्युपलक्षितं सद्रूपं ब्रह्मघटादिरूपोपाधिरूपेऽभिधाया अनादरेण शब्दैरभिधीयते इति घटादीनामुपलक्षणत्वे सति उपाधित्वं काकनिदर्शनेन समर्थितम्, उपलक्षणस्याप्युपाधिभेदत्वात् । तथाहि—'क्तक्तवतू निष्ठा' (पा० १।१।२६) इत्यत्रानुबन्धस्य प्रयोगसमवायित्वाभावादध्रुवस्योपलक्षणत्वेन तद्रहितस्य

**ननु काकोऽतिविलक्षणाद् गृहाद् भेदेनावधार्यमाणो मा भूद् गृहशब्दाभिधेयः। घटादयस्त्वाकाराः पृथगनुपलभ्यमानतत्त्वाः कथमिव तच्छब्दैर्नाभिधीयेरन्। अन्यो ह्युपाधिरुपलक्षणभूतः सामानाधिकरण्येनावच्छेदकः। तद्यथा दृतिहरिरित्यत्र पशुः। अन्यत्तु विशेषणमपृथक्च्छब्दवाच्यमुपरञ्जकम्। तद्यथा वानेयमुदकमिति वनीसंबन्धोपाधीयमानरूपविशेषमुदकम** अभिधीयते **इति वनीसंबन्धो विशेषणमुपरञ्जकतयाभिधेयत्वमापद्यत इति। तथा चोक्तम्—**

> **अर्थविशेष उपाधिस्तदन्यवाच्यः समानशब्दो यः।**
> **अनुपाधिरतोऽन्यः स्यात् श्लाघादि विशेषणं यद्वत्॥**

**इत्याशङ्क्य सदृशतरमत्र निदर्शनमाह—**

---

शुद्धस्य तत्तद्रूपस्य प्रत्ययस्य निष्ठा-संज्ञाया अप्रसङ्ग इत्याशंक्य तत्समाधानाय भाष्ये 'इदं काकरूपं निदर्शनमुक्तम्' इति ॥३॥

नन्वस्ति दृष्टान्तभूतस्य काकस्य दार्ष्टान्तिकानाञ्च घटादीनां महद् वैलक्षण्यम्। तथा च काकोऽतिविलक्षणसंस्थानाद् गृहाद् भेदेनावधार्यमाणो न भवतु गृहशब्दाभिधेयः। घटादयस्तु सद्रूपस्य ब्रह्मणो विवर्तभूता आकाराः 'सन् घटः' इत्यादिप्रत्ययेषु पृथगनुपलभ्यमानतत्त्वाः सर्वभावानुगतस्य तत्परिच्छिन्नस्य च सद्रूपस्य ब्रह्मणो वाचकैर्घटादिशब्दैः कथमिव नाभिधीयेरन्। उपलक्षणस्योपाधितोऽनन्यत्वेऽपि विशेषणतोऽत्यन्तभेदात्। अन्यो ह्युपाधिरुपलक्षणभूतः शब्दावाच्योऽपि प्रवृत्तिनिमित्तसामानाधिकरण्येनावच्छेदकः। तद्यथा—'दृतिहरिः' इत्यत्र पशुत्वं प्रकृतिप्रत्यययोरवाच्यमपि प्रवृत्तिनिमित्तसामानाधिकरण्येन प्रतीयमानमुपलक्षणीभूयावच्छेदकमुपाधिः। अन्यत्तु विशेषणमेकशब्दवाच्यमुपरञ्जकम् = स्वस्थितया स्वस्वरूपेण विशेष्यस्यावभासकम्। तद्यथा वानेयमुदकमिति वनीसंबन्धेनोपाधीयमानः = व्यावर्त्यमानः पत्रघासादिसङ्कीर्णरूपविशेषमुदकमभिधीयते इति वनीसंबन्धो विशेषणमुपरञ्जकतया स्थितत्वादभिधेयत्वमापद्यत इति। तथा चोक्तम्—

> अर्थविशेष उपाधिस्तदन्यवाच्यः समानशब्दो यः।
> अनुपाधिरतोऽन्यः स्यात् श्लाघादिविशेषणं यद्वत्॥

अस्यार्थः—यः तदन्यवाच्यः = उपाधेयवाचकपदान्यपदवाच्योऽर्थविशेषो व्यवच्छेद्ये उपरञ्जकतयाऽप्रतीयमानः स उपाधिः। यथा 'दृतिहरिः' इत्यत्र पशुत्वम्। यस्तु समानशब्दः = समान एकः शब्दो वाचको यस्य स समानशब्दः = एकशब्दवाच्यः, अतोऽर्थविशेषादन्यः, उपरञ्जकतया प्रतीयमानोऽर्थः, सोऽनुपाधिरुपाधिभिन्नोऽर्थो विशेषणं स्यात्। यद्वत् = यथा श्लाघेत्यादौ श्लाघादिविशेषणम्। विशेष्यसमानशब्दत्वादुपरञ्जकतया प्रतीयमानत्वाच्चेति। एवञ्च परिच्छेद्यब्रह्मसमानशब्दा घटादयस्तदु-

सुवर्णादि यथा भिन्नं स्वैराकारैरपायिभिः ।
रुचकाद्यभिधानानां शुद्धमेवैति वाच्यताम् ॥ ४ ॥

रुचककुण्डलाद्याकारविशेषोपाधीयमानरूपभेदमपि सर्वत्रानपायिरूपं सत्यमिति अपायिभिः आकारविशेषैस्तत्साध्यार्थक्रियाऽकरणान्न तत्रैव रुचकादिशब्दाः कृतपदसंबन्धाः । किन्तु तदतिरिच्यमानमर्थवस्त्वभिधायकत्वेन समाविशन्ति, तद्वत् प्रकृतिसंबन्धादाकारोपहितनानात्वमपि परतत्त्वं शब्दगोचर इत्यर्थः । तत्र च अपायिभिरिति हेतुनिर्देशः साध्यसमकक्ष्यतया कृतः, ततश्चोपाधीनामवाच्यत्वमसत्यत्वं च सिद्धयति । असत्यत्वादेवार्थक्रियाऽकरणात्तदर्थं च शब्दव्यवहाराद-वाच्यत्वं तेषामित्यर्थः ।

ननु रुचकादौ प्रकृत्यन्वयोऽवधार्यत एव । इहापि वस्तूनां ज्ञायमानत्वेन सत्त्वात्, ज्ञानस्य वैकल्पिकाकारानवस्थानान्निराकारशुद्धसंविन्मात्रानुगमस्य स्वसंवित् सिद्धत्वाददोषः ।

ननु विशेषणोपरक्तं विशेष्याभिधानं युक्तमित्युपसर्जनीभूतस्याभिधाने का क्षतिः । न काचित्, केवलमुपाधिष्वेवात्र तात्पर्यदृष्ट्या पदबन्धो निवार्यते, गुणत्वेन त्वभिधानमस्तु, न तावत्येव विश्रान्तिरिति द्रव्यनिष्ठतासिद्धिः ॥ ४ ॥

अत एव विशेषणोपरागात् साङ्कर्यदोषं परिहर्तुमाह ।

---

परञ्जकतया प्रतीयमानाश्च तद्विशेषणत्वात् कथं घटादिशब्दवाच्या इत्याशङ्क्यात्र सदृशतरं दृष्टान्तमाह—सुवर्णादि यथाभिन्नमिति ।

अयमर्थः—यथा अपायिभिः = सदाऽनवस्थितैः स्वैराकारैरुचकादिभिर्भिन्नं सुवर्णं शुद्धमेव, रुचकाद्याकारोपलक्षितं रुचकाद्यभिधानानां रुचकादिशब्दानां वाच्यतामेति तथाऽपायि स्वविवर्तघटाद्याकारोपलक्षितं शुद्धं ब्रह्मैव घटादिशब्दैरभिधीयत इति ।

अयं भावः—रुचककुण्डलादिरूपैः स्वाकारभेदैर्व्यवच्छिद्यमानरूपभेदमपि सुवर्णं सर्वाकारेष्वनपायिरूपत्वात् सत्यमित्यपायिभी रुचकादिरूपैराकारविशेषैः सुवर्णसाध्यार्थ-क्रियायाः कटककुण्डलादिनिर्माणरूपाया अकरणान्न तत्रैव = रुचकादिष्वेवावस्तुषु रुचकादिशब्दाः कृतपदसंबन्धाः = कृतपदन्यासाः कृतसंकेता इति यावत् । किन्तु रुचकादिभ्योऽतिरिच्यमानं वस्तुभूतमर्थं सुवर्णमभिधायकत्वेन समाविशन्ति यथा तद्वज्जगत्, प्रकृतिभूताविद्यासंबन्धात् स्वविवर्तप्रपञ्चाकारोपहितभेदमपि परतत्त्वं = परं ब्रह्म शब्दशक्तिगोचरः । तथा च प्रकृतपद्ये रुचकादिरूपा उपाधयोऽवाच्या असत्याश्चापायित्वादिति अनुमानप्रयोगो विवक्षितः । तत्र चापायिभिरिति हेतुनिर्देशः साध्यसमकक्ष्यतया कृतः । उपाधीनामपायित्वस्यापि सत्कार्यवादप्रत्याख्यानेन प्रत्याख्येयत्वेन साध्यत्वात् ।

एवमपायित्वहेतुनोपाधीनामवाच्यत्वमसत्यत्वञ्च सिध्यति । रुचकादीनाञ्च सुवर्णा-

**आकारैश्च व्यवच्छेदात् सार्वार्थ्यमवरुध्यते ।**
**यथैव चक्षुरादीनां सामर्थ्यं नाडिकादिभिः ।। ५ ।।**

**सर्वभावेषु ब्रह्मणो द्रव्यलक्षणस्याभेदात्तदभिधायित्वे शब्दानां सर्वत्र तस्य भावात् सार्वार्थ्यं शब्दान्तराभिधीयमानार्थत्वं साङ्कर्यं प्रसज्येतेत्यत्रेदमुच्यते । प्रति-**

---

कारभेदानामपायित्वेनासत्यत्वादेव स्वप्रकृतिसुवर्णसाध्यार्थक्रियायास्तत्तदाकारनिर्माण-रूपाया अकरणात् अर्थक्रियाकरणार्थमेव च शब्दव्यवहारप्रवृत्ते रुचकादीनामसत्यानां रुचकादिशब्दवाच्यत्वं तदुपहितस्य च तत्प्रकृतिभूतस्य सुवर्णस्य सत्यस्य = अर्थक्रिया-कारिणः शब्दव्यवहारगोचरत्वेन रुचकादिशब्दवाच्यत्वमित्यर्थः पर्यवसितः । अत एवार्थ-क्रियाकारित्वमेव सत्त्वं शाक्या आहुः ।

ननु रुचकादौ स्वप्रकृतिसुवर्णादिसंबन्धोऽवधार्यत एव, सुवर्णरुचकमिति । तथा च सदसतोरुपरागायोगाद् रुचकादीनामपि सत्त्वमवश्यमभ्युपेयम् । तथा चाकारविशेषाणां विकाराणामपि रुचकादीनां सत्यत्वेन रुचकादिपदवाच्यत्वमस्तु । एवमेव सदुपाधीनां सद्विकाराणां घटादीनां 'सन् घटः' इत्यादि प्रत्ययेषु सदन्वयितयाऽवधार्यमाणत्वात् सत्त्वेन वाच्यत्वमस्त्विति चेत्; सत्यम् । अद्वैतिनये, तत्पदानुसारि, वैयाकरणनये च द्विविधं वस्तूनां सत्त्वम्—पारमार्थिकं व्यावहारिकञ्च । तत्र पारमार्थिक सत्त्वं ब्रह्मण एव । ज्ञाय-मानत्वरूपं व्यावहारिकसत्त्वन्तु सद्विवर्तभूतस्य प्रपञ्चस्य । तथा च घटादेरपि ज्ञायमान-त्वेन सत्त्वाद् वाच्यत्वमस्तु, तदुपहितस्य परमार्थसतो ब्रह्मणोऽपि घटादिपदवाच्यत्वमस्तु को विरोधः ।

ननु यदि ज्ञायमानत्वमेव सत्त्वं तदा शुक्तेरपि रजतत्वेन प्रतीयमानतया सत्यत्वेन तस्या अपि रजतपदवाच्यत्वप्रसङ्ग इति चेन्न । प्रमारूपस्य ज्ञानस्य वैकल्पिकाकारेणा-नवस्थानात् । नहि शुक्तिकायां रजतमिति, शुक्तिरिति वैकल्पिकाकारेणावतिष्ठमानं ज्ञानद्वयं प्रमारूपं भवति । किन्त्वन्यतरदेव । घटादीनाञ्च निराकारशुद्धसंविन्मात्रसंबन्धस्य 'भाति घटः' इत्यादौ स्वानुभवसिद्धत्वात् प्रमीयमाणस्य घटादेर्व्यावहारिकसत्यत्वेन वाच्यत्वसिद्धिरित्यदोषः ।

ननु विशेषणविषयकमेव विशेष्याभिधानं युक्तम्, उभयोः समानसंवित्संवेद्यत्वा-दिति सद्रूपे ब्रह्मणि उपसर्जनीभूतस्य तदुपाधेर्घटादेरभिधाने का क्षतिरिति चेत्, न कापि । अत्र हि केवल उपाधौ तात्पर्यदृष्ट्या पदवाच्यत्वं वार्यते, न तूपाध्युपहितद्वये । सदुपसर्जनत्वेन तु तदुपाध्योर्घटादेरभिधानमस्तु, न तु तावत्येव विश्रान्तिरिति रीत्या पदानां द्रव्यनिष्ठता सिध्यति व्याडेरभिप्रेता ।।४।।

ननु स्वपरिच्छेदकघटादिरूपोपलक्षणीभूततत्तदर्थसंबन्धादेव ब्रह्मणः सर्वपदवाच्य-त्वेऽभ्युपगम्यमाने सर्वेषां पदानां सर्वार्थवाचकत्वरूपः सांकर्यदोष आपततीत्याशंक्य परिहरति आकारैश्च व्यवच्छेदादिति ।

नियताकारपरिच्छिन्नवृत्तित्वात् सर्वार्थत्वप्रतिबन्धादसङ्कर इत्यर्थः । घटाकारोपधानपुरःसरं घटशब्देन ब्रह्मद्रव्यमभिमुखीक्रियते, पटाकारोपधानेन तु पटशब्देनेत्याद्युपाधिरूपोपहितविवेकित्वमभिधानीयम् । तद्यथा नाडिकाशुषिरवर्त्म-निहितनयनास्तदवकाशावस्थितमेवार्थभागं पश्यन्ति । तथाविद्यावच्छिन्नदृक्शक्तिभिराकारभेदैरेव वस्तूपलक्ष्यते । तथैव च यथाध्यवसायं शब्दनिवेशाच्छब्दैरेवाभिधीयत इत्यर्थः । यथावरणादिनेन्द्रियस्यैव प्रकाशशक्तिः प्रतिबध्यते, न विषयो विक्रियते तथानाद्यविद्यावच्छेदप्रकल्पितविभागानां जीवानामेव संवेदनशक्तिर्नियम्यते, येन विच्छिन्नार्थाभिधानेन भेदविषयाण्यभिधानानि प्रयुज्यन्ते, न तु तत्त्वमविद्ययाविलीक्रियत इति नाडिकानिदर्शनेन सूचयति । नाडिकादिभिरित्यादिग्रहणादवधानप्रतिघातमूर्त्यभिजनाद्यवरोधः । यत्रैव ह्यवधानं तदेव ह्यवधार्यते । मूर्त्यभिजनो रूपसौन्दर्यं तेनापहृतोऽन्यं न पश्यति ॥ ५ ॥

ये तर्ह्याकारमात्रनिवेशिनः सन्निवेशादिशब्दाः ते धर्ममात्रमभिदध्युरिति सार्वत्रिकी द्रव्यपदार्थव्यवस्था विशीर्येतेत्याशङ्क्याह ।

---

अयमर्थः—घटादिरूपैः स्वविवर्तभूतैराकारैर्ब्रह्मणो व्यवच्छेदेन भेदाच्च सर्वेषां पदानां सर्वार्थवाचकत्वरूपं सामर्थ्यमवरुध्यते = प्रतिबध्यते । यथैव चक्षुरादीनां सम्मुखावस्थितसर्वपदार्थग्रहणसामर्थ्यं नाडिकादिभिः प्रतिबध्यते । यतो नाडिकासुषिरवर्त्मनिहितनयनास्तदवकाशावस्थितमेव वस्तु पश्यन्तीति ।

अयं भावः—द्रव्यस्वभावस्य ब्रह्मणः सर्वभावेषु सत्त्वेनानुगतस्याभिन्नत्वात् सर्वेषां पदानां तदभिधायित्वे सर्वत्र तस्य भावात् सर्वेषां शब्दानां सर्वार्थाभिधायित्वरूपं शब्दान्तराभिधीयमानार्थत्वरूपं वा साङ्कर्यं प्रसज्येतेत्याशङ्कायामिदमुच्यते—आकारैश्चेति । घटादिपदानां परस्परव्यावृत्तघटादिपदार्थपरिच्छिन्नब्रह्मवृत्तित्वात् परिच्छिन्नस्य च ब्रह्मण उपाधिभेदेन भेदाद् ब्रह्मण आकारैर्घटादिभिः सर्वेषां पदानां सर्वार्थवाचकत्वरूपसामर्थ्यप्रतिबन्धादसङ्कर इति । घटाकाररूपोपाधिकृतपरिच्छेदपुरःसरं घटशब्देन ब्रह्मरूपं द्रव्यं स्ववाच्यत्वेन स्वाभिमुखीक्रियते प्रतिपत्तुश्चाप्यभिमुखीक्रियते । पटाकारोपधानेन तु पटशब्देन इत्यादि तत्तदुपाध्युपहितभेदभिन्नत्वं ब्रह्मणोऽभिधातव्यम् । तद्यथा—नाडिकासुषिरवर्त्मनिहितनयनास्तदवकाशावस्थितमेवार्थभागं पश्यन्ति, न तु तद्बाह्यम् । तथाविधाः परिच्छिन्नदृक्शक्तयः पुरुषा घटाद्याकारभेदैरेव वस्तुतोऽभिन्नमपि वस्तु ब्रह्मरूपं भिन्नमिव पश्यन्ति । उपाधिपरिच्छिन्नभिन्नब्रह्मदृष्टिमनुसृत्यैव च शब्दानामुपाधिभिन्ने ब्रह्मण्युपाध्युपच्छादितरूपे सद्रूपे संकेतितत्वात् संकेतग्रहाच्च तत्तच्छब्दैरुपाधिभिन्नमेव ब्रह्माभिधीयत इति ।

यथाऽऽवरणादिनेन्द्रियस्यैव प्रकाशशक्तिः प्रतिबध्यते न विषयो विक्रियते, तथाऽनाद्यविद्याकृतपरिच्छेदप्रकल्पितभेदानां जीवानामेव संवेदनशक्तिर्नियम्यते, येनोपाधिपरि-

**तेष्वाकारेषु यः शब्दस्तथाभूतेषु वर्तते ।**
**तत्त्वात्मकत्वात्तेनापि नित्यमेवाभिधीयते ॥ ६ ॥**

**उपाधिमात्रस्वभावेष्वपि सन्निवेशाद्याकारेषु सन्निवेशादिशब्दा वर्तमानाः परमार्थतस्तत्त्वादव्यतिरेकादुपाधीनां तन्निष्कर्षे स्वरूपस्यास्वरूपत्त्वात्तदात्मनैव सत्त्वात् तदेव नित्यमुपाधिमद्द्रव्यमेवमप्यभिधानेऽभिहितं भवति। तत्त्वमात्मा ह्युपाधीनाम्, न तु ते तस्यात्मान इति व्यावर्तकत्वात् सर्व एवोपाधयस्तदात्मना सन्तः तथैवाभिधीयन्ते। यदा ह्युपाधिमल्लीनता तदोपाधय उपाधयो न भवन्ति। ततस्तु निष्कर्षे धर्मान्तराश्रयतया स्वातन्त्र्यादुपाधिमत्त्वमेव नोपाधित्वमित्याशयः ॥६॥**

**यद्येवं धर्माणामवस्थान्तरे धर्मिरूपत्वान्नित्यत्वे सत्यत्वे चाकाराणामसत्यत्वम्, द्रव्यस्य तु सत्यत्वमित्येतस्य नियमस्यानुपपत्तिरित्याशङ्क्याह ।**

---

च्छिन्नभिन्नभिन्नार्थाभिधानेन भेदविषयका एव सर्वे शब्दाः प्रयुज्यन्ते, न तु तत्त्वमेकं ब्रह्म अविद्यया भेदमापाद्य कलुषीक्रियत इति नाडिकादृष्टान्तेनात्र सूच्यते । नाडिकादिभिरित्यत्रादिपदेनावधानप्रतिघातमूर्त्यभिजनादीनामवरोधेन परिग्रहः । तद्यथा—चेतसोऽवधानेन यत्रावधानं तस्यैव ग्रहो नाऽन्यस्य । चक्षुषः कुड्यादि प्रतिपातेनाव्यवहितस्यैव ग्रहणं न कुड्यादिव्यवहितस्य मूर्त्यभिजनो रूपसौन्दर्यम्, मूर्तेः स्वस्वरूपस्याभिरूपतया सुन्दरत्वेन ज्ञानरूपं जन्मेति व्युत्पत्तेः । स्वसौन्दर्याभिमानमत्तो हि नान्यं सुन्दरत्वेनाभिजानाति इत्येवं तत्र तत्र चेतसोऽन्यग्रहणसामर्थ्यप्रतिबन्ध इति ॥५॥

ननु यदि संकेतेन रुचकाद्याकारोपहितब्रह्मरूपद्रव्ये निवेशितत्वाद् रुचकादिशब्दास्तदभिधायिनस्तदाऽऽकारमात्रे संकेतिता सन्निवेशादिशब्दा आकाररूपं धर्ममात्रमेवाभिदध्युरिति सर्वत्र द्रव्यमेव पदार्थ इति व्यवस्था भज्येतेत्याशङ्कां परिहर्तुमाह—तेष्वाकारेष्विति ।

अयमर्थः—तथाभूतेषु-उपाधिमात्रस्वभावेषु । तच्छब्दस्य बुद्धिस्थपरामर्शकत्वादेतदर्थलाभः । तेष्वाकारेषु = सन्निवेशादिरूपेषु आकारपदार्थेषु यः शब्दः = सन्निवेशादिशब्दो वर्तते । तेनापि सन्निवेशादिशब्देनापि नित्यं द्रव्यमेव ब्रह्मरूपमाकारोपाधिमदभिधीयते । संनिवेशाद्याकाररूपोपाधेस्तत्त्वात्मकत्वात् । ब्रह्मरूपं तत्त्वमात्मस्वरूपं येषामाकाररूपोपाधीनां ते तत्त्वात्मकास्तत्त्वादित्यर्थः । निष्कर्षे धर्माणां धर्मितोऽव्यतिरेकादिति ।

अयं भावः—संनिवेशादिशब्दा उपाधिमात्रस्वभावेषु सन्निवेशाद्याकारेषु वृत्तिमन्तोऽप्युपाधीनामसत्यानां वस्तुतस्तत्त्वादभेदादतिनिष्कर्षे तेषां स्वरूपस्य अस्वरूपत्वात् = अविद्यमानत्वात्, तत्त्वभूतब्रह्मात्मनैव सत्त्वात् सन्निवेशादिशब्दैरभिधानेऽपि तदेव वस्तुभूतं ब्रह्म नित्यमुपाधिमद् द्रव्यमभिहितं भवति। यत उपाधीनामात्मस्वरूपं तत्त्वभूतं ब्रह्मैव, न तूपाधयस्तस्यात्मानः, असत्यत्वात् । आकाराणां व्यभिचारित्वेना-

**न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः ।**
**अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम् ॥ ७ ॥**

**अयमत्रार्थः । नेहाद्वैतनये सत्यासत्ये द्वे रूपे स्तः, अद्वैतहानिप्रसङ्गात् । किन्तु पारमार्थिकमेवाद्वयं तत्त्वम् । तच्चानादिसिद्धाविद्याविलसितसहं प्रमातृविषयतया यथातत्त्वमनवभासमानमित्यनेकविकल्पपरिघटिताकाररूपतया व्यवहारमवतरति । तथा च तदेवाकारनानात्वोन्नीयमानस्वरूपभेदं चकास्ति, नान्यत् । तद्व्यतिरिक्तस्यान्यस्याभावात् । तत्र च योऽयं प्रकाशः स विद्या । अप्रकाशस्तु तमोऽविद्या । न च प्रकाशाभावोऽप्रकाशो नाम कश्चित् प्रमाणसिद्धो निरूप्यः । ततश्च योऽयं भेदप्रकाशः स एवैकघनप्रकाशाभावः प्रकाशविच्छेदोऽविद्या । तत्र विच्छिन्नान्वयोऽवच्छेदोऽवधार्यत इति विच्छिन्नप्रकाशः सत्या विद्यैव । विच्छेदमात्रं तु अप्रधानस्वभावं न किंचिदविद्येति परमार्थविचारे न किंचित्तत्त्वं व्यवतिष्ठते । तत्त्व-**

---

सत्यत्वादिति व्यावर्तकात् सर्व एवोपाधयस्तत्त्वभूतब्रह्मात्मना सन्तस्तदात्मनैवाभिधीयन्त इत्येवं सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिद्धयति । तथाहि—यदोपाधीनामुपाधिमति लयः = सद्रूपव्यतिरेकेणाप्रतीतिः, केवलं सद्रूपेण प्रतीतिरिति यावत् । तदोपाधीनां घटादिरूपाणां सन्निवेशादिरूपाणाञ्चोपाधित्वमेव नास्ति । उपाधिमतः सद्रूपान्निष्कृष्य पृथक्कृत्य तेषां स्वस्वरूपेण भानेऽपि तेषां स्वातन्त्र्येण धर्मान्तराश्रयतया भानादुपाधिमत्त्वमेव नोपाधित्वमिति न क्वचिदपि शब्दे द्रव्यपदार्थवादपादप्रतिरोध इति ॥ ६ ॥

ननु यद्येवं धर्माणामपि संनिवेशाद्याकाररूपाणां घटादिरूपाणाञ्च सन्निवेशत्वशोभनत्वघटत्वादिरूपधर्मान्तराश्रयतया स्वातन्त्र्येण निर्देशरूपेऽवस्थान्तरे धर्मिरूपत्वात् स्वाश्रयघटादेरिव तदभिन्नाभिन्नस्य तदभिन्नत्वनियम इति न्यायेन ब्रह्माव्यतिरिक्तत्वान्नित्यत्वे सत्यत्वे चाभ्युपगम्यमाने आकाराणामसत्यत्वं द्रव्यस्य तु सत्यत्वमिति नियमो नोपपद्येत इत्याशङ्क्य परिहरति—न तत्त्वातत्त्वयोरिति ।

अयमर्थः = तत्त्वातत्त्वयोः सत्यासत्ययोर्न भेद इति वृद्धेभ्य = विद्यावृद्धेभ्यः शास्त्रकृद्भ्यः, आगमः = संप्रदायसंप्राप्त इति शेषः । यतो यद् विचारितं सत्तत्त्वं भवति तदेवाविचारितं सदत्त्वमिति मन्यन्ते । यथा शुक्तिका विचारिता सती तत्त्वम्, अविचारिता तु रजतत्वेनाध्यस्यमानाऽतत्त्वमिति ।

अयं भावः—इह वैयाकरणानां बहुमतेऽद्वैतसिद्धान्ते सत्यासत्ये द्वे रूपे न स्तः । 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिसंमताद्वैतवादहानिप्रसङ्गात् । किन्तु पारमार्थिकं सर्वप्रपञ्चोपशमं ब्रह्मरूपमेकमेवाद्वयं तत्त्वं सर्वव्यवहारातीतं निर्विकल्पकबुद्धिमात्रगम्यम् । तच्चानादिसिद्धाविद्ययाऽऽवरणशक्तिमत्याऽऽवृत्तं सद्यथा तत्त्वमनवभासमानं तस्या एव च विक्षेपशक्त्या परिकल्पितानेकभावविकल्पपरिघटिताकाररूपतया प्रमातृसविकल्पकप्रमा-

**मेव यथाप्रतिभासं भेदेन चकासदविचारितरमणीयं प्रपञ्चोऽतत्त्वमिति व्यवह्रियत इति ब्रह्मविदः। तथा चाविचारितरमणीयं परीक्षया व्यवस्थापितं तत्त्वमेवाभिन्नं तीर्थिका भेददर्शनव्यवस्थिता भेदात्मकमतत्त्वं मन्यन्त इति विचारेणाविद्याविलये ब्रह्मैकनिष्ठता दर्शनानाम्। तदुक्तम्।**

**सत्या विशुद्धिस्तत्रोक्ता विद्यैव ( वा० का० ११९ )**

**इत्यादि ॥ ७॥**

**एवं तेन तेन रूपेण ब्रह्मैव विकल्पितं भवतीति सर्वशब्दानां तत्तदुपाधिमुखं तदेव विषयः सिद्ध इत्याह—**

---

विषयीभूतं सद् व्यवहारपथमवतरति। तथा च तदेव परिकल्पिताकारभेदोन्नीयमानस्वरूपभेदं सर्वप्रपञ्चरूपेण चकास्ति रज्जुरिव सर्प-धारा-दण्ड-मालाभेदैः, न ततोऽन्यदस्ति वस्तु सत्। श्रुत्या तद् व्यतिरिक्तस्याभावबोधनात्। तत्र च नीरक्षीरवद् विद्याऽविद्यासंपृक्ते ब्रह्मरूपे व्यावहारिके योऽयं प्रकाशः स विद्या। अप्रकाशस्तु तमोऽविद्या। अप्रकाशरूपाऽविद्याऽपि तमोवद्भावरूपैवाधिष्ठानाकारवृत्तिरूपप्रकाशविरोधिनी, 'अहमज्ञ' इत्याद्यनुभवेन तस्याः साक्षिभास्यत्वाभ्युपगमात्। न च प्रकाशाभावोऽप्रकाशो नाम कश्चित् प्रमाणसिद्धो निरूपणपथमवतरति।

देवदत्तप्रमातत्स्थप्रमाभावातिरेकिणः।
अनादेर्ध्वंसिनी मात्वाद् यज्ञदत्तप्रमा यथा ॥

इत्यादिमानैस्तस्य भावरूपतयैव सिद्धेः। ततश्च योऽयमविद्यापरिकल्पितानां घटपटादिभेदानां प्रकाशः सत्यचिद्रूपः स एवैकघनब्रह्मरूपप्रकाशविच्छेदरूपप्रकाशाभावरूपोऽविद्या। अविद्यायाः प्रकाशरूपब्रह्मशक्तित्वेन शक्तिशक्तिमतोर्वस्तुतोऽभेदात्। तत्राविद्यया विच्छिन्नेन चिद्रूपेण प्रकाशेनान्वितः परस्परमवच्छिद्यमानो घटपटादिः प्रपञ्चो बुद्धिवृत्त्याऽवधार्यत इति घटादीनां योऽविद्याविच्छिन्नः प्रकाशः सा सत्या विद्यैव। अविद्या तत्कृतश्च चिद्रूपस्य प्रकाशस्य विच्छेद इति द्वयमपि प्रकाशविशेषणतयाऽप्रधानीभूतं न किञ्चिद् वस्त्विति रीत्या परमार्थविचारे न किञ्चित्तत्त्वमविद्या तत्कार्यं वा व्यवतिष्ठते। ब्रह्मतत्त्वमेवैकमविद्यया नानाभेदैः प्रतिभासमानमविचारितरमणीयं प्रपञ्चोऽतत्त्वमिति व्यवह्रियत इति ब्रह्मविद्याविदः। तथा चाविचारितरमणीयमतत्त्वमेव परीक्षया व्यवस्थापितं तत्त्वम्। तदेवातत्त्वादभिन्नं शास्त्रकाराभेददर्शनव्यवस्थितानैयायिकादयो भेदात्मकं=परस्परं भिद्यमानम्, अतत्त्वमिति मन्यन्ते। ब्रह्ममीमांसारूपेण विचारेणात्मरूपे ब्रह्मणि साक्षात्कृतेऽविद्याविलये सति दर्शनानां ब्रह्मैकनिष्ठता सिद्धा। तदुक्तं प्रथमकाण्डे—सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ( वा० का० ११९ ) इति ॥ ७ ॥

एवं घटाद्युपहितं ब्रह्मैव तेन-तेन रूपेण घटत्वादिना सविकल्पकबुद्धिविषयो भवति, स्वरूपेणत्वपरोक्षनिर्विकल्पकबुद्धिमात्रगोचर इत्येवं सर्वशब्दानां घटाद्युपहितं ब्रह्मैव विषय इति सिद्धमित्याह विकल्परूपं भजत इति।

**विकल्परूपं भजते तत्त्वमेवाविकल्पितम् ।**
**न चात्र कालभेदोऽस्ति कालभेदश्च गृह्यते ॥ ८ ॥**

**परमार्थतः** अविकल्पितं **विकल्पानामविषयो यत्तत्त्वं तदेव व्यवहारेऽन्यस्याभावाद्विकल्पमात्रम्, विकल्परूपं नानाविधभेदावभासम्, अनादिसिद्धाविद्यावशात् समवलम्बते जीवात्मभेदेनावतिष्ठमानं तद्गतत्वेनेति मूर्तिविवर्ताश्रयदिक्च्छक्तिप्रविभक्तदेशनानात्वं निमित्तपौर्वापर्यावलम्बनसहम् । एवमकालकलितमपि तत्त्वमनादिनिधनं कालाख्यस्वतन्त्रशक्तिविनिवेशितप्रतिबन्धाभ्यनुज्ञावशाज्जन्मादिभावविकाराभिधीयमान पौर्वापर्यं चकास्तीत्यर्थः ॥ ८ ॥**

**नन्वविद्यमानस्य तत्त्वे प्रतिभानमयुक्तमित्याशङ्क्य दृष्टान्तेनोपपादयति ।**

---

अयमर्थः—अविकल्पितम् स्वरूपेणाविकल्पज्ञानगोचरः विकल्पज्ञानागोचरो वा तत्त्वमेव घटादिरूपोपाधिपरिच्छिन्नं सद् विकल्परूपं विकल्प्यमानं घटत्वादिकं रूपं स्वधर्मतया भजते = आश्रयति ! किञ्चात्र ब्रह्मणि परे तत्त्वेऽनुपहिते स्वरूपेण भूतभविष्यद्वर्तमानरूपकालभेदो नास्ति, तथापि कालभेदो देहेन्द्रियाद्युपहिते जीवात्मभेदेनावतिष्ठमाने ब्रह्मणि गृह्यते । देवदत्तो जायते जनिष्यते जात इति, अस्ति भविष्यति भूत इति, ध्वंसते ध्वंसिष्यते ध्वस्त इति ।

अयं भावः—स्वरूपेण वस्तुतोऽविकल्पितम् = सविकल्पकज्ञानानामविषयीभूतं यत्तत्त्वं तदेव देहेन्द्रियाद्युपहितं सद् वस्तुनोऽन्यस्य अभावाद् व्यवहारे विकल्परूपम् = विकल्पमात्रम्, नानाविधदेहादिरूपोपाधिभेदात्मनाऽवभासमानमनादिसिद्धाविद्यापरिकल्पितनानाविधदेहादिरूपोपाधिसंपर्कवशात् स्वग्राहकतया समवलम्बतेऽविद्यापरिकल्पितजीवस्वरूपान्तर्गतत्वादित्येवं स्वोपाधिभूता ये मूर्तिरूपाः = देहेन्द्रियादिरूपाः, स्वविवर्तास्तदाश्रयीभूता या दिग्रूपाः स्वशक्तयस्ताभिः प्रविभक्तं यत् स्वस्यादेशस्यापि देशनानात्वं तद्वशात् स्वोपाधिनिमित्तानां स्वनिमित्तत्वेनावभासमानानां दैशिकं पौर्वापर्यं वस्तुतस्तदसहमपि सहते । एवं कालेनाप्यसंपृक्तमनादिनिधनं ब्रह्मतत्त्वं कालाख्यया स्वतन्त्रया स्वशक्त्या जायमानप्रतिबध्यमानस्वोपाधिविनिवेशितप्रतिबन्धाभ्यनुज्ञावशात् स्वस्मिन्नपि समारोपितैः षड्भिर्जन्मादिभावविकारैरभिधाने हेतुभिरभिधीयमानकालिकपौर्वापर्यं चकास्तीति ॥ ८ ॥

ननु ब्रह्मणः श्रुतिबोधिताद्वितीयत्वे व्यवस्थिते ब्रह्मतत्त्वेऽविद्यमानस्यातत्त्वस्य प्रपञ्चस्य प्रतिभानमयुक्तमित्याशङ्क्य दृष्टान्तेनोपपादयति—

अयमर्थः—यथा विषयाणां नीलादीनां तद्धर्माणाञ्च नीलत्वादीनां बाह्यानामान्तरे ज्ञानेऽत्यन्तमसम्भवो यद्यपि तथाप्यत्यन्तमतदात्मकमपि जडत्वप्रकाशत्वाभ्यां वैधर्म्याद्

**यथा विषयधर्माणां ज्ञानेऽत्यन्तमसंभवः।**
**तदात्मेव च तत् सिद्धमत्यन्तमतदात्मकम् ॥ ९ ॥**

**विज्ञानवादे विषयाकारस्य भावतोऽसत्यत्वान्नीलादिस्तद्गतो धर्मो जडोऽजडे ज्ञानेऽसंभवी** अत्यन्तम् **इति जडाजडयोर्न केनचिदंशेन सारूप्यमित्याह। तथा चोक्तम्—**

**'एकदेशेन सारूप्ये सर्वं स्यात् सर्ववेदनम्।**
**सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥ इति ॥ ९ ॥**

**अथवाऽसंभवविधर्माच्छुरितं विज्ञानं विशुद्धबोधस्वभावमप्यविद्यायां व्यवहारेऽवभासत इति इष्टं निदर्शनान्तरमाह—**

---

विषयतद्धर्मानात्मकमपि तज्ज्ञानं तदात्मेव च विषयतद्धर्मात्मकमिव सिद्धं ज्ञातं भवति लोकव्यवहारे। शब्दार्थप्रत्ययानामितरेतराध्यासस्यानपलपनीयत्वादिति।

अयं भावः—यथा विज्ञानवादे शाक्याभिमते बाह्यस्य विषयाकारस्य स्वरूपतोऽसत्यत्वान्नीलादिस्तद्गतो धर्मश्च नीलत्वादिर्जडोऽजडे प्रकाशरूपे ज्ञानेऽत्यन्तं वैधर्म्यात् तादात्म्येनासंभवी वैधर्म्यादेव च तयोस्तादात्म्याध्यासोऽप्यसंभवी। किञ्च जडाजडयोस्तयोर्न केनचिदप्यंशेन साम्यमिति सारूप्यमूलकः संसर्गाध्यारोपोऽपि असंभवी। तदुक्तम्—

एकदेशेन सारूप्ये सर्वं स्यात् सर्ववेदनम्।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥ इति ॥

अयं भावः—ज्ञानज्ञेययोर्धर्मसमूहस्यैकदेशेन ज्ञानत्वेन ज्ञानज्ञेयसमूहैकदेशे ज्ञानेऽवस्थितेन ज्ञानज्ञेययोः सारूप्ये सति सर्वं घटपटादिकमपि सर्ववेदनम् = सर्वविषयकं ज्ञानं स्यात्। तयोः सर्वातमना सारूप्ये तु ज्ञानं स्वस्यासाधारणीं ज्ञानरूपतां परित्यज्याज्ञानताम् = जडरूपतां व्रजेत्। एतच्चोभयमप्यनिष्टम्, अनुभवविरोधात्। एवं विषयतद्धर्माणां ज्ञानेऽत्यन्तमसंभवेऽपि तदात्मकमिव ज्ञानमनुभूयमानं नापह्नोतुं शक्यत इति ॥ ९ ॥

अथवोपाधीनां श्रुतियुक्तितर्कैर्मिथ्यात्वावगमादनुपहितं विशुद्धबोधस्वभावमपि विज्ञानमसंभवि विषयतद्धर्माच्छुरितं = तदुपहितम्, यथाऽविद्याप्रयुक्ते लोकव्यवहारेऽवभासत इति स्वेष्टं दृष्टान्तान्तरमभिधत्ते-यथाविकाररूपाणामिति।

अयमर्थः—यथा लौकिकानां विकाररूपाणां कटककुण्डलादीनां प्रकृतिभूते तत्त्वे सुवर्णेऽत्यन्तमसम्भवः। मध्ये सत्त्वेऽप्यादावन्ते चाभावात्। तदाहुः—

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा। इति।

यथा वा सांख्ययोगसिद्धान्ते विकाररूपाणां महदादीनां प्रकृतिभूते तत्त्वेऽव्यक्ते

यथा विकाररूपाणां तत्त्वेऽत्यन्तमसम्भवः ।
तदात्मेव च तत्तत्त्वमत्यन्तमतदात्मकम् ॥ १० ॥

सांख्याभिमतमविकृतं प्रधानतत्त्वं सर्वविकारग्रन्थि बीजावस्थमभिन्नमनुपसृष्टमेव महदादिविकाररूपैः परमार्थतः। तद्धि महदादिविकारशक्तियुक्तं गुणसाम्यावस्थात्मकं गुणवैषम्यविमर्दवशोपजायमानविकारनानात्वाद्विलक्षणमिव। अथ च व्यवहारे महदादिविकाररूपावधारणेन विना तदुपलम्भासंभव इति सर्वदर्शनेष्वविद्यान्वयिनी। एवमसत्याकारोपधानेन तत्त्वप्रतिभासः सिद्ध इति साध्यान्वयो गृहीतः ॥ १० ॥

कथं पुनरेतदवगम्यते आकारा असत्याः, ततोऽन्यत् सत्यमित्याह ।

---

स्वैः स्वैर्व्यक्तरूपैरत्यन्तमसंभवः। एवमद्वैतनये विकाररूपाणां विज्ञानमात्रस्वभावब्रह्मविवर्तभूतानां घटपटादिप्रपञ्चानां जडानां प्रकृतिभूते बोधमात्रस्वभावे ब्रह्मणि वैधर्म्येणात्यन्तमसंभवो यद्यपि तथापि अतदात्मकमपि प्रपञ्चानात्मकमपि तद् ब्रह्मतत्त्वं सुवर्णं कटककुण्डलाद्यात्मकमिवाव्यक्तं महदाद्यात्मकमिव तदात्मेव = प्रपञ्चात्मकमिव 'सन् घटः' सन् पटः' इत्यादिषु परोक्षापरोक्षप्रत्ययेषु अवभातीति।

अयं भावः—यथा सांख्याभिमतमविकृतं प्रधानरूपं तत्त्वं सर्वेषां विकाराणां प्रधानेन सह संयोजकस्य ग्रन्थिरूपस्य बीजस्य सूक्ष्माकारस्यावस्थारूपमभिन्नं परस्परं भिन्नेभ्यो विकारेभ्योऽपरमार्थेभ्यः परमार्थतोऽतो महदादिविकाररूपैरनुपसृष्टमेव=अनुपद्रुतमेव। यतो हि तदव्यक्तं महदादिविकारशक्तियुक्तं गुणसाम्यावस्थारूपं सर्गकाले परिपक्वसृज्यमानप्राण्यदृष्टवशोपजातगुणवैषम्यप्रयुक्तप्रवृत्तपरस्परविमर्दवशोपजायमानातथ्यविकारनानात्वाद् विलक्षणमिव वस्तुतोऽवैलक्षण्येऽपि। एवमव्यक्तस्य प्रकृतितत्त्वस्य सत्यत्वे विकाराणाञ्च महदादीनामसत्यत्वे व्यवस्थितेऽपि व्यवहारे व्यक्तासत्यमहदादिविकारतद्रूपावधारणेन विनाऽव्यक्तप्रकृतितत्त्वोपलम्भासंभव इत्येवं तत्त्वस्यातत्त्वरूपतयोपलब्धिरूपभ्रान्तिरूपाऽविद्या सर्वदर्शनेषु अनुगता न केवलमद्वैतदर्शन एव। एवमसत्यविकाराकारोपहितस्य सत्यस्य तत्त्वस्य प्रतिभासः सिद्ध इति यो यः तत्त्वप्रतिभासः स सोऽतत्त्वविकाराकारोपहितविषयक एव इत्येवं साध्यस्यातत्त्वविकाराकारोपहितविषयकत्वस्यान्वयव्याप्तिस्तत्त्वप्रतिभासत्वरूपे हेतौ गृहीता भवति।

अयमत्रानुमानप्रयोगः—तत्त्वप्रतिभासः अतत्त्वविकाराकारोपहिततत्त्वविषयकः, तत्त्वप्रतिभासत्वात्, सुवर्णस्य कटकाद्यात्मना प्रतिभासवत्, अव्यक्तस्य व्यक्तमहदाद्यात्मना प्रतिभासवच्चेति ॥१०॥

ननु कथं पुनरेतदवगम्यते—आकारा असत्याः, ततोऽन्यत्सत्यमिति। यतो हि

**सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते ।**
**तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते ॥ ११ ॥**

**'तदेव हि नित्यं यस्मिंस्तत्त्वं न विहन्यते'** ( म० भा० अ० १ पा० १ आ० १ ) **इति भाष्यानुसारेणैतदुच्यते । तथा हि तत्रोक्तम् ।**

**'कनकमित्येव सत्यं पुनरपरयाकृत्या युक्तं खदिराङ्गारसवर्णे सुवर्णकुण्डले भवतः' इत्यनेनैव दृष्टान्तेन विकारापेक्षया भिन्नस्य ब्रह्मणः सत्यतोच्यते । यथा हि तत्र रुचकाद्याकारोपमर्देन सुवर्णमित्येव सत्यम् एवमनन्तविकारग्रामापाये सर्वान्तेऽवतिष्ठमानमनपायि ब्रह्मरूपं सत्यं तदेव च भावतो नित्यम् । आपेक्षिकं तु जात्यादीनां व्यवहारे नित्यत्वमुच्यते ।**

सुवर्णादीनां कटककुण्डलादिरूपा आकारा मासवर्षादिपर्यवस्थायिनो यथार्थप्रत्ययैरन्यैरबाधिता दृश्यन्ते । तदुक्तम्—

तावत्कालं स्थितं चैनं कः पश्चाद् वारयिष्यति । इति ।

इत्याशङ्क्य समाधत्ते—सत्यमाकृतिसंहारे इति ।

अयमर्थः—आकृतिसंहारे = सास्नालाङ्गूलादिसंस्थानरूपाकृतिमत्या गवादिव्यक्तेर्विनाशे सत्यन्ते यद् गोत्वादिकं व्यवतिष्ठते तत्सत्यम् । सत्यत्वादेव तद्गोत्वादिकं जातिरूपं नित्यं नित्यत्वादेव च लाघवात्तदेव शब्दवाच्यम् । अनन्तासु व्यक्तिषु शब्दशक्तिकल्पने आनन्त्यव्यभिचारदोषप्रसङ्गात् । तदेव गोत्वादिकमान्तरं बौद्धमान्तरशब्दतत्त्वरूपं शब्दतत्त्वान्न भिद्यते । एकस्यैव ज्ञानतत्त्वस्य बुद्धिवृत्त्युपारूढस्य वाच्यवाचकोभयात्मना सामानाधिकरण्येन विवर्तमानत्वात् । एतद्दृष्टान्तेन बुद्धया सर्वासां जातीनां गोत्वादिरूपाणां विशेषाणां पृथिवीत्वादिरूपाणाञ्च सामान्यानां परित्यागे सत्यवशिष्यमाणं सत्तारूपं ब्रह्मैव सत्यम् ! तत एव तन्नित्यम् । तदेव च गवाद्याकारोपहितं शब्दवाच्यम् । शुद्धं तु शब्दव्यवहारातीतम् । तदेव च पश्यन्ती रूपं शब्दतत्त्वं ततो न भिद्यत इति ।

अयं भावः—'सिद्धे शब्दार्थसंबन्धे' इत्यादिवार्तिकव्याख्यावसरे भाष्येऽत्रत्यं सिद्धशब्दं नित्यपर्यायवाचिनमभ्युपेत्य—'तदेव हि नित्यं यस्मिंस्तत्त्वं न विहन्यते' इत्युक्तम् । तद्भाष्यञ्चाश्रित्यैतत्पद्यमुच्यते । तथाहि तत्र भाष्ये उक्तम्—'कनकमित्येव सत्यम्, पुनरपरयाऽऽकृत्या युक्तं खदिराङ्गारसवर्णे कुण्डले भवत' इति । एतद्दृष्टान्तेन चातथ्यस्वविवर्तसर्वप्रपञ्चरूपविकारापेक्षया वैधर्म्येण भिन्नस्य ब्रह्मणः सत्यतोच्यते । यथाहि—तत्र रुचकाद्याकारोपमर्देन सुवर्णमित्येव सत्यम्, एवं सुषुप्तौ प्रलये च सर्वविकारापाये सर्वान्तेऽवतिष्ठमानं शश्वदनपायि ब्रह्मरूपं सत्यं तदेव च स्वरूपतो नित्यम् । जात्यादीनान्तु व्यवहारे नित्यत्वमपेक्षाकृतमुच्यते ।

तथाहि—व्यक्त्यपायेऽवतिष्ठमाना गोत्वादिका जातिर्नित्या । तत्रापि गोत्वाश्व-

तथा हि व्यक्त्यपाये जातिरवतिष्ठमाना गोत्वादिका नित्या। तत्राप्य-श्वत्वादिभेदत्यागे पृथिवीत्येव सत्यम्। तत्राप्यप्त्वादिभेदापाये वस्त्वित्येव सत्यं सर्वनामप्रत्याय्यम्। तत्रापि संविद्रूपस्यानपायिनोऽनुगमाद् विषयाकारविवेके तदेव पारमार्थिकं सत्यमिति नेति नेत्युपासीतेति भावनाय चोद्यते। संविच्च पश्यन्तीरूपा परा वाक् शब्दब्रह्ममयीति ब्रह्मतत्त्वं शब्दात् पारमार्थिकान्न भिद्यते। विवर्तदशायां तु वैखर्यात्मना भेदः। तत्र च तदेव नित्यं जात्यादिरूपेण शब्दवाच्यम्। तत्राप्यान्तरोपादानविश्रान्त्या वाचकत्वस्य व्यवस्थापनात् स्वरूपान्त-र्गतस्यार्थस्य वाच्यत्वाद् वाच्यवाचकयोरविभागः सिद्ध इति प्रथमकाण्डे निर्णीतम्। अत एवानन्तरमिहाभिधास्यति—

'तस्य शब्दार्थसंबन्धरूपमेकस्य दृश्यते' इति ॥११॥

(वा० का० ३ द्रव्य० १४)

यदुक्तं 'तदात्मेव च तत्त्वमत्यन्तमतदात्मकम्' इति तत्रात्यन्तमतदात्मतां तावद् व्याचष्टे।

---

त्वादिभेदत्यागे = व्याप्यजातिपरित्यागे पृथिवीत्वमेव सत्यम्। तत्रापि पृथिवीत्वजल-त्वादिभेदत्यागे इदं तदिति सर्वनामपदप्रत्याय्यं वस्तुत्वमेव सत्यम्। प्रकृतित्वेन स्ववि-वर्तभूतसर्वभावानुगतस्यानपायिनः संविद्रूपस्य तत्रापि अनुगमाद् विषयत्वाकारपरित्यागे तदेव पारमार्थिकं संविद्रूपं सत्यमिति तस्यैव बुद्ध्या सर्वपरित्यागपूर्वकं निर्विशेषस्य भावनाय = ध्यानाय 'नेति नेत्युपासीत' इति चोद्यते।

संविच्च परा वाक् शब्दब्रह्ममयी मूलचक्रे समुपलभ्यमाना सैव नाभिचक्रे उप-लब्धा पश्यन्ती इत्युच्यते इत्येवं ब्रह्मतत्त्वं नित्यविज्ञानस्वभावं शब्दतत्त्वात् पारमार्थि-कान्न भिद्यते। परावाग्रूपस्य ब्रह्मणो विवर्तदशायान्तु वैखर्यात्मना भेदः। वैखरीरूपाया वाचश्च तदेव नित्यं ब्रह्म सर्वान्तेऽवशिष्यमाणं गोत्वादिजातिरूपेण गुणक्रियादिरूपैश्च वाच्यम्। तत्रापि वाचकत्वस्यान्तरोपादानविश्रान्त्या = आन्तरे = बौद्धे उपादाने = बुद्ध्योपादीयमाने, गृह्यमाणे शब्द एव विश्रान्त्या, व्यवस्थापनाद् बुद्धिस्वरूपान्तर्गतस्या-र्थस्य वाच्यत्वात् समानाधिकरणयोर्वाच्यवाचकयोरविभागः सिद्ध इति प्रथमकाण्डे निर्णीतम्।

वाच्यवाचकाविव तयोस्तादात्म्याध्यासरूपः सबन्धोऽपि बौद्ध एव। अत एव शब्दार्थसंबन्धरूपं त्रितयं नित्यविज्ञानरूपब्रह्मात्मकतां नातिक्रामति। अत एवानन्तर-मिहाभिधास्यति तस्य शब्दार्थसंबन्धरूपमेकस्य दृश्यते' (वा० का० ३ द्र० १४) इति। तस्य परावाग्रूपस्य नित्यस्यैकस्य ब्रह्मणः शब्दार्थसंबन्धरूपं त्रितयं स्वरूपं विवर्तभूतं व्यवहारे दृश्यत इत्यर्थं इति ॥११॥

'तदात्मेव च तत्त्वमत्यन्तमतदात्मकम्' इति पूर्वं यदुक्तं तत्रात्यन्तमतदात्मक-मित्यंशं तावद् व्याचष्टे—न तदस्तीति।

**न तदस्ति न तन्नास्ति न तदेकं न तत् पृथक्।**
**न संसृष्टं विभक्तं वा विकृतं न च नान्यथा ॥१२॥**

**वैकारिकसर्वव्यवहारातीतत्वात् पारमार्थिकेन रूपेण विकारात्मकं तत्त्वं न भवति। तथा हि—अस्ति इति न शक्यते व्यवहर्तुम्। सत्त्वोपाधिकस्य स्वरूपस्य तत्त्वस्वरूपायोगात्, तेनात्मना व्यवहारानवतारात्। नापि नास्ति इति अभावोपाधिकस्याप्यतथात्वात् प्रमाणेन अभावात्मकस्य तत्त्वस्याचोदितत्वात्। एकसंख्योपाधीयमानस्वरूपविशेषं तत्त्वं न भवति। निरुपाधिनः तत्त्वस्य वस्तुतोऽभिन्नत्वात्।**

---

अयमर्थः—सर्वस्यापि वाग्रूपस्य ज्ञानरूपस्य वा व्यवहारस्य विकारविषयकत्वात् तत्प्रकृतितत्त्वमस्तीति व्यवहर्तुं न शक्यते। अनितिपरमप्यनुकरणं भवतीति 'अनुकरणं चानितिपरम्' (पा० १।४।६२) इति सूत्राद् विज्ञायते। व्यवहर्तुं शक्यत इति च पदद्वयमध्याहृत्यैवं व्याख्यायते। सर्वविवर्तप्रकृतिभूतस्य ब्रह्मणो निर्धर्मकत्वेन निरुपाधिकत्वेन चास्तित्वोपाधिकस्य तद्रूपस्याविद्याकल्पितस्य तत्त्वस्वरूपत्वायोगात्। ब्रह्मणो निर्धर्मकत्वञ्च श्रुत्योक्तम्। साक्षी चेताः केवलो निर्गुणश्चेति। तस्य सर्वव्यवहारागोचरत्वञ्च श्रुत्यैवोक्तम्—'न तत्र चक्षुर्गच्छति न वाग् गच्छति न मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद् विदितादथो अविदितादधि' इति।

नापि तत्प्रकृतिभूतं तत्त्वम् = नास्तीत्येवं रूपेण व्यवहर्तुं शक्यम्। अभावोपाधिकस्यापि तत्स्वरूपस्य तत्त्वस्वरूपत्वायोगात्। प्रमाणेनाभावात्मकस्याभावोपाधिकस्य वा तत्त्वस्याचोदितत्वात्। तत्प्रकृतिभूतं तत्त्वम्-एकम् = एकत्वसंख्योपधीयमानस्वरूपविशेषं न भवति। तत्त्वस्य वस्तुतः स्वगतसजातीय-विजातीयभेदत्रयराहित्येऽपि निरुपाधिकत्वेनैकत्वसंख्योपधानायोगात्। 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतौ एकमित्यस्य चानेकत्वाभावोऽर्थः, नत्वेकत्वसंख्या, केवलो निर्गुणश्चेति प्रागुक्तश्रुतिविरोधात्। अभावस्य चाधिकरणरूपत्वं सुप्रसिद्धमेव।

नापि तत् प्रकृतितत्त्वं स्वविकारेभ्योऽतत्त्वेभ्यः पृथगिति व्यवहर्तुं शक्यते, तद्भिन्नस्यासत्यत्वात्। तत् प्रकृतितत्त्वं केनचित् संसृष्टं कुतश्चिद् विभक्तं वा न भवति। तनो द्वितीयस्य एकमेवाद्वितीयमिति श्रुत्या निषेधेन प्रमाणतोऽनुपपन्नतया च संसर्गविभागप्रतियोगिनोरभावे तत्र संसृष्टत्वविभक्तत्वयोरभावात्। तत् = प्रकृतितत्त्वम्, विकृतं परिणामि, न च। नित्यं विभुं सर्वगतं सुसूक्ष्मम्, 'नित्यं विज्ञानमानन्दं कूटस्थमचलं ध्रुवम्। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः, इत्यादिश्रुतिस्मृतिभिस्तस्य नित्यत्वकूटस्थत्वबोधनेन परिणामनिषेधेन विवर्ताभ्युपगमाद्। नापि च तत् प्रकृतितत्त्वम्, अन्यथा अविकृतमिति व्यवहर्तुं शक्यते वस्तुतोऽविकृतत्वेऽपि स्वशक्तिरूपाविद्यावृत्त्याऽद्भुतयाऽनन्तभावरूपतया विवर्तमानत्वादिति ।

**तथा चैकमित्यप्रतीतेः। नापि पृथक्त्वाहितविशेषम्, तद्भिन्नस्यासत्यवात्। नापि संसर्गोपाधिकम्, विभागोपाधिकं वा; ततो द्वितीयस्य प्रमाणेनानुपपत्तेः, कुतोऽभिन्नं विभक्तं च केन वा संसृष्टं स्यात्। परिणामनिषेधेन विवर्ताभ्युपगमान्न विकृतम्। अनेकभावग्रामरूपतया चाद्भुतया वृत्या विवर्तनादविकृतमित्यपि न शक्यते व्यवहर्तुमिति सर्वव्यपदेशातीतं तत्त्वं परं ब्रह्म ॥ १२ ॥**

**अथ च तदात्मेवाविद्यायामवधार्यत इत्याह।**

---

अयं भावः—सर्वस्य विवर्तभूतस्य प्रपञ्चस्य प्रकृतिभूतं ब्रह्मतत्त्वं वस्तुतो विकारात्मकं न भवति। यतस्तत् पारमार्थिकेन रूपेण सर्वं व्यवहारमतीतम्। सर्वस्य व्यवहारस्य विकारविषयकत्वात्। ब्रह्मणश्च सर्वव्यवहारातीतत्वमनुपदमेवोपपादितम्। अतस्तदस्तीति व्यवहर्तुं न शक्यते। अस्तित्वोपहितस्य तद्रूपस्य तत्त्वरूपत्वासंभवात् पारमार्थिकेन तेन रूपेणास्तीति व्यवहारानुपपत्तेः।

नापि नास्तीति व्यवहर्तुम् शक्यते, अभावोपहितस्यापि अतत्त्वरूपत्वात्। अभावोपहितस्य तत्त्वरूपतायाः प्रमाणेनाबोधितत्वात्। किञ्च, तत्तत्त्वमेकत्वसंख्योपहितमपि न भवति। निरुपाधिकस्य तस्य तत्त्वस्य वस्तुतोऽभिन्नत्वेऽपि एकमिति प्रतीतेरगोचरत्वात्। नापि तत् पृथक्त्वोपहितं पृथगिति व्यवहर्तुम् शक्यते, तद्भिन्नस्यासत्वेन तत्र पृथक्त्वानुपपत्तेः।

नापि तत्संसर्गोपहितं विभागोपहितं वा श्रुत्यादिप्रमाणैस्ततो द्वितीयस्य निषेधात् केन संसृष्टं कुतो वा विभक्तं तत् स्यात्। नापि तत्तत्वं विकृतं भवति, अनवयवस्य कूटस्थनित्यस्य च परिणामानुपपत्त्याऽद्वैतवादे विवर्ताभ्युपगमात्। अत एव च सर्वप्रपञ्चरूपतया तस्यैव प्रतीयमानत्वादविकृतमित्यपि व्यवहर्तुम् न शक्यते तत्त्वतोऽविकृतत्त्वेपि। इत्येवं सर्वविधव्यपदेशातीतं तत्त्वभूतं परं ब्रह्मात्यन्तमतदात्मकम् = अत्यन्तं विकारानात्मकमेव, सर्वविकाराणां विवर्तवादेऽसत्यत्वाभ्युपगमादिति सिद्धम् ॥ १२ ॥

एवमत्यन्तमतदात्मकमपि परं तत्त्वं ब्रह्म अविद्यायां सत्यां व्यवहारकाले तदात्मकमिवावधार्यत इत्याह—तन्नास्ति विद्यत इति।

अयमर्थः—तत् = सर्वस्य स्वविवर्तभूतस्य भावाभावात्मकस्य विकारप्रपञ्चस्य प्रकृतिभूतं परं तत्त्वं ब्रह्म अविद्यया स्वशक्त्या सर्वविकारानुकूलयाऽभावोपहितं व्यवहारकाले नास्तीति व्यपदिश्यते, सत्त्वोपहितं विद्यत इति। तदेवैकत्वसंख्योपहितमेकमिति। तत्पृथक्त्वोपहितम्—पृथक्-पृथगिति व्यवह्रियते। ततो द्वितीयस्य निषेधेन वस्तुतस्तत्र संसर्गविभागयोरभावेऽपि अविद्यापरिकल्पितसंसर्गविभागोपाधिकं च तदेव संसृष्टमिति विभक्तमिति च व्यपदेशं श्रयते। तथा तदेव जन्यसमस्तविकाररूपोपाधिपरिच्छिन्नं जायत इत्यादि विकाररूपेण विकृतं प्रतीयते। आकाशकालदिगाद्युपहितञ्च कूटस्थतया = अविकृतत्वेन तदेवावभासत इति।

**तन्नास्ति विद्यते तच्च तदेकं तत् पृथक् पृथक् ।**
**संसृष्टं च विभक्तं च विकृतं तत्तदन्यथा ॥ १३ ॥**

**भावाभावविकारावभासजननशक्ति तदेवास्ति नास्तीति च सत्तासत्तोपाधिक-व्यवहारसहं भावतस्तु निःसत्तासत्तं निःसदसत् परं ब्रह्म। व्यावहारिकं चैका-नेकव्यवहारं जातिव्यक्त्यात्मना तदेव वर्तत इति संख्योपाधिकमपि च । एवं संयोगोपाधिकमपि, अन्यसंसर्गितयावभासनात् । एवं विवेकावसायस्तत्र। तथा समस्तविकारात्मना जन्यमानमिवाकाशाद्यात्मना कूटस्थतया तदेवावभासत इति तदात्मैव तत्त्वमित्युक्तम् ॥ १३ ॥**

**एवं च कृत्वा सर्वस्य तन्मयत्वाद्विरोधिनोऽपि व्यवहारास्तत्रैवोपलीयन्त इत्याह—**

---

अयं भावः—"पराऽस्य शक्तिर्विविधैव श्रूयते" इति । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतिसिद्धया मायाऽविद्यादिपदव्यपदेश्यया स्वशक्त्या भावाभावविकाराव-भासजननशक्तिकञ्च तदेव ब्रह्मतत्त्वं सत्त्वासत्त्वोपहितं व्यवहारे 'अस्ति' इति 'नास्ति' इति च व्यवह्रियते । स्वरूपतस्तु सत्त्वासत्त्वोभयरहितं सता क्षित्यादित्रिकेणासद्भ्याञ्च वाय्वाकाशाभ्यां रहितम्, तदुभयविलक्षणञ्च । व्यवहारकाले चैकत्वानेकत्वाभ्यां व्यव-ह्रियमाणं जातिव्यक्त्यात्मना च तदेवाविद्यया स्वशक्त्या विवर्तमानं वर्तत इति संख्या-द्युपाधिकमपि च । एवमविद्यया स्वान्यसंसर्गितयाऽवभासनात् संयोगोपाधिकमपि । एवं तथैव तयैव तत्र विभागावभासात्तद्विभागोपाधिकमपीति विभक्तमिति व्यपदिश्यते ।

एवं तदेव परं तत्त्वं वस्तुतोऽविकृतमप्यविद्यया स्वशक्त्या समस्तविकारात्मना विवर्तमानं जन्यमानमिवावभासते । आकाशकालदिगाद्यात्मना च तदेव कूटस्थतयाऽव-भासते इत्येवं तदात्मकमिव तत्तत्त्वमित्युक्तं प्राक् सिद्धं भवतीति ॥ १३ ॥

तदेवं सर्वस्य प्रपञ्चस्य परप्रकृतिभूतब्रह्मतत्त्वविवर्तस्य ब्रह्ममयत्वात् परस्परं विरोधिनोऽपि परस्परव्यावृत्तभावविषयका व्यवहारास्तस्मिन् परे तत्त्वे एकस्मिन्नुपपद्यन्त इत्याह—तस्य शब्दार्थसम्बन्धरूपमिति ।

अयमर्थः—तस्य = विवर्तरूपविकारात्मकसर्वप्रपञ्चप्रकृतिभूतस्यैकस्य परतत्त्वस्य परावाग्रूपस्य ब्रह्मणो विवर्तदशायां शब्दार्थतत्सम्बन्धरूपशाखात्रयात्मना प्रविभागात् शब्दार्थसम्बन्धरूपम् = एतत् त्रितयात्मकत्वं शाब्देऽशाब्दे वा व्यवहारे दृश्यतेऽनुभूयते, सर्वस्यापि ज्ञानस्य शब्दानुवेधात् । तदेव च परतत्त्वं ब्रह्म दृश्यं = दर्शनकर्म, दर्शनम् = दर्शनसाधनं चक्षुरादिकम्, द्रष्टा = दर्शनकर्तेति सर्वक्रियाकारकाणामुपलक्षणतया निर्देशः । दर्शनमिति ज्ञानक्रियामुखेनोपलक्षणतया सर्वक्रियानिर्देशः । प्रयोजनमिति दर्शनक्रिया-फलावरणभङ्गनिर्देशव्याजेनोपलक्षणतयैव समस्तक्रियाफलनिर्देश इति साध्यसाधनफल-रूपतया विश्वसंकलनायामशेषविवर्तप्रकृतित्वं ब्रह्मणः समर्थितं भवतीति ।

तस्य शब्दार्थसम्बन्धरूपमेकस्य दृश्यते ।
तद् दृश्यं दर्शनं द्रष्टा दर्शनं च प्रयोजनम् ॥१४॥

वाच्यवाचकसम्बन्धानां भावतोऽद्वयरूपता । तत्र ह्यान्तरे तत्त्वे श्रुत्यर्थशक्ती संसृज्येते इति विवर्तदशायां श्रुत्यर्थशाखात्मना तस्यैव विकाशाद्वाच्यवाचकरूपतया भेदावभासौ, ज्ञानज्ञेयरूपतयैवाविद्येति (रूपतया वाऽविद्ययेति) ब्रह्मकाण्ड एव प्रपञ्चेनायमर्थोऽस्माभिर्निर्णीत इति तत एवावधार्यम् । द्रष्टृदृश्यरूपतया च तस्यैव विवर्तः । तथा हि दृश्यं तावद्भावजातं संविद्रूपारूढम् । वेद्यमानैकत्वादेव वेदनैकपरमार्थम्, अप्रकाशस्य प्रकाशमानतायोगात् इति पूर्वकाण्डे अद्वयसिद्धौ च वितत्य विचारितम् । द्रष्टापि जीवात्मा अविद्याकृतावच्छेदो नियतः संसारी भोक्ता ब्रह्मैव चेतनत्वाद्भावतो भेदानुपपत्तेरिति तत्रैवावेदितम् । अनेन च प्रधानकर्तृकर्मरूपकारकनिर्देशेन कारकान्तरस्याप्याक्षेपात् सिद्धरूपो विवर्तः प्रतिपादितः । दर्शनशब्देन च प्रधानक्रियानिर्देशकेन क्रियान्तरस्याक्षेपात् साध्यस्वभावक्रियाविवर्तोऽप्युक्तः । कालशक्त्यवच्छिन्नो हि क्रियाविवर्तः । दिक्च्छक्त्यवच्छिन्नश्च मूर्तिविवर्त इति मूर्तिक्रियाविवर्तरूपं विश्वं प्रतिपादितम् ।

---

अयं भावः--वाच्यवाचकतत्सम्बन्धानां पूर्वोक्तरीत्यैकतत्त्वप्रकृतिकत्वात् तदभिन्नाभिन्नस्येति न्यायेन स्वरूपतोऽभेद इति औपनिषदानां वैयाकरणानाञ्च तदनुयायिनां सिद्धान्तः । तत्र ह्यग्रबुद्धिमात्रग्राह्ये परे तत्त्वे आन्तरे शब्दार्थोभयात्मकविश्वसर्गानुकूले शक्ती संसृज्येते इति विवर्तदशायां शब्दार्थरूपशाखाद्वयात्मना ज्ञानज्ञेयात्मना वा तस्यैवैकस्य तत्त्वस्य विकासाद् वाच्यवाचकोभयात्मना भेदावभासौ भवतः । ज्ञानज्ञेयात्मना वाऽविद्ययेति ब्रह्मकाण्ड एव प्रपञ्चेनायमर्थोऽस्माभिर्निर्णीत इति तत एवावधार्यम् । द्रष्टृदृश्यरूपतया चापि तस्यैवाविद्यया विवर्तः ।

दृश्यं तावद् भावाभावकदम्बकं भासमानं संविद्रूपारूढम् । तच्च वेदनवेद्यमानयोरेकत्वादेव वस्तुतो वेदनमात्रस्वभावम् । वेदनादतिरिक्तस्य जडस्याप्रकाशस्य प्रकाशमानत्वासम्भवादिति पूर्वकाण्डेऽद्वयशब्दब्रह्मसिद्ध्यवसरे तु विस्तरेण विचारितम् । द्रष्टाऽपि जीवात्मा ब्रह्माऽभिन्नो वस्तुतो दिग्देशकालवस्तुकृतपरिच्छेदरहितोऽप्यविद्यया कृतावच्छेदो नियतः = बद्धः संसारी भोक्ता ब्रह्मैव । उभयोश्चेतनत्वात्स्वरूपतो भेदानुपपत्तेरिति तत्रैवावेदितम् । तद् दृश्यं द्रष्टा इत्यनेन च कारकेषु प्रधानीभूतयोः कर्तृकर्मरूपयोः कारकयोर्निर्देशेन कारकान्तरस्याप्याक्षेपात्, दर्शनमित्यनेन च पूर्वावस्थितेन करणकारकस्य कण्ठत उक्तेः सिद्धसाध्योभयात्मके जगति सिद्धरूपो विवर्तः प्रतिपादितः । द्वितीयेन च दर्शनपदेन वाक्यार्थे प्रधानीभूतक्रियानिर्देशकेन क्रियान्तरस्याप्युपलक्षणात् साध्यस्वभावः क्रियारूपो विवर्तोऽप्युक्तः ।

ब्रह्मणश्च द्वे शक्ती—कालशक्तिर्दिक्शक्तिश्चेति । तत्र कालशक्तिपरिच्छिन्नः सर्वोऽपि क्रियाविवर्तो व्रीह्यादिरिव द्रोणादिभिः । दिक्शक्त्यवच्छिन्नश्च मूर्तिविवर्तः =

प्रयोजनशब्देन च समस्तक्रियाफलनिर्देश इति साध्यसाधनफलरूपतया विश्वसंकलनायामशेषविवर्तानुगुण्यं ब्रह्मणः प्रतिपादितम्। एतच्च—

एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥

इति ब्रह्मकाण्डे प्रतिपादितम्। तत्रैव च सर्वतत्त्वनिर्णयोऽस्माभिरभ्यधायि। प्रख्योपाख्यात्मकत्वाच्च व्यवहारस्य द्वित्वे शब्दार्थसम्बन्धरूपं तद् दृश्यं दर्शनं चेति भेदेनात्र निर्देशः। एतच्चाविद्यामयं रूपं कथ्यते। पारमार्थिकन्तु प्रशान्तप्रपञ्चरूपं वक्ष्यति।

यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः॥ इति॥ १४॥
(वा. का. २ सं. ७२)

उक्तमिदम् 'आकृतिसंहारेऽन्ते यदवतिष्ठते तत् सत्यम्' इति। तत्रैतत् स्यात्। अन्ते न किञ्चिदवतिष्ठते। असदपदमेवैतद् विश्वमाविर्भवतीत्याशङ्कचापि हेतुनाऽभिन्नकारणपूर्वकत्वमन्वयमुखेन दृष्टान्तोपक्रमं साधयितुमाह—

---

सिद्धस्वभावो विवर्त इति रीत्या मूर्तिक्रियाविवर्तरूपं विश्वं प्रतिपादितम्। प्रयोजनशब्देन च प्रकृतकारिकास्थेनोपलक्षणतया समस्तक्रियाफलनिर्देशः कृत इति साध्यसाधनफलरूपतया विश्वसंकलनायां क्रियमाणायामशेषविवर्तप्रकृतित्वं ब्रह्मणः प्रकृतकारिकया प्रतिपादितम्। एतच्च—

एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥
(वा० का० १।३)

इति ब्रह्मकाण्डे प्रतिपादितम्। तत्रैव च सर्वतत्त्वनिर्णयोऽस्माभिरभ्यधायि। व्यवहारस्य प्रख्योपाख्यात्मकत्वाच्च—प्रख्या = ज्ञानम्, उपाख्या = प्रकथनम् तदात्मकत्वाच्च द्वित्वे व्यवस्थिते शब्दार्थसम्बन्धरूपं तद् दृश्यं दर्शनञ्चेति भेदेनात्र निर्देशोऽभिन्नस्यापि ब्रह्मणः। एतच्च मूर्तिक्रियाविवर्तरूपमविद्यामयं ब्रह्मणो रूपमत्र निर्दिश्यते। पारमार्थिकन्तु तस्य रूपं प्रशान्तप्रपञ्चरूपं वक्ष्यति—

यत्र द्रष्टा च दृश्यञ्च दर्शनञ्चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः॥ इति॥ १४॥
(वा. का. २ सं ७२)

ननु पूर्वमुक्तम्—'आकृतिसंहारे = विकारविनाशे सत्यन्ते यदवतिष्ठते सा सत्या प्रकृतिरिति'। एतच्चासत्कार्यवादे नोपपद्यते। सर्वस्यापि विनश्यतः कार्यजातस्य निरन्वयविनाशेनान्ते कस्याप्यनवतिष्ठमानत्वात्। असदपदमेव = अविद्यमानमनाश्रितञ्चैव ह्येदं विश्वं विजायत इत्याशङ्कायां सत्यामपि सर्वोऽपि ध्वंसो विकारप्रकृतिर्न भवति, अभाव-

**विकारापगमे सत्यं सुवर्णं कुण्डले यथा ।**
**विकारापगमे सत्यां तथाहुः प्रकृतिं पराम् ॥ १५ ॥**

**कुण्डलावस्थात्मकविकारापाये कुण्डले सुवर्णमेकं सत्यमवतिष्ठते यथा, तथा पृथिव्यादिविकारविगमेऽन्वयिनी प्रकृतिरभिन्ना सत्यावतिष्ठते इत्युपेयम् । आहुरिति आगमप्रमाणसिद्धतां ध्वनयति ब्रह्मणः । तथा चोक्तम्—**

**'एकमेव यदाम्नातम्' इति । ( वा० का० १।२ )**

**'आत्मैवेदं सत्यम्' । इति हि श्रुतिः ।**

**उपोद्वलनमात्रं चानुमानम् । तथा हि—निरुपाख्यादसतोऽपदाद् विकारप्रादुर्भावो न युक्तः, अभावस्य भावरूपत्वविरोधात् । न हि शशशृङ्गात् कस्यचिदुद्भवो दृश्यते । अस्ति च विज्ञानरूपतया जगत्यन्वय इति तत्पूर्वकमेवैतत् । तथा च वक्ष्यति—**

---

रूपत्वात्, शशशृङ्गादिवदित्यनुमानेन बीजादिध्वंसादेवाङ्कुरादिकमुत्पद्यत इति । अभावादेव भावजन्म इति बौद्धराद्धान्तस्य प्रत्याख्यानाभिप्रायेण । पूर्वं सर्वोऽपि विकारः, स्वाभिन्नसत्यप्रकृतिकः, विकारत्वात्, सुवर्णादिप्रकृतिककटककुण्डलादिरूपविकारवदित्यनुमानप्रयोगे विकारत्वेन हेतुना स्वाभिन्नसत्यकारणपूर्वकत्वमन्वयव्याप्तिमद् दृष्टान्तमुपक्रम्य साधयितुमाह—विकारापगमे सत्यमिति ।

अयमर्थः—यथा विकारापगमे = कुण्डलावस्थात्मकविकारापाये कुण्डले प्रकृतिभूतं सुवर्णं सत्यमेकमवतिष्ठते, तथा विकारापगमे = पृथिव्यादिरूपपञ्चमहाभूतरूपविकारविगमे सद्रूपेण सर्वविकारान्वयिनीमभिन्नां सत्यां च परां प्रकृतिरहितां प्रकृतिं सच्चिदानन्दात्मकब्रह्मरूपतयाऽवतिष्ठमानामाहुर्वेदविद इति ।

अयं भावः—यथा सुवर्णस्य कुण्डलावस्थात्मविकारापाये सति प्रागपि कुण्डले समवस्थितं सुवर्णमेकं सत्यमवतिष्ठते, तथा ब्रह्मणः पृथिव्यादिरूपपञ्चमहाभूतात्मकविकारविगमे सति सर्वविकारान्वयिन्यभिन्ना सत्या च ब्रह्मरूपा प्रकृतिरवतिष्ठत इति स्वीकार्यम् । कारिकायामाहुरित्युक्त्या चैवंभूतस्य ब्रह्मण आगमप्रमाणसिद्धता सूच्यते । एतच्चोक्तमपि प्राग् ब्रह्मकाण्डे 'एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्' इति । श्रुतिरप्याह—'आत्मैवेदं सत्यमिति' । श्रुतिसिद्धस्य चैतस्यार्थस्य साधकं प्रागुक्तमनुमानमुपोद्बलनपात्रमपि = उपोद्बलनमनुमानानुग्राहकस्तर्कस्तस्य पात्रं विषयः ।

तथा हि—निरुपाख्यादसतोऽपदाद् विकारप्रादुर्भावो न युक्तः । अभावस्य भावरूपत्वविरोधात् । नहि शशशृङ्गात्कस्यचिदुद्भवो दृश्यत इत्येवं विमृश्यमाने प्रागुक्तानुमानानुग्राहक एष तर्कः फलति । यदि ध्वंसे विकारप्रकृतित्वाभावो न स्यात्तदाऽभावरूपत्वमपि न स्यात् । न ह्यभावरूपात् शशशृङ्गात् कस्यचिदुद्भवो दृश्यत इति । अस्य च तर्कस्य प्रसिद्धिर्विज्ञानरूपतया स्वविकारजगत्यनुगते ब्रह्मणि । 'भाति घटः' इत्यनु-

"नाभावो जायते भावो नैति भावोऽनुपाख्यताम्" इति।

( वा० का० ३ सं० ६१ )

तस्य चिद्रूपस्य चिच्छक्तिरपरिणामिनीति विकारभावान्नेदं सांख्यनयवत्परिणामदर्शनम्, अपि तु विवर्तपक्षः। विशेषश्चानयोर्वाक्यपदीयेऽस्माभिर्व्याख्यात इति तत एवावधार्यम्। इहापि सम्बन्धसमुद्देशे वक्ष्यते। कारणान्तरव्युदासश्चाद्वयसिद्धावभिहित इति सत्यर्थित्वे तत एवावगन्तव्यः ॥ १५ ॥

तदेवमात्मशब्दाभिधेयस्य ब्रह्मणः पदार्थपरमार्थरूपत्वात् द्रव्यरूपत्वमुपपाद्य सर्वशब्दवाच्यत्वं तस्यैव निगमयितुमाह—

---

भवदर्शनादस्ति हि विज्ञानरूपतया जगत्यन्वयो ब्रह्मण इति विज्ञानपूर्वकमेवैतज्जगदिति सिद्धम्। तथा च वक्ष्यति हरिरग्रे—

'नाभावो जायते भावो नैति भावोऽनुपाख्यताम्' इति।

अस्यार्थः—अभावः = बीजादिध्वंसः, भावः = अङ्कुरादिरूपो न जायते, अभावस्य भावरूपत्वविरोधात्। भावश्चाङ्कुरादिः कार्यरूपः, अनुपाख्यताम् = अनुपाख्यत्वप्रयुक्तामसत्तां ध्वंसरूपां नैति = न प्राप्नोति सत्कार्यवादाभ्युपगमात्। तदुक्तं भगवता—

'नासतो विद्यते भावो नाभावो विद्यते सतः' (गीता) इति।

तस्य च जगत्प्रकृतिभूतस्य चिद्रूपस्य ब्रह्मणः शक्तिशक्तिमतोरभेदाच्चिद्रूपा शक्तिर्नित्यत्वनिरवयवत्वाभ्यामपरिणामिनीति परिणामरूपविकाराभावादिदं व्याकरणदर्शनं न सांख्यनयवत् परिणामदर्शनम्; किन्तु विवर्तदर्शनमिति। विवर्तपरिणामयोर्विशेषश्चास्माभिः प्राग् व्याख्यातः। तात्त्विकोऽन्यथाभावः परिणामः। अतात्त्विकोऽन्यथाभावो विवर्त इति। इहापि सम्बन्धसमुद्देशनाम्नि प्रकरणे वक्ष्यते। जगतोऽभावादिप्रकृतिकत्वव्युदासश्चाद्वयसिद्धिनाम्नि स्वनिर्मिते ग्रन्थे हेलाराजेन कृत इति अत्रत्यतट्टीकादर्शनतोऽवसीयते। अद्वयसिद्धिग्रन्थश्च साम्प्रतं नोपलभ्यत इति ॥ १५ ॥

तदेवमद्वैतवादे 'अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिमहावाक्यविमर्शे 'आत्मशब्दाभिधेयं ब्रह्म, सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतवाक्यविमर्शे च विवर्तवादसमाश्रयेण तस्यैव सर्वपदार्थपरमार्थरूपत्वाद् द्रव्यरूपत्वमुपपाद्य तस्यैवाविद्यापरिकल्पिततत्तत्पदार्थोपाधिकस्य तत्तच्छब्दवाच्यत्वमन्ते व्यवस्थापयितुमाह—वाच्या सा सर्वशब्दानामिति।

अयमर्थः—सा=ब्रह्मरूपा पराप्रकृतिः स्वविकारभूततत्तत्पदार्थरूपोपाधिपरिच्छिन्ना सती सर्वशब्दानां वाच्या। तस्य च ब्रह्मणः सर्वविकारप्रकृतित्वात् प्रकृतिविकृत्योर्भेदाभेदाभ्युपगमेऽपि भेदस्य कल्पितत्वादभेदस्यैव च वास्तवत्वात्। शब्दाश्च = शब्दा अपि, ततः=स्वप्रकृतिभूताद् ब्रह्मणः पृथक् न, अपृथक्त्वे च=अभेदेऽपि तयोः =

**वाच्या सा सर्वशब्दानां शब्दाश्च न पृथक् ततः ।**
**अपृथक्त्वे च सम्बन्धस्तयोर्नानात्मनोरिव ॥ १६ ॥**

**तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्याविद्याभूयस्त्वे प्रतिनियताकारोपाधीयमानरूपभेदं ब्रह्मैव सर्वशब्दविषय इत्युक्तोऽर्थः । आत्मा, ब्रह्म, तत्त्वम्, इत्यादयोऽपि हि शब्दाः समवलम्बितोपाधयोऽपि द्रव्यात्मानमनु परिवर्तन्ते । निरुपाधिनो वाग्विषयातीतत्वात् । वाङ्मनसातीतं हि तत्त्वमित्युपदिशन्ति ब्रह्मविदः । घटादिशब्दापेक्षया त्वात्मादिशब्दाः प्रत्यासन्नाः । सर्वस्य च तन्मयत्वाच्छब्दा अपि तदात्मकाः । यथाविभक्तं प्राक् । अभेदेऽपि च पारमार्थिके सांवृतो लोकयात्रायां भेदोऽसत्य इतीवशब्दः । अत एव द्विष्ठसम्बन्धोपपत्तिः ॥ १६ ॥**

**ननु चेन्द्रजालमिदं यदवधृतरूपभेदानामपि भावानामनादृत्य तत्त्वमनवसीयमानाभेदपरमार्थोपदेशनमित्याशङ्क्य दृष्टान्तेनैतत् साधयितुमाह ।**

---

प्रकृतिविकृत्योः शब्दब्रह्मणोरविद्यापरिकल्पितभेदाभ्युपगमेन नानात्मनोरिव = भिन्नस्वरूपयोरिव सम्बन्धः = अध्यस्यमानतादात्म्यलक्षणस्तत्प्रयुक्तश्च वाच्यवाचकभावादिरपि उपपद्यत इति ।

अयं भावः—यद्यपि 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिवाक्यविमर्शे स्वगतसजातीयविजातीयभेदशून्यमेकमेव ब्रह्म वाग्व्यवहारातीतञ्च, तथापि स्वनिमित्तभूतेऽविद्याबाहुल्ये सति जायमानस्य व्यवहारस्यघटाकाशादिव्यवहारस्येव घटपटादिरूपतत्तदुपाधिपरिकल्पितबहुलब्रह्मभेदविषयकतया परस्परव्यावृत्ताकारैरुपाधिभिरुपाधीयमान = (रूप)-कल्प्यमान-स्वरूपभेदं ब्रह्मैव सर्वशब्दवाच्यमित्येषोऽर्थः प्रागुक्तः । यद्यप्यात्मा, ब्रह्म, तत्त्वमित्यादयः शब्दास्तत्तदुपाधीन् स्वस्वप्रवृत्तिनिमित्ततया वाच्यत्वेन समवलम्ब्यैव व्यवहारे प्रवर्तन्ते । तथा हि—आत्मशब्दस्य प्रवृत्तिनिमित्तभूत उपाधिः सर्वविषयापनादानादनादिः ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यश्चास्य सन्ततो भावस्तस्मादात्मेति गीयते ॥ इत्युभियुक्तोक्तेः ।

ब्रह्मशब्दस्य च प्रवृत्तिनिमित्तभूतं उपाधिर्बृहत्त्वं देहादीनां परिबृहयितृत्वं वा । तत्त्वशब्दस्य च रूढं प्रवृत्तिनिमित्तमुपाधिभूतं सत्यत्वमिति । तथापि तेषामुपाधीनां परमार्थद्रव्यरूपमात्मानं ब्रह्मैव तत्तदुपाधिपरिच्छिन्नं वाच्यत्वेनानुसृत्य ते शब्दा व्यवहारे परिवर्तन्ते = प्रवर्तन्ते, अनुपहितस्य वाग्विषयत्वातिक्रमात् । न तत्र चक्षुर्गच्छति, न वाग् गच्छति, न मनो, न विद्मो, न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथोऽविदितादधि' इत्यादिकं श्रुतिवाक्यजातमनुसरन्तो वाङ्मनसातीतं हि ब्रह्मतत्त्वमित्युपदिशन्ति ब्रह्मविदः । तदेवं यद्यपि घटादिशब्दा आत्मादिशब्दाश्चोभयेऽपि वस्तुत उपहितब्रह्मवाचका एव, तथापि घटादिशब्दापेक्षया आत्मादिशब्दा ब्रह्मणः प्रत्यासन्नाः, उपाधि-

**आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम् ।**
**विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः ॥ १७ ॥**
**अजन्मनि तथा नित्ये पौर्वापर्यविवर्जिते ।**
**तत्त्वे जन्मादिरूपत्वं विरुद्धमुपलभ्यते ॥ १८ ॥**

**स्वप्नावस्थागतः प्रपञ्चो जागरया बाध्यमानत्वादसत्य इति सर्ववाद्यभ्युपगमः। तेनैव दृष्टान्तेन जागरायामपि भावभेदस्तुरीयदशायामननुवृत्तेरसत्योऽवस्थाप्यते। यत्किल सर्वावस्थास्वनुगतं तदेव सत्यम्। तच्च संविन्मात्ररूपमबाध्यमानम्।**

---

प्रत्यासत्तेः। तथा हि घटादिशब्दवाच्या उपाधयो घटादयः स्वस्वकारणपरम्परया ब्रह्मणः सन्निहिता, न तु साक्षात्। आत्मादिशब्दवाच्याः प्रागुक्ता उपाधयस्तु साक्षाद् ब्रह्मणः सन्निहिततरत्वमात्मादिशब्दानामिति। सर्वस्य च ब्रह्मविकारत्वात् शब्दा अपि स्वप्रकृतिभूतब्रह्माऽभिन्ना एव यथा व्याख्यातं प्राक्।

एवं प्रकृतिविकृत्योः शब्दब्रह्मणोः पारमार्थिकेऽभेदेऽपि लोकयात्रायां = लोकव्यवहारे सांवृतः = अविद्यापरिकल्पितः। अत एवासत्यो भेद इति सूचयितुं प्रकृतकारिकायामिवशब्दः प्रयुक्तः। सांवृतस्य भेदस्य सत्त्वादेव च शब्दब्रह्मणोर्वाच्यवाचकभावलक्षणस्य सम्बन्धस्य द्विष्ठत्वोपपत्तिरिति ॥ १६ ॥

ननु घटो जायते, पटोऽस्ति, मठोऽभूद् इति विरुद्धकालिकविरुद्धक्रियाश्रयत्वेन विरुद्धधर्माश्रयत्वेन च घटपटमठादिषु भेदोऽबाधितोऽनुभूयते। अभेदस्तु तेषां नानुभूयते, कदाचित् कथञ्चिदनुभूयमानोऽपि भ्रमगोचर इति बाध्यते। तथा चेन्द्रजालवदश्रद्धेयमिदं यदवधृतस्वरूपभेदानामपि भावानां तत्त्वं = सत्यम् भेदमनादृत्य बुद्ध्याऽगृह्यमाणस्याभेदस्य परमार्थत्वोपदेशनमित्याशङ्क्य दृष्टान्तेनैतत् साधयितुमाह युग्मेन—आत्मा पर इति।

अयमर्थः—यथा स्वप्ने सर्वेन्द्रियोपरमादेकस्यैव चेतसः सर्वस्वप्नप्रपञ्चप्रकृतिभूतस्य चैत्रो ममात्मा, पुत्रत्वात्, मैत्रस्तु परः, शत्रुत्वात्, चैत्रः प्रियः, पुत्रत्वात्, मैत्रो द्वेष्यः, शत्रुत्वात्, अहं वक्ता, इदं मम वाच्यम्, इदञ्च मद्वचनस्य प्रयोजनमितीमानि रूपाणि परस्परं विरुद्धानि जागरायां बाधितत्वाद् बहिरसत्त्वाच्चासत्यानि विवर्तभूतानि वासनावशादविद्यावशाच्च समुपलभ्यन्ते। तथा पौर्वापर्यविवर्जिते = कार्यकारणभावरहिते, अत एवाजन्मनि = अनुत्पत्तिके, अत एव नित्ये = ध्वंसप्रतियोगिनि अनुत्पद्यमानस्यानादेर्भावस्य विनाशादर्शनात्। परे तत्त्वे सद्रूपे ब्रह्मणि घटपटादिरूपस्वविवर्तभूतोपाधिजन्मादिभिर्जन्मादिरूपत्वं परस्परविरुद्धमप्येकस्मिन्नविद्यावशादुपलभ्यत इति।

**अवस्थाभेदस्त्वागमापायित्वाद् बाधितोऽसन् सुखदुःखादिवत् । तथा हि रागादयः सुखादयश्चास्वभावत्वात् संविन्मात्ररूपं न विकुर्वन्ति । तथावस्थाभेदोऽप्यनेकाकार-कालुष्योपहृतः । तत्र स्वप्ने विरुद्धाकारोल्लेखो वैकल्पिकी दृष्टिः प्रतिप्रमातृनियता । वैकल्पिको हि मनोव्यापारानुसारी संसारी भोक्ता, स च भावतश्चेतनत्वाद् ब्रह्मैव । तथा च तावति स्वातन्त्र्यान् निर्मितावीश्वरोऽनन्योपादानान् ( त् ), भावानाभास्यो-पभुङ्क्ते प्रियाप्रियरूपतया रागद्वेषादिमयेन संसारमोहेन स्वपरविभागानुसारी परसंकथादिषु । तदाहुः वेदान्ततत्त्वनिपुणाः—**

**प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।**
**सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥ इति ।**

---

अयं भावः—'न तत्र रथा, रथयोगा, न पन्थानो भवन्ति । अथ रथान्, रथ-योगान्, पथश्च सृजते' इति श्रुतेः सर्वः स्वप्नावस्थागतः प्रपञ्चो जागरिते बाधितत्वाद-सत्य इति सर्वशास्त्रसिद्धान्तः । तेनैव दृष्टान्तेन जागरितेऽपि अनुभूयमानो भावभेदस्तुरीय-दशायाम् = निर्विकल्पकसमाधावविद्यमानत्वादसत्योऽवस्थाप्यते । यद्धि सर्वावस्थास्वनु वर्तते, तदेव सत्यमिति । तच्च सत्यं संविन्मात्ररूपं सर्वस्य विवर्तस्य प्रकृतिभूतं सर्वावस्था-स्वबाध्यमानत्वात् । तद्विवर्तभूतो विकाररूपोऽवस्थाभेदस्तूत्पत्तिविनाशवत्वाद् बाधितोऽत एवासन् अशाश्वतिकत्वात् सुखदुःखादिवत् । तथा हि—रागादयस्तत्कार्यभूताः सुखादयश्च संवित् स्वभावबहिर्भूतत्वात् संविन्मात्ररूपं न विकुर्वन्ति । तथाऽनेकविधकालुष्ययुतः संविद्विवर्तभूततदवस्थाभेदोऽपि संविन्मात्ररूपं न विकुरुते । तत्र स्वप्ने चेतसो रथत्वादि-रूपविरुद्धाकारोल्लेखो वैकल्पिकी दृष्टिः । विविधेन रूपेण कल्प्यते कल्पना गोचरीक्रियते वस्तु येनाऽसौ विकल्पोऽविद्या, तत्कृता दृष्टिर्वैकल्पिकी । सा च प्रतिप्रमातृनियता, न तु साधारणी । सर्वेषां स्वप्नदृष्टीनामेकस्याः स्वप्नदृष्टेरभावात् । मनोव्यापारं वृत्तिरूपमनु-सृत्य = सहायं लब्ध्वा स्वनिर्मितानां विषयाणां भोक्ता मन उपाधिकः संसारी जीवोऽपि वैकल्पिक एव = उपाधेराविद्यकत्वादौपाधिक एव । स च बुद्ध्योपाधिनिरासे भावतः = स्वभावतः = स्वरूपतः ब्रह्मैव, चेतनत्वात् । तथा च तावति निर्मितौ = स्वाप्नपदार्थमात्र-विषयक एव निर्माणे, स्वातन्त्र्यादीश्वरः = समर्थः स जीवः कर्तृतया निमित्तभूतोऽपि स्वाप्नपदार्थनिर्माणे स्वातिरिक्तस्योपादानकारणस्याभावादनन्योपादानान् स्वाप्नभावा-नाभास्य परसंकथादिषु = परेण सह संवदनादिव्यवहारेषु रागद्वेषादिमयेन संसारमोहेन स्वपरविभागानुसारी प्रियाप्रियरूपतया तान् भावानुपभुङ्क्ते =ताननुभवन् तज्जन्ये सुखदुःखे अनुभवति । तदाहुर्वेदान्ततत्त्वज्ञाने निपुणाः—

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥ इति ।

भोक्तेति वचनात् प्रत्यगात्मसृष्टिरियमुक्ता। तस्य च सर्वेश्वरत्वात् ब्रह्मरूपत्वे सृष्टिसामर्थ्यमुक्तम्। सर्वमयत्वाच्चानन्योपादानविचित्रभावरचनामात्मोपादान(ना)माहुः। अत एव प्रविभज्यात्मनात्मानमिति कर्तृकर्मभेदाभावाच्च वैकल्पिकत्वमस्याः सृष्टेः स्फुटमुक्तम्। बाह्योपादाना तु जागरायामैश्वरी सृष्टिर्विश्वशब्दवाच्या सर्वप्रमातृसाधारणी। स्थिरत्वास्थिरत्वग्रहावेशनिमित्तस्तु भेदः। अविद्याप्रवृत्तिरूपत्वात् पुनरसत्यता समानैव। केवलं सत्यामविद्यायामपरो मोहश्चिच्छक्तेरावारको निद्रा नाम। तद्वशादत्रैव भ्रान्तत्वाभिमानोऽर्वाग्दृशाम्। परमार्थदृशां तु जननमरणरहितेऽप्रविभक्ते कूटस्थे परस्मिन् ब्रह्मणि चिदानन्दरूपे सर्वमेव जगज्जाग्रत्स्वप्नाद्यवस्थागतं मूर्तिक्रियाविवर्तरूपमसत्यम्। अन्वयिचित्सामान्यमात्रं तु परमार्थ इति सिद्धम्। विरुद्धमुपलभ्यते इति वदन्नविद्यायां विरोधमभ्युपैति। एतदेव ह्यविद्यायाः

---

व्याख्यातञ्चेदं प्रथमकाण्डव्याख्यावसरे प्राक्। भोक्तेति वचनेन प्रत्यगात्मकर्तृका स्वाप्नभावानां सृष्टिरियमुक्ता। तस्य च सर्वेश्वरत्ववचनाद् ब्रह्मरूपत्वे सति सृष्टिसामर्थ्यमुक्तम्। सर्वमयत्वकथनेन चानन्योपादानां विचित्रभावरचनामात्मोपादानिकामाहुः।

आत्मनो नित्यत्वनिरवयवत्वाभ्याम्, प्रविभज्यात्मनात्मानमिति कर्तृकर्मभेदाभावाच्चानुत्पन्नायाः स्वाप्नसृष्टेर्वैकल्पिकत्वम् = आविद्यकत्वं स्फुटमुक्तम्। जागरिते तु बाह्योपादाना विश्वशब्दवाच्या ऐश्वरीसृष्टिराविद्यकत्वाविशेषेऽपि सर्वप्रमातृसाधारणी। तत्रैश्वरी सृष्टिः स्थिरा, जैवी तु स्वाप्नभावसृष्टिरस्थिरेति स्थिरत्वास्थिरत्वज्ञानाभिनिवेशकृतस्तु तयोः सृष्ट्योः परस्परं भेदः। असत्यता तु तयोर्द्वयोरपि समानैव, द्वयोरपि अविद्याप्रवृत्तिरूपत्वात्। एवं जीवेश्वरयोर्द्वयोरपि बाह्याबाह्यसर्गानुकूलायां विक्षेपशक्तिमत्यामविद्यायां सत्यामपि जीवे एव केवलमयमपरो मोहश्चिद्रूपायाः शक्तेरावारको निद्रा नाम। चिद्रूपावारकमोहवशादेव जीवभ्रान्तत्वाभिमानोऽर्वाग्दृशाम्। परमार्थदृशान्तु जननमरणवर्जितेऽनुपहितेऽप्रविभक्ते कूटस्थनित्ये परस्मिन् ब्रह्मणि चिदानन्दरूपे सर्वमेव जगज्जाग्रत्स्वप्नाद्यवस्थागतं मूर्तिक्रियाविवर्तरूपम् = सिद्धसाध्यस्वभावद्विविधविवर्तरूपम् अध्यस्तमसत्यम्। तत्र सर्वत्रान्वयि चित्सामान्यमात्रन्त्वबाधितत्वाव्यभिचरितत्वाभ्यां परमार्थ इति सिद्धम्। विरुद्धमुपलभ्यत इति वदन्नविद्यायां सत्यां विरोधमभ्युपैति। अविद्यया ह्यविरुद्ध एकस्मिन् कूटस्थनित्ये परे ब्रह्मणि विरुद्धं जन्मादिरूपवत्त्वमवभासते। एतदेव ह्यविद्यायाः स्वरूपं यदनुपपद्यमानमपि वस्त्वाभासोपगमम् = आभासगोचरतां

स्वरूपं यदनुपपद्यमानमप्याभासोपगमं नयति, उपपन्नत्वे विद्यैव स्यात्। तस्माद-सत्यप्रपञ्चप्रकाशनशक्तिर्ब्रह्मणोऽनादिसिद्धा ग्राह्यग्राहकयुगलं स्वानुरूपमुपरचय्य जग-न्नाट्यमातनोतीत्यविचारितरमणीयामिमामपनयन्ति तत्त्वदृशः ॥ १७-१८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे द्रव्यसमुद्देशो नाम द्वितीयः ॥

---

नयति। आभासविषयस्योपपन्नत्वे तु विद्यैव स्यात्। तस्मादसत्यप्रपञ्चप्रकाशनशक्ति-र्ब्रह्मणोऽविद्याख्याऽनादिः—'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतिसिद्धा शब्दार्थो-भयरूपं, ज्ञानज्ञेयरूपम् वा। ग्राह्यग्राहकयुगलसत्त्वासत्त्वाभ्यामनिर्वाच्यत्वेन स्वसदृशं निर्माय नटीव जगन्नाट्यमद्भुतं दर्शयतीति मत्वाऽविचारितरमणीयामिमां कर्मयोगरूप-चक्रद्वयप्रवर्तनद्वारा जन्ममरणप्रबन्धाविच्छेदे निमित्तभूतां तत्त्वमस्यादिमहावाक्योत्थजीव-ब्रह्मैक्यसाक्षात्काररूपया विद्यया परमया चरमया चापनयन्ति तत्त्वदृश इति शं भवतु लोकस्य ॥ १७-१८ ॥

इति श्रीब्रह्मीभूतकाशीनाथपण्डितराजतनयसौभद्ररघुनाथशर्मोपज्ञातेऽम्बाकर्त्री-नाम्नि व्याख्याने द्रव्यसमुद्देशो नाम द्वितीयं प्रकरणम् ॥

# अथ सम्बन्धसमुद्देशः

**प्रकाशः**

समुद्देशद्वयेन जातिद्रव्ये दर्शनभेदेन शब्दार्थमवस्थाप्य शब्देनार्थस्याभिधाने सम्बन्धो हेतुः, अन्यथा सर्वं सर्वेण प्रत्याय्येतेति तत्र सम्बन्धं प्रतिपादयितुमाह—

**ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते ।**
**शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः ॥१॥**

प्रयोगेणाभिज्वलितैः शब्दैस्त्रितयमवगम्यते—आत्मीयं रूपम्, अर्थश्च फलसाधनः, प्रयोक्तुरभिप्रायश्च । न चैतदसति सम्बन्धे नियमेन घटत इति वास्तवः सम्बन्धावसायो

**अम्बाकर्त्री**

[illegible]श्रद्धाश्चरणयुगले वत्सला अङ्कपाल्यो-
ग्लानिम्लाना उरसि महति व्याप्तमुण्डेऽतिभीताः ।
कण्ठे मालीकृतफणिपतौ सस्पृहाश्चारु वक्त्रे
पत्युर्मूर्ध्नि प्रणतिपरुषा दृष्टयः पान्तु मातुः ॥१॥
नमामि जगदुत्पत्तिस्थितिसंहारकारणम् ।
वारणास्यस्य जनकं वारणं विपदां महः ॥२॥

जातिद्रव्ये एकैकमुभयं वा शब्दार्थ इति दर्शनभेदेन प्राक् समुद्देशद्वयेन व्यवस्थाप्य ताच्छब्देन तत्तदर्थस्याभिधाने तयोः सम्बन्धो निमित्तम्, अन्यथा सर्वोऽर्थः सर्वेण शब्देन प्रत्याय्येतेति प्रत्ययसंकरप्रसङ्गः, अतो व्यवस्थितं पुरुषसमयागोचरं तयोः सम्बन्धं शाश्वतिकं प्रतिपादयितुमाह—ज्ञानं प्रयोक्तुरिति ।

अयमर्थः—उच्चरितैः = स्वानुरूपध्वनिभिरभिव्यक्तैस्तत्तच्छब्दैः प्रयोक्तुः पुरुषस्य ज्ञानम् = तत्तच्छब्दस्य तत्तदर्थे प्रयोगहेतुभूतम्, तन्मूलकः प्रयोक्तुरभिप्रायश्च, 'अस्मात्पदादयमर्थो बोद्धव्य' इतीच्छारूपः । तत्तच्छब्दस्य स्वरूपञ्च प्रतीयते यत इति शेषः । अतस्तेषां शब्दार्थानां परस्परं सम्बन्धः समवस्थितोऽनादिर्नित्यः, न तु पुरुषसमयकृतः । शब्दार्थयोः शाब्दबोधस्य चानादित्वात् । तदुक्तं पस्पशायां वार्तिके—"सिद्धे शब्दार्थसम्बन्धे, लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते" इति । उक्तञ्च मीमांसकमूर्धन्यैः—

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध" इति ।

अत्रौत्पत्तिक इत्यस्य स्वाभाविकोऽनादिर्नित्यसिद्ध इत्यर्थ इति ।

अयं भावः—जिह्वाग्रोपाग्रमध्यमूलानां कण्ठताल्वादिरूपतत्तत्स्थानाभिघातरूपेण प्रयोगेण स्वजन्यध्वनिद्वाराऽभिज्वलितैः प्रकाशितैः स्फोटरूपैरान्तरैः शब्दैस्त्रितयं प्रतीयते ।

न सामयिकः शब्दार्थयोः सम्बन्धः, अभिधानियमनादनादेः। अत एव समवस्थित इत्याह। स्वभाव एव निरूढो न तु पुरुषेण निवेशित इत्यर्थः।

तत्र स्वरूपमन्तरङ्गमभिधेयमिति तेन मुख्यसम्बन्धोऽभिधाननियमः। अत एवान्यथापि पाठक्रमे सामर्थ्यात् स्वरूपे प्रथमं प्रतिपत्तिर्विभजनीया। ततोऽध्यस्तस्वरूपेऽर्थेऽर्थक्रियाकारिणीत्याभ्यामर्थस्वरूपाभ्यां शब्दस्य वाच्यवाचकभावसम्बन्धः प्रयोक्त्रभिप्रायेण तु सह कार्यकारणभावः।

ननु (च) वाच्यवाचकभावलक्षणः सम्बन्धः प्रस्तुतः। तत्र कः प्रसङ्गो ज्ञानस्वरूपयोः, सत्यम्। सर्वपार्षदं पुनरिदं शास्त्रमिति ये बाह्यस्यार्थस्य शब्दवाच्यत्वम् नेच्छन्ति, तन्मतोपसङ्ग्रहार्थं वक्त्रभिप्रायारूढस्यैव शब्दार्थत्वे तत्र कार्यकारणभावसम्बन्धमाह। यथाहुः—

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥ इति ॥

अत एव द्विविधः सम्बन्धपदार्थो व्यवतिष्ठते, योग्यताकार्यकारणभावश्च। अध्यासस्तु द्वयोरपि परमार्थ एव, न पृथग्रूपः ॥ १ ॥

यथा चेहोपचारसत्तासमाविष्टं वस्तु शब्दार्थं वक्ष्यति तथा कार्यकारणभावोऽपि सम्बन्धः स्वरूपस्य तु मुख्यमेव वाच्यत्वमित्याह—

---

आत्मनः = शब्दस्य स्वरूपम्, अर्थश्च प्रवृत्तिनिवृत्त्यन्यतररूपस्य फलस्य साधनीभूतः, प्रयोक्तुर्ज्ञानं शब्दप्रयोगहेतुभूतम्, तज्जन्यः प्रयोक्तुरभिप्रायश्च प्रयुयुक्षारूप इति। जानाति इच्छति यतते चेष्टते इति क्रमनियमात्। न चैष प्रतिनियतत्वितयावगमोऽसति शब्दार्थयोः स्वाभाविके प्रतिनियते सम्बन्धे घटत इति वास्तवस्तयोरवसीयमानः सम्बन्धो न पुरुषसमयकृतः शब्दार्थयोः सम्बन्धः। शब्दादर्थबोधस्यानादित्वेनानादेरेव शब्दार्थसम्बन्धस्याभिधाननियामकत्वात्। अत एव कारिकायाम्—समवस्थित इत्युक्तम्। स्वभावत एव निरूढः = प्रसिद्धोऽनादिः, न तु पुरुषेण तत्तदर्थेषु समयं द्वारीकृत्य निवेशित इति तदर्थः। तत्र सत्स्वपि त्रिषु ज्ञानादिषु शब्दाभिधेयेषु शब्दस्य बाह्यं स्वरूपं मानसं शब्दस्यान्तरङ्गमभिधेयमिति तेन मानसेन शब्देन सह बाह्यस्य शब्दस्य मुख्यः सम्बन्धो वाच्यवाचकभावलक्षणोऽभिधाननियमः = अभिधायाः शब्दशक्तेर्नियामकः।

अत एव = शब्दस्वरूपस्याऽभिधेयस्यान्तरङ्गत्वादेव 'शाब्दक्रमादार्थक्रमो बलीयान्' इति मीमांसानिर्धारितेन न्यायेन ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपञ्च इति पाठक्रमं सामर्थ्यादव्यत्यस्य शब्दस्वरूप एव प्रथमं शाब्दीप्रतिपत्तिर्विभजनीया। ततस्तादात्म्येन शब्दाध्यस्तस्वरूपेऽर्थक्रियाकारिण्यर्थे इति आभ्यामर्थस्वरूपाभ्यां सहशब्दस्य वाच्यवाचकभावलक्षणः सम्बन्धः। प्रयोक्त्रभिप्रायेण सह तु कार्यकारणभावलक्षणः स इति।

ननु वाच्यवाचकभावलक्षणः शब्दार्थयोः सम्बन्धः प्रक्रान्तः। तत्र कः प्रसङ्गो ज्ञानस्वरूपयोरिति चेन्न। सर्वपार्षदं पुनरिदं शास्त्रमिति अभियुक्तोक्तेर्ये बाह्यस्यार्थस्य

**प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित् ।**
**स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते ।। २ ।।**

अयं गौरयमर्थ इति शब्दार्थयोरभेदावभासनात् स्वरूपमभिदधदेव शब्दोऽर्थमभिधत्त इति निश्चीयते । स्वरूपाविवेकेनैव ह्यर्थपरामर्शोऽभिधानमुच्यते । वृद्धव्यवहारात्तथैव सम्बन्धव्युत्पत्तेः । तथा हि अयं गौरिति सङ्केतः क्रियते, भेदेनैव घटशब्दस्यायमर्थ इति तु व्याख्यातृभूमिर्न व्यवहारदशा अत्रापि । चायमिति शब्दाभेद

---

शब्दवाच्यत्वं नेच्छन्ति तन्मतोपसंग्रहार्थं वक्त्रभिप्रायारूढस्यैव मानसस्य शब्दार्थत्वस्वीकारे तत्र तयोः कार्यकारणभावः सम्बन्ध इति सूचयितुं तयोरुपन्यासः । यथाहुः—

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते ।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ।।इति।।

अयमर्थः—वक्तुर्व्यापारस्य अभिप्रायरूपस्य विषयो योऽर्थो बुद्धौ प्रकाशते, तत्रार्थे शब्दस्य प्रामाण्यम्, नार्थं तत्त्वनिबन्धनम्, अर्थसत्यत्वप्रयुक्तं शब्दस्य प्रामाण्यमिति । एवञ्च द्विविधः सम्बन्धपदार्थो व्यवतिष्ठते योग्यताकार्यकारणभावश्चेति ।

तत्र योग्यतारूपः सम्बन्धो वाच्यवाचकभावलक्षणस्य सम्बन्धस्यानादेरेवानादिः प्रयोजकः । कार्यकारणभावस्तु सम्बन्धः प्रागुक्त एव । शब्दार्थयोः परस्पराध्यासलक्षणसम्बन्धस्तु प्रागुक्तयोर्द्वयोरपि सम्बन्धयोर्नियामकतया मूलभूतस्तिष्ठत्येवेति स्वरूपेणापरमार्थोऽपि द्वयोः सम्बन्धयोर्मूलत्वेनाव्यभिचारित्वात् परमार्थ एवैकरूपो, न तु द्वयोः पृथग्रूप इति ।। १ ।।

यथा च उपचारसत्तासमाविष्टम्=शब्दे ध्वन्यभिव्यक्ते स्फोटे योऽर्थस्य उपचारस्तादात्म्याध्यासमूलकः, सोऽयमित्यारोपस्तेन सत्ता समाविष्टम् । सत्तावद्=आरोपप्रकारीभूतमसदपि वस्तुशब्दस्यार्थ इति इहाग्रे वक्ष्यति । तथा वाच्यवाचकभाव इव कार्यकारणभावोऽपि तयोः सम्बन्ध इत्यपि इहैवाग्रे वक्ष्यति । एवञ्चार्थस्यारोपितत्वात् तेन सह शब्दस्य वाच्यवाचकभावरूपः सम्बन्धोऽपि आरोपित एव । बाह्ये ध्वन्यभिव्यक्ते परश्रवणगोचरे शब्दे आन्तरस्य शब्दस्वरूपस्य तादात्म्यन्तु मुख्यमिति अन्तरस्य शब्दस्वरूपस्य तद्वाच्यत्वमपि=तेन सह वाच्यवाचकभावसम्बन्धोऽपि मुख्य एवेत्याह—प्रतिपत्तिर्भवत्यर्थे इति ।

अयमर्थः—शब्दैरुच्चारितैर्गृहीतशक्तिकस्य अर्थे बाह्ये प्रतिपत्तिर्भवति । क्वचित् शक्तिग्रहाभावे अगृहीतशक्तिकस्य तु अर्थ प्रयोक्तुर्ज्ञाने वा संशयो भवति । शब्दस्वरूपेषु तु उपलब्धेषु श्रोत्रेण गृहीतेषु सत्सु व्यभिचारः । शब्दस्वरूपविषयकस्य निश्चयस्याभावः न विद्यते । अतोऽर्थज्ञानयोर्व्यभिचरितप्रतिपत्तिकत्वात्तयोर्वाच्यत्वममुख्यत्वम् । शब्दस्वरूपस्य तु अव्यभिचरितप्रतिपत्तिकत्वान्मुख्यं वाच्यत्वमिति ।

**एव। यदा गौरित्युच्यते तदायं सास्नादिमानर्थो बोद्धव्य इत्यर्थपरामर्शे फलतया इत्यभेदेनैव परमार्शो सङ्केतप्रवृत्तिः। व्यवहारफलो हि सङ्केतः। यथा च लौकिके व्यवहारे प्रतीतिस्तथासौ न्याय्यः। अभेदेन च तत्र प्रतीतिः।**

**प्रतीतौ हि किञ्चित्तटस्थमेव तामननुप्रविशदेवोपायमात्रं दृष्टं यथेन्द्रियम्। किञ्चित् पुनस्तत्रानुप्रविशदेव प्रतीतिं जनयद् व्यधिकरणं भवति दण्ड इव, यथा धूमादिलिङ्गम्। शब्दस्तु न जनकतामात्रेणार्थप्रतीतौ सम्बन्धमनुभवति, अपि तु तत्रार्थः शब्द्यमानः शब्दमय एवावभाति। तादृश एव हि स प्रतीतिस्वभावः। रूढत्वाच्च न भ्रमः।**

---

अयं भावः—गोशब्दस्य कोऽर्थ इति प्रश्ने कदाचित् 'अयं गौः' इति कदाचिच्च 'अयमर्थ' इत्युत्तरम्। तत्राद्ये शब्दार्थयोरभेदावभासनात् स्वरूपमभिदधदेव शब्दोऽर्थमभिधत्त इति निश्चीयते। द्वितीयेऽपि इदं शब्दार्थशब्दयोः स्वस्त्रार्थाभ्यां सहाभेदावसायः स्फुट एव। स्वरूपाविवेकेनैव = स्वरूपाभेदेनैव ह्यर्थपरामर्शोऽभिधानं शब्दव्यापार उच्यते। वृद्धव्यवहारात्तथैव = शब्दस्वरूपाविवेकेनैव तत्तच्छब्दानां सम्बन्धव्युत्पत्तेः = शक्तिग्रहात्। तथा हि—अयं गौरिति शब्दार्थयोरभेदेनैव संकेतः क्रियते। एतस्य भेदेनैव व्याख्यानम्। घटशब्दस्यायमर्थ इति तु व्याख्यातृभूमिः = व्याख्यातृष्वेव व्यवहारः, न तु सर्वजनसाधारणी व्यवहारदशा। अत्रापि च—अयमिति–इदं शब्दाभेद एवार्थे। यदा गौरित्युच्यते, तदाऽयं सास्नादिमानर्थे बोधव्य इत्यर्थपरामर्शे फलतया निमित्तभूतसंकेतप्रवृत्तिरपि अयमितीदं शब्दाभेदेनैव। यतस्तदर्थविषयकलौकिकव्यवहारार्थमेव तत्तत्पदानां तत्तदर्थे संकेतः क्रियते। अतो यथा लौकिके व्यवहारे शब्दार्थयोः प्रतीतिस्तथा संकेतो न्यायः। लौकिके व्यवहारे च शब्दार्थयोरभेदेनैव प्रतीतिः। अत एवार्थप्रतीतापि शब्दस्वरूपं जनकमपि अव्यभिचारितयाऽवभासते।

ननु नेदं युक्तम्—उपायस्योपेयेऽननुप्रवेशदर्शनात्। तथा हि प्रतीतौ किञ्चित्तटस्थमेव तामननुप्रविशदेवोपायमात्रं दृष्टम्। यथा इन्द्रियम्। किञ्चित्तु प्रतीतावनुप्रविशदेव प्रतीतिं जनयद् जनयित्वा व्यधिकरणं भवति। यथा दण्ड इव धूमादिलिङ्गम्।

अयं भावः—यथा कारको हेतुर्दण्ड उपेयेऽनुप्रविश्यैव = उपेयेन सह सम्बन्ध्यैव उपेयस्य जनको भवति। जनयित्वा च ततो व्यधिकरणो भवति तथा ज्ञापको हेतुर्धूमादिरूपं लिङ्गम् उपेयभूतां वह्निप्रतीतिमनुप्रविश्यैव तां जनयति 'वह्निव्याप्यधूमवान् पर्वत' इति परामर्शात्मिकाम्। जनयित्वा च ततो व्यधिकरणो भवति। 'वह्निमान् पर्वत' इति। शब्दस्तु द्वयीमपि जनकत्वमर्यादामतिशेते। यतः स न जनकतामात्रेणार्थप्रतीतौ विषयत्वरूपं सम्बन्धमनुभवति, अपि तु शब्दजन्यायामर्थप्रतीतौ अर्थः शब्द्यमानः = शब्दात् प्रतीयमानः शब्दमय एव = शब्दस्वरूपभूत एव शब्दालिङ्गित एव अवभाति। तादृश एव हि सोऽर्थप्रतीतिस्वभावः। स च शब्दाभिन्नार्थप्रत्ययाल्लोकेऽत्यन्तं रूढः = प्रसिद्ध इति देहादिष्वात्मप्रत्ययवद् यावद् व्यवहारमबाधितत्वान्न भ्रमः।

ननु न वर्णमालार्थं समुपलभ्यते। दर्शनानभिज्ञो देवानां प्रियः। इह शब्दो नाम वाचकः स उच्यते, योऽयं चिच्छक्तेर्वागात्मा व्यापारः शब्दनापरपर्यायोऽश्रूयमाणोऽप्युपांशुप्रयोगे शब्द इति व्यवह्रियते यतः। तस्य च प्रथममुद्भिद्यमानावस्थस्याविभागापन्नशब्दार्थमयस्वभावस्य परवागात्मना स्वरूपेणावस्थानम्। परतस्तु प्राणवृत्त्यनुप्राणितमनोभूमिसमवलम्बितनिजस्वभावस्य वाच्यवाचकरूपभिन्नशाखाद्वयावलम्बिनः समवस्थानम्।

अस्यां च मध्यमावस्थायां परामर्शनात्मा वाचकः शब्दोऽभिन्नचैतन्योद्रेकात्मिकां परवागवस्थामत्यजन्नेव स्वरूपवाच्यमुखेन तत्सम्भिन्नमर्थं परामृशति सामानाधिकरण्येन, गौरयमर्थ इति। तथा च स वाच्योऽर्थो वाचकाध्यासवानुच्यते। तदनु च स एव परामर्शकः शब्दः पूर्वावस्थावष्टम्भेनैव स्थानकरणाभिहननात्मावस्थोपारूढः श्रवणविषयतायोग्येनात्मना विभिन्नवाच्यवाचकरूपतया व्यक्तिमासादयन् स्फुटीभवतीत्येतावती शब्दव्याप्तिः। ततश्च परवाग्रूपनिष्पन्दात्मकस्यास्य शब्दस्य तद्रूपानुगमाच्छब्दनात्मकव्यापाररूपस्य स्वसामानाधिकरण्येनार्थरूपशब्दनादभेदेनैवैकया वृत्त्या स्वरूपविशेषेण विशिष्टमर्थाभिधानमवतिष्ठते। तद्यथा शुक्लः पटोऽयमिति शुक्लगुण-

---

तदुक्तमद्वैतमतनायकैः—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात्" ॥ इति।

यावद् व्यवहारमबाधितत्वेऽपि शब्दार्थयोरभेदो न वस्तुभूतः, किन्त्वाध्यासिक एव।

ननु न वर्णमालार्थे समुपलभ्यत इति चेत्, दर्शनानभिज्ञत्वादेवं ब्रवीषि, अतः शृणु तावद् शब्ददर्शनरहस्यम्।

इह शब्दो नाम वाचक उच्यते। अस्ति च चिच्छक्तेर्व्यापारद्वयम्। वागात्मा च, ज्ञानात्मा चेति। तत्र वागात्मा प्राणवृत्याऽनुगृहीतोऽभिव्यज्यते। ज्ञानात्मा तु मनोवृत्या। तत्र योऽयं चिच्छक्तेर्वागात्माव्यापारः शब्दनापरपर्यायोऽश्रूयमाणोऽप्युपांशुप्रयोगे यतः शब्द इति व्यवह्रियते सः। तस्य च प्रथममुद्भिद्यमानावस्थस्याविभागापन्नशब्दार्थमयस्वभावस्य परवागात्मना स्वरूपेणावस्थानम्। यतः परावाग् इति व्यवह्रियते। एतस्याश्च मूलचक्रे समवस्थानम्। तदनन्तरन्तु मूलचक्रादूर्ध्वमागच्छत् प्राणवृत्यनुप्राणितमनोभूमिसमवलम्बितनिजस्वभावस्य वाच्यवाचकरूपभिन्नशाखाद्वयावलम्बिनो मध्यमवागात्मना हृन्नाभिचक्रयोर्मध्ये समवस्थानम्। इयञ्च मध्यमा-वागुच्यते। अस्याञ्च मध्यमावस्थायां परामर्शनात्मा=परामृश्यमान एव, न तु बहिः श्रूयमाणः वाचकः शब्दः स्वाभिन्नस्य चैतन्यस्योद्रेकात्मिकां = किञ्चिदुन्मीलनात्मिकाम्, परवागवस्थामत्यजन्नेव स्वरूपवाच्यमुखेन=शब्दस्वरूपं स्ववाच्यं द्वारीकृत्य तदभिधानद्वारेण, तत्संभिन्नम्=तदभिन्नम्, अर्थं सामानाधिकरण्येन = स्वाभेदेन, परामृशति = अवबोधयति, गौरयमर्थ इति।

**च्छुरणया सकृदेव विशेष्यपटप्रत्ययमर्शः । न ह्यत्र शुक्लगुणस्य पृथक् परामर्शः । एवं घटोऽयमिति प्रधानभूतविशेष्यानुप्रवेशेनैव घटस्वरूपपरामर्श इत्येकैवेयं शब्दनात्मिका प्रतीतिः शब्दार्थयोः ।**

**क्वचित्तु स्वरूप एव विश्रान्तिः । तद्यथा—'अग्निमन्तोदात्तमधीष्व,' 'अग्नेर्ढक्' इत्यादौ । अत्र ह्यनुकार्यं स्वरूपमेव प्राधान्येनावस्थितम् । बाह्यार्थप्रतिपिपादयिषायां तु स्वरूपार्थयोः सम्भेदेनैवावभास इति न पृथक् स्वरूपप्रविमर्शः, अपि तु स एतस्यापि यतस्तदभेदभाजोऽर्थस्य । घट इति हि घटशब्देनार्थवत् स्वरूपमभिधयैव विषयीक्रियते । ज्ञानशब्दप्रदीपास्त्रयो हि प्रकाशा येनैव प्रकाशेन परं प्रकाशयन्ति, तेनैवात्मानमपि । तथा च ज्ञानमर्थं प्रकाशयति, प्रथयति तथैवात्मानमपि प्रकाशयति । एवं प्रदीपो रूपमाभासयन्नात्मानमप्याभासविषयभावोपगमनेन प्रकाशयति ।**

---

एवञ्च स वाच्योऽर्थो वाचकाध्यासवान्=वाचकस्य शब्दस्य यः स्वस्मिन् तादात्म्येनाध्यासस्तद्वान्=तद्विषयतावान् उच्यते । तदनु च स एव परामर्शकः=स्वसामानाधिकरण्येन अर्थस्य परामर्शकः शब्दः पूर्वावस्थामवलम्बमान एव स्थानकरणाभिहननात्मावस्थामुपारूढः=उपगतः, श्रवणविषयतायोग्येन स्वरूपेण वाच्यवाचकरूपतया भेदेन व्यक्तिम्=आविर्भावम्, आसादयन् स्फुटीभवति । इयञ्च वैखरीवागुच्यते ।

एतावती खलु अवस्थात्रये परा-मध्यमा-वैखरीरूपे, देशत्रये वा नाभिहृत्कण्ठकूपरूपे शब्दस्य व्याप्तिः प्रयोक्तृसम्बन्धिनः, न त्वितोऽन्यत्र, श्रोतृसम्बन्धिनस्तु श्रवणादिदेशव्याप्तिरस्त्येवेतोऽन्यत्रापि । ततश्च परवाग्रूपनिष्यन्दात्मकस्य=परवाग्रूपविवर्तात्मकस्य, अस्य वैखरीरूपस्य शब्दस्य परवाग्रूपानुगमात् शब्दनात्मकव्यापारवतः स्वसामानाधिकरण्येन स्वार्थरूपस्य शब्दनात्=शब्दतो बोधनात्, स्वाभेदेनैवैकया वृत्त्या शक्त्याख्यया शब्दस्वरूपेण विशिष्टं स्वार्थस्याभिधानं व्यवस्थितं भवति । तद्यथा 'शुक्लः पटोऽयम्' इति । अभेदेन शुक्लगुणव्याप्त्यैव युगपदेव विशेष्य पटप्रत्ययवमर्शः । न ह्यत्र शुक्लगुणस्य पटात् पृथक् परामर्शः । एवं 'घटोऽयम्' इति सामानाधिकरण्येन घटशब्दापेक्षयाप्रधानीभूतघटद्रव्यात्मकविशेष्यानुप्रवेशेनैव प्रकारतया घटशब्दस्वरूपपरामर्श इति रीत्यैकैवेयं शब्दनाभिधाप्रतीतिः, शब्दार्थयोः प्रायेण सर्वत्र लौकिके वैदिके च व्यवहारे ।

क्वचित्तु शब्दस्वरूपे एव प्राधान्येन शब्दस्य विश्रान्तिः । अर्थस्य तु वाचकतासम्बन्धेन शब्दे प्रकारतया भानं तत्र । तद्यथा—अग्निमन्तोदात्तमधीष्व, अग्नेर्ढक् इत्यादौ । अत्र हि सूत्रघटकस्याग्निशब्दस्यानुकरणस्यानुकार्यशब्दस्वरूपमेव लौकिकप्रयोगघटकं प्राधान्येनावस्थितम् । प्राधान्येन बाह्यार्थप्रतिपिपादयिषायान्तु शब्दस्वरूपार्थस्वरूपयोः सम्भेदेनैव=अभेदेनैव अवभास इति नार्थात् पृथक् शब्दस्वरूपप्रविमर्शः । अपि तु एतस्यापि=बाह्यस्यापि, तदभेदभाजो अर्थस्य=शब्दस्वरूपाभेदभाजोऽर्थस्य, यः बुद्धिविषयत्वं गच्छतः, सः=शब्दस्वरूपप्रविमर्श एव प्रविमर्शः, यतो 'घट' इति प्रयुक्तेन घटशब्देन अर्थवत्=तदर्थं इव, शब्दस्वरूपमभिधयैव विषयीक्रियते । ज्ञानशब्द-

तथा शब्दोऽपि वाचकोऽर्थमभिधीयमानतया प्रकाशयन्नात्मानमभिधयैव प्रकाशयतीत्युचितम् । न तु श्रोत्रेन्द्रियविषयभावोपगमनेन अर्थसामानाधिकरण्यापन्नं च स्वरूपमर्थवत् परामृश्यमानं शब्दस्याभिधानविषयोऽभिधेयम् । न तु वाचकतायामभिधीयमानतास्ति, परामर्शस्य परवागात्मनः कर्तृभूम्युपारूढस्य प्रकाशस्य वाचकत्वात् । तत्र च परामृश्यमानात्मकवाच्यताविरोधात् । तथा चाह—

'न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता'। इति ।

( वा० का० ३ सम्ब० २६ )

एवं च कृत्वा सर्वघटशब्दसाधारणं सामान्यरूपमर्थपक्षनिक्षिप्तमर्थसामानाधिकरणं स्वरूपमस्य वाच्यम्, अर्थवत्तत्सामानाधिकरण्यात् । तत्रापि तथा प्रतीतेः, सामान्यरूप एव च सङ्केतोपपत्तेः, तेनैवार्थस्य सामानाधिकरण्यात्, तथैव च व्यवहारे श्रोत्रा प्रतीतेः, तदनुसारेणैव प्रतिपाद्यप्रतिपादकभावार्थमेकपरामर्शावस्थितौ सङ्केतोपपत्तेः । अत एव च स्वाभिप्रायानुसारेण श्रोत्रा वक्तृज्ञानस्यानुमानात् स्वयं शब्दस्वरूपाध्यस्तमर्थमवबुध्य तथैव वक्तर्यनुमानमुचितमित्यभेदेनैव घटशब्दाध्यस्तं प्रयोक्तृ-

---

प्रदीपास्त्रयोऽपि हि प्रकाशका येनैव प्रकाशेन परं प्रकाशयन्ति तेनैवात्मानमपि । यथा च ज्ञानमर्थं प्रकाशयति = प्रथयति, तथैवात्मानमपि प्रकाशयति । एवं प्रदीपो रूपं रूपवद् द्रव्यञ्चाभासयन् आत्मानपि आभासविषयभावोपगमनेन = आभासविषयत्वप्रापणेन प्रकाशयति ।

तथा शब्दोऽपि वाचकोऽर्थमभिधीयमानतया = अभिधेयतया, प्रकाशयन् आत्मानमपि अभिधयैव प्रकाशयतीत्युचितम्, ननु श्रावणप्रत्यक्षविषयत्वप्रापणेन । भ्रान्त्याऽर्थसम्भेदमापन्नञ्च शब्दस्वरूपमर्थ इवाभिधया परामृश्यमानं शब्दस्याभिधानविषयोऽभिधेयम् । न तु वाचकस्य वस्तुतो अभिधीयमानत्वमस्ति । परामर्शस्य = ज्ञानस्य, परवागात्मनः = स्फोटरूपस्य कर्तृभूम्युपारूढस्य = तत्तद्ध्वनिरूपोपाधिभिः तत्तदर्थपरामर्शक्रियाकर्तृभूमिकामाप्तस्य प्रकाशरूपस्य वाचकत्वात् । तस्य च परामर्शरूपस्य परामृश्यमानात्मकवाच्यताविरोधात् । तथा चाह—

'न तु वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता' इति ( वा० का० ३ सम्ब० २६ )

कर्मकर्तृविरोधादिति भावः ।

एवञ्च कृत्वा व्यक्तिभेदेऽपि सर्वघटशब्दसाधारणमत एव सामान्यरूपमर्थपक्षनिक्षिप्तम् = भ्रान्त्यार्थसंभिन्नतयाऽर्थवत् परामृश्यमानम् अर्थसमानाधिकरणम् = अर्थसंभिन्नम् शब्दस्वरूपमस्य = तत्तद्ध्वन्यभिव्यक्तस्य आन्तरस्य स्फोटात्मकस्य शब्दस्य वाच्यम् । अर्थसामानाधिकरण्यात् = अर्थसम्भेदात् अर्थे इव शब्दस्वरूपेऽपि अभिधेयत्वेनैव रूपेण प्रतीतेः । सामान्यरूपेणैव च शब्दस्वरूपेण सहार्थस्य सामानाधिकरण्यात् सामान्यरूप एव च शब्दस्य संकेतोपपत्तेः । व्यवहारेऽर्थसामानाधिकरण्येनैव शब्दस्वरूपस्य श्रोत्राप्रतीतेः, तदनुसारेणैव चैकस्य परामर्शस्य उपाधिभेदात् प्रतिपाद्यत्वेन प्रतिपादकत्वेन

ज्ञानमवसीयते। तथा च ज्ञानमप्यध्यासेनैव शब्दः प्रतिपादयति वक्तृगतमिति तत्रापि परमार्थदृशाध्यास एव सम्बन्धः।

लोलीभूतानि शब्दार्थज्ञानानि घट इत्येवमवगम्यन्ते। यथोक्तम्—

'न सोऽस्ति प्रत्ययः'········इत्यादि। अत एव 'गौरित्यत्र कः शब्दः' इति प्रश्नः। तदहर्जातस्याप्ययमस्त्येव शब्दसम्भेदः। सङ्केतसहत्वात्। एवं च कृत्वा तात्पर्यदृशाध्यास एव योग्यतायां कार्यकारणभावे च फलतः सम्बन्धोऽवतिष्ठत इति स एव मुख्यः। ज्ञानस्यैव च परस्परसङ्क्रान्तिर्व्यवहार इति शब्देन स्वरूपाध्यस्तं ज्ञानमपि प्रतिपाद्यते परत्रेति तदपि तस्याभिधयैव प्रतिपाद्यमुपपद्यते। घटमानयेति नियुक्तो घटानयनेऽहमनेन प्रेषित इति शब्दपूर्वकमेव प्रतिपाद्यते। तदाह वार्तिककारः—

'न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययः'। इति।

तदेवं शब्दनात्मकेन व्यापारेण परवागात्मनो व्यवहारे प्रवृत्ते प्रकाशस्य तज्जीवितत्वादेकशब्दनानुप्रवेशाच्छब्दार्थयोः सामानाधिकरण्यादभेदाध्यासाख्यसम्बन्धविषयता सिद्धा। अविभागदशायां तु पश्यन्त्यभिधानायां वाच्यवाचकभेदानुल्लासान्नाध्यासचिन्ता काचित्। इत्थं च कृत्वा शब्दैकजीवितत्वाद् व्यवहारेऽप्यर्थस्य

---

चावस्थितेरुपपत्तये स्वरूपार्थयोः शब्दस्य संकेतोपपत्तेः। शब्दार्थयोः सम्भेदादेव च श्रोत्रा स्वकल्पनानुसारेण शब्दप्रयोगहेतुभूतस्य वक्तृज्ञानस्यानुमानात्। शब्दस्वरूपे तादात्म्येनाध्यस्तमर्थं स्वयमवबुध्य तथैव = शब्दस्वरूपाध्यस्तत्वेनैव अर्थज्ञानस्य वक्तृगतस्यानुमानमुचितमित्यभेदेनैव घटशब्दाध्यस्तं प्रयोक्तृज्ञानमनुमीयते। तथा च वक्तृगतं ज्ञानमपि स्वरूपेऽध्यस्ततयैव शब्दः प्रतिपादयति इति ज्ञानेऽपि परमार्थदृशाऽध्यास एव = अध्यस्यमानं तादात्म्यमेव सम्बन्धः। तदेवं लोलीभूतानि परस्पराध्यस्तानि शब्दार्थज्ञानानि घट इत्येवमवगम्यन्ते। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति॥
(वा० का० १।१२३)

शब्दार्थप्रत्ययानामितरेतराध्यासादेव गौरित्यत्र कः शब्द इति प्रश्नः। अन्यथा सन्देहानवतारे प्रश्नानवतारात्। तदहर्जातस्य बालस्याऽपि अयमस्त्येव अर्थे शब्दाभेदप्रत्ययोऽध्यासरूपः। बालेन गृह्यमाणस्य तत्तदर्थे तत्तच्छब्दसंकेतस्यानुकूलत्वात्। एवञ्च कृत्वा तात्पर्यदृष्ट्याऽध्यस्यमानं तादात्म्यमेव योग्यतायां कार्यकारणभावे च = शब्दस्यार्थावबोधयोग्यतायां तस्य तेन सह कार्यकारणभावे च, नियामकः तयोर्द्वयोरपि मूलभूतः सम्बन्धोऽवतिष्ठत इति स एव शब्दार्थयोः मुख्यः सम्बन्धः। ज्ञानस्यापि च शब्दे परस्परसंक्रान्तिः = परस्पराध्यासः व्यवहार इति शब्देन स्वरूपाध्यस्तं वक्तृज्ञानमपि प्रतिपाद्यते परत्र = श्रोतरि इति, तदपि = वक्तृज्ञानमपि, शब्दस्यार्थवदभिधयैव प्रतिपाद्यमुपपद्यते। 'घटमानय' इति नियुक्तो हि घटानयने अहमनेन प्रेरित इति शब्दपूर्वकमेव

तदवियोगात् तद्विवर्तरूपं विश्वं सिद्धमित्यास्तामेतत्, पूर्वमेव सप्रपंचमस्यार्थस्य निरूपितत्वात् ।

तत्रान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वरूपं मुख्यमभिधेयम् । तत्र हि सङ्केतानपेक्षा शब्दस्य वृत्तिः । तच्च जात्यादिपक्षभेदेन ब्रह्मकाण्डे निरूपितम् । अभिधानाभिधेयनिमित्तभेदाच्च भिन्नरूपमिति स्वरूपेषु इत्याह । तथा हि कारणसन्निवेशि वाचकम्, स्वरूपमर्थपक्षनिक्षिप्तं बाह्याभेदेन सङ्केत्यमानं वाच्यम्, सम्बन्धसंवेदनसमयानुभूतमभिन्नश्रुतिविषयनियामकत्वादर्थे प्रवृत्तिनिमित्तमिति त्रितयं सर्वत्राव्यभिचारि । व्यवहाराभ्यासाच्छ्रुतिसाम्याच्च नैतत्त्रितयं विवेकेनावधार्यते । श्रुत्यविशेषाच्च तत्स्वरूपमिति व्यवह्रियते, न तु सर्वथैवाविभेदात् । अप्रवृत्तसङ्केतस्य अर्थे तद्विषये ज्ञाने सन्देहो जायते, न तु श्रुते स्वरूपे, अर्थापरिज्ञानाच्च किमयं वेद वक्तेत्ययमपि वक्तृज्ञानविषयः सन्देहो जायत एवाप्रवृत्तसङ्केतस्याप्यक्षादिसामान्यशब्दादेव चाक्षादौ सन्देहो न तु स्वरूप इति सिद्धम् ॥ २ ॥

सम्बन्धः समवस्थितः स्वभावत एव निरूढः, न तु सामयिक इत्युक्तम् । तस्य सद्भावे लिङ्गमाह—

---

प्रतिपद्यते । शब्दपूर्वकत्वञ्चार्थप्रत्ययस्य शब्देऽर्थप्रत्यययोरध्यासादेवोपपद्यते । अन्यथा सर्वेभ्यः शब्देभ्योऽविशेषात् सर्वार्थप्रत्ययजन्मप्रसङ्गात् । तदाह वार्तिककारः—'न वा शब्दपूर्वो ह्यर्थे सम्प्रत्ययः इति ।"

तदेवं ध्वनिरूपोपाधिसम्पर्कात् परवागात्मनः स्फोटस्य शब्दनात्मकेन व्यापारेण व्यवहारे प्रवृत्ते प्रकाशस्य तज्जीवितत्वात् = व्यवहारप्राणत्वात् प्रकाशविषयत्वेन शब्दार्थयोः एकशब्दनाख्यव्यापारसम्बन्धात् सामानाधिकरण्याच्चाभेदाध्यासाख्यसम्बन्धविषयतोभयोः सिद्धा। अविभागदशायान्तु पश्यन्त्यभिधानायां वाच्यवाचकभेदानुल्लासान्नाध्यासचिन्ता काचित् । प्रागुक्तरीत्या एकस्य परामर्शस्य परवागात्मनो वाच्यवाचकभेदोपपत्तये एव अध्यासचिन्ताया आवश्यकत्वात् । एवञ्च कृत्वा व्यवहारेऽपि अर्थस्य शब्दमात्रजीवितत्वात्, तस्य सदा शब्दावियोगात् शब्दविवर्त्तरूपमिदमर्थात्मकं विश्वं सिद्धम् । इदञ्च पूर्वमेव सर्वं सप्रपञ्चं निरूपितमित्यास्तामेतत् ।

तत्रार्थशब्दस्वरूपयोरुभयोः शब्दाभिधेयकत्वेऽपि अर्थापेक्षया स्वरूपस्यान्तरङ्गत्वात् अहेयत्वाद् = अव्यभिचारित्वाद् असाधारणत्वाच्च शब्दस्वरूपं मुख्यमभिधेयम् । अर्थो हि पर्यायान्तरेणाप्यभिधानान्नासाधारणः । स्वरूपन्तु पर्यायान्तरावृत्तित्वादसाधारणम् । अत एव शब्दस्वरूपे संकेतानपेक्षा शब्दस्य वृत्तिः । तच्च शब्दस्वरूपं जातिव्यक्तिसखण्डाखण्डपक्षभेदेन ब्रह्मकाण्डे बहुधा निरूपितमिति पुनरुक्तिभिया ततो विरम्यते ।

तच्च स्वरूपमभिधानाभिधेयनिमित्तभेदाच्च भिन्नरूपम् । तथा हि—अग्नेर्ढगिति सूत्रघटकमग्निशब्दस्वरूपमभिधानमेव । 'आग्नेय' इति प्रयोगघटकन्तु अभिधेयमेव ।

**अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते ।**
**योगः शब्दार्थयोस्तत्त्वमित्यतो व्यपदिश्यते ॥३॥**

**अस्यार्थस्यायं शब्दो वाचकोऽस्य शब्दस्यायमर्थो वाच्य इति षष्ठ्यन्यथानुपपत्त्यास्त्येव स्वाभाविकः शब्दार्थयोर्योग इत्यवसीयते । असम्बद्धानां घटपटादीनामेवमन्योन्यपारतन्त्र्येण व्यवहारायोगात् । अत एव च स्वाभाविकात् सम्बन्धाच्छब्दार्थयोस्तत्त्वं गौरयमर्थ इत्यभेदेन व्यवह्रियत इत्यर्थः । यदि वा अतः षष्ठ्याः सकाशात्तत्त्वं स्वरूपं सम्बन्धस्योच्यते ॥३॥**

**ननु षष्ठी सम्बन्धस्य कार्यम्, स्वरूपनिवेशि तु लक्षणमुच्यतामित्याशङ्क्याह—**

---

हर्यादिरूपनानार्थकशब्दस्वरूपन्तु प्रवृत्तिनिमित्तभेदाद् भिन्नरूपमिति प्रकृतकारिकायां स्वरूपेषु इति बहुवचनमाह कारिकाकृत् ।

वाच्यवाचकप्रवृत्तिनिमित्तभेदादपि शब्दस्वरूपं भिन्नमिति अन्यथाऽपि वक्तुं शक्यते । तथा हि—अर्थसम्प्रत्ययकारणकोटिनिविष्टं शब्दस्वरूपं वाचकम्, अर्थपक्षनिक्षिप्तं बाह्यार्थाभेदेनाभिधीयमानं वाच्यमिति अध्यासरूपदार्थसम्बन्धसंवेदनसमयेऽनुभूतमभिन्नहर्यादिपदरूपश्रुतिविषयानेकार्थानामनुगतत्वेन नियामकत्वाद् = व्यावर्त्तकत्वाद्, अर्थे प्रवृत्तिनिमित्तमित्येवं शब्दस्वरूपभेदः । एतच्च त्रितयं सर्वेषु स्वरूपेषु अव्यभिचारि । परस्परं विविक्तमपि । एवमेतत् त्रितयं व्यवहाराभ्यासात् श्रवणसाम्याच्च न विवेकेनावधार्यते । श्रवणाविशेषाच्च तत् त्रितयमपि स्वरूपमिति व्यवह्रियते, न तु सर्वथैवाभेदात् । अगृहीतसंकेतस्य अर्थे तद्विषयके ज्ञाने च सन्देहो जायते, न तु श्रुते स्वरूपे । अतोऽर्थे तद्विषयके ज्ञाने च संकेतसापेक्षाशब्दस्य वृत्तिर्न तु तथा शब्दस्वरूपे । संकेताग्रहे अर्थापरिज्ञानाच्च किमयं वेदवक्ता इत्ययमपि वक्तृज्ञानविषयः सन्देहो जायत एव । अगृहीतसंकेतस्यापि अक्षादिनानार्थसाधारणशब्दादेव चाक्षादावर्थे एव सन्देहो जायते, न तु शब्दस्वरूप इति स्वरूपस्य मुख्यमभिधेयत्वं च सिद्धम् इति ॥२॥

सम्बन्धः समवस्थित इति प्रथमकारिकायाश्चतुर्थपादे उक्तम् । स्वभावत एव लोके निरूढोऽनादिः, न तु कस्यचित् पुंसः समयकृतः सादिरिति तदर्थः । तस्य शब्दार्थयोः सम्बन्धस्य सद्भावे लिङ्गमाह—अस्यायं वाचक इति ।

अयमर्थः—अस्यार्थस्यायं शब्दो वाचकः, अस्य शब्दस्यायमर्थो वाच्य इत्यत्र शेषे षष्ठ्या सम्बन्धार्थिकया शब्दार्थयोर्योगो वाच्यवाचकभावलक्षणस्तन्मूलभूतश्चाध्यासिकतादात्म्यलक्षणः प्रतीयते । इत्यतः शब्दार्थयोस्तत्त्वमभेदो 'गौरयमर्थं' इत्यादौ व्यपदिश्यते = व्यवह्रियते । यद्वा, अतः षष्ठ्याः सकाशात्तत्त्वं स्वरूपं सम्बन्धस्योच्यत इति ।

अयं भावः—अस्यार्थस्यायं शब्दो वाचकः, अस्य शब्दस्यायमर्थो वाच्य इत्यनादिना पौरुषसमयानपेक्षेण लोकव्यवहारेणानादिः स्वाभाविकः शब्दार्थयोर्योग इत्यवसीयते ।

**नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम् ।**
**अत्यन्तपरतन्त्रत्वाद् रूपम् नास्यापदिश्यते ।।४।।**

**इह पदार्थानां स्वरूपमवधार्य तदनुगामिशब्दनिवेशेन** लक्षणं **क्रियते। तत्र** स्वेन **असाधारणेन** धर्मेण **स्वभावेनोपलक्षितस्य** वाचकं **प्रत्यायकम्,** अभिधानं **षष्ठी-व्यतिरिक्तं नास्ति, इदंतया स्वरूपानवधारणात्। गुणा द्रव्याधीना अपि प्राधान्येन शुक्लादिशब्देन कदाचिदुच्यन्ते नैवं सम्बन्ध इति** अत्यन्त**ग्रहणम्। नित्यपरतन्त्रो हि सम्बन्धः परोपाधिस्वरूपः सम्बन्धिनोः परस्परौन्मुख्यस्वभावो धर्ममात्रलक्षणः। ततो निष्कृष्य सम्बन्धशब्देन स्वप्रधानः सम्बन्धिरूपतयाभिधीयमानो न साक्षात् स्प्रष्टुं शक्यत इत्यसंविज्ञानपदः कार्यैकगम्यः ॥ ४ ॥**

**तदाह—**

---

अन्यथाऽत्र षष्ठ्येव नोपपद्येतेति। असम्बद्धानां घटपटादीनामेवं परस्परं पारतन्त्र्येण व्यवहारायोगात्। अत एव च स्वाभाविकात् सम्बन्धात् आध्यासिकतादात्म्यलक्षणात् वाच्यवाचकभावरूपसम्बन्धमूलभूतात् शब्दार्थयोस्तत्त्वं स्वरूपं 'गौरयमर्थ' इत्यभेदेन व्यवह्रियत इत्यर्थः। यद्वा, अतः षष्ठ्याः सकाशात्तत्वं शब्दार्थयोः सम्बन्धस्य स्वरूप-मुच्यत इति ॥३॥

ननु षष्ठी सम्बन्धस्य तदभिधेयस्य कार्यम्। एवञ्च षष्ठीनिमित्तत्वं सम्बन्धलक्षण-मायाति। षष्ठी च न सम्बन्धासाधारणधर्म इति न तल्लक्षणम्; किन्तु उपलक्षणम् इति। सम्बन्धस्वरूपनिविष्टं किञ्चिल्लक्षणमुच्यतामित्याशङ्क्याह—नाभिधानं स्वधर्मेण इति।

अयमर्थः—अभिधानम् = षष्ठीव्यतिरिक्तः कोऽपि शब्दः स्वधर्मेण = स्वस्य सम्बन्धस्यासाधारणधर्मं प्रवृत्तिनिमित्तीकृत्य, सम्बन्धस्य वाचकं नास्ति। अत्रोत्तरार्धं हेतुः। यतोऽस्य सम्बन्धस्य स्वप्रधानं रूपं केनचिदपि शब्देन क्वचिदपि शुक्लादिवदपि नापदिश्यते = न व्यवह्रियते। तत्र हेतुः—अत्यन्तपरतन्त्रत्वादिति। सदा सम्बन्धिद्वय-पराधीनत्वेनैव षष्ठ्या निर्देशादिति सदैवास्य धर्मरूपत्वेनैव निर्देशान्नास्यासाधारणधर्म-रूपं लक्षणं केनचिदपि शब्देन निर्देष्टुं विज्ञातुं वा शक्यत इति।

अयं भावः—इह पदार्थानां स्वरूपं यदा प्राक् स्वप्रधानतया स्वशब्देनावध्रियते, तदा तदनुगतशब्दनिवेशे न तस्य तदसाधारणधर्मरूपं लक्षणं क्रियते। तत्र सम्बन्धस्य स्वेनासाधारणेन धर्मेण स्वभावभूतेनोपलक्षितस्य प्रत्यायकं षष्ठीव्यतिरिक्तमभिधानं नास्ति। सम्बन्धस्य सदा सम्बन्धिद्वयपरतन्त्रत्वेन सदा धर्मरूपस्य स्वप्रधानतया क्वचिदप्यनिर्देशेन इदन्तया स्वासाधारणधर्मपुरस्कारेण स्वरूपानवधारणात्। गुणा हि शुक्लादयो द्रव्याधीना अपि कदाचित् शुक्लादिशब्देन प्राधान्येनोच्यन्ते। शुक्लं रूपमिति।

सम्बन्धस्तु नैवम्—तस्य सदा सम्बधिपरतन्त्रत्वात् इति बोधयितुमत्यन्तग्रहणम्। नित्यं सम्बन्धिद्वयपरतन्त्रो हि सम्बन्धः परोपाधिस्वरूपः = द्विष्ठत्वेन परधर्मभूतस्वरूपः,

**उपकारात् स यत्रास्ति धर्मस्तत्रानुगम्यते ।**
**शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ॥ ५ ॥**

**उपकार्योपकारकयोरुपकारप्रभावितः सम्बन्धोऽसम्बद्धानामुपकाराभावात् । धर्म इति नित्यपारतन्त्र्यमाह । धर्मित्वे स्वातन्त्र्यात् सम्बन्धान्तरप्राप्तेरनवस्थापातात् । न च शक्तिरेव सम्बन्धः, शक्तीनामप्याधारपारतन्त्र्ये नियतकार्यजनने च सम्बन्ध एव नियामको यतः, गुणानामपि च द्रव्याश्रितत्वावस्थापकः सम्बन्ध एवेति परतन्त्राणामप्युपकारकत्वात् सर्वत्रानुमीयमानस्वरूपो नित्यपरतन्त्रः ॥ ५ ॥**

**ननूक्त एव संयोगसमवायलक्षणः सम्बन्धः परैरिति कोऽतिशयस्तत्प्रतिपादन इत्याशङ्क्याह—**

---

सम्बन्धिनोः परस्परौन्मुख्यस्वभावः = परस्परापेक्षानुकूलस्वरूपः, धर्ममात्रस्वभावः । सम्बन्धिद्वयात् पृथक् अपकृष्य सम्बन्धशब्देन केवलेन स्वप्रधानः कस्यचिदसाधारणधर्मस्य सम्बन्धिरूपतयाऽभिधीयमानो न साक्षात् स्प्रष्टुम् = अवबोद्धुं शक्यते, अनयोरयं सम्बन्ध इति, अतः सम्बन्धोऽसंविज्ञानपदः = पदेन संविज्ञातुमशक्यः, अतः षष्ठी रूपकार्यमात्रानुमेयः । पदेन संविज्ञातुमशक्यत्वादेव तस्यासाधारणधर्मरूपं लक्षणं न वक्तुं शक्यत इति ॥ ४ ॥

पूर्वकारिकोक्तमेवार्थमग्रिमकारिकयोपपादयिष्यन्नाह—उपकारात् स यत्रास्ति इति ।

अयमर्थः—स सम्बन्धो यत्रास्ति तत्रोपकारादस्ति । सम्बन्धिनोः परस्परमुपकार्योपकारकभावादस्ति । अतस्तत्र सर्वत्रैव स सम्बन्धो धर्मोऽनुगम्यते = धर्मरूपतया सम्बन्धिद्वयानुगतत्वेन च ज्ञायते । न तु धर्मिरूपतया स्वप्राधान्येन । अतो न तस्य कश्चनासाधारणो धर्मो लक्षणत्वेन निर्देष्टुं शक्यते प्रवृत्तिनिमित्तभूतः । तेन रूपेण सम्बन्धस्याज्ञायमानत्वात् ।

ननु तत्तद्भावगता शक्तिरेव सम्बन्धोऽस्तु इति चेत्तत्राह—शक्तीनामपि सा शक्तिरिति । सा = सम्बन्ध एव, शक्तीनामपि आधारपराधीनत्वे नियतकार्यजनने च शक्तिः = नियामकः, अतो न तस्य शक्तित्वम् । अनवस्थाभिया शक्तीनां शक्तिनियामकत्वाभावात् । द्वितीयशक्तिपदस्यार्थानुगुण्येन नियामके लक्षणा । सा इति शक्तिरूपस्य विधेयस्य लिङ्गमाश्रित्य पुंसोऽपि स्त्रीत्वेन निर्देशः । तदाहुः शिष्टाः—"उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् भवति" इति । प्रतिनिर्देश्यमत्र विधेयमुच्यते । असौ सम्बन्ध एव गुणानामपि गुणः, तत्तद्द्रव्याश्रितत्वव्यवस्थापकः । द्वितीयगुणपदस्य लक्षणयाऽर्थान्वयानुगुण्येनायमर्थः । अतो नायं गुणरूपोऽपि । गुणानां गुणनियामकत्वस्वाभाव्याभावादिति ।

अयं भावः—द्वयोः सम्बन्धिनोः परस्परमुपकार्योपकारकभावापन्नयोरुपकारानुमेयः

**तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः ।**
**तयोरप्युपकारार्था नियतास्तदुपाधयः ॥ ६ ॥**

**पारतन्त्र्यं सम्बन्धलक्षणमिति संयोगसमवाययोर्द्रव्यगुणादिषु तत्त्वात् सम्बन्धशब्दप्रवृत्तिः। तस्य सम्बन्धस्येव धर्मः पारतन्त्र्यलक्षणो ययोस्तौ तद्धर्माणौ। स्वरूपमात्रेण हि तौ सम्बन्धमनुकुरुतः। तथा च तस्य सम्बन्धस्येव शब्दस्तयोः, गौणः सम्बन्धशब्दः संयोगसमवाययोः, न तु मुख्यतस्तावेव सम्बन्धः।**

**तथा हि—यदा स्वतन्त्रपदार्थान्तरवत् तयोरपि स्वगतोपाधिविवक्षा तदा तदुपक्रियमाणत्वात् स्वातन्त्र्ये सति पारतन्त्र्याभावात् स्वतन्त्रपदार्थवत् सम्बन्धरूपताहानिः।** उपकारार्थाः **उपकारप्रयोजनाः ।** नियता **असाधारणाः ।** तदुपाधय **इति । सम्बन्धस्य उपाधिर्येषाम्, असम्बन्धानामनियामकत्वात्। इत्थं चोपाधिमन्तौ स्वतन्त्रौ यौ, ययोश्चोपाध्यवच्छेदे सम्बन्ध उपयोगी तौ संयोगसमवायौ कथमुपाधिरूपेण परतन्त्रेण सम्बन्धेनैकात्म्यं भजेतामिति स्वाश्रये सम्बन्धिप्रतीतिहेतुत्वात् सम्बन्धसधर्माणौ तौ ॥६॥**

**तत्र संयोगस्य तावदुपाधयः।**

---

खलु सम्बन्धः। परस्परमसम्बद्धानामुपकाराभावात्। अत्र धर्मं इत्युक्त्या सम्बन्धस्य सदा सम्बन्धिपराधीनत्वं व्यनक्ति। ध्रियमाणस्यैव धर्मत्वदर्शनात्। धर्मित्वे तु तस्य प्राधान्यात्, तत्र कस्यचित् धर्मान्तरस्य सम्बन्धान्तरप्राप्तेरनवस्थापातात्। तत्तद्भावानां प्रसिद्धाशक्तिरेव सम्बन्ध इति तु न। शक्तीनामपि आधारपराधीनत्वे नियतकार्यजनने च सम्बन्धस्यैव नियामकत्वात्। सम्बन्ध एव च गुणानामपि द्रव्याश्रितत्वव्यवस्थापक इति नासौ गुणरूपोऽपि। एवं शक्तिगुणादीनां सर्वेषां परतन्त्राणामपि उपकारकत्वात्। उपकारेण सर्वत्रानुमीयमानस्वरूपसत्त्वः सम्बन्धो नित्यं परतन्त्र एवेति ॥ ५ ॥

ननूक्त एव भावानां परस्परमुपकार्योपकारकभावनियामकः संयोगसमवायस्वभावः सम्बन्धो नैयायिकादिभिरिति कोऽत्र विशेषस्तत्प्रतिपादने इत्याशङ्क्याह—तद्धर्मणोस्तु ताच्छब्द्यमिति।

अयमर्थः—तद्धर्मणोः = तस्य सम्बन्धस्येव धर्मः पारतन्त्र्यरूपो ययोस्तौ तद्धर्माणौ, तयोस्तु संयोगसमवाययोस्ताच्छब्द्यम्। तस्य सम्बन्धस्येव शब्दो ययोस्तौ तच्छब्दौ तयोर्भावस्ताच्छब्द्यम्। नित्यं परतन्त्रे षष्ठ्यादिवाच्ये सम्बन्धशब्दो मुख्यः संयोगसमवाययोस्तु परतन्त्रत्वरूपधर्मसाम्येन गौणः स इति भावः। यतस्तयोरपि = संयोगसमवाययोरपि स्वतन्त्रपदार्थवत्स्वगतोपाधिविवक्षायां व्यवच्छेदरूपोपकारार्थाः नियताः = असाधारणाः, तदुपाधयः = तयोः संयोगसमवाययोरुपाधयः संयोगत्वसमवायत्वरूपाः, तत्सम्बन्धरूपा वा इति। तथा च षष्ठ्यादिवाच्यः सम्बन्धो नित्यं परतन्त्रः, संयोगसमवायौ तु घटपटादिरूपस्वतन्त्रपदार्थवत् कदाचित् स्वगतोपाधिविवक्षायां स्वतन्त्रावपीति नित्यं परतन्त्रत्वाभावान्न मुख्यया वृत्त्या सम्बन्धपदाभिधेयौ इत्यायातम् इति।

**काचिदेव हि सावस्था कार्यप्रसवसूचिता ।**
**कस्यचित् केनचिद् यस्यां संयोग उपजायते ॥ ७ ॥**

**परस्परसंयोगेनावयवानामुपसर्पणप्रत्ययाहितेनावयविद्रव्यं जायत इत्यसमवायिकारणं संयोगोऽवयव्यन्यथानुपपत्त्यावसीयते। तथा च द्रव्यैकनियतत्वं गुणत्वेन सत्तासम्बन्धः संयोगस्योपाधिरिति तत्रोपकारः सम्बन्धेन तस्यावच्छिद्यते।**

---

अयं भावः—पारतन्त्र्यं सम्बन्धधर्म इति संयोगसमवाययोर्द्रव्यगुणादिषु पारतन्त्र्यसत्त्वाद् गौण्या वृत्त्या तत्र सम्बन्धशब्दप्रवृत्तिः। तस्य सम्बन्धस्येव धर्मः पारतन्त्र्यलक्षणो ययोः तौ तद्धर्माणौ स्वरूपमात्रेण हि=स्वस्य सम्बन्धस्य रूपं पारतन्त्र्यलक्षणः साधारणो धर्मस्तेनैव केवलेन हि तौ=संयोगसमवायौ सम्बन्धमनुकुरुतः, न तु नित्यपारतन्त्र्यलक्षणेनासाधारणेन धर्मेण, तथा च तस्य सम्बन्धस्येव शब्दस्तयोः संयोगसमवाययोः सम्बन्धशब्दो गौण इति यावत्। न तु वस्तुगत्या संयोगसमवायावेव सम्बन्धः।

तथाहि—यदा स्वतन्त्रपदार्थघटादिवत् स्वगतोपाधिविवक्षया तयोरपि संयोगः समवाय इति प्रयोगस्तदा ताभ्यामुपाधिभ्यां तयोर्व्यवच्छेदरूपोपकार्यस्य क्रियमाणत्वात् तयोः स्वातन्त्र्ये सति पारतन्त्र्याभावाद् घटादिरूपस्वतन्त्रपदार्थवत् तयोः सम्बन्धरूपताहानिः। कारिकायामुपकारार्था इत्यस्य उपकारप्रयोजना इत्यर्थः। नियता इत्यस्यासाधारणा इति। अव्यभिचरितस्वरूपस्य नियतत्वस्यासाधारणत्वसमनियतत्वात्। तदुपाधय इत्यनेन सम्बन्धस्य प्रतियोगी उपाधिरेषां संयोगसमवायादीनामिति लभ्यते, सम्बन्धरहितानामनियामकत्वात्। विग्रहस्तु तयोरुपाधय इत्येव। इत्थं चोपाधिमन्तौ, अत एव स्वतन्त्रौ धर्मिभूतौ यौ, ययोश्चोपाधिकृतावच्छेदे सम्बन्ध उपयोगो, असम्बद्धानामनवच्छेदकत्वात्। तौ संयोगसमवायौ कथमुपाधिरूपेण परतन्त्रेण सम्बन्धेन तादात्म्यं भजेतामिति संयोगसमवायौ स्वाश्रये स्वप्रतियोगिभूतस्वसम्बन्धिप्रतीतिहेतुत्वात् सम्बन्धसदृशौ, न तु सम्बन्धाविति ॥६॥

तत्र संयोगसमवाययोर्मध्ये संयोगस्य द्रव्यमात्रवृत्तित्वादल्पाश्रयत्वेन सूचीकटाहन्यायेन संयोगस्यैव प्रथममुपाधय उच्यन्ते। काचिदेव हि सावस्था इति।

अयमर्थः—परस्परमुपसृप्तेभ्योऽवयवेभ्यः कार्यमुपजायते, न त्वनुपसृप्तेभ्यो विभागेनावस्थितेभ्य इति कार्यप्रसवानुमिता काचिदेव हि प्रसिद्धा सावस्था=अवयवानामुपसर्पणावस्था, नतु सर्वा अवस्थाः। यस्यामवस्थायां कस्यचिदवयवस्य केनचिदवयवेन सह कार्यासमवायिकारणभूतः संयोग उपजायते, न त्ववयवानां सर्वासु अवस्थासु। अत एवाहुः शास्त्रविदः—द्रव्ययोरेव संयोग इति। तथा च द्रव्यमात्रवृत्तित्वम्, गुणत्वम्, गुणत्वेन सत्तासम्बन्धश्च संयोगस्योपाधय इति तत्रोपाधिकृतः संयोगस्य व्यवच्छेदरूप उपकार उपाधिप्रतियोगिकेन सम्बन्धेन सामानाधिकरण्याद् व्यवच्छिद्यत इत्येवं संयोगस्य

**यत्परतन्त्रश्च संयोगस्तेनोपाधिना सम्बन्धानुगृहीतेनावच्छिद्यत इति पारतन्त्र्यं नाम सम्बन्धसामान्यरूपमस्यान्वयि, न तु तदेकजीवितं पारतन्त्र्यम्। अस्य गुणकर्मसामान्यादावपि भावादस्य च द्रव्यैकनियतत्वात्। किञ्च संयोगस्य गुणत्वात् सम्बन्धो गुणत्वसंयोगत्वसम्बन्धश्च न पदार्थसम्बन्धस्य सर्वपदार्थोपकारकस्य तद्योगो द्रव्यगुणकर्मभ्योऽन्यत्वात्। वस्तुभूतकार्यकारित्वं च संयोगस्य, योजनामात्रहेतुस्तु संबन्ध इति भेदः ॥ ७ ॥**

**समवायादपि संबन्धस्य भेदं नियतोपाधिनियमितसमवायस्वरूपानुवादेनाह-**

---

उपाधितत्सम्बन्धपरतन्त्रत्वाद् गौणं सम्बन्धत्वम्, न तु मुख्यम्, नित्यं परतन्त्रत्वाभावादिति।

अयं भावः—अवयवानां परस्परं प्रति यदुपसर्पणं तद्रूपकारणजनितेन परस्परसंयोगेनावयविद्रव्यं घटादिरूपं जायते इत्यवयविद्रव्यजन्मनोऽन्यथाऽनुपपत्तिरूपयार्थापत्त्या द्रव्यासमवायिकारणत्वेन संयोगः कल्प्यते। तथा च द्रव्यमात्रवृत्तित्वं गुणत्वम्, गुणत्वेन सत्तासम्बन्धश्च संयोगस्योपाधिरिति संयोगे प्रागुक्तोपाधिकृत उपकार इतरव्यवच्छेदरूप उपाधिसम्बन्धेनावच्छिद्यते = इतरोपकाराद् व्यावर्त्यते, उपाधिसम्बन्धं विना उपाधेरुपकारासामर्थ्यात्। यत्परतन्त्रश्च = यस्योपाधेः परतन्त्रस्तु संयोगः स्वप्रतियोगिकसंयोगानुयोगिकसम्बन्धान्तरानुगृहीतेन = तादृशसम्बन्धान्तरसहकृतेन तेनोपाधिना संयोगोऽवच्छिद्यते = व्यावर्तत इति पारतन्त्र्यनामकं सम्बन्धस्य संयोगादिसाधारणं रूपं संयोगेऽनुगतम्, न तु सम्बन्धैकजीवितम् = सम्बन्धस्यासाधारणं रूपं नित्यपारतन्त्र्यं संयोगेऽनुगतम्। अतः संयोगो न सम्बन्धः; किन्तु सम्बन्ध इवेति सम्बन्धत्वेन कैश्चिद् व्यवह्रियते।

किञ्च सम्बन्धस्य गुणकर्मसामान्यादावपि सत्त्वात् संयोगस्य च द्रव्यैकनियतत्वात् = द्रव्यमात्रवृत्तित्वाद्, न सम्बन्धत्वम्। किञ्च संयोगस्य गुणत्वात् तत्प्रतियोगिकस्तस्य द्रव्ये सम्बन्धः गुणत्वसंयोगत्वप्रतियोगिकश्च संयोगे सम्बन्ध इत्यतोऽपि = सम्बन्धान्तरसम्बन्धित्वादपि न संयोगस्य सम्बन्धत्वम्। किञ्च पदार्थसम्बन्धस्य प्रतियोग्यनुयोग्यन्यतररूपसर्वपदार्थोपकारकस्य न तद्योगः = न सम्बन्धान्तरसम्बन्धः, अनवस्थापातात्। द्रव्यगुणकर्मभ्योऽन्यत्वाच्च। द्रव्यगुणकर्मणां हि सम्बन्धोऽनुभूयते, न तु सम्बन्धस्येति। किञ्च वस्तुभूतकार्यकारित्वम् = सिद्धस्वरूपं यत्कार्यं घटपटादिकं तत्कारित्वम् संयोगस्य धर्मः, द्रव्यासमवायिकारणत्वात्। सम्बन्धस्य तु न तादृशकार्यकारित्वम्, अपितु योजनामात्रहेतुत्वम्, योजना च साध्यस्वरूपा, नतु सिद्धरूपेति संयोगसम्बन्धयोर्भेद इति ॥ ७ ॥

नियतोपाधिनियमितम् = नियतोऽसाधारणो यः समवायस्य उपाधिरयुतसिद्धत्वरूपस्तन्नियमितम् समवायस्य स्वरूपमनुवदन् समवायादपि सम्बन्धस्य भेदं कलापकेनाह—निरात्मकानामति ...

निरात्मकानामुत्पत्तौ नियमः क्वचिदेव यः ।
तेनैवाव्यपवर्गश्च प्राप्त्यभेदे स (च) यत्कृतः ॥ ८ ॥
आत्मान्तरस्य येनात्मा तदात्मेवावधार्यते ।
यतश्चैकस्य नानात्वं तत्त्वं नाध्यवसीयते ॥ ९ ॥
तां शक्तिं समवायाख्यां शक्तीनामुपकारिणीम् ।
भेदाभेदावतिक्रान्तामन्यथैव व्यवस्थिताम् ॥ १० ॥
धर्मं सर्वपदार्थानामतीतः सर्वलक्षण ।
अनुगृह्णाति संबन्ध इति पूर्वेभ्य आगमः ॥ ११ ॥

सत्यकार्यवादे कारणमेव कार्यं भवतीति प्रतिनियतैः शब्दे (साधनैः) स्तज्जन्यत इति तत्रैव तदुपलम्भो युक्तः। असत्कार्यनये तु नियतेष्वेव कारणेषु कार्यम्, तन्तुष्वेव पटः, कपालेष्वेव घट इत्यादिबुद्धिहेतुः समवायोऽभ्युपगतः। सत्यपि च भेदे कार्यकारणयोः

---

अयमर्थः—असत्कार्यनये स्वोत्पत्तेः प्राक् निरात्मकानां=असतां घटपटादिभावानां क्वचिदेव=तन्तुकपालादिष्वेव स्वस्वकारणेषु उत्पत्तौ=उत्पत्तिविषयको यो नियमः। प्राप्त्यभेदे च=प्राप्तेः सम्बन्धरूपतायाः समवायगतायाः संयोगेन सहाविशेषेऽपि, तेनैव=नियतेन स्वकारणेनैव कार्यस्य अव्यपवर्गश्च देशकालभेदेऽपि अवियोगश्च यत्कृतः=यत्प्रयुक्तः। आत्मान्तरस्य=कारणापेक्षया अन्यस्य भावस्य कार्यरूपस्यात्मा=स्वरूपम् येन समवायेन हेतुना तदात्मेव=कारणतादात्म्यापन्नमिवावधार्यते। यतश्च समवायरूपात् कारणात् एकस्य समवायिकारणादभिन्नस्य कार्यस्य, नानात्वम्=भेदः, अध्यवसीयते=निश्चीयते, तत्त्वम्=कारणादभेदो नाध्यवसीयते। तां समवायाख्यां स्वाश्रयगतानां शक्तीनां कार्यजनने उपकारिणीम्=सहायभूताम्, भेदाभेदावतिक्रान्ताम्=स्वाश्रयेण सहभेदाभेदाभ्यामनिर्वाच्याम्, अतएवान्यथैव व्यवस्थिताम्=परमार्थपदार्थवैलक्षण्येनानिर्वाच्यतया व्यवस्थितां शक्तिम्, सर्वेषां पदार्थानां धर्मं स्वातन्त्र्यं विभक्तिवाच्यतादशायामतीतः। प्रातिपदिकवाच्यत्वे तु सर्वलक्षणः=सर्वपदार्थलक्षणयुक्तः, सम्बन्धोऽनुगृह्णाति इत्येवं पूर्वेभ्य आचार्येभ्य एतस्य पूर्वोक्तस्य सर्वस्य पदार्थस्य आगमः प्राप्तिरिति। अत्र कलापके प्रथमपद्यस्योत्तरार्धे 'प्राप्त्यभेदे स' इति पाठो न युक्तः। प्रकृतवाक्यार्थाननुगुणत्वात्। प्राप्त्यभेदे च इति पाठो युक्तः, तदनुगुणत्वात्। अत्र चकारोऽप्यर्थक इति।

अयंभावः—सत्कार्यवादेऽन्याकारेणावस्थितं कारणमेवान्याकारमापन्नं कार्यं भवति। यथा पिण्डाद्यात्मनाऽवस्थिता मृदेव कम्बुग्रीवाद्याकारमाप्ता घटो भवति। आतानवितानवन्तस्तन्तव एव पटो भवति, इत्येवं प्रतिनियतैः साधनैः कार्यमभिव्यज्यत

**तेनैव नियमविषयेण कारणेनैव कार्यस्यावियोगो देशकालभेदात् प्राप्तेः संबन्धरूपतायाः संयोगेन सहाविशेषेऽपि समवायकृतः। तथा च संयोगात् समवायस्य भेदः अत एव कार्यकारणयोरवयवावयविनोर्धर्मधर्मिणोर्जातितद्वतोर्गुणगुणिनोः पदार्थान्तरत्वेऽपि तादात्म्येनावभासः। यथायोगं स्वगतविशेषसद्भावात्तु तादात्म्यमतत्त्वमिति इव-शब्दः। तेनैवाव्यपवर्ग इत्युक्तस्यैवेदं फलकथनमिति न पौनरुक्त्यम्। अव्यपवर्गादेव ह्यन्यस्यात्मनावभासः। अत एव प्रवादिनां विमतिः, अवयवावयविनोर्धर्मधर्मिणोश्चैकत्वं केचिदिच्छन्ति। केचिन्नानात्वमिति समवायव्यामोहादपि परमार्थतो न व्यवतिष्ठते। अनेन चायुतसिद्धिः समवायस्योपाधिरुक्तः।**

**एवमयुतसिद्धानामिहप्रत्ययहेतुः समवायो नान्येषामित्ययं नियमः संबन्धेन समवायस्यावेद्यते। यत्रैव हि पारतन्त्र्यमस्य तत्रैवेह बुद्धिमभेदमिव च प्रकल्पयति द्रव्यगुणकर्मसामान्येषुशक्तयोऽपिवाऽऽधारपारतन्त्र्येण तेन नियम्यन्ते। समवायिष्विव**

---

इति, जन्यत इति, व्यपदिश्यत इति प्रतिनियतेष्वेव साधनेषु तत्तत्कार्योपलब्धिर्युक्ता। उत्पत्तेः प्रागसत्कार्यमिति नैयायिकनये तु नियतेष्वेव कारणेषु कार्यं भवति इति व्यवस्थाहेतुः, तन्तुष्वेव पटः, कपालेष्वेव घट इत्यादिबुद्धिहेतुश्च समवायः स्वीकृतः। कार्यकारणयोः सत्यपि च भेदे नियतेन कारणेनैव साकं देशकालभेदेऽपि कार्यस्यावियोगः सम्बन्धरूपतायाः संयोगसमवाययोरविशिष्टत्वेऽपि समवायकृतः।

एवं व्यवस्थाबुद्ध्यव्यपवर्गरूपकार्यकरत्वं समवायस्य, न संयोगस्येति संयोगात् समवायस्य भेदः। अतएव = समवायादेव हेतोः कार्यकारणयोरवयवावयविनोर्धर्मधर्मिणोर्जातितद्वतोर्गुणगुणिनोश्चायुतसिद्धयोः पदार्थान्तरत्वेऽपि तादात्म्येनावभासः। यथासंभवं तयोस्तयोः प्रागुक्तयोर्युग्मयोः स्वगतविशेषसद्भावात्तु परस्परं भेदेन तादात्म्यमतत्त्वमिति इवशब्दः। तेनैवाव्यपवर्ग इति प्रागुक्तस्यैवेदं तादात्म्येनैवावभासरूपफलकथनमिति न पुनरुक्तिः। अत्यन्तमवियोगादेव हि अन्यस्यान्यात्मनाऽवभासः। अतएव पृथक् पृथक् प्रवादवतां विप्रतिपत्तिः।

तथाहि—अवयवावयविनोर्धर्मधर्मिणोश्चैकत्वं केचिदिच्छन्ति, केचिन्नानात्वमिति मतद्वयम् समवायकृतात् तादात्म्यव्यामोहादेव परमार्थतो नानात्वेन व्यवतिष्ठते। अनेन चायुतसिद्धिरूपः समवायस्योपाधिरुक्तः। एवं प्रागुक्तानां कार्यकारणादीनामयुतसिद्धानामिह प्रत्ययहेतुः समवायो नान्येषामित्येवमेष समवायप्रयुक्तो नियमः समवायस्य सम्बन्धेनावेद्यते। यत्रैव हि भावे समवायस्य पारतन्त्र्यं तत्रैवेह बुद्धिमभेदमिव च समवास्य सम्बन्धः प्रकल्पयति। द्रव्यगुणकर्मसामान्यगतास्तास्ताः शक्तयोपि च सम्बन्धेनैवाधारपारतन्त्र्येण नियम्यन्ते। समवायिष्विव च समवायस्यापि तेभ्यः = समवायप्रतियोगिभ्यः भेदो नावधार्यते, नीरक्षीरवत् संमूर्च्छितः रूपत्वेनावभासात्। इह प्रत्ययरूपस्वकार्यवशात्तु सतत्त्वतः = स्वरूपतः सम्बन्धिव्यतिरेकेण समवायो अनुमीयते, नतु धर्मत

**च समवायस्यापि भेदस्तेभ्यो नावधार्यते। सम्मूर्छितरूपत्वेनावभासात्। इह प्रत्ययकार्यवशात्तु अनुमीयते सतत्त्वतः संबन्धिव्यतिरेकेणेत्येवं परप्रसिद्धम्। येन इति समवायमनूद्य** तां शक्तिमिति **शक्तित्वमस्य विधत्ते। अनुग्राहकत्वेन (यत्) पदानामस्य तैस्तुल्यकक्षतया निर्देशानुपपत्तिरित्यर्थः। शक्तित्वादेव च** भेदाभेदावतिक्रान्तत्वम्। **तत्त्वान्यत्वाभ्यामनिर्वाच्या हि शक्तयः। तथोक्तम्—**

**शक्तीनां वस्तुरूपत्वे तत्त्वान्यत्वविचारणा।**
**युज्यते कल्पितानां तु युक्ता द्वयवियुक्तता॥ इति।**

**तथाहि—समवायिसम्मूर्च्छितत्वेनावभासान्न ततो भिन्ना नाप्यभिन्ना, आश्रयासंभविनः कार्यस्येह प्रत्ययलक्षणस्य जननादिति तत्त्वान्यत्वाभ्यामनिर्वाच्यता। अतश्च** अन्यथैव **पदार्थवैलक्षण्येनेयमवस्थिता। यदि वेह प्रत्ययकार्यस्याभेदात् स्वतोऽभिन्ना तस्यैव तु समवायिप्रकल्पितभेदत्वाद्भिन्नापीत्येवमेकापि सती संबन्धिनानात्वात् कल्पितभेदेति** अन्यथा व्यवस्थिता। **साधनादिशक्तीनां चाश्रयावस्थानेन** उपकारिणी। **तदेवंरूपामपि** समवायाख्यां शक्ति **सर्वपदार्थगतस्वाधीनत्वलक्षणं धर्ममतिक्रान्तो नित्यपारतन्त्र्यलक्षणोऽत एवोपकारापेक्षं सर्वं वस्तु** लक्षणं **ज्ञापकमस्य न समवायस्येव प्रतिनियतं संबन्धिरूपमेवेत्येवंरूपः संबन्धोऽनुगृह्णाति नियमयति, परतन्त्रे एवायुतसिद्धेऽवस्थापयति, पारतन्त्र्यसामान्यात् स्वव्यपदेशं च निवेशयतीत्यागमज्ञाः सम्बन्धलक्षणं पारतन्त्र्यमाहुः। एवंविधकार्यकारी संबन्धो नाम पदार्थविलक्षण इत्यागमेन द्रढयति॥ ८-११॥**

**एवं च कृत्वा संयोगसमवायावेव नेह संबन्धौ यथान्येषां दर्शनमित्याह—**

---

इत्येवमेतत् सर्वं समवायविषयकं प्रागुक्तं परनयप्रसिद्धं नतु वेदान्तानुयायिनि स्वनये सत्कार्यवादमाश्रितवति। येन इति समवायमनूद्य तां शक्तिमिति समवायस्य शक्तित्वं विधत्ते। यत्पदानामनुग्राहकत्वेन = पश्चाद्ग्रहजनकत्वेन अनुवादकत्वेन तां शक्तिमित्यस्य तत्पदघटितस्य यत्पदैस्तुल्यकक्षतया निर्देशानुपपत्तिरिति। शक्तित्वादेव च स्वसंबधिप्रतियोगिकभेदाभेदावतिक्रान्तत्वं समवायस्य। तत्त्वान्यत्वाभ्यामनिर्वाच्यत्वमेव हि तत्त्वं शक्तीनाम्। तदुक्तम्—

शक्तीनां वस्तुरूपत्वे तत्त्वान्यत्वविचारणा।
युज्यते कल्पितानान्तु युक्ता द्वयवियुक्तता॥ इति।

अयमर्थः—शक्तीनां वस्तुरूपत्वे = परमार्थस्वरूपत्वेऽभ्युपगम्यमाने तत्त्वान्यत्वविचारणा = भेदाभेदविचारः, युज्यते; कल्पितानान्तु = मिथ्याभूतानान्तु, शक्तीनां द्वयवियुक्तता = तत्त्वान्यत्वद्वयाभावः युक्ता उचिता इति। तथाहि—समवायिसम्मिलितत्वेनावभासान्न ततो समवायितो भिन्ना समवायाख्या शक्तिः, नापि ततोऽभिन्ना, आश्रयेऽसम्भवत इह प्रत्ययलक्षणस्य कार्यस्य जननादित्येवं तत्त्वान्यत्वाभ्यामनिर्वाच्यता तस्याः।

**पदार्थीकृत एवान्यैः सर्वत्राभ्युपगम्यते ।**
**सम्बन्धस्तेन शब्दार्थः प्रविभक्तुं न शक्यते ॥ १२ ॥**

**षट्पदार्थवादिभिर्वैशेषिकैर्गुणपदार्थे संयोगः प्रक्षिप्तः । समवायस्तु स्वतन्त्रः पदार्थ इत्युक्तनयेन पारतन्त्र्याच्छक्तिरूपोऽपदार्थोऽपि पदार्थः कृत इव तद्रूपसमारोपात् संबन्धः । न चेहास्य शब्दस्यायमर्थ इति नियमेन प्रविभागे शब्दार्थयोः सोऽभ्युपगन्तुं पार्यत इति तद्व्यतिरिक्तस्तयोरस्ति संबन्ध इत्यव्याप्तिः पदार्थसङ्ग्रहे वैशेषिकाणाम् ॥ १२ ॥**

**तथा हि—**

---

अतएव च अन्यथैव निर्वाच्यसत्पदार्थवैलक्षण्येनेयमवस्थिता । यद्वेह प्रत्ययलक्षणस्य स्वकार्यस्य स्वस्मादभेदात् स्वतोऽभिन्ना तस्यैव तु कार्यस्यसमवायिभेदप्रकल्पितभेदत्वाद् भिन्नापि इत्येवमेकाऽपि सती सम्बन्धिनानात्वात् कल्पितभेदेति अन्यथा व्यवस्थिता । एकाश्रयाऽवस्थानेन च साधनादिशक्तीनामुपकारिणी । तदेवंरूपामपि समवायाख्यां शक्तिं सर्वपदार्थगतं स्वाधीनत्वलक्षणं धर्ममतिक्रान्तो नित्यपारतन्त्र्यलक्षणोऽत एवोपकारापेक्षं सर्वं वस्तु लक्षणं ज्ञापकमस्य स सर्वलक्षणः सम्बन्धः समवायस्तु प्रतिनियतसम्बन्धिपदार्थलक्षणः तामेवंरूपः सम्बन्धोऽनुगृह्णाति = नियमयति परतन्त्र एवायुतसिद्धेऽवस्थापयति । पारतन्त्र्यसाम्यात् स्वव्यपदेशं = सम्बन्धव्यपदेशं च निवेशयतीत्यागमज्ञाः = सम्प्रदायज्ञाः पारतन्त्र्यं सम्बन्धलक्षणमाहुः । एवंविधकार्यद्वयकारी सम्बन्धो नाम नित्यपारतन्त्र्यलक्षणेनासाधारणधर्मेण सर्वपदार्थविलक्षण इति पूर्वेभ्य आगम इत्युक्त्या दृढीकरोति । इति ॥ ८-९-१०-११ ॥

एवञ्च संयोगसमवायावेव सम्बन्धाविति यथाऽन्येषां दर्शनं तथा नेह व्याकरणदर्शनमित्याह—पदार्थीकृत एवेति ।

अयमर्थः—अन्यैर्नैयायिकादिभिः सर्वत्र = सर्वेषु पदार्थेषु, पदार्थीकृत एव = वस्तुतो नित्यपारतन्त्र्येण शक्तिरूपोऽपदार्थोऽपि पदार्थत्वारोपात् पदार्थः कृत इव सम्बन्धोऽभ्युपगम्यते । अतएव संयोगो गुणः, समवायश्च स्वतन्त्रः पदार्थ इति नैय्यायिकाः । तेन च पदार्थीकृतेन सम्बन्धेन संयोगेन समवायेन वाशब्दस्यार्थः प्रविभक्तुम् = अयमस्य शब्दस्यार्थ इति नियमेन प्रविभागेण ज्ञातुमभ्युपगन्तुं वा न शक्यते । द्रव्ययोरेव संयोगः, अयुतसिद्धयोरेव समवाय इति नियमाभ्युपगमेन संयोगसमवाययोः शब्दार्थसम्बन्धत्वासंभवात् । अतस्तदतिरिक्तः तयोः सम्बन्धोऽभ्युपेय इत्यव्याप्तिः पदार्थसंग्रहे नैय्यायिकवैशेषिकाणाम् । न च शब्दार्थयोर्नित्यमवियोगादयुतसिद्धत्वमस्त्येवेति वाच्यम् । अधिकरणभेदेन तयोर्नित्यं युतसिद्धत्वात् इति ।

अयं भावः—वैशेषिकाः खलु षट्पदार्थवादिनः । तैरधिकरणातिरिक्ताभावानभ्युपगमात् । तैश्च संयोगो गुणपदार्थीकृतः । समवायश्च द्रव्यादिपञ्चकवत् स्वतन्त्रः षष्ठः

**समवायात् स्व आधारः स्वा च जातिः प्रतीयते ।**
**एकार्थसमवायात्तु गुणाः स्वाधार एव ये ॥ १३ ॥**

**खाकाशगगनादयः शब्दाः स्वार्थमाकाशाख्यं तत्र समवायात् प्रतिपादयन्ति, स्वसमवेतां जातिं स्वरूपलक्षणां सर्वे शब्दाः समवायसंबन्धात् प्रत्याययन्ति, तस्याः शब्दव्यक्तिषु समवायात्। शब्दत्वमपि शब्दशब्दस्तत्र समवायात् प्रत्याययति। ये त्वाकाशगुणा महत्त्वादयस्तानेकार्थसमवायाच्छब्दाः प्रत्याययन्ति, महत्त्वादिशब्दानामसाधारणानां महत्त्वादिविशेषगुणानां वाकाशे एकत्र समवायात्। एवं शब्दव्यक्तिलक्षणा गर्जितकूजितभणितहेषितादयो गगनस्यासाधारणा गुणास्तदभिधायका अपि गर्जितादयः शब्दास्तदेकार्थसमवायादेव ॥ १३ ॥**

**तथा—**

---

पदार्थोऽभ्युपेतः। एवञ्च प्रागुक्तरीत्या संयोगः समवायो वा नित्यपारतन्त्र्याच्छक्तिरूपः सम्बन्धोऽपदार्थोऽपि पदार्थीकृत इव पदार्थरूपस्य स्वतन्त्रस्य समारोपात् संयोगसमवायपदयोरन्यतरेणोच्यमानः। इहास्य शब्दस्यायमर्थ इति रीत्या नियमेन शब्दार्थयोः प्रविभागे क्रियमाणे षष्ठ्यर्थः तयोः सम्बन्धः = संयोगः समवायो वा न चाभ्युपगन्तुं शक्यते। तयोर्द्रव्यत्वाभावादयुतसिद्धत्वाभावाच्च। अतः संयोगसमवायव्यतिरिक्तस्तयोरस्ति कश्चन सम्बन्धः शक्तिरूपः प्रत्ययमात्रवाच्यस्तद्द्योत्यो वा सितशर्करादिमाधुर्यविशेषवत् पदानभिलप्योऽपि पदार्थधर्मस्वातन्त्र्यसमारोपात् कथंचित् पदाभिलप्याध्यासिकतादात्म्यरूपः, तन्मूलकवाच्यवाचकभावादिरूपो वा इत्यव्याप्तिः पदार्थसंग्रहे वैशेषिकाणामिति ॥१२॥

तस्मात् संयोगसमवायरूपतया नात्र सम्बन्धपदार्थपरिकल्पनं वैशेषिकाणां युक्तमित्येतत् पञ्चभिः पद्यैः कुलकेनाह—समवायादिति।

अयमर्थः। खाकाशगगनादिशब्दैः स्वकीय आधार आकाशाख्यः समवायरूपात् सम्बन्धात् प्रतीयते। सर्वैश्च शब्दैः स्वकीया स्वगता जातिर्घटपदत्वादिका समवायसम्बन्धादेव प्रतीयते। पूर्वत्रानुयोगिप्रतिपादनमुत्तरत्र च प्रतियोगिप्रतिपादनमिति विशेषः। ये तु स्वाधार एव गुणाः महत्त्वादिशब्दाधारीभूताऽकाशगुणा महत्त्वादयः, ते तु महत्त्वादिभिः शब्दैः एकार्थसमवायात् एकस्मिन्नर्थे आकाशे समवायात् प्रतीयन्त इति।

अयंभावः—आकाशसमवेता आकाशाभिधायिनश्च खाकाशगगनादयः शब्दाः आकाशाख्यं स्वार्थमाकाशे स्वस्य समवायात् प्रतिपादयन्ति। सर्वेऽपि च घटपदादयः शब्दाः स्वसमवेताम् स्वासाधारणधर्मरूपां घटशब्दत्वादिकां जातिं स्वस्मिन् तस्याः समवायसम्बन्धात् प्रत्याययन्ति। शब्दशब्दोऽपि स्वसमवेतां शब्दत्वजातिं स्वस्मिन् समवायादेव प्रत्याययति। ये त्वाकाशस्यासाधारणा गुणा महत्त्वादयस्तदभिधायिनो महत्त्वादिशब्दास्तानेकार्थसमवायात् प्रतिपादयन्ति। असाधारणानामाकाशस्य विशेषगुणानां महत्त्वादीनां = महत्त्वादिशब्दानां चैकत्राकाशे समवायात्। एवं शब्दव्यक्ति-

**द्रव्यत्वसत्तासंयोगाः स्वान्याधारोपबन्धनाः ।**
**तत्प्रदेशविभागाश्च गुणा द्वित्वादयश्च ये ।। १४ ।।**

द्रव्यत्वमपरसामान्यं, सत्ता च महासामान्यमेकार्थसमवायाद् द्रव्यत्वादिशब्दैः प्रत्याय्येते। सत्ताद्रव्यत्वे हि द्रव्यत्वादिशब्दस्य यः स्व आधार आकाशस्तत्रान्यत्र च पृथिव्यादौ वर्तेते इति स्वान्याधाराभ्यामुपबध्येते, स्वात्मनि नियम्येते। तथा च स्वान्याधारवृत्तिनी, स्वाश्रयपरिसमाप्तत्वात्, सामान्यानामाश्रयान्तरसमवायेऽप्येकैकत्र समवायाविरोधात् तथा चाकाशेन पदार्थान्तराणां ये प्रदेशवृत्तयः संयोगविभागद्वित्वपृथक्त्वादयश्च तेऽपि संयोगादिशब्दैरेकार्थसमवायादेव प्रत्याय्यन्ते, द्विष्ठत्वात्, संयोगादीनामाकाशेऽपि समवायात् ।। १४ ।।

तथा—

---

विशेषा गर्जितकूजितभणितहेषितादयः = गर्जितं मेघस्य, कूजितंपक्षिणां, भणितं मानवानां हेषितं हयस्य गगनमात्रवृत्तयो विशेषगुणा ये तान् तदभिधायका गर्जितादयः शब्दा एकस्मिन्नाधारे आकाशे द्वयोरपि वाच्यवाचकयोः समवायादेव प्रतिपादयन्तीति ।।१३।।

अन्यानपि एकार्थसमवायात् प्रतिपाद्यान् पदार्थान् बुद्धिवैशद्याय निर्दिशति–द्रव्यत्वसत्तासंयोगा इति। अत्र कारिकान्ते तेऽपि सयोगादिशब्दैरेकार्थसमवायादेव प्रत्याय्यन्त इत्यध्याहार्यम्।

अयमर्थः—स्वान्याधारोपबन्धना = स्वस्य द्रव्यत्वादिशब्दस्य य आधार आकाशः, अन्यस्य = द्रव्यत्वादेर्य आधार आकाशश्च पृथिव्यादिकश्च तौ आधारावुपबन्धौ = नियामकौ येषान्ते तथाभूताः, द्रव्यत्वसत्तासंयोगाः ये च = तत्प्रदेशविभागाश्च। तेन = आकाशेन सह पदार्थान्तराणां सम्बन्धिन प्रदेशविभागाः = विभक्ताधारवृत्तयः द्वित्वादयो गुणाः, तेऽपि संयोगादिशब्दैरेकार्थसमवायादेव प्रत्याय्यन्त इति।

अयं भावः—द्रव्यत्वमपरसामान्यम् = सत्ताव्याप्याजातिः, सत्ता च महासामान्यम् = सर्वासां जातीनां व्यापिकाजातिः। ते उभे अपि द्रव्यत्वादिशब्दैरेकार्थसमवायादेव प्रत्याय्येते। यतः सत्ता द्रव्यत्वे द्रव्यत्वादिशब्दस्य यः स्वः = स्वकीय आधार आकाशस्तत्रान्यत्र च पृथिव्यादौ वर्तेते इत्येकार्थसमवेते अन्यार्थसमवेते च। अतएव स्वान्याधाराभ्यामुपबध्येते। स्वात्मनि = स्वस्वरूपे नियम्येते = इतराधाराद्व्यावर्त्येते इति यावत्।

तथा च सत्ता द्रव्यत्वे स्वान्याधारवृत्तिनी इति फलितम्, सामान्यानां स्वाश्रय परिसमाप्तत्वात् = स्वाधारपर्याप्तत्वात् अन्याधारसमवायेऽपि एकैकत्र समवायाविरोधात्। तथाचाकाशेन सह पदार्थान्तराणाम् = अन्यद्रव्याणाम् ये प्रदेशवृत्तयः अव्याप्यवृत्तयः द्विष्ठत्वेन प्रविभक्ताधारवृत्तयश्च, संयोगविभागद्वित्वपृथक्त्वादयो गुणाः, तेऽपि संयोगादिशब्दैरेकार्थसमवायादेव प्रत्याय्यन्ते। संयोगादीनां सदा द्विष्ठत्वेनाकाशेऽपि समवायादिति ।। १४ ।।

**केचित् स्वाश्रयसंयुक्ताः केचित् तत्समवायिनः ।**
**संयुक्तसमवेतेषु समवेतास्तथा परे ॥ १५ ॥**

**स्वशब्दानामाश्रय आकाशः, तेन संयुक्ता रथघटादयो रथघटादिशब्दैः समवेत-(समवायि) संयोगात् प्रत्याय्यन्ते । घटादिसमवेतास्तु रूपादयो गुणाः, उत्क्षेपणादयश्च कर्मविशेषाः स्वाश्रयसंयुक्तसमवायाद्रूपादिशब्दैः स्वाश्रयसंयुक्तसमवेतसमवायादभिधीयन्ते ॥ १५ ॥**

**तथा—**

---

न केवलं समवायैकार्थसमवायाभ्यामेव शब्दैः स्वार्थः प्रत्याय्यते, अपि तु स्वसमवायिसंयोगात्, स्वसमवायिसंयुक्तसमवायात्, स्वसमवायिसंयुक्तसमवेतसमवायादपि इत्येतद्दर्शयति—केचित् स्वाश्रयसंयुक्ता इति ।

अयमर्थः—केचिदर्थाः यथा रथघटादयः स्वाश्रयसंयुक्ताः स्ववाचकशब्दसमवायिन आकाशेन संयुक्ता इति स्वाभिधायिशब्दैः स्वसमवायिसंयोगात् प्रत्याय्यन्ते ।

केचित्तु तत्समवायिनः स्वाभिधायिशब्दसमवायिसंयुक्ते रथघटादौ समवायिनो रूपादय इति स्वाभिधायकशब्दसमवायिसंयुक्तसमवायाद् रूपादिशब्दैः प्रत्याय्यन्ते । तथा परेऽर्थाः रूपत्वादयः स्ववाचकशब्दसमवायिसंयुक्तसमवेतेषु रूपादिषु समवेता इति स्वशब्दैः स्वसमवायिसंयुक्तसमवेतसमवायात् प्रत्याय्यन्त इति ।

अयं भावः—रथघटादिशब्दानामाश्रय आकाशः, तेन संयुक्ता रथघटादयो रथघटादिशब्दैः स्वसमवायिसयोगात् प्रत्याय्यन्ते । तथाविधरथघटादिसमवेतास्तु रूपादयो गुणा उत्क्षेपणादयश्च कर्मविशेषाः । स्वसमवायिसंयुक्तसमवायाद् रूपादिशब्दैरभिधीयन्ते । तादृशरथघटादिसमवेतरूपादिसमवेताः, रूपत्वादयस्तु रूपत्वादिशब्दैः स्वसमवायिसंयुक्तसमवेतसमवायात् प्रत्याय्यन्त इति ॥१५॥

एवमन्यैरपि नानाविधैरनियतैः सम्बन्धैः शब्दाः स्वार्थं प्रतिपादयन्तीति । समवायशब्दस्य च स्वार्थप्रतिपादने सम्बन्धाभाव इति चाह—स्वाश्रयेण तु संयुक्तैः इति ।

अयमर्थः—विभुद्रव्यवाचकैर्दिक्कालादिशब्दैस्तु स्वाश्रयेणाकाशेन सह संयुक्तैः पृथिव्यादिभिः सह संयुक्तं विभुदिक्कालादिद्रव्यं स्वसमवायिसंयुक्तसंयोगाद गम्यते = प्रतीयते । तत्र = तस्मिन् सत्यपि = यथासंभवं शब्दानां स्वार्थाभिधाने तत्र तत्र सम्बन्धविभजने सत्यपि समवायशब्दस्य स्वार्थाभिधाने समवायरूपस्यार्थस्य स्वयं सम्बन्धरूपस्यापरः सम्बन्धः समवायः संयोगो वा न दृश्यते, अनवस्थानात् समवायस्याद्रव्यत्वाच्चेति ।

स्वाश्रयेण तु संयुक्तैः संयुक्तं विभु गम्यते ।
समवायस्य संबन्धो नापरस्तत्र दृश्यते ॥ १६ ॥

दिक्कालात्मनां विभूनामाकाशेन सहाप्राप्तिपूर्विकायाः प्राप्तेरसंभवात् साक्षात् संबन्धाभावाद् दिक्कालादिशब्दैः स्वाश्रयसंयुक्तसंयोगात्ते प्रतिपाद्यन्ते। आकाशेन हि संयुक्ताः पृथिव्यादयः, तैः संयुक्ता हि दिक्कालात्मनः। एवं पूर्वानुसारेण विभुद्रव्यसमवेताः गुणाः, तत्समवेताश्च सामान्यविशेषाः स्वशब्दैः स्वाश्रयसंयुक्तसमवायात् स्वाश्रयसंयुक्तसमवेतसमवायाच्चाभिधीयन्त इत्यध्यवसीयत इति पृथङ् नोक्तम्। तदेवं द्रव्यगुणकर्मणां सामान्यानां च प्रतीतेर्हेतुरुक्तः। विशेषस्यापि परमाणुमनःसमवेतस्य स्वाश्रयसंयुक्तसमवायात् स्वशब्देनाभिधानम्। आकाशसमवेतस्यत्वेकार्थसमवायाद् दिक्कालात्मसमवेतस्य स्वाश्रयसंयुक्तसंयुक्तसमवायापेक्षया प्रतीतिरुक्ता। एवमत्र यथायोगं विभजनेऽपि समवायशब्दस्य स्वार्थप्रतिपादने न कश्चित् संबन्धः स्यात्, समवायस्याद्रव्यत्वात्, केनचित् संयोगाभावात्, स्वरूपवृत्तित्वात्, समवायान्तराभावाच्च ॥ १६ ॥

स्यादेतत्–समवायशब्द आकाशे समवेतः, घटादयश्चाकाशेन संयुक्ताः, तेषु च समवायः स्थित इति स्वाश्रयसंयुक्तसंबन्धात्तमभिधास्यति। नैतद्युक्तम्, समवायान्तराभावात् समवायस्य घटादिषूक्ता कल्पना न युज्यते।

तथा हि—

---

अयं भावः—दिक्कालादिशब्दैः स्वसमवायिसंयुक्तसंयोगात् स्वार्थाः पतिपाद्यन्ते। दिक्कालादिशब्दानां समवायि आकाशम्, तेन संयुक्ताः पृथिव्यादयः, तैः संयुक्ता दिक्कालात्मानो विभव इति। स्वसमवायिसंयोगात्तु तैः शब्दैः स्वार्था न प्रतिपाद्यन्ते। दिक्कालात्मनामपृथग्देशानामक्रियाणाञ्च विभूनामाकाशेन सहाप्राप्तिपूर्विकायाः प्राप्तेरसंभवात्। दिगादीनामाकाशेन सह साक्षात् सम्बन्धस्तु संयोगः, समवायोऽन्यो वा कश्चन नास्त्येव। एवं पूर्वपद्यानुसृतसरण्या विभुद्रव्यसमवेता गुणाः परममहत्त्वादयः, तत्समवेताश्च जातिविशेषाः स्वस्ववाचकशब्दैः स्वसमवायिसंयुक्तसमवायात् स्वसमवायिसंयुक्तसमवेतसमवायाच्च प्रत्याय्यन्त इति = व्यवसीयत इति पृथङ्नोक्तं तत्। तदेवं चतुर्भिः पद्यैर्द्रव्यगुणकर्मणां जातीनाञ्च प्रतीतेर्हेतुरुक्तः।

परमाणुमनोरूपनित्यद्रव्यसमवेतस्य विशेषस्यापि स्वशब्देनाभिधानं स्वसमवाय्याकाशसंयुक्तपरमाणुमनः समवायात्। आकाशसमवेतस्य तु विशेषस्य स्वशब्देनाभिधानमेकार्थसमवायात्। दिक्कालात्मसमवेतस्य तु तस्य स्वशब्देनाभिधानं स्वसमवायिसंयुक्तसंयुक्तसमवायापेक्षणेन प्रागुक्तरीत्या विशेषशब्दस्य हि समवायि आकाशम्, तत्संयुक्ताः पृथिव्यादयः, तत्संयुक्ता दिगादयस्तत्समवेतो विशेष इति। एवमत्र यथासंभवं शब्दानां स्वार्थप्रतिपादने अनियतानां व्यवस्थया विभजनेऽपि समवायशब्दस्य स्वार्थप्रतिपादने

**सम्बन्धस्याविशिष्टत्वान्न चात्र नियमो भवेत् ।**
**तस्माच्छब्दार्थयोर्नैव सम्बन्धः परिकल्पते ॥ १७ ॥**

**यदायमर्थो विशिष्टस्य संबन्धस्याभावादिति तदान्तरेण संबन्धं समवायशब्दः स्वार्थं न प्रत्याययेदित्यनर्थकः, यद्वा प्रत्याययन्न नियमेन सर्वं(स्व)मर्थं प्रत्याययेदिति व्याख्या । प्रकृतापेक्षया वा नियमः । निमित्तं विना समवायशब्दस्य स्वार्थाभिधानेऽनिबन्धनलक्षणस्य संबन्धस्याविशिष्टत्वात् सर्वः शब्दः सर्वमर्थं प्रत्याययेत् । यदा तु संबन्धस्याविशिष्टत्वात्तुल्यत्वाद् अन्येन साधारणत्वादित्यर्थः तदेयं व्याख्या । आकाश-**

---

कश्चित् सम्बन्धो न संभवति, समवायस्याद्रव्यत्वेन हेतुना केनापि सह संयोगाभावात् । द्रव्ययोरेव संयोग इति नियमात् । समवायस्य स्वाश्रये स्वरूपेणैव वृत्तित्वाभ्युपगमादनवस्थाभयेन समवायान्तराभावाच्चेति ॥१६॥

ननु समवायशब्द आकाशे समवेतः, आकाशेन च घटादयः संयुक्ता तेषु च गुणकर्मादिः समवायः स्थित इति स्वसमवाय्याकाशसंयुक्ते घटादौ समवायस्य स्वरूपसम्बन्धात् समवायशब्दः स्वार्थमभिधास्यतीति चेत्, नैतद् युक्तम्; समवायस्यानवस्थाभयेन समवायान्तराभावाद् घटादिषु पूर्वोक्ता कल्पना न युज्यत इति । तदेतदाह—सम्बन्धस्याविशिष्टत्वादिति ।

अयमर्थः—सम्बन्धस्याविशिष्टत्वात् = विशिष्टस्य सम्बन्धस्याभावादित्येकोऽर्थः । यद् वा समवायशब्दस्य स्वार्थाभिधानेऽनिबन्धनलक्षणस्य सम्बन्धस्याविशिष्टत्वात् = तुल्यत्वादित्यर्थः । अथवा समवायरूपस्य सम्बन्धस्याविशिष्टत्वात् = तुल्यत्वात्, अन्येन साधारणत्वादित्यर्थः ।

तत्र प्रथमकल्पे विशिष्टस्य स्वातिरिक्तस्य स्वप्रतियोगिकस्य सम्बन्धस्याभावादन्तरेण सम्बन्धं समवायशब्दः स्वार्थं न प्रत्याययेदिति हेतोरत्र समवायशब्दस्य स्वार्थाभिधाने सर्वः शब्दः स्वार्थमभिदधात्येवेति नियमो न च = नहि भवेत्, अनर्थकत्वात् । कदाचित् स्वार्थाभिधायकत्वेऽपि नियमेन स्वार्थानभिधायकत्वाद् वा ।

द्वितीयकल्पे तु स्वप्रतियोगिकसम्बन्धरूपं निमित्तं विना समवायशब्दस्य स्वार्थाभिधाने सम्बन्धरूपनिमित्तराहित्यरूपस्य सम्बन्धस्याविशिष्टत्वात् तुल्यत्वात् सर्वः शब्दः सर्वमर्थं प्रत्याययेदिति । सर्वः शब्दः स्वार्थमेवाभिधत्त इति नियमो न च भवेत् ।

तृतीयकल्पे तु आकाशशब्देन समवायात् स्वाश्रयाभिधाने घटादयोऽपि शब्दा गगनाभिधायिनः स्युः । आकाशसमवायस्य तेष्वपि अविशेषादिति, अस्मिन् कल्पेऽपि द्वितीयनियमो भज्येत । तस्माद् वैशेषिकैः क्रियमाणायाः संयोगसमवायरूपतया शब्दार्थसम्बन्धव्यवस्थायाः प्रागुक्तरीत्या समवायशब्दे घटादिशब्देषु चाव्याप्त्यतिव्याप्तिदोषग्रस्ततया कर्त्तुमशक्यत्वात् शब्दार्थयोः सम्बन्धः संयोगः समवायो वा नैव परिकल्पते = नैव प्रसिध्यतीति ।

**शब्देन समवायात् स्वाश्रयाभिधाने घटादयोऽपि शब्दा गगनाभिधायिनः स्युः, आकाशसमवायस्याविशेषात्। एवं च स्वसमवेतजात्यभिधाने शब्दशब्दस्य गुणत्वं सत्ता च प्रतिपाद्या स्यात्। घटादिशब्दैश्च स्वाश्रयसंयोगाविशेषात् पटादयोऽपि प्रत्याय्येरन्निती्यम् अव्याप्त्यतिव्याप्तिभ्यां व्यवस्था शब्दार्थसंबन्धे विशीर्यते, यतस्तस्मात् संयोगसमवायरूपतया नात्र संबन्धपदार्थपरिकल्पनं न्याय्यम्॥ १७॥**

**प्रौढिवादितया वैशेषिकदर्शनं समर्थयितुमेतदाह—**

---

अयं भावः—सम्बन्धस्याविशिष्टत्वादित्यस्य यदि विशिष्टस्य सम्बन्धस्य स्वप्रतियोगिकस्याभावादित्यर्थः, तदा सम्बन्धान्तरमन्तरेण समवायशब्दः स्वार्थं न प्रत्याययेदित्यनर्थकत्वं तस्यायातम्। तथा च सर्वः शब्दः स्वार्थमभिदधात्येवेति नियमभङ्गः। यद्वा समवायशब्दः स्वार्थं कथञ्चित् प्रत्याययन्नपि सम्बन्धाभावेन न नियमेन स्वमर्थं प्रत्याययेदिति रीत्यापि प्रागुक्तनियमभङ्गः। अथवा प्रकृतसमवायशब्दमपेक्ष्याग्रं पद्योक्तार्थरूपो नियमः। स्वप्रतियोगिकसम्बन्धान्तररूपं निमित्तं विना समवायशब्दस्य = सम्बन्धरूपनिमित्तराहित्यरूपस्य सम्बन्धस्य विशिष्टत्वात् समवायशब्दवन्निर्निमित्तः सर्वः शब्दः सर्वमर्थं प्रत्याययेत्। यदा तु सम्बन्धस्याविशिष्टत्वात् तुल्यत्वाद् = अन्येन साधारणत्वादित्यर्थः, तदा इयं व्याख्या। आकाशशब्देन समवायात् स्वाश्रयाभिधाने घटादयोऽपि शब्दाः समवायादेव आकाशाभिधायिनः स्युः। आकाशे समवायस्य द्वयोरविशेषात्। तथा च सर्वः शब्दः स्वार्थमेवाभिदधातीति नियमभङ्गः।

एवञ्च शब्दशब्दस्य स्वाश्रयसमवेतसमवायात् स्वसमवेतजात्यभिधाने सम्बन्धविशेषाद् गुणत्वं सत्ता च प्रतिपाद्या स्यात्। घटादिशब्दैश्च पटादयोऽपि प्रत्याय्येरन्; घटादिष्विव पटादिष्वपि स्वाश्रयसंयोगाविशेषात्। इत्येवं समवायशब्दे सम्बन्धान्तरासत्त्वेन स्वार्थानभिधानादव्याप्तिः घटादिशब्देषु च सम्बन्धाविशेषादर्थान्तराभिधायकत्वेनातिव्याप्तिरित्यव्याप्त्यतिव्याप्तिभ्यामियं संयोगसमवाययोः शब्दार्थसम्बन्धत्वकल्पनया शब्दार्थसम्बन्धे वैशेषिकैः क्रियमाणा व्यवस्था विशीर्यते। यतस्तस्मात् संयोगसमवायरूपतया नात्र वैयाकरणदर्शने शब्दार्थसम्बन्धपरिकल्पनं युक्तमिति॥१७॥

संयोगः समवायो वा शब्दार्थयोः सम्बन्ध इति वैशेषिकदर्शनं प्रौढिवादितया समर्थयितुमेतत्पद्यमाह—अदृष्टवृत्तिलाभेनेति।

अयमर्थः—यथा व्यापकस्यात्मनः संयोगे शरीरादौ घटादौ चाविशिष्टेऽपि अदृष्टस्य = पुण्यापुण्यरूपस्य, वैशेषिकदर्शने आत्मगुणस्य, वृत्तिः फलदानं प्रति व्यापारस्तस्या लाभेनदेशकालादिसहकारिवशात् प्राप्त्या क्वचिदेव = स्वशरीरादावेवात्मनः संयोगप्रयुक्तः स्वस्वामिभावाख्यः सम्बन्धो न घटादौ, नाप्यन्यदीयशरीरे। तथा स्वाश्रयसंयोगलक्षणस्य स्वाश्रयसमवायलक्षणस्य वा सम्बन्धस्याभेदेऽविशेषे सत्यपि = अन्यत्रापि शब्दार्थयोः सम्बन्धस्य प्रतिनियमे व्यवस्थितौ वा स एव क्रमः = सैव रीतिरिति।

अदृष्टवृत्तिलाभेन यथा संयोग आत्मनः ।
क्वचित् स्वस्वामियोगाख्योऽभेदेऽन्यत्रापि स क्रमः ॥ १८ ॥

व्यापकस्यात्मनः सर्वैर्द्रव्यैः संयोगस्याविशेषेऽपि धर्माधर्मवशाच्छरीरादावेव स्वस्वामिभावलक्षणः सम्बन्धो यथा, एवमिहाप्यविशिष्टेऽपि स्वाश्रयसमवाये स्वाश्रयसंयोगे वादृष्टवशादेव प्रतिनियतः शब्दार्थो व्यवस्थाप्यत इत्यतिव्याप्त्यभावः । अदृष्टस्य धर्माधर्मलक्षणस्यात्मगुणस्य वृत्तिः फलदानं प्रति व्यापारः, तस्या लाभो देशकालादिसहकारिवशात् प्राप्तिः । तुच्छोऽयं परिहारो हेयत्वादस्य पक्षस्याभिहितः । भोगस्य स्वसुखदुःखसाधनभूतस्य युक्तं कर्माक्षिप्तत्वम्; न तु सर्वस्य तथाभावो युक्तः । अथ शब्देनार्थप्रतिपादननियमे सति तस्य भोग्यत्वमित्येतदपि कर्माक्षिप्तमेवेत्युच्यते, तदा सर्वस्य जगतस्तथाभावाददृष्टहेतुप्रत्याख्यानं सर्वत्रायातम् । अथायमत्राशयः-यथा संयोगे समानेऽपि स सर्वं स्वमात्मनः, नापि सर्वेषामात्मनाम्, प्रत्यात्मगतादृष्टनियमात्, तथा सम्बन्धाभेदेऽपि न सर्वं सर्ववाच्यम्, प्रयोगदर्शनाभ्यासजसंस्कारपारतन्त्र्यादिति तदा सर्व एव प्रतिनियतविषयः प्रयोगदर्शनाभ्यासात् सङ्केतादवसीयमानस्वरूपः संस्कारो योग्यतारूपः सम्बन्धोऽस्तु, किमन्येनानिबन्धनेन संयोगसमवायलक्षणेन नान्तरीयकेण कृत्यम् ॥ १८ ॥

समवायस्य त्ववाच्यत्वमेवाभ्युपैति ।

---

अयं भावः—वैशेषिकदर्शने आत्मनो विभुद्रव्यत्वात् सर्वैर्द्रव्यैः सह तत्संयोगस्याविशिष्टत्वेऽपि प्रत्यात्मनियतधर्माधर्मवशात् स्वशरीरादावेव यथाऽऽत्मनः स्वस्वामिभावलक्षणः सम्बन्धः, नान्यत्र द्रव्ये, तथा प्रकृतेऽपि तुल्येऽपि स्वार्थेऽन्यत्र च स्वाश्रयसमवाये स्वाश्रयसंयोगे वा धर्माधर्मवशादेव व्यवस्थितः शब्दार्थो विज्ञास्यत इति पूर्वोक्तायाः सर्वशब्दानां सर्वार्थाभिधायकत्वलक्षणाया अतिव्याप्तेरभावः ।

वस्तुतस्तु अयं परिहारोऽतिव्याप्तेस्तुच्छः । तथाहि—सुखदुःखान्यतरसाक्षात्काररूपस्य भोगस्य विषयीभूतस्वसुखदुःखसाधनकस्य सुखदुःखनियामकधर्माधर्मप्रयुक्तत्वस्यौचित्येऽपि सर्वस्य प्रतिनियमस्य धर्माधर्मप्रयुक्तत्वं न युक्तम्, सर्वस्य नियम्यस्याभोग्यत्वात् । यदि तु शब्देनार्थप्रतिपादनानन्तरमर्थस्य सुखदुःखजनकत्वेन भोग्यत्वमिति शब्दार्थसम्बन्धप्रतिनियमोऽपि कर्माक्षिप्त एवेति उच्यते, तदा सर्वस्य जगतः क्वचित् कदाचित् कथञ्चिद् केनापि भोग्यत्वात् तद्भोगप्रतिनियमस्यादृष्टप्रयुक्तत्वेऽपि जगतोऽदृष्टहेतुकत्वस्य बहुमतसिद्धस्य प्रत्याख्यानं सर्वत्रायातमिति महान् उपप्लवः । यदि तवायमाशयः—यथात्मनः संयोगे समानेऽपि न सर्वं स्वमात्मनः, किन्तु स्वशरीरादिकमेव, नापि स्वशरीरादिकमपि सर्वेषामात्मनां स्वम्, प्रत्यात्मगतादृष्टेन नियमनात्, तथा स्वाश्रयसंयोगरूपस्य स्वाश्रयसमवायरूपस्य वा सम्बन्धस्याभेदेऽपि न सर्वं सर्ववाच्यम् । तादृशस्य सम्बन्धस्य तत्तच्छब्दानां तत्तदर्थेषु यत् प्रयोगदर्शनं तस्य योऽभ्यासः पौनः पुन्यं

प्राप्तिं तु समवायाख्यां वाच्यधर्मातिवर्तिनीम् ।
प्रयोक्ता प्रतिपत्ता वा न शब्दैरनुगच्छति ॥ १९ ॥

शब्दप्रतिपाद्यानां वाच्यानां गवादीनामर्थानां धर्मः संसर्गिरूपाच्छुरितत्वम्, निरुपाधीनां शब्दविषयताऽयोगात् । समवायस्तु निरुपाधिः, न हि तस्य गुणसामान्यादिः कश्चिदुपाधिः परैरङ्गीक्रियत इति वाच्यधर्ममतिक्रान्तः । तद्येदं तदिति प्रत्यवमर्शायोग्यत्वं वाच्यधर्ममतिक्रान्तः । नित्यपरतन्त्ररूपश्चासौ समवायशब्दादपि नावधार्यते प्रयोक्तृप्रतिपत्तृभ्यामिति न तत्स्वरूपनिवेशिसंविज्ञानपदं किंचनास्ति इत्यवाच्य एव भावतोऽयम् । सम्बन्धिरूपतया तु स्वतन्त्रः समवायः शब्दादवगम्यते । तथा च धर्मितया प्रतीतेर्धर्मा(र्म्य)न्तरयोगसहत्वादस्त्येव स्वाश्रयसंयोगः, तदभिधाने समवायशब्दस्य संबन्ध इति न कश्चिद् दोषः अर्थान्तरे समाजादौ च प्रयोगदर्शनात् समवायशब्दो नासाधारणं संविज्ञानपदमस्य लौकिकम् । किं तर्हि वैशेषिकसमय एव रूढम् । वाच्यमर्थं प्रयोक्ता विवक्षितवा योग्यं शब्दं प्रयुङ्क्ते । समवायस्य तु पारतन्त्र्यात्मनो वाच्यत्वाभावात् प्रयोक्तुर्योग्यशब्दोदाहारे व्यापारभावः, तदभावात् प्रतिपत्तापि न तत्र कश्चिदित्युभयोपादानम् ॥ १९ ॥

अत्रावाच्यत्वे समवायस्योक्ते नैयायिको वाक्छलमुद्भावयति—

---

तज्जन्यसंस्कारपारतन्त्र्यादिति । तदा सर्व एव शब्दस्य तादृशसंस्कारेण प्रतिनियमितो विषयः प्रयोगदर्शनाभ्याससहकृताद् गृहीताद् संकेतादनुमीयमानस्वरूपो योग्यतारूपः संस्कारः शब्दार्थयोः सम्बन्धोऽस्तु किमन्येन अनिबन्धनेन = यत्किञ्चिन्निमित्तानियन्त्रितेन संयोगसमवायरूपेण नान्तरीयकेण = अविनाभावसिद्धतयाऽन्यथासिद्धेन सम्बन्धेन प्रयोजनमिति ॥१८॥

समवायसम्बन्धस्य त्ववाच्यत्वमेवाभ्युपैति हरिः । तथाहि—समवायशब्देन धर्मितया स्वातन्त्र्येणोच्यमानः समवायो न सम्बन्धः, नित्यपारतन्त्र्यलक्षणस्य सम्बन्धलक्षणस्य तत्राभावात् । स्वयं प्रातिपदिकार्थत्वेन प्रतियोग्यनुयोगिरूपप्रातिपदिकार्थद्वयसंयोजकत्वलक्षणस्यापि तल्लक्षणस्याभावाच्च । वैशेषिकदर्शननये 'नीलो घटः' इत्यादौ प्रतीयमानः समवायसंसर्गस्तु आकाङ्क्षाभास्यः, विभक्तिद्योत्यो वा, वाक्यस्यापि तन्नयेन तत्र शक्तिरिति अवाच्यत्वमेव तस्य । तथा चैवं समवायसम्बन्धाभ्युपगमे समवायशब्दे वाचकत्वलक्षणस्याव्याप्तिः परिहृता भवति । समवायशब्दस्य तदर्थस्य च समवायस्य स्वाश्रयासमवायसम्बन्धाभ्युपगमेऽनवस्थापातभयाभावादित्येतत् सर्वमभिप्रेत्यान्यच्चैतदुपयुक्तमभिप्रायतः शब्दतश्चाह—प्राप्तिं तु समवायाख्यामिति ।

अयमर्थः—प्रयोक्ता प्रतिपत्ता वा = श्रोता वा वाच्यधर्मातिवर्तिनीम् = वाच्यानां गवादीनामर्थानां धर्मम् = स्वोपाधिभूतस्वसंसर्गिरूपोपहितत्वम् 'इदं तत्' इति प्रत्यवमर्श-

**अवाच्यमिति यद् वाच्यं तदवाच्यतया यदा ।**
**वाच्यमित्यवसीयेत वाच्यमेव तदा भवेत् ॥ २० ॥**

**अवाच्यमित्यनेन शब्देन यद् वाच्यं वक्तुमभिप्रेतं तद्यदैवावाच्यतया अवाच्यशब्देन वाच्यं व्यवहर्तव्यमिति प्रतीयते, तदैव वाच्यं भवति, प्रतिपादनकाल एव वाच्यतामुपैतीत्यर्थः। तथा चावाच्यमित्युक्तेऽवाच्यशब्दस्यैव वाच्यमित्यवाच्यत्वं विरुध्यते ॥ २० ॥**

---

योग्यत्वं वा वाच्यधर्ममतिक्रान्तां समवायाख्यां प्राप्तिं सम्बन्धन्तु वाच्यधर्मातिवर्तित्वादेव शब्दैर्नानुगच्छति – वाच्यत्वेन नानुसरति तत्स्वरूपसन्निवेशिसंविज्ञानपदाभावाच्चेति।

अयं भावः—वाच्यानाम् = शब्दप्रतिपाद्यानां गवादीनामर्थानां धर्मो विशेषणतया स्वसंगिरूपाच्छुरितत्वम् = तादृशरूपोपहितत्वम्, जातिगुणक्रियाशब्दान्यतमोपाधिरहितानां वाच्यतया शब्दविषयत्वायोगात् । समवायस्तु न सोपाधिः, जातिगुणादिषु कस्यचिदप्युपाधेस्तत्र परैरनङ्गीकाराद् इति रीत्या वाच्यधर्ममतिक्रान्तः । किञ्चेदमीदृगिति वा, तत्तादृगिति वा, यः प्रत्यवमर्शोऽनुसंधानं तद्योग्यत्वरूपं वाच्यधर्ममतिक्रान्तः। किञ्च सम्बन्धरूपः समवायो नित्यपरतन्त्रतया प्रयोक्तृप्रतिपत्तृभ्यां समवायशब्दादपि नावधार्यते । समवायशब्दाद्धि सम्बन्धिरूपतया स्वतन्त्रः समवायोऽवगम्यत इति गवादिस्वरूपनिवेशिनः = गवादिस्वरूपे संकेतितस्य गवादिपदस्येव समवायसम्बन्धस्वरूपनिवेशिनः कस्यचित् तत् संविज्ञानपदस्याभावाद् वाच्य एव भावतः = स्वरूपतः, अयं समवायसम्बन्धः । नित्यसम्बन्धत्वरूपसमवायत्वेन उपाधिना समवायपदवाच्यस्तु समवायो भवत्येवेत्यन्यदेतत् । स तु न सम्बन्धः, धर्मितया स्वातन्त्र्येणोच्यमानत्वात् । तथा च समवायशब्दात् समवायस्य धर्मितया प्रतीतेर्द्रव्यत्वेन धर्म्यन्तरयोगसहत्वादस्येव समवायाभिधाने समवायशब्दस्य स्वाश्रयसंयोगः सम्बन्ध इति न कश्चिद् दोषोऽव्याप्तिरूपः, तदन्यो वा । किञ्च, समवायशब्दस्यार्थान्तरे समाजादौ प्रयोगदर्शनात् समवायस्य नासाधारणं लौकिकं संविज्ञानपदं समवायशब्दः, किन्तु वैशेषिकसमय एव रूढम् । प्रयोक्ता हि वाच्यमर्थं बुद्धौ विवक्षाविषयीकृत्य तदर्थावबोधयोग्यं शब्दं प्रयुङ्क्ते । समवायस्य तु नित्यपारतन्त्र्यात्मनः प्रागुक्तरीत्या वाच्यत्वाभावात् प्रयोक्तुर्योग्यशब्दोच्चारणे व्यापाराभावः, शब्दप्रयोगाभावाच्च न तत्र कश्चित् प्रयोक्तृवत् प्रतिपत्तापि इत्यभिप्रेत्य—'प्रयोक्ता प्रतिपत्ता वा' इत्युभयोपादानमिति ॥१९॥

एवमत्र समवायस्य वाच्यत्वमुद्भावयति—अवाच्यमिति, यद् वाच्यमिति ।

अयमर्थः—समवायसम्बन्धरूपं वस्तु अवाच्यमिति वाक्ये 'अवाच्यम्' इति। अवाच्यमित्यनेन शब्देन यद् वस्तु वाच्यम् = वचनार्हत्वेन वक्तुमभिप्रेतम् । अत्रत्यस्य वाच्यशब्दस्यात्रार्थे लक्षणा। अत्र शक्यार्थस्य लक्ष्यार्थे हेतुहेतुमद्भावः सम्बन्धः।

**अथाप्यवाच्यमित्येवं न तद् वाच्यं प्रतीयते ।**
**विवक्षितास्य यावस्था सैव नाध्यवसीयते ॥ २१ ॥**

**अवाच्यशब्दस्याप्यवाच्यत्वे प्रतिपिपादयिषितं शब्दानामभिधेयत्वं समवायस्य न गम्येतेत्यस्य वाच्यत्व एव । तथा च विरोध इत्यर्थः ॥ २१ ॥**

**अथ पारतन्त्र्यात्मनाऽवाच्यो न सर्वथेत्याशङ्क्याह—**

---

तद् = यदा यदैव, अवाच्यशब्देनेत्यस्याध्याहारः वाच्यमिति व्यवहर्त्तव्यमिति । अत्राभिधेयवद् व्यवहर्त्तव्येऽपि वाच्यशब्दस्य शक्तिरेव । व्यवहारस्याप्यत्र वचनविशेषरूपत्वात् ।

अवसीयेत = प्रतीयेत, तदा = तदैव प्रतिपत्तिकाल एव असति बाधके सर्वं वाक्यं सावधारणं भवति । 'अब्भक्षो वायुभक्षः' इति यथा । वाच्यमेव = अवाच्यतया अवाच्यशब्दवाच्यमेव भवेत्, वाच्यतामेवोपेयादित्यर्थः । तथा चावाच्यमित्युक्तेऽवाच्यशब्दस्यैव वाच्यं समवायसम्बन्धरूपं वस्तु इत्यवाच्यत्वं तस्योच्यमानं विरुध्यत इति ॥ २० ॥

समवायशब्दावाच्यत्ववदवाच्यशब्दस्याप्यवाच्यत्वेऽवाच्यत्वमप्रसिध्यद् वाच्यत्वमेवार्थापत्त्या तस्य पुनराक्षिपतीत्याह—अथाप्यवाच्यमित्येवमिति ।

अयमर्थः—अथापि = अथ च, अवाच्यमित्येवमवाच्यशब्देन वाच्यं = अवाच्यशब्दाभिधेयं तत् समवायसम्बन्धरूपं वस्तु न प्रतीयते । एवं तर्हि यास्य समवायसम्बन्धस्य अवाच्यशब्देन विवक्षिताऽवाच्यत्वावस्था सैवावाच्यशब्दतो नाध्यवसीयते = न प्रतीयत इति समवायशब्दवाच्यत्वमेवास्य समवायसम्बन्धस्य पुनः समायाति । तथा च समवायोऽवाच्य इत्युक्तिविरोध इत्यर्थः ॥२१॥

अथ पारतन्त्र्यात्मनाऽवाच्यः सः, नतु सर्वथाऽवाच्यः । धर्मितया स्वातन्त्र्येण तु समवायशब्दवाच्य एव, तथा च तस्य समवायशब्दवाच्यत्वतदवाच्यत्वयोर्न विरोध इत्याशङ्क्याह—तथान्यथा सर्वथा चेति ।

अयमर्थः—यस्य = समवायस्य, तथा = तेन प्रकारेण, अन्यथा = अन्येन प्रकारेण स्वातन्त्र्यरूपेण, सर्वथा = सर्वेण प्रकारेण अवाच्यत्वमुच्यते । तत्रापि = तादृशोक्तिस्थलेऽपि, सा = प्रागुक्तप्रकारत्रयलक्षणा, अवाच्यत्वस्यावस्थातुरवस्थैव = अवस्थामात्रमेव, तैः शब्दैः = पारतन्त्र्यात्मना समवायो न वाच्यः स्वातन्त्र्येण न वाच्यः = सर्वथा न वाच्य इत्येतैः शब्दैर्न प्रतिषिध्यते । अपि तु तादृशप्रकाररूपावस्थात्रयविशिष्टं वाच्यत्वलक्षणं धर्म्यपि प्रतिषिध्यते । धर्मिप्रतिषेधं विना धर्मप्रतिषेधासंभवादिति कथमवाच्यशब्दस्यायं वाच्यः स्यादित्येका व्याख्या; अपरे त्वियं पूर्वेषां व्याख्या तथान्यथा सर्वथा च यस्य समवायस्यावाच्यत्वमुच्यते तत्रापि = तादृशोक्तिस्थलेऽपि, तैः शब्दैः = पारतन्त्र्यात्मना न वाच्य इत्यादिभिःशब्दैः साऽवस्थैव प्रकारत्रयलक्षणा तावन्न प्रतिषिध्यते, यावदस्यावस्थातुर्वाच्यत्वस्य न प्रतिषेध इति नान्तरीयको = अवश्यंभावी

**तथान्यथा सर्वथा च यस्यावाच्यत्वमुच्यते ।**
**तत्रापि नैव सावस्था तैः शब्दैः प्रतिषिध्यते ।। २२ ।।**

पारतन्त्र्यात्मना न वाच्य इत्यपि प्रकारप्रतिषेधे प्रकारवत एव प्रतिषेधः कृतो भवति। न हि तेनान्येन सर्वेण वा प्रकारेणावाच्य इति प्रकारमात्रस्यावस्थालक्षणस्यैतैः शब्दैः प्रतिषेधः। धर्म्यप्रतिषेधे तदाश्रितधर्मप्रतिषेधानुपपत्तेः। तस्माद् विशिष्टनिषेधेऽपि प्रतिषिद्धमेव वाच्यत्वं समवायस्येति कथमवाच्यशब्दस्यायं वाच्यः स्यादिति चोद्यमेव। यदि वा तथान्यथा इत्यादिना निषेधेऽपि न सैवावस्था निषेद्धुं शक्या यावदवस्थाता न निषिद्ध इति नान्तरीयकोऽस्य निषेधः। शब्दविषयताप्रत्यवमर्शमन्तरेणाकारविशेषः प्रतिषेद्धुं न शक्यत इति शब्दविषयत्वेन तस्य वाच्यत्वोपपत्तेरवाच्यत्वेन विरोध इति पूर्वे व्याचक्षते ।। २२ ।।

अस्य वक्तुरभिप्रेतादर्थादर्थान्तराध्यारोपेण वाक्च्छलस्योत्तरं वक्तुमेतत् सदृशं निदर्शनमाह—

---

अस्य वाच्यत्वस्य प्रतिषेध इति कथमवाच्यशब्दवाच्यत्वं समवायस्येति। अत्र पूर्वस्यां व्याख्यायां वाच्यत्वस्यावस्थया सह प्रतिषेधः, उत्तरव्याख्यायान्तु अवस्थाप्रतिषेधात् प्राक् नान्तरीयकतया तस्य प्रतिषेध इति भेदः।

अयं भावः—पारतन्त्र्यात्मना समवायो न वाच्य इत्यादिभिः शब्दैरवस्थालक्षणस्य प्रकारत्रयस्य प्रतिषेधेऽपि प्रकारवतो वाच्यत्वस्यैव स प्रतिषेधः कृतो भवति।

यतस्तेनान्येन सर्वेण वा प्रकारेण समवायोऽवाच्य इत्येतैः शब्दैः केवलस्य पारतन्त्र्यादिलक्षणस्य प्रकारस्य न प्रतिषेधः, किन्तु तद्विशिष्टस्य वाच्यत्वलक्षणस्य धर्मिणोऽपि प्रतिषेधः, धर्मिप्रतिषेधं विना तदाश्रितधर्मप्रतिषेधानुपपत्तेः। तस्मात् प्रकारत्रयविशिष्टस्य वाच्यत्वस्य निषेधेऽपि विशेष्यतया समवायस्य वाच्यत्वं प्रतिषिद्धमेव भवति इति कथमवाच्यशब्दवाच्यत्वं समवायस्य स्यादिति वैयाकरणस्य चोद्यं सम्यगेव भवति। अथवा तथाऽन्यथा-इत्यादिना निषेधेऽपि न सैव = प्रकारत्रयरूपैव अवस्था निषेद्धुं शक्या। यावदवस्थाता = वाच्यत्वपदार्थः न निषिद्ध इति नान्तरीयकः = मध्येऽवश्यंभावी वाच्यत्वस्य निषेधः। समवाये शब्दविषयत्वस्य प्रत्यवमर्शम् = अनुसंधानम् विना समवायस्य आकारविशेषः = पारतन्त्र्यादिरूपः प्रकारविशेषः प्रतिषेद्धुं न शक्यते।

अभावबुद्धिं प्रति प्रतियोगिबुद्धेरिवानुयोगिबुद्धेरपि कारणत्वात्, इति शब्दविषयत्वेन समवायस्य वाच्यत्वोपपत्तेरवाच्यत्वेन सह विरोध इति पूर्वे हेलाराजाद् व्याचक्षते ।।२२।।

अत्रैकोनविंशतितमेन पद्येन समवायस्यावाच्यत्वं वैयाकरणेनोक्तं, तत्र श्लोकत्रयेण तदुत्तरेण नैयायिकेन वाक्छलमुद्भाव्यावाच्यशब्दवाच्यत्वमुक्तम्। वाक्छललक्षणन्तु—

न हि संशयरूपेऽर्थे शेषत्वेन व्यवस्थिते ।
अव्युदासे स्वरूपस्य संशयोऽन्यः प्रवर्तते ।। २३ ।।

समानधर्मोपलम्भाद् विशेषानवधारणाद् विशेषस्मृतेश्चार्थे संशयिते स्थाण्वादौ स्थाणुर्वा स्यात् पुरुषो वेति यदिदं संशयज्ञानमाजायते तत्र संशयरूपे ज्ञाने संशयितेऽर्थे स्वविषये शेषत्वेन तद्विषयव्यवस्थापनाङ्गत्वेन स्थिते तदुपरि तदैवान्यसंशयज्ञानं नोत्पद्यते, अस्यार्थपरतन्त्रस्यापरित्यक्तपारतन्त्र्यस्वरूपस्य स्वविषयविज्ञानं प्रति विषयभावोपगमविरोधात् । यदि हि स्वविषयस्य संशयरूपस्य ज्ञानस्येदं विषयभाव-

---

वक्तुरभिप्रेतादर्थादर्थान्तराध्यारोपणरूपम् । तथाहि—अत्र समवायः समवायस्वरूपेण समवायशब्दस्य न वाच्य इत्येतद् वक्तुर्विवक्षितम् । अत्र च समवायः केनापि प्रकारेण कस्यापि शब्दस्य न वाच्य इत्यर्थान्तरमध्यारोप्य समवायोऽवाच्यशब्दस्य वाच्य इति विरोधः प्रदर्श्यते इति वाक्छलं भवति । वाक्छलञ्च कथाविघ्नकरत्वात् मध्यस्थकृत-कथकद्वयाभ्युपगतसमयातिवर्तित्वाच्च कस्यामपि कथायां न प्रयोज्यमिति हि कथक-सम्प्रदायः । आसन्ननिग्रहो हि वादी सदुत्तरेऽशक्तः कथाम्भोधौ निमज्जन् जातिनिग्रह-स्थानवत् वाक्छलं समाश्रयन् मध्यस्थेन सदस्यैश्च निगृह्यते । अतोऽस्य नैयायिकोक्तस्य वाक्छलस्योत्तरं वक्तुमेतत् सदृशं निदर्शनम्=दृष्टान्तम्, आह—नहि संशयरूपे अर्थे इति ।

अयमर्थः—संशयरूपे वस्तुनि अर्थे स्वविषये, शेषत्वेन स्वविषयव्यस्थापनाङ्गत्वेन व्यवस्थिते सति अत्रार्थपदस्य मध्यस्थस्य काकाक्षिन्यायेन पूर्वोत्तराभ्यामावृत्त्या सम्बन्धः। आवृत्त्यभावे तु शेषत्वेन व्यवस्थायाः अर्थविषयकत्वमाक्षेपरूपया अर्थापत्त्या सिध्यति । तथा च संशयरूपेऽर्थे अभिधेये वस्तुनि वा अर्थे शेषत्वेन व्यवस्थिते इति योजना । स्वरूपस्य संशयस्वरूपस्य अव्युदासे अनिषेधे च, अन्यः संशयः पूर्वसंशयविषयको नहि प्रवर्त्तते । अन्यस्य संशयस्य तदानीमननुभूयमानत्वात्, पूर्वस्य संशयस्य च स्वविषयकत्वा-भावात् । तथा च यथा संशयः स्वमगोचरयन् स्वविषयं गोचरयति तथा अवाच्यशब्दः आत्मानमवाच्यत्वेनागोचरयन् स्वविषयीकृतं स्वस्वरूपंसमवायमेवाभिधापयति इति फलितम् । विशदीकरिष्यते चैतत् पद्यव्याख्यायामेवान्ते ।

अयं भावः-संशयं प्रति अधिष्ठानसामान्यज्ञानम्, अधिष्ठानगतस्य विशेषधर्मस्या-नवधारणं=निश्चयाभावः, आरोप्यगतस्य विशेष्यधर्मस्य स्मृतिश्च कारणम् । अनया कारणसामग्र्या संशयिते स्थाण्वादावर्थे यदिदं स्थाणुर्वा पुरुषो वा इति सशयज्ञानं जायते । तत्र संशयरूपे ज्ञाने स्वगोचरे संशयितेऽर्थे शेषत्वेन स्वविषयव्यवस्थापनाङ्गत्वेन विशेषरूपेणावस्थिते सति तदुपरि=तादृशसंशयजन्मोत्तरम्, तदैव=तस्य संशयस्य स्थितिकाल एव अन्यत् संशयज्ञानं नोत्पद्यते । अस्य हि=पूर्वसंशयस्य, स्वविषयव्यवस्था-

मुपेयात्, तदा स्वरूपेणैव संदिग्धत्वादलब्धप्रतिष्ठं स्वस्मिन् बाह्यविमर्शस्वभावे संशयात्मनि स्वरूपे नावतिष्ठेत। तथा च बाह्यस्यार्थस्य दोलायमानत्वं न परिच्छिद्यते, युगपद्विषयविषयिभावस्यानुपपत्तेः। तेनैव चाथप्रवृत्तेन संशयेन विषयवत् स्वरूपस्यापि संशय्यमानता(त्वा)योगो व्यापारस्यैकत्वात्। तदेवं यथा संशय आत्मरूपं वर्जयन् विषयं सन्देहयति तथा अवाच्यशब्द आत्मानं वर्जयन् विषयीकृतं वाचयतीति साधर्म्यम्। संशयरूपेऽर्थे संशयाभिधाने ज्ञानवस्तुनि वेत्यर्थः। शेषत्वेन व्यवस्थितिरत्रार्थाद् वस्तुविषया ॥ २३ ॥

उदाहरणान्तरमप्याह—

पनाङ्गत्वेन स्वार्थंपरतन्त्रस्य तत्पारतन्त्र्यपरित्यागं विना स्वविषयकं विज्ञानान्तरं प्रति विषयत्वप्राप्तिविरोधात्। एकस्यैकदैवाङ्गाङ्गित्वयोर्विरोधात्। 'युगपद् ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इत्याप्ताभ्युपगमविरोधाच्च। यदि स्वविषयकस्य संशयरूपस्य ज्ञानान्तरस्येदं संशयज्ञानं विषयत्वमुपेयात् तदा स्वरूपेणैव संदिग्धत्वात् स्वरूपेऽप्रतिष्ठितं बाह्यार्थंविमर्शस्वभावे = बाह्यार्थविकल्पात्मके संशयात्मनि स्वरूपे नावतिष्ठेत। प्रथमसंशयस्य द्वितीयसंशयगोचरत्वेन विकल्परूपत्वानिश्चयात्। तथा च बाह्यार्थस्य दोलायमानत्वम् = अनवस्थितत्वम्, न परिच्छिद्येत = न विज्ञायेत, एकस्यैव युगपद् विषयविषयिभावस्य विरोधादनुपपत्तेः। यदि तु स एव संशयः स्वार्थे = स्वविषये प्रवृत्तः स्वविषयवत् स्वस्वरूपमपि गोचरयतीत्युच्यते तदपि न साम्प्रतम्, व्यापारस्यैकत्वेन विषयस्वरूपयोरूभयोर्गोचरीकरणायोगात्। तदेवं संशयो न स्वगोचरो नाप्यन्यसंशयगोचरः। तथा च यथा संशयः स्वस्वरूपं वर्जयन् स्वं विषयं विकल्पयति तथा अवाच्यशब्दः आत्मानं = स्वस्वरूपं, वर्जयन् = स्वरूपस्य स्ववाच्यतामनिषेधन् स्वेन वाच्यतया विषयीकृतं स्वस्वरूपं स्वार्थं वाचयति = अभिधापयति इति रीत्या स्वरूपपरिवर्जनमात्रेण साधर्म्यम्। अत्रावाच्यशब्दः प्रयोजककर्त्ता, स्वस्वरूपं प्रयोज्यकर्त्तृ, तदेवं सम्बन्धत्वेन रूपेण समवायादि शब्दवाच्यत्वाभावोऽवाच्यत्वेन रूपेणावाच्यशब्दवाच्यत्वञ्च समवायस्य सिद्धम् ॥ २३ ॥

पूर्वोक्तस्य वाक्छलस्योत्तरं वक्तुमुदाहरणान्तरमप्याह—यदा च निर्णयज्ञाने इति।

अयमर्थः—यदा च विशेषावधारणरूपे निर्णीयमानार्थविषये निर्णयज्ञाने सति तद्विषयकनिर्णयत्वेन स एवान्यो वा निर्णयः प्रक्रम्यते = प्रवृत्त इति विवक्ष्यते। अयमर्थो लक्षणया, प्रक्रमेः प्रारम्भार्थकत्वात्। प्रक्रान्तोऽर्थो न गम्यत इत्यग्रिमकारिकायां यथा, तदा ज्ञानं निर्णयरूपं स्वस्यान्यस्य वा निर्णयस्य विषयत्वात् स्वधर्मे विषयित्वे नावतिष्ठते। नावस्थितं भवति। स्वधर्माद् विषयित्वादपक्रान्तं भवतीत्यर्थः। तथा च यथा निर्णयस्य तदैव निर्णयत्वं नास्ति तथा वाचकस्य तदैव वाच्यत्वं नास्ति इत्यवाच्यशब्दोऽर्थप्रतिपादनावस्थ आत्मन इव स्वार्थस्य वाच्यतां न निषेधति। स्वात्मनि क्रियाविरोधात्। तदानीं तद् वाच्यतानिषेधकस्य शब्दान्तरस्याभावाच्चवाच्यशब्दस्याभि

**यदा च निर्णयज्ञाने निर्णयत्वेन निर्णयः ।**
**प्रक्रम्यते तदा ज्ञानं स्वधर्मे नावतिष्ठते ।। २४ ।।**

**विशेषावधारणरूपे निर्णीयमानार्थविषये** निर्णयज्ञाने **तदैवार्थपरिच्छेदव्यापृतेऽपरः स्वगतो** निर्णयो न **प्रवर्तते । ज्ञानस्य ह्यर्थपारतन्त्र्यं स्वधर्मः । ततस्तु निष्कृष्यस्वरूपविचारे स्वधर्माद् विप्रकृष्येत, स्वातन्त्र्येण विषयभानापत्तेः । अत एव ज्ञानान्तरग्राह्यत्वं न (ह्यं तन्न) भवति ज्ञानमिति प्रागेव प्रतिपादितमिति । ज्ञानान्तरविषयत्वे विषयित्वत्यागात् स्वधर्मस्य हानिः । तदेवमन्यत्र व्यापृतस्य तदैव स्वविषयव्यापाराभावाद् यथा ज्ञानस्य ज्ञेयत्वं नास्त्येकस्यां संवित्तौ तथा वाचकस्य वाच्यत्वं नास्तीत्यवाच्यशब्दः प्रतिपादनावस्थो नात्मन एव (इव) वाच्यतामर्थस्य निषेधति, स्वात्मनि क्रियाविरोधात् । न च शब्दान्तरं तदानीं तद्वाच्यतानिषेधकमस्तीत्यवाच्यशब्दस्याभिधाविषयभावमत्रोपगच्छत्येवार्थः । तथा हि शब्दान्तरस्य समवायशब्दस्य समवाय ( सम्बन्ध ) स्वरूपेण न वाच्य इत्येतद्वक्तुर्विवक्षितं प्रतीयत एव ।। २४ ।।**

**तद्यथा—**

---

धेयत्वमुपैत्येव समवायसम्बन्धः । समवायस्तु समवायशब्दस्य वाच्यताम् इति वाच्यत्वावाच्यत्वयोर्द्विष्ठत्वान्न विरोध इति ।

अयं भावः—विशेषावधारणरूपं निर्णीयमानार्थविषयकं निर्णयज्ञानं यदार्थपरिच्छेदे व्यापृतं तदैव स एवापरो वा तद्विषयको निर्णयो न प्रवर्तते । ज्ञानस्य हि विषयित्वेन स्वविषयार्थपारतन्त्र्यं स्वधर्मः ततस्तु निष्कृष्य = अर्थपारतन्त्र्यात्तु स्वधर्मात् पृथक्कृत्य, स्वरूपविचारे = स्वविषयके निर्णयेऽभ्युपगम्यमाने सति, स्वधर्मात् पारतन्त्र्यलक्षणाद् विप्रकृष्येत = दूरीक्रियेत । विषयत्वेन स्वातन्त्र्यापत्तेः । अत एव तदैव ज्ञानान्तरग्राह्यं तन्न भवति ज्ञानमिति प्रागेव प्रतिपादितमिति । तदैव ज्ञानान्तरविषयत्वे विषयित्वत्यागात् स्वधर्मस्य = अर्थपारतन्त्र्यस्य हानिः । तदेवमन्यत्र अर्थपरिच्छेदे, व्यापृतस्य ज्ञानस्य तदैव स्वविषयकपरिच्छेदरूपव्यापारभावाद् यथा ज्ञानस्य ज्ञेयत्वं नास्ति एकस्मिन् ज्ञाने तथा वाचकस्यावाच्यशब्दस्य वाचकत्वावस्थायामेव वाच्यत्वं नास्ति इत्यवाच्यशब्दोऽर्थप्रतिपादनावस्थ आत्मन इव स्वार्थस्य वाच्यतां न निषेधति, अवाच्यशब्दवाच्यत्वाभावात्, स्वात्मनि क्रियाविरोधात् । शब्दान्तरञ्च तद्वाच्यतानिषेधकं तदानीं नास्ति, इत्यवाच्यशब्दस्याभिधाविषयत्वमुपगच्छत्येवात्र समवायसम्बन्धरूपोऽर्थः । तथाहि—समवायसम्बन्धोऽवाच्यशब्दवाच्योऽपि शब्दान्तरस्य समवायसम्बन्धस्वरूपेण न वाच्य इत्येतद्वक्तुंविवक्षितं प्रतीयत एवेति ।।२४।।

विवक्षितार्थदार्ढ्यायान्यदप्युदाहरणमाह—सर्वं मिथ्येति ।

अयमर्थः—'सर्वं मिथ्या ब्रवीमि' इति वाक्ये एतद् वाक्यमपि न मिथ्यात्वेन

**सर्वं मिथ्या ब्रवीमिति नैतद्वाक्यं विवक्ष्यते ।**
**तस्य मिथ्याभिधाने हि प्रक्रान्तोऽर्थो न गम्यते ॥ २५ ॥**

**स्ववाक्यानामसत्यार्थताप्रतिपादनाय** सर्वम् अहं मिथ्या ब्रवीमि **इत्युक्तेऽस्यापि वाक्यत्वान् मिथ्यार्थता न प्रसञ्जनीया । एवं हि** प्रक्रान्तं **विवक्षितं स्ववाक्यान्तराणां मिथ्यात्वं न प्रतीयेत । अथ सत्यपि मिथ्यार्थत्वे प्रतिपादकत्वमस्य वाक्यस्य, वाक्यान्तराणामपि तथैव स्यादिति तेषां मिथ्यार्थप्रतिपादनं प्रक्रान्तमफलमित्यपरोऽत्रार्थः ॥ २५ ॥**

**अत्रैव युक्तिमाह—**

---

विवक्ष्यते । हि = यतः, तस्यापि वाक्यस्य मिथ्याभिधाने = मिथ्यात्वोक्तौ प्रक्रान्तोऽर्थः = विवक्षितोऽर्थः, वाक्यान्तराणां मिथ्यात्वं न गम्यते = न प्रतीयते । अत्र प्रक्रान्तपदस्य विवक्षिते लक्षणा । प्रक्रमेः प्रारम्भार्थकत्वात् । हेलाराजेन तु अस्य पद्यस्यापरापि व्याख्या दर्शिता । तथाहि—''अथ सत्यपि मिथ्यार्थत्वे प्रतिपादकत्वमस्य वाक्यस्य, वाक्यान्तराणामपि तथैव स्यादिति तेषां मिथ्यार्थप्रतिपादनं प्रक्रान्तमफलमित्यपरोऽत्रार्थः ।'' इति ।

अस्यायं भावः—यद्युच्यते—'सर्वं मिथ्या ब्रबीमि इति वाक्यघटकसर्वपदार्थान्तरगततया अस्य वाक्यस्य मिथ्यार्थत्वे सत्यपि अस्य वाक्यस्य वाक्यान्तरनिष्ठमिथ्यार्थत्वप्रतिपादकत्वेन सत्यार्थप्रतिपादकत्वमस्त्येवेति । तदा वाक्यान्तराणामपि तथैव मिथ्यार्थत्वेऽपि सत्यार्थप्रतिपादकत्वं स्यादिति तेषां मिथ्यार्थत्वप्रतिपादनं प्रक्रान्तं = प्रवृत्तम् अफलमित्यपरोऽत्रार्थ इति ।

वस्तुतस्तु नेदं युक्तिसंगतम् । तथाहि–वाक्यान्तराणां मिथ्यार्थकानां मिथ्यार्थकत्वप्रतिपादनाद् अस्य वाक्यस्य सत्यार्थप्रतिपादकत्वसंभवेऽपि वाक्यान्तराणां घटाद्यभावेऽपि घटादिसत्त्वप्रतिपादकानां कथं सत्यार्थप्रतिपादकत्वं संभवतीति । अस्मिन् हेलाराजवाक्ये प्रतिपादकत्वम् इत्यस्यादौ सत्यार्थेति शेषः ।।२५।।

पूर्वोक्तार्थे निदर्शनान्युक्त्वा युक्तिमप्याह–न च वाचकरूपेणेति ।

अयमर्थः—अन्यवाचकरूपेण प्रवृत्तस्य शब्दस्य तदानीमेव स्ववाच्यताऽन्यशब्दवाच्यता वा नास्ति । अत्रैवार्थे सामान्यानुमानप्रयोगमाहोत्तरार्द्धेन–प्रतिपाद्यमिति । येनान्यत् प्रतिपाद्यते तत् तत्र प्रतिपाद्यं न भवति । कर्तृत्वकर्मत्वशक्त्योर्यौगपद्यविरोधात् । अयमत्र सामान्यानुमानप्रयोगः । अन्य प्रतिपादने प्रवृत्तम्, तदानीमेव स्वस्यान्यस्य वा प्रतिपाद्यं न भवति, कर्तृत्वशक्त्या व्याप्रियमाणस्य तदानीमेव कर्मत्वशक्तिप्रयोज्यव्यापाराश्रयत्वानर्हत्वात् । यथा संशयज्ञानं निश्चयज्ञानं वेति ।

**न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता ।**
**प्रतिपाद्यं न तत्तत्र येनान्यत् प्रतिपाद्यते ॥ २६ ॥**

**करणसन्निवेशिनस्तदैवाभिधेयता विरुद्धा, अन्यप्रतिपादनप्रवृत्तस्य तदैव प्रत्युदावृत्यात्मनि व्यापाराभावात् । वस्तुस्वभावोऽयं यत् कर्तृशक्तियुक्तं न तत् कर्मशक्तेरधिकरणं तदैव भवति, स्वातन्त्र्यपारतन्त्र्ययोरेकदैकत्र विरोधादित्यर्थः । प्रतिपाद्यं न तत्तत्र इत्यादिना सर्वनिदर्शनसाध्यमन्ते निगमितवान् । यत् प्रतिपादकम् न तत् प्रतिपाद्यम् । यथा संशयज्ञानं निश्चयज्ञानं वा । प्रतिपादकं चाभिधानमतो नैतत् प्रतिपाद्यमिति प्रयोगः ॥ २६ ॥**

**ननु मा भूद् वाचकं वाच्यम्, विरोधात् । आत्मकर्तृकवाक्यसामान्यानुप्रवेशात् स्वस्य मिथ्यात्मता केन वार्यत इत्येतदाशङ्क्यैतदेव निदर्शनान्तरेणोपपादयति—**

---

अयंभावः—करणसन्निवेशिनः = करणेनाभिव्यज्यमानस्य करणेन जन्यमानस्य करणेन गृह्यमाणस्य वा, तदैव = अन्यप्रतिपादकत्वदशायामेव, अभिधेयता = स्ववाच्यता, अन्यशब्दवाच्यता वा विरुद्धा । अन्यप्रतिपादने प्रवृत्तस्य तदैव प्रत्युदावृत्य = ततः परावृत्य आत्मनि प्रतिपादनरूपव्यापारासंभवात् । वस्तुस्वभावोऽयं यत् कर्तृशक्तियुक्तं न तत् कर्मशक्तेरधिकरणं तदैव भवति, स्वातन्त्र्यपारतन्त्र्ययोरेकदा एकत्र विरोधात् । स्वातन्त्र्यं हि कर्तृत्वशक्तिः, स्वतन्त्रः कर्ता इति पाणिनिसूत्रात् । पारतन्त्र्यञ्च कर्मत्वादिशक्तीनाम् । तासां सर्वासां कर्तृशक्तिप्रयोज्यत्वादीति । प्रतिपाद्यं न तत् तत्र इत्यादि उत्तरार्द्धन्तु पूर्वोक्तसर्वनिदर्शनसाध्यमन्ते निगमनरूपम् । तथा चैवं तत्प्रयोगः । यत्प्रतिपादकं न तत् प्रतिपाद्यम् । यथा संशयज्ञानं निश्चयज्ञानं वा पूर्वमुक्तम् । प्रतिपादकञ्चाभिधानम् = वाचकम् अतो नैतत् तदानीं स्वस्यान्यस्य वा प्रतिपाद्यमिति ॥ २६ ॥

ननु माभूद् वाचकं वाच्यम्, विरोधात् । अतोऽवाच्यशब्दः प्रतिपादनावस्थ आत्मन इव समवायसम्बन्धरूपस्यार्थस्य वाच्यतां मा प्रतिषेधतु किन्तु सर्वं मिथ्या ब्रवीमि' इति वाक्यस्य सर्वपदबलेन आत्मकर्तृकाद् वाक्यसामान्यानुप्रवेशाद् मिथ्यार्थकत्वं केन वारयितुं शक्यमित्येतदाशङ्क्यान्येन दृष्टान्तेनैतदेवापपादयति—असाधिका प्रतिज्ञेति इति ।

अयमर्थः—पञ्चावयववाक्यान्तर्गता पक्षे साध्यनिर्देशरूपा प्रतिज्ञा, असाधिका = साध्यसाधिका न भवति, साधनाङ्गं न भवतीति यावत् । इति सौगतेन प्रतिज्ञारूपेणोक्ते सति इयमेव सौगतस्य प्रतिज्ञा प्रतिज्ञात्वाविशेषेऽपि असाधिका न भवति । प्रतिज्ञापदेन च नाभिधीयते । अस्या अप्यसाधकत्वे प्रतिज्ञान्तराणामसाधकत्वरूपस्य विवक्षितार्थस्यासिद्धेः । इदं यथा तथाऽस्य सौगतीयस्य प्रतिज्ञावाक्यस्य कश्चिद् धर्मोऽपि अनृतत्वरूपो नैव प्रतीयते ।

अयंभावः—साध्यनिर्देशरूपा प्रतिज्ञा साध्यसाधनाङ्गं न भवति इति गौतमीयं

**असाधिका प्रतिज्ञेति नेयमेवाभिधीयते ।**
**यथा तथास्य धर्मोऽपि नैव कश्चित् प्रतीयते ।। २७ ।।**

**साध्यनिर्देशः प्रतिज्ञा साधनाङ्गं न भवतीत्युक्ते नेयमेव सौगतस्य प्रतिज्ञात्वाविशेषात् तथा भवति, अनर्थकत्वे विवक्षितार्थासिद्धेः । अपि त्वेतद्वर्जं प्रतिज्ञान्तराणां तत्ता । एवं सर्वं मिथ्या ब्रवीमित्यस्यापि वाक्यस्यायथार्थताप्रतिपादने क्रियमाणे धर्मोऽनृतत्वं गम्यते, तथाभावे विवक्षितार्थप्रतिपादनाभावे प्रयोगवैफल्यात् ।।२७।।**

**एवमवाच्यशब्देऽपि द्रष्टव्यम् । उपसंहरति—**

---

प्रति सौगतेनोक्ते इयं सौगतस्य प्रतिज्ञात्वसामान्यात् तथा=असाधिका न भवति । अस्याः प्रतिज्ञाया अपि अनर्थकत्वे=असाधकत्वे विवक्षितार्थस्य=प्रतिज्ञान्तराणामसाधकत्वस्यासिद्धेः अपितु इमां सौगतीयां प्रतिज्ञां विहाय प्रतिज्ञान्तराणां तत्ता=असाधकता । एवं सर्वं मिथ्या ब्रवीमि इत्यनेन वाक्येन सर्वेषां स्ववाक्यानामयथार्थताप्रतिपादने क्रियमाणेऽस्यापि वाक्यस्य स्वकीयसर्ववाक्यान्तर्गतस्य धर्मोऽनृतत्वं न गम्यते, अस्यापि वाक्यस्यानृतत्वे हि स्ववाक्यान्तराणां मिथ्यात्वरूपस्य विवक्षितार्थस्य प्रतिपादनाभावे एतद्वाक्यप्रयोगवैफल्यादिति । एवमवाच्यशब्देऽपि द्रष्टव्यम् । तथाहि—अवाच्यशब्दोऽपि स्वस्वरूपस्य स्वार्थस्य च वाच्यतां न निषेधति । समवायसम्बन्धस्य समवायशब्दवाच्यतां तु प्रतिषेधत्येवेति ।। २७ ।।

उपक्रान्तमर्थमुपसंहरति तद्विषयकनिश्चयद्रढीकरणाय व्यापारस्यापरो यस्मादिति ।

अयमर्थः—यस्मात् कारणात् समवायसम्बन्धस्य समवायशब्दवाच्यता निषेधलक्षणस्वार्थप्रतिपादने अवाच्यशब्दस्य यो व्यापारोऽभिधारूपस्तस्य निरुक्तस्वार्थप्रतिपादनादन्यो व्यापारः कश्चन वाच्यत्वनिषेधरूपस्वार्थस्यापि वाच्यत्वनिषेधरूपस्तदानीं नास्ति, वाच्यत्वनिषेधस्यापि वाच्यत्वनिषेधे समवायसम्बन्धे समवायशब्दवाच्यत्वनिषेधस्यापि विवक्षितार्थस्यासिद्ध्या विरोधात् । किञ्च तस्यापि व्यापारान्तरस्य निर्निमित्तव्यापारान्तराभ्युपगमेऽनवस्था स्यात् । किञ्च यद्यवाच्यशब्दार्थस्यापि अवाच्यशब्दविषयभावनिषेधाय व्यापारान्तरं स्यात् तदा तस्यापि व्यापारान्तरस्य स्वविषयेप्रवृत्तिनिषेधाय व्यापारान्तरं तदैव कल्पेतेत्यनवस्थापत्तेरप्रतिपत्तिः स्यादिति ।

तस्मात् न केवलमवाच्यशब्दार्थस्य वाच्यतायामेव किन्तु सर्वत्र=सम्बन्धेऽपि विरोधमनवस्थां वानाश्रयेत्, विरोधेऽनवस्थायां वा शब्दार्थाप्रतिपत्तेः । तथाहि—अवाच्यशब्दार्थस्यापि अवाच्यतायां विरोधो अनवस्था चोक्ता । सम्बन्धेऽपि सम्बन्धस्य सम्बन्धिभ्यां सहान्यस्य सम्बन्धस्याभावे तयोरपि सम्बन्धिनोः शब्दार्थयोः सम्बन्धो न सिद्ध्येत् । सम्बन्धस्य सम्बन्धान्तरकल्पने चानवस्था इत्येषाऽनवस्था नाश्रयित्व्या ।

**व्यापारस्यापरो यस्मान्न व्यापारोऽस्ति कश्चन।**
**विरोधमनवस्थां वा तस्मात् सर्वत्र नाश्रयेत् ॥ २८ ॥**

**अवाच्यशब्दस्य स्वार्थप्रतिपादने यो व्यापारोऽभिधालक्षणस्तस्यान्यो व्यापारः स्वविषयस्तदानीमेव नास्ति येनैकेन व्यापारेण शब्दान्तराभिधेयतां निषेधत्यपरेणात्मनोऽप्यभिधेयतामित्यवाच्यशब्दस्याप्यसावर्थो न वाच्यः स्यादिति विवक्षितं शब्दान्तराणामप्यवाच्यत्वं न प्रतीयेतेति विरोधः स्यात्। निर्निमित्तव्यापारान्तराभ्युपगमे चानवस्था स्यात्। तथा हि—यद्यवाच्यशब्द( ब्दार्थ ) स्यापि विषयभावनिषेधाय व्यापारान्तरं सम्भवेत् तदा तस्यापि व्यापारान्तरस्य स्वविषये प्रवृत्तिनिषेधाय व्यापारान्तरं तदैवेत्यनवस्थानादप्रतिपत्तिः स्यादित्यर्थः। व्यापारान्तराभावात्तु नैष प्रसङ्गः। सर्वत्र इति न केवलं वाच्यतायामेव, अपि तु सम्बन्धेऽपि, सम्बन्धस्य सम्बन्धिभ्यां सहान्यस्य सम्बन्धस्याभावे तयोरपि सम्बन्धिनोः शब्दार्थयोः सम्बन्धो मा भूत्। सम्बन्धान्तरकल्पने वानवस्थेत्येषानवस्था नाश्रयितव्या। सम्बन्धस्य**

---

सम्बन्धस्य स्वयं सम्बन्धरूपत्वादन्यस्योपश्लेषकस्यानपेक्षणादिति। अथवा सर्वत्र इत्यस्य 'सर्वं मिथ्या ब्रवीमि' 'असाधिकाप्रतिज्ञा' इत्यादावित्यर्थः। अत्र वाक्ये यथा न स्वविषयस्य मिथ्यात्वम्, यथा वा अस्याः प्रतिज्ञायाः न स्वविषये असाधकत्वं तथा अवाच्यशब्दस्यापि न स्वविषये वाच्यतानिषेधकत्वं विरोधादनवस्थानाद् वेति।

अयं भावः—अवाच्यशब्दस्य स्वार्थप्रतिपादने यो व्यापारो अभिधालक्षणः समवायसम्बन्धस्य समवायशब्दाभिधेयतानिषेधविषयकस्तस्यान्यो व्यापारः स्वविषयः= अवाच्यरूपस्यार्थस्यावाच्यशब्दाभिधेयतानिषेधविषयकः, तदानीमेव नास्ति. येनैकेन व्यापारेण समवायसम्बन्धस्य समवायशब्दाभिधेयतां निषेधति अपरेण व्यापारेण आत्मनोऽपि = अवाच्यरूपस्यार्थस्यापि अवाच्यशब्दाभिधेयतां निषेधति, यद्येवं स्यात्तदा अवाच्यशब्दस्यापि असावर्थः = समवायसम्बन्धानभिधानलक्षणोऽर्थः, न वाच्यः स्यादिति विविक्षितं समवायसम्बन्धस्य समवायशब्दवाच्यत्वमपि न प्रतीयेतेति विरोधः स्यात्। यदि तु प्रागुक्तस्याभिधालक्षणस्य व्यापारस्य निर्निमित्तमेव व्यापारान्तरमपि प्रागुक्तरीत्या विरोधसत्त्वेऽपि स्वीक्रियते तदाऽनवस्था स्यात्।

तथाहि—यदि अवाच्यशब्दार्थस्यापि अवाच्यशब्दविषयत्वनिषेधाय व्यापारान्तरं निर्निमित्तमेव संभवेत् तदा तस्यापि व्यापारान्तरस्य स्वविषये प्रवृत्तिनिषेधाय व्यापारान्तरं तदैव संभवेदितिरीत्या अनवस्थापत्तेः समवायसम्बन्धः समवायशब्दस्यावाच्य इति वाक्याद् वाक्यार्थाप्रतिपत्तिः स्यात्। यदि तु व्यापारान्तरं न स्वीक्रियते तदा नैषोऽनवस्थालक्षणदोषप्रसङ्ग इति। सर्वत्र इति कारिकायामुक्तम्।

तस्यायं भावः—न केवलं वाच्यतायामेव प्रागुक्तरीत्या विरोधानवस्थयोरनाश्रयणं किन्तु संयोगसमवायादिलक्षणे सम्बन्धेऽपि। तथाहि—सम्बन्धिभ्यां सह सम्बन्धस्य

**स्वयं सम्बन्धरूपत्वादन्यस्योपश्लेषकस्यायोगादित्यर्थः। अथवा सर्वत्र इति सर्वं मिथ्या ब्रवीमि, असाधिका प्रतिज्ञेत्यादावित्यर्थः।**

**तदेवं परप्रसिद्धसंयोगसमवायलक्षणसम्बन्धाश्रयेण शब्दार्थप्रविभागेऽतिव्याप्तिरदृष्टवशात् परिहृता। अव्याप्तिरपि साक्षात् समवायस्यावाच्यत्वे कल्पितेन रूपेण सम्बन्धितया वाच्यत्वे नास्त्येव, तटस्थस्य समवायशब्देनामुखीकृतस्य समवायस्यावाच्यत्वविधाने विरोधभावादिति प्रौढिवादितया शास्त्रान्तरसिद्धसम्बन्धाश्रयेणापि शब्दार्थनियमो व्यवस्थापितः ॥ २८ ॥**

**इदानीं स्वनिकायसिद्धं सम्बन्धमुपपादयितुमाह—**

---

सम्बन्धको यदि अन्यः सम्बन्धो न स्वीक्रियते तदा शब्दार्थयोः सम्बन्धिनोः प्रथमोऽपि सम्बन्धस्तथैव न स्यात्, सम्बन्धान्तराभ्युपगमे तु उत्तरोत्तरसम्बन्धाभ्युपगमेऽनवस्था इति रीत्या सम्बन्धान्तराभ्युपगमप्रयुक्ता अनवस्था नाश्रयितव्या। किन्तु एक एव सम्बन्धिनोः सम्बन्धः स्वीकर्त्तव्यः। सम्बन्धस्य स्वयं सम्बन्धरूपत्वादन्यस्योपश्लेषकस्य = संयोजकस्य अयोगात् = अनुपपत्तेः।

अथवा सर्वत्रेति 'सर्वं मिथ्या ब्रवीमि' 'असाधिका प्रतिज्ञा' इत्यादावित्यर्थः। अनयोर्वाक्ययोर्यथा न स्वस्वार्थविषयकत्वं किन्तु परार्थविषयकत्वमेव तथा अवाच्यशब्दस्यापि न स्वार्थवाच्यतानिषेधकत्वं किन्तु शब्दान्तरवाच्यतानिषेधकत्वमेवेति। तदेवं नैयायिकादिप्रसिद्धसंयोगसमवायलक्षणसम्बन्धाश्रयेण शब्दार्थप्रविभागेऽतिव्याप्तिरदृष्टवशात् परिहृता।

तथाहि—तत्तच्छब्दस्य तत्तदर्थेन सह संयोगः समवायो वा सम्बन्ध इति स्वीकारे सर्वैः शब्दैः सर्वोऽप्यर्थः प्रतीयेत इति रीत्या अतिव्याप्तिः स्यात्, संयोगसमवाययोः सर्वत्राविशेषात्। अदृष्टवशात्तु कस्यचिदेव शब्दस्य केनचिदर्थेन सह संयोगः समवायो वा इति परिहारः। यदि तु संयोगसमवायान्यतरलक्षणसम्बन्धाविशेषेऽप्यर्थान्तरस्य न वाच्यत्वं तदा स्वार्थस्यापि न वाच्यत्वमित्यव्याप्तिः स्यात्, साऽप्यदृष्टवशादेव अतिव्याप्तिवत् परिहृता। यदि तु समवायसम्बन्धस्य न समवायशब्दवाच्यत्वम्, नापि घटादिशब्दवाच्यत्वमिति रीत्या अवाच्यस्य तस्य क्वचिदपि वृत्त्यानुपस्थितत्वान्न सम्बन्धिनोः संयोजकतया वाक्यार्थबोधगोचरत्वमिति रीत्या स्वार्थस्य स्वशब्दतोऽबोधे अव्याप्तिरुच्यते तदापि साक्षात् = समवायसम्बन्धत्वेन रूपेण समवायसम्बन्धस्य समवायशब्दावाच्यत्वम्, कल्पितेन तु रूपेण = समवायत्वेन रूपेण समवायशब्दसम्बन्धितया वाच्यत्वमिति नास्ति अव्याप्तिः। यदि तु तटस्थस्य = शब्दार्थयोः सम्बन्धिनोः संयोजने निरपेक्षस्य समवायशब्देन आमुखीकृतस्य = वाच्यतया श्रोतुरभिमुखीकृतस्य समवायस्य समवायत्वेन रूपेणापि समवायशब्दावाच्यत्वमुच्यते तदा प्रतीतिविरोधः, समवायशब्दात् समवायत्वेन रूपेण समवायप्रतीतेरनुभवसिद्धत्वादिति रीत्या प्रौढवादितया शास्त्रान्तरसिद्धसम्बन्धाश्रयेणापि शब्दार्थनियम एतावता सन्दर्भेण व्यवस्थापित इति ॥ २८ ॥

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ २९ ॥**

**समवायादिनिमित्तानपेक्षयैवोच्चरितमात्राच्छब्दादर्थप्रत्ययोत्पत्तेरकृत्रिमा शक्तिरवसीयते । अर्थमात्रेण हि शब्दमात्रस्यावियोगमप्रवृत्तसंकेता अपि प्रतिपद्यन्ते । तथा च योग्यता स्वाभाविकी सिद्धा, संकेतस्तु तामेव द्योतयति । तद्यथा चक्षुरादीनां रूपादिविषये पुरुषप्रयत्नानपेक्षा ग्राहकता । न हि यत्नेनापि रूपे रसननिवेशः शक्यक्रियः । एवं गवार्थे घटशब्दनिवेशोऽसाधुः । तथा हि भाष्यम्—**

**"यो हि गामश्व इति ब्रूयान्न जातुचित् सम्प्रत्ययः स्यात्" इति ।**

(म. भा. सू. १।२।६४)

---

इदानीं स्वगृहसिद्धं शब्दार्थयोराध्यासिकतादात्म्यरूपं सम्बन्धमुपपादयितुमाह—इन्द्रियाणामिति ।

अयमर्थः—यथा इन्द्रियाणां चक्षुरादीनां स्वविषयेषु रूपादिषु अनादिर्योग्यतैव सम्बन्धः, तथा अर्थैः सह शब्दानामनादिर्योग्यतैव सम्बन्धः । सा चान्तत आध्यासिकतादात्म्यरूपे सम्बन्ध एव पर्यवस्तीति ।

अयं भावः—अस्य शब्दस्यानेनार्थेन सह संयोगः समवायो वा इत्यादिज्ञानरूपस्य अर्थप्रत्ययनिमित्तत्वेनाभिमतस्याभावेऽपि उच्चरितमात्रात् शब्दादर्थप्रत्ययोत्पत्तेः शब्दस्यार्थे अकृत्रिमा=स्वाभाविकी काचित् शक्तिरवसीयते । अर्थमात्रेण हि शब्दमात्रस्य न कदाचिदपि वियोग इति अप्रवृत्तसंकेता अपि=वृद्धव्यवहाररूपयाप्रवृत्त्या अगृहीतसंकेता अपि प्रतिपद्यन्ते । वृद्धव्यवहारेण तु शब्दविशेषस्यार्थविशेषे संकेतोऽवधार्यते । तथा च शब्दस्यार्थे योग्यता स्वाभाविकी सिद्धा, संकेतस्तु वृद्धव्यवहारेण गृहीतस्तामेव योग्यतां द्योतयति । तद्यथा—चक्षुरादीनां रूपादिविषये पुरुषप्रयत्नानपेक्षा=स्वभाविकी ग्राहकता । नहि यत्नसहस्रेणापि रूपे रसनेन्द्रियनिवेशनं कर्तुम् शक्यम् । एवं गोरूपेऽर्थे घटशब्दनिवेशनमपि कर्त्तुमशक्यत्वादसाधु ।

तथा हि भाष्यम्–"यो हि गामश्व इति ब्रूयान्न जातुचित् सम्प्रत्ययः स्यात्" इति ।
(म०भा०सू०१।२।६४)

यत्र तु प्रसिद्धार्थकस्य घटादिशब्दस्य स्वार्थादन्यत्र स्वपुत्रादौ संकेतः क्रियते, घटशब्दात् मत्पुत्रो बोद्धव्य' इति तत्र घटशब्दो न वाचकशक्तिपुरस्कारेण तत्पुत्रे प्रवर्त्तते, अपि तु समयमात्रं=संकेतमात्रं तत् । तेनैव तत्र तदर्थबोधः । अत एव आधुनिकसंकेतः, परिभाषा इति नव्यनैयायिकाः । तदर्थे च तत्पदं पारिभाषिकम् न तु वाचकम् । वृद्धिगुणादिसंज्ञाशब्दानान्तु यद्यप्यस्ति सर्वसंज्ञिप्रत्यायनशक्तियोगः । 'सर्वे सर्वार्थवाचका' इत्यभ्युपगमात्, तथापि आदैजादिरूपे विशिष्टे संज्ञिनि पाणिनिना कृतः शक्त्यवच्छेदः=

**यथारुचि सङ्केते हि न वाचकशक्तिपुरःसरीकारेणान्यविषये शब्दाः प्रवर्तन्ते प्रसिद्धार्थाः, अपि तु समयमात्रं तत् । संज्ञाशब्दानां तु सर्वसंज्ञिप्रत्यायनशक्तियुक्तत्वेऽपि विशिष्टे संज्ञिनि शक्त्यवच्छेदः सामयिकः । इयं च योग्यता शब्दानामर्थप्रतीत्यनुसारेणैव व्यवस्थापयितव्येत्यभेदेन शब्दार्थयोः प्रत्ययादध्यासफलैवावस्थितेति, स एव मुख्यः सम्बन्धः । अत एव प्रतीतावर्थस्यापि विषयभावेनापेक्षणात् पारतन्त्र्यसामान्यात् सम्बन्ध इति व्यपदिश्यते । यदपि चेन्द्रियाणि कारकत्वादज्ञातान्येव ज्ञानं जनयन्ति, शब्दस्तु ज्ञापकत्वात् स्वज्ञानेनान्यधीहेतुः, तथापि पुरुषप्रयत्नानपेक्षा शक्तिः साधारणीति साम्यम् ॥ २९ ॥**

**इहार्थगत्यर्थः शब्दप्रयोगः । साधीयश्चार्थगतिरपशब्देभ्य इति तेषामपि सम्बन्धोऽर्थेन प्रसक्त इत्याशङ्क्याह—**

---

शक्तिनियमः सामयिकः 'वृद्धिरादैच्' ( पा० सू० १।१।१ ) इत्यादिरूपपाणिनिसंकेतकृतः । अत एवोक्तम्—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् इति ।

( वा० का० २।३६५ )

इयञ्च योग्यता शब्दानामर्थैः सह अर्थप्रतीत्यनुसारेणैव व्यवस्थापयितव्येति । वस्तुतो भिन्नयोः शब्दार्थयोः अभेदेनैव प्रतीतेरभेदाध्यासफलैवावस्थितेति आध्यासिकं तादात्म्यमेव तयोर्मुख्यः सम्बन्धः । अत एव = अत्यन्तभिन्नत्वेन वास्तविकतादात्म्याभावादेव प्रतीतौ पदार्थोपस्थितौ = शाब्दबोधे वा शब्दवत् अर्थस्यापि विषयत्वेनापेक्षणात् द्वयोरपि प्रतीतौ पारतन्त्र्यस्य समानत्वात् द्वयो राजभृत्ययोरिव शब्दार्थयोः सम्बन्ध इति व्यपदिश्यते ।

स च प्रागुक्तरीत्या आध्यासिकं तादात्म्यम् । अत्यन्तभिन्नत्वेन वस्तुभूतस्य तस्याभावात् । यत्तूक्तं हेलाराजेन—'यदपि चेन्द्रियाणि कारकत्वादज्ञातान्येव ज्ञानं जनयन्ति, शब्दस्तु ज्ञापकत्वात् स्वज्ञानेनान्यधीहेतुः तथापि पुरुषप्रयत्नानपेक्षा शक्तिः साधारणीति साम्यम्' इति । अयमत्र विकल्पः–किमिन्द्रियाणां स्वविषयं प्रति कारकत्वम् उत्पादकत्वलक्षणम्, अथवा करणत्वरूपम् । नाद्यः, अनुभवापलापात् । इन्द्रियाणां स्वविषयव्यञ्जकत्वस्यैवानुभवात् । यद्यपि—'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः' इति व्यञ्जकलक्षणमुच्यते, तथापि इन्द्रियाणां स्वज्ञानं विनापि सिद्धार्थव्यञ्जकत्वमनुभवानुसारेण एष्टव्यमेव, लक्षणन्तु प्रायोवादमात्रम् ।

करणत्वरूपं कारकत्वन्तु शब्देन्द्रिययोरुभयोरपि समानमेवेति । स्वविषयोत्पादकत्वरूपं कारकत्वन्तु शब्देष्वेव न त्विन्द्रियेषु । 'स भूरिति व्याहरत्', 'स भूमिमसृजत्' इत्यादिश्रुतेः । अतः शब्देन्द्रिययोरुभयोरपि स्वार्थव्यञ्जकत्वं करणत्वम्, पुरुषप्रयत्नानपेक्षा शक्तिरिति त्रितयं समानम् । अर्थोत्पादकत्वरूपे कारकत्वे तु तयोः केवलं वैषम्यमित्यवधेयमिति ॥ २९ ॥

**असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।**
**वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ॥ ३० ॥**

**दैवी वागशक्तैर्व्यवकीर्णा बालवदन्धादिवद( बालबधिरान्धादिभिस्तद )नुमित-मूलप्रकृतिर्विदुषां वाचिका । न हि विद्वांसोऽर्थमपशब्दात् साक्षादध्यवस्यन्तीति नापशब्दानामर्थेन कश्चित् सम्बन्धः । अत एव पुराकल्पेऽनृतादिभिरिवापभ्रंशैरपि रहिता वागासीदिति ब्रह्मकाण्ड उक्तम् । अवाचका एवापभ्रंशाः, ते तु सादृश्यात् साधुशब्दमनुमापयन्ति । तेभ्योऽर्थसम्प्रत्यय इति । तथा च सङ्ग्रहकारः—**

**शब्दप्रकृतिरपभ्रंशः । इति ।**

---

ननु लोकव्यवहारे अर्थावगमाय शब्दप्रयोगः क्रियते, अपशब्देभ्यश्चार्थावगतिः साधुशब्देभ्यो जायमानार्थावगतेरपि साधीयसी भवति । ततस्तेषामपि साधुशब्दवदर्थेन सह सम्बन्धः स्यादित्याशङ्क्याह—असाधुरनुमानेनेति ।

अयमर्थः—कैश्चद् विद्वद्भिः असाधुरपशब्दः अनुमानेन साधुशब्दानुमानद्वारा वाचकः इष्यते, न तु साक्षात् । तथा चावाचकत्वमपशब्दानामिति । वा = अथवा, शब्दापशब्दयोरुभयोरपि अव्यवहितार्थप्रत्ययानुरोधेन वाचकत्वस्याविशेषे तुल्यत्वेऽभ्युपगम्यमाने शास्त्रेण शब्दापशब्दप्रयोगेषु पुण्यपापयोर्नियमः क्रियते । साधुशब्दप्रयोगे पुण्यम्, अतः साधव एव प्रयोक्तव्या नासाधव इति । असाधुशब्दप्रयोगे तु पापं पुण्याभाव इति, असाधवो न प्रयोक्तव्या याज्ञे कर्मणि । लोकव्यवहारे तु असाधुशब्दप्रयोगेऽपि न पापम्; किन्तु पुण्याभाव इति यथेष्टं साधवो असाधवो वा प्रयोक्तव्या इति । तथा च भाष्यम्—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुस्ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते याज्ञे पुनः कर्मणि नापभाषन्ते' ( म० भा० पस्पशा० ) इति ।

अयं भावः—दैवी वागशक्तैर्व्यवकीर्णा बालबधिरान्धादिभिस्तदनुमितमूलप्रकृतिर्विदुषां वाचिका ।

यथा बालादुच्चारितं गगरीशब्दं श्रुत्वा तत्सादृश्येन गर्गरीशब्दं तन्मूलप्रकृतिमनुमाय विद्वांसस्ततो अर्थं प्रतियन्ति । नहि विद्वांसोऽर्थमपशब्दात् साक्षादवगच्छन्ति इति । नापशब्दानामर्थेन सह कश्चित् सम्बन्धः । अत एव पुराकल्पे अनृतादिभिरिवापभ्रंशैरपि रहिता वागासीदिति ब्रह्मकाण्डे उक्तम् । अतोऽर्थेन सह सम्बन्धाभावादवाचका एवापभ्रंशाः । ते तु स्वसादृश्यात् साधुशब्दमनुमापयन्ति । अनुमितेभ्यश्च साधुशब्देभ्योऽर्थसम्प्रत्यय इति । तथा च सङ्ग्रहकारः—'शब्दप्रकृतिरपभ्रंश इति' ।

अयमर्थः—शब्दः = साधुशब्दः प्रकृतिर्यस्य विकृतिरूपस्य स तादृशोऽपभ्रंशः = अपशब्द इति । इदानीन्तु मनुष्येष्वधर्मबाहुल्यादनृतादिवद्वाङ्मलानामपशब्दानां लोक-

**अद्यत्वे त्वधर्मत्वाहु यादनृतादिवद् वाङ्मलानां रूढिः । तथा चाव्यवधानेनैवापशब्देभ्योऽर्थप्रतीतौ न म्लेच्छितवै नापभाषितवै साधुभिर्भाषितव्यमिति शास्त्रप्रामाण्यात् साधूनामेव धर्माङ्गत्वमिति तदनुसृतिः शास्त्रेण। तथा च भेदस्याभेदपूर्वकत्वात् पुरुषविकल्पानियमेनानन्तत्वादपशब्दनामभिन्नसाधुशब्दपूर्वकत्वमेव निश्चीयत इति शब्दप्रकृतिरपशब्दः सिद्ध इति शब्द एव विद्या। तदत्र यथा विद्यावस्थाभिन्नब्रह्मात्मिका, तथा साधुशब्दावस्था विद्या। यथा च विद्यायां भेदो वितथः, तथाऽपभ्रंशावस्था वाङ्मलरूपेति परमार्थतदितरावस्थापेक्षो विकल्पः। अविद्यादशापेक्षमेव—**

**"समानायामर्थगतौ शब्देन चापशब्देन च" इति भाष्यम्।**

---

व्यवहारे रूढिः प्रसिद्धिरिति। तथा चेदानीमव्यवधानेनैव अपशब्देभ्योऽर्थप्रतीतिर्भवतीति—'न म्लेछितवै, नापभाषितवै, साधुभिर्भाषितव्य'मित्यादिशास्त्रप्रामाण्यात् साधूनामेव धर्माङ्गत्वमिति साधुशब्दानामेवानुसरणमनुशासनं शास्त्रेण क्रियते, नासाधूनाम्। किञ्च, साधुशब्द एकोऽभिन्नः, असाधुशब्दास्तु भिन्ना अनेके। तद्यथा भाष्ये पस्पशाह्निके—'एकस्य गोशब्दस्य बहवोऽपभ्रंशा गावी गाणी गोता गोपोतलिका इत्येवमादयः' इति। तथा च किं साधुशब्दप्रकृतिको असाधुः अथवा असाधुशब्दप्रकृतिकः साधुरिति संशये भेदस्याभेदपूर्वकत्वात् मतिभेदप्रयुक्तानां पुरुषकल्पनानां विविधानामनियमेन पुरुषमतिविकल्परूपाणामपशब्दानामनन्तत्वादभिन्नसाधुशब्दपूर्वकत्वमेवापशब्दानां निश्चीयत इति साधुशब्दप्रकृतिकोऽपशब्दः सिद्ध इति। प्रकृतिभूतः साधुशब्द एव प्रमारूपविद्याविषयत्वाद् विद्या। तदत्र शास्त्रे यथा अभिन्नब्रह्मात्मिका विद्यावस्था, यथा च विद्यायां भेदो वितथः=अनृतः, तथा अपभ्रंशावस्थावाङ्मलरूपा=साधुशब्दस्य विकारत्वेन मलरूपा इति परमार्थापरमार्थावस्थापेक्षो वाचः साध्वसाधुविकल्पः। अविद्यादशापेक्षमेव "समानायामर्थगतौ शब्देन चापशब्देन च" इति भाष्यम्। अत्रार्थगताविति वचनादर्थाभिधायकत्वमपशब्दानामवकर्णयन्ति=शब्दात् प्रतियन्ति, न तु वस्तुतोऽभिधायकत्वमपशब्दानाम्, विदुषामपशब्दश्रुतिस्मृतसाधुशब्दादेवार्थप्रतीतेः। अतोऽविद्यादशायां भूयसापशब्दैर्लोके व्यवहारादर्थप्रतीतिमात्रं भवेन्नाम तैः, न तु तेषां तत्रार्थेऽभिधा। लोकव्यवहारेऽपशब्दानां बहुप्रयोगदर्शनेन रूढत्वात्तु प्रसिद्धत्वात्तु शब्दापशब्दाभ्यामर्थावगतिरूपस्य व्यवहारस्याविशेषं समानत्वं ग्रन्थकारः=महाभाष्यकारः पतञ्जलिः आह=तथा चाविद्यावस्थायामुभयोः शब्दापशब्दयोरर्थावगतिहेतुत्वेऽपि शास्त्रं नियामकं साधुशब्दैरेवार्थो वक्तव्यो नासाधुभिः, एवं क्रियमाणमभ्युदयकारि भवतीति। कारिकायां पुण्यपापयोरित्यस्य पुण्यपापनिमित्तमित्यर्थः। नियमः क्रियते, साधूनां ज्ञानात्, ज्ञानपूर्वकात् प्रयोगाद्वा अभ्युदय इति। असाधुप्रयोगे तु पापमिति। अत्र धर्माभाव एव पापत्वेनोपचर्यते। उपचारबीजन्तु सामानाधिकरण्यरूपः सम्बन्ध इति।

केचित्तु असाधुप्रयोगे न म्लेच्छितवै इति निषेधस्यातिक्रमात् पापमेव भवतीति

**अर्थगताविति वचनादर्थाभिधानमपशब्दानामवकर्णयन्ति। अविद्यायां भूयसाऽप-शब्दैर्व्यवहारादर्थप्रतीतिमात्रं भवेन्नामेत्यर्थः। रूढत्वात्तु व्यवहारस्याविशेषं ग्रन्थकार आह। तत्र च शास्त्रं नियामकं साधुशब्दैरेवार्थो वक्तव्यो नापशब्दैरेवं क्रियमाणम-भ्युदयकारि भवतीति।** पुण्यपापयोः **पुण्यपापनिमित्तं नियमः क्रियते साधूनां ज्ञानाच्छा-स्त्रपूर्वकाद्वा प्रयोगादभ्युदय इति। असाधुप्रयोगे तु धर्माभाव एव पापत्वेनोपचर्यते। न म्लेच्छितवै इत्येतस्य निषेधस्यातिक्रमात् पापमेव केचिदिच्छन्ति॥ ३०॥**

**समवाये सम्बन्धान्तराभावः पूर्वमुक्तः, अस्मिंस्तु दर्शने स न प्रसजतीत्याह—**

---

इच्छन्ति। वस्तुतस्तु न म्लेच्छितवै इति निषेधः श्रौतकर्मविषयः, न तु लोकव्यवहार-विषयः, "मन्त्रो हीनः स्वरतो वर्णतो वा" इत्यादि भूतार्थवादश्रवणात्। यर्वाणस्तर्वाणो नाम ऋषयो बभूवुरित्यादिपस्पशाह्निकभाष्याच्च। एवञ्च लोकव्यवहारेऽपशब्दप्रयोगे प्रागुक्तनिषेधातिक्रमाभावात् नास्ति पापमिति तत्त्वम्। कारिकायामपि पापशब्दः आवृत्त्या श्रौते कर्मणि शक्यार्थपरः, लोकव्यवहारे तु धर्माभावरूपलक्ष्यार्थपर इति नास्ति वृत्तिद्वयविरोधः, योगपद्याभावात्। साधुशब्दप्रयोगात् पुण्यन्तु श्रौते कर्मणि, लोकव्यवहारे चेत्यविशेषः। 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इत्यविशेषेण विधिश्रवणात्। 'भवति' इत्यत्र हि अन्तर्भावितण्यर्थो भवति। लेटश्चात्र प्रयोगः। तथा च एकेन शब्देन साधुना सम्यग्ज्ञातेन सुप्रयुक्तेन च स्वर्गे लोके च कामं भावयेदिति वाक्यार्थः। अत्र सम्यग् ज्ञानञ्च प्रकृतिप्रत्ययविभागज्ञानपूर्वकं साधुत्वज्ञानम्। सुप्रयोगश्च यत्रार्थे साधुस्तत्रैव प्रयोग इति। अतो अश्वशब्दस्य निर्धने, अस्वशब्दस्य च तुरगे न सुप्रयोगः, अतः न तेन कामदोहकं पुण्यमिति॥ ३०॥

परमते यथा समवायस्य स्वसम्बन्धिद्वयस्य परस्परं सम्बन्धकत्वेन सम्बन्धत्वम्, तथा समवायस्य स्वसम्बन्धिभ्यां सह सम्बन्धकस्य सम्बन्धान्तरस्याभावात् समवायस्य सम्बन्धत्वं सम्भवति। तस्य सम्बन्धान्तराऽभ्युपगमे तु अन्योन्याश्रयचक्रकानवस्थादयो दोषा इति पूर्वं समवायस्य सम्बन्धत्वप्रत्याख्यानेनाभिहितप्रायम्। व्याकरणदर्शने तु शब्दार्थयोः प्रतिपाद्यप्रतिपादकभावनियामिका योग्यतैव सम्बन्धः। किम्बहुना, सर्वेषां सम्बन्धिनां ये केचन साक्षात् सम्बन्धाः संयोगसमवायादयः, ये च परम्परासम्बन्धाः कार्यकारणभाव-विषयविषयिभाव-प्रतियोग्यनुयोगिभाव-निरूप्यनिरूपकभावाधाराधेय-भावादयः, तेषां सर्वेषामपि नियामिका सम्बन्धिनां परस्परयोग्यतैव, योग्यतारूपस्य तु सम्बन्धस्य नास्ति सम्बन्धान्तरापेक्षा, तस्या अनपेक्षस्वभावत्वे सर्वेषामविप्रतिपत्ते-रित्येवं नास्ति शब्दार्थयोः समवायसम्बन्धाभ्युपगम इव (इति) योग्यतालक्षणसम्बन्धा-भ्युपगमे पूर्वदोषप्रसक्तिरित्याह—सम्बन्धशब्दे इति।

अयमर्थः—सम्बन्धशब्दे प्रतिपाद्ये योग्यतारूपः सम्बन्ध एव। अत्रापि सम्बन्ध-शब्दतदर्थयोग्यतयोर्योग्यतैव सम्बन्धः। योग्यताशब्दस्यापि स्वार्थं योग्यतां प्रति प्रति-पत्तिहेतुर्योग्यतैव सम्बन्ध इति।

**सम्बन्धशब्दे सम्बन्धो योग्यतां प्रति योग्यता ।**
**समयाद् योग्यतासंविन्मातापुत्रादियोगवत् ॥३१ ॥**

**सम्बन्धशब्दो योग्यतालक्षणं सम्बन्धं योग्यतयैव प्रतिपादयति । एवं समवायशब्दोऽपि योग्यतयैवानादिसिद्धया स्वार्थप्रतिपादकः । तथा योग्यताशब्दोऽपि इति सर्वत्रास्य सम्बन्धस्य व्याप्तिः ।**

**सङ्केतस्य तर्हि क्वोपयोगः ? इत्याह—**

**अनादिसिद्धार्थविषयव्यापारस्य शब्दस्य वृद्धव्यवहारपरम्परापरपर्यायात् समयात् स्वाभाविक्येव योग्यता निश्चीयते, न तु समयमात्रादतथाभूतेऽपि तथाभावः समुचितः । नह्यीयमस्य पुत्रस्य मातेति जन्यजनकभावः सामयिकः, वस्तुसिद्धस्यैवैवं प्रतिपादनात् ।**

**अथ प्रत्यक्षपूर्वकं संज्ञाकर्म**

---

अयं भावः—अस्मद्दर्शने सम्बन्धशब्दः स्वार्थं योग्यतालक्षणं सम्बन्धं योग्यतयैव सम्बन्धेन प्रतिपादयति । एवं समवायशब्देऽपि स्वार्थप्रतिपादने अनादिसिद्धा योग्यतैव स्वार्थेन सह सम्बन्धः । तथा योग्यताशब्दस्यापि स्वार्थप्रतिपादने स्वार्थेन सह अनादिसिद्धा योग्यतैव सम्बन्ध इत्येवं सर्वेषु शब्देषु स्वार्थेन सह योग्यतारूपस्य सम्बन्धस्य व्याप्तिः = व्यापकता बोध्या इति ।

ननु यदा शब्दार्थयोः शक्तिस्तदन्यो वा सम्बन्धस्तदा वृद्धव्यवहारपरम्परारूपस्य समयस्य संकेतापराख्यस्य शब्दशक्तिग्रहे उपयोगः, इदानीं यदा शब्दार्थयोर्योग्यतालक्षणः सम्बन्धस्तदा संकेतरूपस्य समयस्य कुत्रोपयोग इत्याशङ्क्याह—समयादिति ।

अयमर्थः—समयात् प्रागुक्तलक्षणात् शक्तिसंविदिव अस्मद्दर्शने योग्यतासंवित् = योग्यताज्ञानं भवति । सा च योग्यता शब्दार्थयोः सम्बन्धरूपाऽनादिसिद्धा, न तु समयेन पूर्वोक्तलक्षणेन क्रियत इति । तत्र दृष्टान्तमाह—मातापुत्रादियोगवदिति । 'यथा अस्य पुत्रस्य इयं माता' इति मातापुत्रयोर्योगो जन्यजनकभावः समयेनानेन निश्चीयत एव, न तु क्रियते वस्तुसिद्धस्यैव मातापुत्रादियोगस्य समयेन प्रतिपादनादिति ।

अयं भावः—अनादिसिद्धस्वार्थविषयकाभिधानव्यापारवतः शब्दस्य वृद्धव्यवहारपरम्परापरपर्यायात् समयात् स्वाभाविक्येव = अनादिसिद्धा योग्यता निश्चीयते, न तु समयमात्रात् अतथाभूतेऽपि = तदर्थायोग्येऽपि शब्दे तथाभावः = तदर्थयोग्यतारूपः पुरुषप्रयत्नरूपेण समयेन पुरुषेच्छाप्रयुक्तेन कर्त्तुं समुचितः । न ह्यीयमस्य पुत्रस्य माता इति जन्यजनकभावरूपस्तयोः सम्बन्धः सामयिकः = एतत्समयकृतः । वस्तुसिद्धस्यैव तयोर्योगस्यैवमनेन समयेन प्रतिपादनात् ।

ननु प्रत्यक्षपूर्वकं संज्ञाकर्म इति स्मर्यते । भाविनमपि नामार्थं प्रत्यक्षीकृत्य = ज्योतिःशास्त्रेण हस्तरेखादिना अन्यैर्वाङ्गलक्षणैः निश्चित्य पित्रा जातस्य पुत्रस्य एकादशेऽह्नि नाम क्रियत इति तदर्थः । तदुक्तं कविभिः—

**इत्यस्मद्विशिष्टानामर्थे शब्दनियोगः सामयिक एव। नैतत्, तैरपि योग्यतानुसारेण पूर्वाभ्यासात्तथा निवेशात्। तदुक्तम्—**

**अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते। इति।**

**(वा०का०२।११८)**

**किं भवानाहेत्यर्थमात्राविनाभावमवगत्य विशेषप्रश्नादवधार्यते अविदितसंकेतानपि प्रति शब्दस्य योग्यता। पुरुषेणान्यत्र सङ्केतेऽपि प्ररूढेऽर्थे गवादिशब्दाज्झटिति प्रतिपत्तिः। न च पुरुषेण नियोगः शक्यक्रिय इति वक्ष्यति।।३१।।**

**इदानीं कार्यकारणभावं शब्दार्थयोः सम्बन्धमाह—**

---

श्रुतस्य यायादयमन्तमर्भकस्तथापरेषां युधि चेति पार्थिवः।
निरीक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ।।इति।।

( रघुवंशे ३।२१ )

भागवतेऽपि अभिमन्युपुत्रस्य भगवता अश्वत्थामास्त्रतस्त्रातस्य परीक्षिदिति, देवरात इति संज्ञा समयकृतैव। तथा चास्मद्विशिष्टानां पित्रादीनामस्माकं नामार्थे तत्तच्छब्दनियोगः सामयिकः = समयकृत एव इति चेन्मैवम्। अस्मद्विशिष्टैरपि स्वपुत्रैरपि सम्भावितभावियोग्यतानुसारेण पूर्वाभ्यासात् = रघुरामादिचरितश्रवणाभ्यासजनितसंस्कारात् स्वपुत्रेऽपि तथा = पूर्वरघ्वादिष्विव रघुरामादिशब्दस्य निवेशात्। एवञ्च नास्मद्विशिष्टसमयकृतः स्वपुत्रे रघ्वादिपदप्रयोग इति सिद्धम्। किञ्च रघुरामादिगुणानामसतामपि स्वपुत्रे रागात् समारोपादपि रघुरामादिशब्दप्रयोगोऽसामायिकोऽपि सम्भवतीति बोध्यम्।

समयलक्षणन्तु उक्तम् प्राग् द्वितीयकाण्डे—

"अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते।" इति।

( वा०का०२।११८ )

संक्षेपत एतदर्थस्तु ऐहमविकशास्त्राभ्यासजनितसंस्कारादन्यः अभ्यासः पूर्वजन्मनि संजातः व्यवहाराभ्यासजनितः संस्कारः कैश्चित् समय इष्यत इति। एवञ्च न पित्राचार्यादिसमयकृतः शाब्दो व्यवहार इति सिद्धम्। किञ्च, किं भवानाह इत्यर्थमात्रा अविनाभावं = अर्थसामान्येन सह शब्दस्याविनाभावम् अवगत्याविदितसंकेतानपि प्रति शब्दस्यार्थसामान्ययोग्यताविशेषप्रश्नादवधार्यते। अर्थसामान्यज्ञानं विना विशेषप्रश्नानवतारात्। किञ्च, पुरुषेण अन्यत्र स्वपुत्रादौ गवादिपदस्य संकेते कृतेऽपि प्ररूढे सास्नादिमत्यर्थे गवादिशब्दाज् झटिति प्रतिपत्तिः।

तया च गवादिपदस्य प्ररूढ एवार्थे योग्यता निश्चीयते, न तु सामयिकेऽर्थे। किञ्च, न हि शब्दस्यायोग्येऽर्थे नियोगः = समयः = संकेतः शक्यक्रिय इति वक्ष्यत्यत्रैवाग्रे इति ।।३१।।

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।**
**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ।।३२।।**

**श्रोतृबुद्ध्युपारूढस्यार्थस्य शब्दः कारणं जनकत्वात् । शब्दार्थो ह्यर्थो बहीरूपतयावसीयमानः । ( तथा च अन्यच्च ), वक्तृबुद्धिनिवेशिनोऽर्थात् कारणभूतात् शब्दः श्रुतिविषयमनुप्राप्तः प्रतीयत इत्यर्थोऽपि शब्दस्य कारणम् । एवं चोभयथा कार्यकारणभाववर्णनाद् धूमाग्निवैलक्षण्येन शब्दार्थयोरभेदेन सम्बन्धोऽध्यासलक्षणः प्रतिपादितो भवति । तथा हि बुद्धौ शब्दार्थयोः पूर्वमभेदेनावस्थानम् । न हि विवक्षितोऽर्थः शब्दसम्भेदशून्यः, अन्तःसञ्जल्परूपस्य तस्य प्रतिभानात् । अनादि-**

---

पूर्वं शब्दार्थयोर्योग्यतां सम्बन्धमुक्त्वा इदानीं कार्यकारणभावं तयोः सम्बन्धं साधयितुमुपक्रमते—शब्दः कारणमिति ।

अयमर्थः—श्रोतृबुद्धिस्थस्य अर्थस्य शब्दः पूर्वं संकल्पात्मना वक्तृबुद्धौ स्थितो वक्त्रा स्थानकरणव्यापारैरभिव्यञ्जितः श्रोतृश्रुतिविषयमनुप्राप्तः कारणम्, जनकत्वात् । एवं (तयोः) सामानाधिकरण्येन न कार्यकारणभावानुपपत्तिस्तयोरित्यवधेयम् । यतः स्वबुद्धिस्थोऽप्यर्थः श्रोत्रा बहीरूपतयाऽवसीयमानः = सताऽसता वा बाह्यार्थेन सह तादात्म्याध्यासेनाध्यस्यमानः ) शब्दार्थः शब्दात् प्रतीयते । तदेतत् सर्वमभिप्रेत्योक्तं कारिकायाम्—सहितेनोपजन्यत इति ।

अयमर्थः—हि = यतः स = अर्थः तेन = शब्देन उपजन्यत इति । तथा च पूर्वोक्तप्रकारेण च, शब्दोऽर्थस्य कारणम् । चकारादन्यथा च, अर्थः शब्दस्य कारणम् । तथाहि—बुद्धिविषयात्—संकल्पात्मना वक्तृबुद्धिस्थादर्थात् कारणभूतात्, वक्त्रा स्थानकरणैरभिव्यञ्जितः शब्दः श्रोतृश्रुतिविषयमनुप्राप्तः श्रोत्रा प्रतीयत इति रीत्या अर्थोऽपि वक्तृबुद्धिस्थः शब्दस्य श्रोतृबुद्धिस्थस्य कारणम् । प्रागुक्तरीत्या सामानाधिकरण्यसम्भवात् । एवं शब्दार्थयोर्द्वयोरपि परस्परं प्रति कार्यत्वं कारणत्वञ्च सिध्यति ।

अत एव कारिकागतयोः 'तथा', 'च' इति पदयोः 'अन्यच्च' इति व्याख्या हेलाराजेन कृता इति ।

अयं भावः—वक्त्रा स्थानकरणैरभिव्यञ्जितः, अत एव श्रोतुः श्रुतिविषयतामुपागतः, अत एव श्रोतृबुद्ध्युपारूढः शब्दः श्रोतृबुद्ध्युपारूढस्यार्थस्य कारणम्, अन्वयव्यतिरेकाभ्यां सामानाधिकरण्येन च जनकत्वनिश्चयात् । यतो बहीरूपतया = बाह्यार्थतादात्म्येन अवसीयमानः = अध्यस्यमानः, बौद्ध एवार्थः शब्दार्थः, न तु बाह्यः, तस्य बुद्धिस्थात् शब्दात् प्रत्ययानुपपत्तेः । कारिकायाम्—'तथा च' इति अन्यच्चेत्यर्थकम् । शब्दस्य प्रयोगात् प्राग् विवक्षादशायां संकल्पात्मना वक्तृबुद्धिस्थात् शब्दशबलात्, अर्थात् शब्दस्य उपादानकारणभूतात् स्थानकरणाभिघातरूपं निमित्तं सहकारीकृत्य जनितः

**शब्दभावनानुविद्धं हि तिरश्चामपि ज्ञानम् । अत एव स्थानकरणव्यापारादभिव्यक्तोऽर्थ-स्वरूपशबलः शब्दः श्रोतृभिरवधारितः, तथैव स्वरूपाच्छुरणयार्थमवगमयति । प्रति-पाद्यप्रतिपादकयोर्हि परस्पराभिप्रायसङ्क्रान्तिर्व्यवहार इत्यन्तःस्थितमर्थं मूलावस्था-माप्य परित्यक्तं वक्तृबुद्धिसमाविष्टं श्रोतयर्पयति शब्दः । श्रोतापि च तथैव स्ववासना-विकासानुसारेण प्रतिपद्यते समाविष्टशब्दभावनः । तेन चोद्बोधितशब्दभावनः प्रवर्तत इति निर्णीतं वाक्यपदीये ।**

---

शब्दः स्वोपादानसहकारिकारणगतशक्तिवैजात्येन विद्युदादिप्रकाशवद् विजातीयवेग-प्रचयधर्मा श्रोतृश्रुतिदेशमुपागतः श्रोतृबुद्धिस्थः श्रोत्रा प्रतीयत इति रीत्या अर्थोऽपि शब्दस्य कारणम् । एवञ्च शब्दार्थयोरुभयोरपि परस्परं कार्यत्वस्य कारणत्वस्य च वर्ण-नाद् धूमाग्न्योः कार्यकारणभावाद् वैलक्षण्येन शब्दार्थयोरभेदेन तादात्म्याध्यासलक्षण-स्तयोः सम्बन्धः प्रतिपादितो भवति ।

तथाहि—उच्चारणात् प्राग् वक्तृबुद्धौ शब्दार्थयोरभेदेनावस्थानम् । नहि तदानीं विवक्षितोऽर्थः शब्दसम्भेदे शून्यः = शब्दसम्मिश्रणरहितः; किन्तु दुग्धजलवत् शब्दशबल एव । अन्तःसंजल्परूपस्य तस्य = अर्थस्य तदानीं प्रतिभानात् । संसारानादित्वादनादि-शब्दभावना वासनानुविद्धं हि तिरश्चामपि विवक्षातः प्राग् अर्थज्ञानम्, किं पुनर्मनु-ष्याणाम् । अत एव वक्तुः स्थानकरणाभिघातरूपव्यापारादभिव्यक्तोऽर्थस्वरूपसंमिश्रः, शब्दः श्रोतृश्रुतिदेशमुपागतः श्रोतृभिस्तथैवार्थस्वरूपाच्छुरित एव = अर्थस्वरूपसंमिश्रित एव अवधारितः = प्रमितः सन् अर्थमवगमयति । प्रतिपाद्यप्रतिपादकयोर्हि = श्रोतृवक्त्रोर्हि परस्परमभिप्रायसंक्रमणं व्यवहार इति शब्दसम्भेदरूपां मूलावस्थामाप्य वक्तृबुद्धिस्थितमर्थं स्थानकरणाभिघातजशब्दावस्थामवाप्य तदवस्थातः परित्यक्तम् = मूलावस्थातः परि-मुक्तम्, वक्तृबुद्धिसमाविष्टमेवार्थं श्रोतरि = श्रोतृबुद्धौ शब्दः समर्पयति, नान्यम् । श्रोतापि च समाविष्टतच्छब्दभावन एव = यस्मिन् श्रोतरि यस्य शब्दस्य भावना (वासना) सम्यग् दृढा आविष्टा स्थिता, स एव स्ववासनाविकासानुसारेणैव = स्वीया या तच्छब्दतदर्थविषया वासना, तस्या यो विकासः समुद्बोधस्तदनुसारेणैव, तथैव = वक्ता यथार्थं प्रतिपद्यते तथैव, वक्त्रार्थं प्रतिपाद्यते नान्यथा । तेन च वक्तुः प्रतिपादनेनोद्बोधित-शब्दवासनः श्रोता वाक्यार्थावगमपुरःसरं गवानयनादिरूपे व्यवहारे प्रवर्तत इति निर्णीतं वाक्यपदीये ।

तत्तच्छब्दतत्तदर्थवासनाशून्यानान्तु न तत्तच्छब्दात् तत्तदर्थावसायः । अत एव संस्कृतभाषातो नेतरभाषामात्रविदां बोधः, तेषां संस्कृतशब्दतदर्थवासनाशून्यत्वात् । तदेवं शब्दार्थयोः सम्बन्धविषये एकपक्षीभाव एव = तादात्म्याध्यासलक्षण एक एव सम्बन्ध इति पक्ष एव एकवाक्यतया = अविप्रतिपत्त्या ऐकमत्येन वैयाकरणसिद्धान्तानुगुणः, तत्र= वाक्यपदीये वाक्यकाण्डे आरम्भ एव स्थितः । न तु तयोर्योग्यतासम्बन्धः, कार्यकारण-

**तदेवमेकपक्षीभाव एवैकवाक्यतया सम्बन्धे तत्र स्थितः सिद्धान्तानुगुणः। यथाविवक्षं च शब्दोऽर्थमवगमयति नियतस्वरवर्णानुपूर्वीक इति स्वरविपर्यये विवक्षान्तरमिन्द्रशत्रुशब्देऽवगन्तव्यम् स्वरभेदेनान्यत्वात् । स्वकारणमेव गमयति शब्द इत्यन्तरा विवक्षान्तरं लाघवायस्फुटप्रतिभासं प्रथमवर्णोच्चारणानन्तरं द्वितीयवर्णोच्चारणवदनुमीयते ॥ ३२ ॥**

**ननु बुद्ध्युपारूढे शब्दार्थे कथमोदनं भुङ्क्त इत्यादिव्यवहार इत्याशङ्क्याह—**

---

भावो वा तादात्म्याध्यासलक्षण इत्यनेके पक्षाः। यतश्च शब्दस्तदर्थनियतस्वरवर्णानुपूर्वीकः, अतः स्वरवर्णानुपूर्वीभेदात् तत्तदर्थे भिन्न एव। अत एव स्वरविपर्यये वर्णविपर्यये च न ततस्तदर्थबोधः। यथा इन्द्रशब्द आद्युदात्तो भिन्नः, 'इन्द्रः शत्रुः शातयिता यस्य' इत्यर्थे बहुव्रीहौ। अन्तोदात्तश्च स भिन्नः, 'इन्द्रस्य शत्रुः शातयिता' इत्यर्थे षष्ठीतत्पुरुषे। अत एव अन्तोदात्ते इन्द्रशब्दे प्रयोक्तव्ये त्वष्ट्रा आद्युदात्त इन्द्रशब्दः प्रयुक्त इति इन्द्र एव वृत्रस्य शातयिता सम्पन्न इति 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति वाक्यात् प्रतीयते।

यथा वा अश्वास्वशब्दयोस्तुरगे निर्धने च नियतवर्णयोर्वर्णविपर्यये न विवक्षितार्थबोधः। तत्तदर्थे नियतस्वरवर्णानुपूर्वीकश्च शब्दो यथाविवक्षम् (विवक्षानुसारेणैव) स्वार्थमवगमयति इति स्वरविपर्यये विवक्षान्तरमिन्द्रशत्रुशब्देऽवगन्तव्यम्। स्वरभेदेन तस्य शब्दस्यान्यत्वात्। एवं वर्णविपर्ययेऽपि विवक्षाभेदोऽवगन्तव्यः। प्रागुक्तरीत्या स्वकारणमेवार्थं शब्दः गमयति = ज्ञापयति, नान्यम् इति यत्र स्वरभेदेन विवक्षाभेदस्तत्र विवक्षितार्थप्रत्ययानन्तरं द्वितीयवर्णोच्चारणवत् लाघवात् = शैघ्र्यात् अस्फुटप्रतिभासं यथा भवति, यथा अविवक्षितोऽर्थोऽनुमीयते, न तु अभिधीयते। यत्र तु अर्थद्वयमपि विवक्षितम्, तत्र अर्थान्तरस्यापि अभिधयैव बोधः, अर्थभेदेन शक्तिभेदस्वीकारात्। न च युगपद् वृत्तिद्वयविरोधः, बोधद्वयस्य क्रमेण जायमानत्वात्। एतच्च श्लेषस्थले बोध्यम् ॥३२॥

ननु बुद्ध्युपारूढ एव शब्दार्थ इति प्रागुक्तम्, एवञ्च कथम् 'ओदनं भुङ्क्ते' इति बाह्यार्थविषयको व्याहारो व्यवहारश्च ओदनभोजनस्य तदानीमेव बहिर्जायमानस्य प्राग् बुद्धौ स्थितत्वाभावादित्याशङ्क्याह—भोजनाद्यपीति।

अयमर्थः—बुद्ध्यर्थे शब्दार्थे स्वीक्रियमाणे 'ओदनं भुङ्क्ते' इत्यादौ भोजनाद्यपि भोजनं भोक्ता तत्सम्बन्धश्चेति प्रागुक्तरीत्या बुद्धिस्थत्वाभावेन यदसम्भवि मन्यन्ते बाह्यार्थशब्दार्थवादिनः, तदपि भोजनादिकं बुद्ध्यर्थादेव बुद्ध्यर्थे जाते दृश्यते। तथा हि—अपरस्मिन् भोक्तरि यद् ओदनभोजनं वक्त्रा दृश्यते, तद् वक्तृबुद्धिस्थं तस्माद् ओदनभोजनात् प्रकृतौदनभोजनं वक्तृबुद्धिस्थं तत्साजात्यादुपजायते। दृश्यते हि सजातीयं सजातीयस्योपादानम् आम्रवृक्षादौ। तदेतदुक्तम्—"बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते" इति।

**भोजनाद्यपि मन्यन्ते बुद्ध्यर्थे यदसम्भवि ।**
**बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥ ३३॥**

**बुद्धिविपरिवर्तिनोः क्रियाकारकयोर्विज्ञाननये साध्यसाधनभावः सिद्धः प्रतिभाससारः । तथा हि बुद्ध्यर्थे बुद्धौ शब्दार्थो (र्थे) भोजनं भोक्ता तत्सम्बन्धश्च यदसम्भवित्वेनाभिमतं तदपि सम्भवत्येव ।**

**कदेत्याह-बुद्ध्यर्थादेव । ओदनादिप्रतिभासादपरस्मिन् भुज्यमानात् । कारकज्ञानसंवेदने जाते सति, वाक्यवादिनः पदमात्रात् प्रतीतेरपरिसमाप्तेः । अभ्युपगमवादश्चायम् । बाह्यनयेऽपि हि शब्दार्थस्य बुद्धिपरिवर्तिनः प्रतीतेः । क्रियाकारकभावे (न) दृश्यविकल्पयोरभेदाध्यवसायाद् व्यवहारसिद्धिर्भवत्येव । तथा हि बाह्यार्थे सति दर्शनम् । दर्शनेऽर्थनिर्भासः, तस्मिन् सति वक्तुमीहा, ततः प्रयत्नादेः शब्दोच्चारणमिति परम्परया बाह्यार्थ एव वाच्येत (वाच्य इति) । तत्र प्रवृत्तिरिति विनापि तु बाह्यार्थं शक्यते, विज्ञानमात्रदर्शनेऽपि तन्निर्भासवशेन क्रियाकारकसम्बन्धो मेलयितुमित्येवोपन्यस्तम् ॥ ३३ ॥**

**यतश्च बुद्धिपरिवर्ती शब्दार्थः, ततः शब्दार्थसम्बन्धो नित्य उपपद्यत इत्याह—**

---

अयं भावः—क्षणिकविज्ञानवादिमते क्रियाकारके द्वे अपि बुद्धिविपरिवर्तिनी, तन्नये तयोः प्रतिभासमात्रशरीरत्वात् । अतः बौद्धेन सामानाधिकरण्येन तयोः परस्परं साध्यसाधनभावः सिद्धः । तथा हि—बुद्ध्यर्थे बुद्धौ शब्दार्थेऽभ्युपगम्यमाने भोजनं भोक्ता तत्सम्बन्धश्च यदसम्भवित्वेनाभिमतं पूर्वपक्षिणः, तदपि सम्भवत्येव ।

कदा इति प्रश्ने आह—बुद्ध्यर्थादेवेति । ओदनादिप्रतिभासात् = प्रतिभासमात्रशरीरादोदनादेः । अपरस्मिन् = प्रकृतौदनभोजनकर्त्तुरन्यस्मिन्, ओदनभोजनकर्तरि अन्यस्मिन् देशे वा, भुज्यमानादिति शेषः । भुजिक्रियाकर्मत्वमाप्यमानादिति तदर्थः । तथा च अन्यकर्तृकात् = अन्यदेशस्थिताद्वा ओदनभोजनाद् वक्तृबुद्धिस्थाद् जाते वक्तृबुद्धिस्थे विवक्षितौदनभोजनेऽभ्युपगम्यमाने सति भोजनादिकं यदसंभवित्वेनाभिमतम्, तदपि दृश्यते, उपपद्यमानत्वेन सम्भूयमानं दृश्यते लोक इति पर्यवसितार्थः । यदि तु अत्र भुज्यमानादिति शेषो नाध्याह्रियते, तदा कारकज्ञानसंवेदने सति = ज्ञानमात्रशरीरस्य कारकस्यासंवेदने सति, वाक्याद् वाक्यार्थबोध इति वादिमते कारकपदमात्राद् वाक्यार्थप्रतीतेरपरिसमाप्तेरसंगतिः कारिकोत्तरार्धार्थस्य स्यादिति तदध्याहार आवश्यकः ।

अयञ्च सर्वोऽपि कथाप्रपञ्चो बाह्यार्थमपलप्य माध्यमिकसम्मतविज्ञानवादाश्रयेण प्रवृत्तः प्रौढ्याऽभ्युपगमवाद एव = अनभिमतं विज्ञानवादं स्वीकृत्यापि बौद्धः शब्दार्थः समर्थयितुं शक्यत इति प्रौढ्या उक्तिमात्रम्, न त्वेषविज्ञानवादोऽत्र सिद्धान्तः । यतो बाह्यनयेऽपि = बाह्यार्थवादिवैभाषिकसौत्रान्तिकमतयोरपि बुद्धिपरिवर्तिनः शब्दार्थस्य

**अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम् ।**
**अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते ।। ३४ ।।**

**घटादिशब्दादुच्चरितादर्थाकारावग्रहस्य प्रत्ययस्य सदैवोपजननाद् बाह्येन रूपेण प्रध्वंसित्वेऽप्यभिधेयत्वेन शब्दार्थस्य नित्यत्वान्नित्यो ह्यर्थवतामर्थैरभिसम्बन्ध इति प्रवाहनित्यताश्रयेण पस्पशायामुक्तम् ।**

**कूटस्थनित्यताश्रयेणाप्याह—**

**पदार्थानां सतामसत्त्वविरोधादतीतानागतयोरध्वनोर्नास्तीति प्रत्ययजनकमद्वयस्य तत्त्वस्य स्वस्य आत्मनो ब्रह्मणो द्रव्यलक्षणस्य सामर्थ्यमेव तत्रानित्यत्वमिति तस्य**

---

प्रतीतेः स्वीकाराच्च । दृश्यविकल्प्ययोः = बाह्यार्थबौद्धार्थयोः, अभेदाध्यवसायात् = तादात्म्याध्यासात्, क्रियाकारकभावेन बहिर्व्यवहारसिद्धिर्भवत्येव । तथा हि–बाह्यार्थे सति तद्दर्शनम्, दर्शने सति अर्थनिर्भासः = अर्थस्य दर्शनविषयता, तस्मिन् सति वक्तुमीहा = अर्थस्य निर्भासे सति तस्य विवक्षा, ततः प्रयत्नादेः = प्रयत्नपूर्वकात् स्थानकरणाभिघातात् शब्दोच्चारणमित्येवं परम्परया बाह्यार्थ एव वाच्य इति तत्रैव प्रवृत्तिरिति; किन्तु बाह्यार्थं विनापि विज्ञानमात्रदर्शनेऽपि = विज्ञानवादेऽपि अर्थनिर्भासवशेन क्रियाकारकसम्बन्धो मेलयितुं शक्यत इत्यभिप्रेत्यैवैतत् कारिकायां विज्ञानवादोपन्यासः, न तु सिद्धान्तीकृत्येत्यवधेयमिति ।। ३३ ।।

यतश्च बुद्धिपरिवर्ती अर्थः शब्दार्थः, न तु बाह्यः, ततः शब्दार्थसम्बन्धो नित्य उपपद्यते "सिद्धे शब्दार्थसम्बन्ध' इत्यादिपस्पशाह्निकान्तस्थभाष्यवार्त्तिकोक्तेः । बौद्धानां शब्दार्थसम्बन्धानां बुद्धौ वासनारूपेण स्थितानां संसारानादित्वेन प्रवाहनित्यत्वादित्याह—अनित्येष्वपीति ।

अयमर्थः—अनित्येष्वपि अर्थेषु नित्यत्वम् अभिधेयात्मना = संसारानादित्वाद् अभिधेयप्रवाहरूपेण स्थितमिति ।

अयं भावः—घटादिशब्दादुच्चारिताद् अर्थाकारावग्रहस्य अर्थाकारनिर्भासस्य प्रत्ययस्य सदैवोपजननाद् बाह्येन रूपेण अर्थस्य प्रध्वंसित्वेऽप्यभिधेयत्वेन रूपेण शब्दार्थस्य नित्यत्वात् । अत एव प्रवाहनित्यताश्रयेण भाष्ये पस्पशायामुक्तम्—नित्यो ह्यर्थवतामर्थैरभिसम्बन्ध इति ।

एवं बौद्धशब्दार्थस्य प्रवाहनित्यताश्रयेण = शब्दार्थसम्बन्धस्यापि तादृशस्य नित्यतामुपपाद्य इदानीं तस्य कूटस्थनित्यतामाश्रित्यापि तत्सम्बन्धस्य नित्यतामाह—अनित्यत्वमिति ।

अयमर्थः—वा = अथवा, पदार्थानां सतामसत्त्वायोगात् पदार्थानाम् अनित्यत्वं स्वशक्तिः = स्वस्य आत्मनो ब्रह्मणः शक्तिः सामर्थ्यमेव । तथा हि घटादिरूपोपाधिविशिष्टं

**नित्यादद्वयरूपात् तस्माद्भेदाभावादनित्यशब्देनोपाधिभेदभिन्नस्य पूर्वोक्तेनैव न्यायेन तस्यैव प्रतिपादनान्नास्त्यभावो नाम तदभावतो भावेषु कश्चिदित्यर्थः। ततश्च घटादिशब्दैः सर्वावस्थासूपाधिविशिष्टब्रह्मद्रव्यमेव नित्यं प्रतिपाद्यत इति नित्यः शब्दार्थसम्बन्धः सिद्धः। तदुक्तम्—"द्रव्येऽपि पदार्थ एष विग्रहो न्याय्यः, सिद्धे शब्देऽर्थे सम्बन्धे च" इति ( म० भा० पस्पशा० ) ॥ ३४ ॥**

**एवं सम्बन्धं स्वाभाविकमवस्थाप्य तत्रैवोपोद्बलकं परमतेनाह—**

---

ब्रह्मरूपं द्रव्यमेव तत्तच्छब्दार्थः, तस्य च नास्तीति प्रत्ययहेतुभूतमनित्यत्वं शक्तिरेव। सा च शक्तिर्नित्यात् शक्तिमतो ब्रह्मणोऽद्वयान्न भिद्यते, शक्तिशक्तिमतोरभेदस्यानुभवसिद्धत्वात्। तथा च तत्तद्भावरूपोपाधिविशिष्टं ब्रह्मरूपं द्रव्यमेव शब्दार्थः, स च कूटस्थनित्य इति तत्सम्बन्धोऽपि वस्तुतस्तद्रूपः कूटस्थनित्य एव सिद्ध इति।

अयं भावः—सतां पदार्थानामसत्त्वरूपमनित्यत्वं न सम्भवति एकस्मिन् सत्त्वासत्त्वयोर्विरोधात्। तदुक्तम्—

सताञ्च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥ इति।

गीतायामपि—

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ इति।

अतोऽतीतानागतयोरध्वनोः=भूतभविष्यत्कालयोः अनित्यत्वेनाभिमतानां घटादिपदार्थानां नास्तीति प्रत्ययजनकमद्वयस्य तत्त्वस्य स्वशक्तिः=स्वस्य आत्मनो ब्रह्मणो द्रव्यलक्षणस्य सामर्थ्यमेव तत्रानित्यत्वमिति। तस्य च अद्वयसामर्थ्यरूपस्यानित्यत्वस्य नित्याद‌द्वयरूपात् तस्माद्=ब्रह्मणो भेदाभावाद् घटाद्युपाधिभेदभिन्नस्य तस्यैव=ब्रह्मण एव पूर्वोक्तेन न्यायेन=प्रागुक्तयुक्त्या अनित्यशब्देन प्रतिपादनात् सत्सु भावेषु तदभावतः=पदार्थानामसत्त्वमादाय अभावो नाम कश्चित् पदार्थो नास्ति इत्यर्थः। ततश्च घटादिशब्दैः सर्वावस्थासु=भूतभविष्यद्वर्तमानरूपासु घटाद्युपाधिविशिष्टं ब्रह्मरूपं द्रव्यमेव कूटस्थनित्यं प्रतिपाद्यत इति शब्दार्थरूपस्य सम्बन्धिनो नित्यत्वात् शब्दार्थसम्बन्धोऽपि नित्यः सिद्ध इति। तदुक्तं पस्पशान्ते भाष्ये—"द्रव्येऽपि पदार्थ एष विग्रहो न्याय्यः, सिद्धे शब्देऽर्थे सम्बन्धे च" इति। अत्र सिद्धशब्दो नित्यार्थक इति ॥३४॥

एवं शब्दार्थयोः सम्बन्धं स्वाभाविकम्=प्रवाहरूपेण कूटस्थत्वेन वा नित्यम्, अवस्थाप्य=स्थिरीकृत्य तत्रैवोपोद्बलकम्=उपपादकम्, परमतमाश्रित्याह—शब्देनार्थस्येति।

अयमर्थः—शब्देन=शाबरादिमन्त्ररूपेण लोके सर्पवृश्चिकादि विषापनोदनाय प्रयुज्यमानतया प्रसिद्धेन अर्थस्य=सर्पादिविषस्य संस्कारो दृष्टप्रयोजनः क्रियते। नरादौ

शब्देनार्थस्य संस्कारो दृष्टादृष्टप्रयोजनः ।
क्रियते सोऽभिसम्बन्धमन्तरेण कथं भवेत् ॥ ३५ ॥

इहार्थं कञ्चनाप्यनभिदधतीनां शाबरादिविद्यानां विषादिशमने सामर्थ्यं दृष्टम् । प्रतितन्त्रं प्रसिद्धानां च बीजाक्षराणां जप्यमानानामदृष्टहेतुत्वम्, अत एवोन्नीयत इत्यवाचकेष्वपि शब्देष्वर्थेन सह संस्कारान्यथानुपपत्त्या सम्बन्धभावात् सर्वत्र सम्बन्धावसाय इति कश्चित् ॥ ३५ ॥

एतन्निवारयति—

---

संक्रान्ते। सर्पादिविषे अनर्थकेनापि शाबरादिमन्त्रजपेन संस्कृते हि विषस्य प्रशमः = दाहकत्वमारकत्वादिदोषापगमः प्रयोजनं दृष्टम् । ऐंकारादिरूपबीजाक्षररूपेण शब्देन हि अवाचकेनापि अर्थस्य स्वजपितृचित्तस्य संस्कारोऽदृष्टप्रयोजनः क्रियते । तथा हि—बीजाक्षरजपेन संस्कृते जपितुरन्तःकरणेऽदृष्टं पुण्याख्यमुत्पद्यते । तेन चालौकिककवित्वादिसिद्धयः । तदुक्तं श्रीहर्षमिश्रैः—

तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ।

इति प्रतिसर्गमन्ते ।

पुष्पैरभ्यर्च्य गन्धादिभिरथसुभगैश्चारुहंसेन मां चे-
न्निर्यान्तीं मन्त्रमूर्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः ।
सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकं दृश्यमस्याः ॥

इति च ।

एवं च सदृष्टादृष्टप्रयोजनः प्रत्यर्थं नियतः शब्देनार्थस्य संस्कारः शब्दार्थयोरभिसम्बन्धमन्तरेण कथं भवेत् ? तयोरसाधारणसम्बन्धाभावे संस्कारस्य शब्दजस्याव्यापकत्वातिव्यापकत्वरूपदोषापातादिति ।

अयं भावः—इह कस्याप्यर्थस्य वाचकानां शाबरादिमन्त्राणां सर्पवृश्चिकादिविषादिशमने सामर्थ्यं दृष्टं लोके । सैव शाक्तवैष्णवादितन्त्रेषु सर्वेषु प्रसिद्धानाञ्च तत्तद्बीजाक्षराणामदृष्टहेतुत्वम् = पुण्यजनकत्वम् फलद्वारेण दृष्टं तज्जापकैः । अत एव इति = इदम् उन्नीयते । अर्थस्य संस्कारान्यथानुपपत्त्या शब्देषु अवाचकेष्वपि अर्थेन संस्कार्येण सह सम्बन्धसत्त्वात् सर्वत्र = वाचकेष्वपि शब्देषु वाच्येनार्थेन सह सम्बन्धस्य संस्कारहेतुभूतस्यावसायः = निश्चय इति कश्चिन्मनुत इति ॥ ३५ ॥

एतन्मतं प्रत्याचष्टे—नावश्यमिति ।

अयमर्थः—घटादिशब्दाभिधेयेषु अर्थेषु स घटादिशब्दजनितः, तथाविधः दृष्टादृष्ट-

**नावश्यमभिधेयेषु संस्कारः स तथाविधः।**
**दृश्यते न च सम्बन्धस्तथाभूतो विवक्षितः ॥ ३६ ॥**
**सति प्रत्ययहेतुत्वं सम्बन्ध उपपद्यते।**
**शब्दस्यार्थे यतस्तत्र सम्बन्धोऽस्तीति गम्यते ॥ ३७ ॥**

**घटादिशब्देभ्योऽर्थस्य घटादेर्दृष्टादृष्टप्रयोजनस्य संस्कारस्यादर्शनादत्र सम्बन्धो न स्यादिति नेदृशसंस्कारनिमित्तमसौ विवक्षितः ॥ ३६ ॥**

**अपि तु—**

---

प्रयोजनः संस्कारः अवश्यम् = नियमेन, न दृश्यते। च = किञ्च अर्थेन वाच्येन सह शब्दस्य तथाभूतः = दृष्टादृष्टप्रयोजनस्य संस्कारस्य हेतुभूतः, सम्बन्धो न विवक्षितः सत्त्वेऽपि इति। क्वचित् तु दृष्टादृष्टप्रयोजनोऽर्थस्य संस्कारः शब्दकृतो दृश्यत इत्यभिप्रेत्य नावश्यमित्युक्तम्। तद्यथा—"वैदिकमन्त्रैः सार्थकैरर्थस्मृतिद्वारा संस्कृतानामर्थानां क्रतूपकाररूपं दृष्टम् प्रयोजनम्। अत एव प्रयोगसमवेतार्थस्मारका मन्त्रा इति मन्त्रलक्षणं वदन्तो मन्त्रैरेवार्थाः स्मर्तव्याः" इति पूर्वमीमांसकाः। एवञ्चापभ्रंशस्मृतानामर्थानां न क्रतूपकारकत्वमित्यायातम्। किञ्च, वैदिकमन्त्रजपेन अन्तःकरणे संस्कृते अदृष्टमपि प्रयोजनम्। तद्यथा—'असतो मा सद् गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मामृतं गमय' इत्यभ्यारोहमन्त्रजपेन संस्कृते चित्ते अशुक्लाकृष्णस्य अदृष्टस्य उत्पत्त्या ज्ञानद्वारापवर्गः' इति उत्तरमीसांसका इति।

अयं भावः—घटादिशब्देभ्योऽर्थेषु घटादिषु जनितो दृष्टादृष्टप्रयोजनः संस्कारो न दृश्यत इति घटादिशब्दानां घटाद्यर्थैः सह सम्बन्धो न सिद्ध्येदिति न दृष्टादृष्टप्रयोजनस्य संस्कारस्य निमित्तभूतः सम्बन्धोऽत्र = शब्दार्थप्रतिपत्तिहेतुभूतशब्दार्थसम्बन्धविचारप्रस्तावे विवक्षित इति ॥ ३६ ॥

अतः शब्दादर्थे संस्कारान्यथाऽनुपपत्त्या शब्दार्थयोः सम्बन्धो न कल्पयितव्यः, अपितु शब्दादर्थे प्रत्ययान्यथाऽनुपपत्त्या तयोः सम्बन्धः कल्पयितव्य इत्याह—सति प्रत्यय हेतुत्वमिति।

अयमर्थः—यतः सति शब्दार्थयोः सम्बन्धे शब्दस्यार्थे प्रत्ययहेतुत्वमुपपद्यते, अतस्तत्र नियते अर्थे नियतस्य शब्दस्य सम्बन्धोऽस्तीति गम्यते ज्ञायते इति। स चार्थप्रत्ययान्यथाऽनुपपत्त्याऽविशेषेणानुमीयमानः सम्बन्धो विशेषजिज्ञासायां योग्यतारूप एव पर्यवस्यति, इन्द्रियाणां स्वविषयेषु अनादिर्योग्यतायथेत्यादिकारिकोक्तः, न तु संस्कार्यसंस्कारकभावलक्षणः, तस्य अर्थे शब्दकृतसंस्कारान्यथाऽनुपपत्त्या कल्प्यमानस्य शब्दधर्मस्य संस्कारकत्वस्यापेक्षायामपि तद्धर्मप्रत्यायकत्वानपेक्षणात्। किञ्चात्रान्यथाऽप्युपपत्तिरूपोऽपि अर्थापत्तिबाधको दोषः। प्रभावविशेषविशिष्टपुरुषनिर्मितात् शाबरादिमन्त्ररूपा-

**प्रतिनियतार्थप्रत्यायनान्यथानुपपत्त्या शब्दार्थयोः सम्बन्धो योग्यतालक्षणश्चक्षुरूपादीनामिवेत्यस्मदुपज्ञमेव ज्याय इत्यर्थः। अर्थे नियते नियतस्य प्रतीतिहेतुत्वं सति सम्बन्धे युज्यते, नान्यथेति। यतस्तस्मादर्थप्रत्यायनाख्यात् कार्यात् अस्ति सम्बन्धः, शब्दस्यार्थे इति निश्चीयते। नार्थविशेषाधानरूपः संस्कारोऽत्र सम्बन्धावेदकः, तस्यानुपूर्वीमात्राद्विशिष्टेन प्रभाववता रचितादपि निष्पत्तेः प्रत्यायकत्वानपेक्षणादित्यर्थप्रतीतिनियमहेतुः शब्दार्थयोः सम्बन्धः प्रतीतिकृतः, न प्राप्तिलक्षण इति प्रतीतिलक्षणादुपकारात् तत्सिद्धिः। यद्यपि मीमांसकैर्यच्छब्दे विज्ञातेऽर्थो विज्ञायते, स सम्बन्धः" इत्युक्तम्, तदप्यनेनैव दर्शनेन व्याख्यायेयम्। यतः कारणाच्छब्दश्रवणानन्तरमर्थज्ञानं भवति, स सम्बन्ध इति सति प्रत्ययहेतुत्वमित्येवोक्तं भवति, अन्यथा शब्दार्थयोः कार्यं कारणभाववर्णने निमित्तं नियमेनोक्तं स्यात् ॥ ३७ ॥**

**सामयिकस्तु सम्बन्धो न युज्यत इत्याह—**

---

नुपूर्वीमात्रादपि अर्थे संस्कारस्योपपत्तेः, नापि स शब्दार्थयोः सम्बन्धः कार्यकारणभावलक्षणः, तस्यापि नियामकापेक्षायामन्ते योग्यतारूपस्य सम्बन्धस्यैव तन्नियामकत्वेन वक्तव्यत्वात्। तथा चात्र घट्टकुटीप्रभातन्यायावसरः सम्प्राप्त इति।

अयं भावः—शब्दे यन्नियतार्थप्रत्यायनं तदन्यथाऽनुपपत्त्या शब्दार्थयोः सम्बन्धो योग्यतालक्षणश्चक्षुरादिरूपकरणरूपादिरूपतद्विषयाणामिव स इत्यस्मदुपज्ञमेव = वैय्याकरणोपज्ञमेव दर्शनं ज्यायः। नियतेऽर्थे नियतस्य शब्दस्य प्रतीतिहेतुत्वम्, यतः सति सम्बन्धे युज्यते, नान्यथेति। तस्मादर्थप्रत्यायनाख्यात् कार्यात् तत्कारणमस्ति सम्बन्धः शब्दस्यार्थे इति निश्चीयते।

शब्दकृतोऽर्थे विशेषाधानरूपः संस्कारस्तु नात्र सम्बन्धावेदकः, विशिष्टेन = अस्मदादिविजातीयेन प्रभाववता पुरुषेण महादेवेन रचितादनर्थकात् शाबरमन्त्रादिरूपादानुपूर्वीमात्रादपि अर्थे संस्कारस्य निष्पत्तेः प्रत्यायकत्वानपेक्षणात्, अन्यथाऽप्युपपत्तेः इति अर्थप्रतीतिनियमहेतुः सम्बन्धप्रतीतिकृतः = प्रतीत्यन्यथानुपपत्त्या कल्पितः योग्यतालक्षण एव, न तु संस्कारकृतः प्राप्तिलक्षणः = संयोगलक्षण इति प्रतीतिलक्षणादुपकारात् तत्कारणस्य सम्बन्धस्य योग्यतालक्षणस्य सिद्धिः।

यदपि मीमांसकैरुक्तम्—"यच्छब्दे विज्ञातेऽर्थो विज्ञायते, स सम्बन्ध" इति, तदपि अनेनैव दर्शनेन = मतेन व्याख्येयम्। तथा हि—यद् = यस्मात् कारणात्, शब्दे विज्ञातेऽर्थो विज्ञायते = शब्दश्रवणानन्तरमर्थज्ञानं भवति, स तत्कारणम्, सम्बन्ध इति सति प्रत्ययहेतुत्वमित्येवोक्तं भवति। अन्यथा शब्दार्थयोः कार्यकारणभावरूपे सम्बन्धे अर्थप्रत्ययहेतुताया वर्ण्यमाने सति कार्यकारणभावरूपसम्बन्धस्यापि निमित्तं नियामकम्, नियमेन उक्तम् = वक्तव्यं स्यात्। स चान्ततो योग्यतारूप एव स्यात्, अनवस्थादिदोषभयादिति ॥३७॥

**नित्येऽनित्येऽपि वाच्येऽर्थे पुरुषेण कथञ्चन ।**
**सम्बन्धोऽकृतसम्बन्धैः शब्दैः कर्तुं न शक्यते ॥ ३८ ॥**

**नित्ये तावदर्थे जात्यादौ नित्यशब्दार्थदर्शने वा सर्वस्मिन् पुरुषेणेदंप्रथमतया शब्दस्य सङ्केतः कर्तुं न पार्यते, नित्यत्वादेवेदानीमुपजातस्य पुरुषस्य तत्राव्यापारात् । पूर्वमपि तस्मादाकाशकालदिगादिशब्दानां दिगादीनां ) नित्यशब्ददर्शने ( नित्यशब्दार्थदर्शने ) वा ब्रह्मणः शब्दवाच्यत्वात् सर्वेषामर्थसंबन्धादादिपुरुषेणापि कृते शक्त्यनुसारस्य प्रतिपादितत्वात्, आदिसर्गात् प्रभृति च प्रवृत्तौ किमन्यन्नित्यत्वात्**

---

एवं योग्यतालक्षण एव शब्दार्थयोः स्वाभाविकः = नित्यः सम्बन्धोऽर्थप्रत्ययहेतुरिति सिद्धम् । सामयिकस्तु = समयकृतः, आधुनिकपुरुषसंकेतकृतस्तु सम्बन्धो न युज्यत इत्याह—नित्येऽनित्येऽपीति ।

अयमर्थः—नित्ये घटादिरूपोपाधिविशिष्टब्रह्मरूपे, अनित्ये घटादिरूपे वाऽर्थे वाच्ये कथञ्चन = कथमपि, अकृतसम्बन्धैः = अकृतागृहीतसम्बन्धैः शाब्दैः पुरुषेण कस्यापि शब्दस्यार्थे सम्बन्धः कर्तुं न शक्यते । 'कृभ्वस्तयः क्रियासामान्यवचना' इत्यभ्युपगमेन करोतिर्ग्रहणार्थः । तथा चावृत्त्यार्थद्वयम् । एवञ्च प्राक्कृतप्राग्गृहीतसम्बन्धैः शब्दैः सर्वस्यापि शब्दस्यार्थे सम्बन्धः कर्त्तुं शक्य इत्यायातम् । तथा च संकेतनिरूपकाणामपि शब्दानां संकेते सामयिकेऽभ्युपगम्यमानेऽनवस्थाऽन्योन्याश्रयचक्रकाणि सहजानि समापतन्ति इति सुदूरमपि गत्वा कस्यचिच्छब्दस्यार्थे योग्यतारूपः सम्बन्ध एषणीय इति आदावेव स कुतो नाभ्युपेयते ? तथा च लोके आभाणकः—"अन्ते रण्डाविवाहश्चेदादावेव कुतो नहि" इति ।

अयं भावः—नित्या जातिरेव सर्वत्र शब्दार्थः, न तु अनित्या व्यक्तिरिति जातिशक्तिवादिनः । आकाशकालदिगादिशब्दानाञ्च नित्या व्यक्तिरेव शब्दार्थः । एवं गुणादिरपि नित्यः शब्दार्थ ऊह्यः । तथा च नित्ये तावज्जात्यादौ शब्दार्थेऽभ्युपगम्यमाने नित्यं घटादिरूपानित्योपाधिविशिष्टं ब्रह्मरूपं द्रव्यमेव सर्वत्र शब्दार्थ इति दर्शने वा सर्वस्मिन्नर्थे इदंप्रथमतया पुरुषेण शब्दस्य संकेतः कर्त्तुं न पार्यते । इदानीमुपजातस्य पुरुषस्य नित्यत्वादेव प्रागप्यवस्थितेऽर्थे संकेतक्रियाया असंभवात् । तस्मात् पुरुषात् संकेतयितुः पूर्वमपि आकाशकालदिगादीनां नित्यशब्दार्थदर्शने वा ब्रह्मणस्तत्तदुपाधिविशिष्टस्य शब्दवाच्यत्वात्, सर्वेषां शब्दानां सर्वदाऽर्थसम्बन्धात् = अर्थसम्बन्धस्यानुभूयमानत्वाद् ये चादिपुरुषेण भगवता सर्गादौ कुम्भकारतन्तुवायकर्मारादिकं तत्तद्रूपमास्थाय सर्गादिसंभूतपुरुषान् प्रति तत्तच्छब्दानां तत्तदर्थेषु संकेतः कृतस्तत्तदर्थसर्गपूर्वकम् । अत एव शुक्लयजुर्वेदे शतरुद्रिये भगवतः कर्मारकुम्भकारादिरूपाणां नमस्कारः कृत इति मन्यन्ते । तन्मतेऽपि शक्त्यनुसारस्य = शक्तिरूपशब्दार्थसम्बन्धानुसरणस्य प्रतिपादितत्वाद् वरं स्वाभाविकस्य योग्यतारूपस्य शब्दार्थसम्बन्धस्यानुसरणम् । इदमत्र योग्यमिति आप्तो-

**स्यात्।** अनित्येऽप्यर्थे घटादौ कार्यशब्द (शब्दार्थे) दर्शने वा प्रत्यक्षेण सर्वग्रहणायोगाज्जातिद्वारेणापि ग्रहणे जातीनामेकस्मिन्नर्थे भूयसीनां संभवे विवेचनानुपपत्तेरनुमानेनापि शब्दाभेदेनार्थस्य प्रतिपत्तेः शब्दार्थसिद्धौ तस्यायोगात् पारिशेष्याच्छब्दैरेव निरूप्य विषयं सङ्केतः क्रियेत। तथा च निरूपकाणामपि शब्दानां सङ्केते सैव वार्तेति तत्रापि शब्दान्तरैर्निरूपणेऽनवस्था, अकृतसमयैर्निरूपणानुपपत्तेरिति सुदूरमपि गत्वा कस्यचिच्छब्दस्य स्वाभाविकी योग्यतैषणीया। तथा चाविशेषात् सर्वेषामपि तत्प्रसङ्ग इति सिद्धः स्वाभाविकः शब्दार्थयोः सम्बन्धः समयवशादभिव्यज्यमानस्वरूपः॥ ३८॥

इदानीं यन्मतुब्वार्त्तिके भाष्येऽभिहितम्—

"सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूद्" (म.भा.५।२।९४) इति

तत्र भूतभविष्यतोः सत्ताव्याख्यानमिषेण प्रकृतं संबन्धनित्यत्वं निर्वाहयितुमाह—

---

पदेशेन वृद्धव्यवहारेण वा योग्यतारूपस्य सम्बन्धस्य ग्रहे संकेतग्रहं विनैव शब्दार्थप्रतीतिसंभवात्। प्रवाहरूपेण नित्येषु घटादिष्वर्थेषु, स्वरूपतो वा नित्येषु आकाशकालदिगादिष्वर्थेषु तत्तच्छब्दानां सर्गादौ आदिपुरुषेण भगवता संकेतः कृतः, आधुनिकनामादिशब्दानान्तु तत्तदर्थेषु पुत्रादिरूपेषु इदानीमेव पित्राचार्यादिभिः संकेतः कृत इति स्वीकारे च संकेतसम्बन्धयोर्ग्राह्यग्राहकयोर्नित्यत्वादन्यत् किं सिद्धं स्यादित्येवमपि आयातं शब्दार्थसम्बन्धस्य नित्यत्वम्।

किञ्च स्वरूपतोनित्येऽपि घटादौ शब्दार्थेऽभ्युपगम्यमाने, ब्रह्मातिरिक्तं सर्वं कार्यम्। तदेव च शब्दार्थ इति दर्शने वा शब्दैरेव विषयम्=अर्थं निरूप्य तत्रार्थे शब्दस्य संकेतः कर्त्तुं शक्यः, अर्थग्रहणाभावे तत्र संकेतक्रियाया अनुपपत्तेः। अर्थग्रहश्च शब्दैरेव कर्त्तुं शक्यः, नान्यथा। तथाहि—प्रत्यक्षेण सर्वेषामर्थानां भूतभविष्यद्वर्तमानानां व्यवहितविप्रकृष्टानाञ्च ग्रहणं न संभवति, इन्द्रियार्थासन्निकर्षात्। सामान्यलक्षणप्रत्यासत्त्या जातिद्वारेणापि सर्वार्थग्रहणे उपपाद्यमाने एकस्मिन्नर्थे घटादिरूपे भूयसीनां जातीनां सत्ता द्रव्यत्वपृथिवीत्वघटत्वादीनां संभवेन किं जात्याश्रयो घटशब्दार्थ इति विवेचनानुपपत्तेः। अनुमानेन सर्वेषामर्थानां ज्ञानसंभवेऽपि शब्दाभेदेन=नीरक्षीरवच्छब्दसंभेदेनैव अर्थस्य प्रतिपत्तिः, न तु पृथक्तया। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

(वा० का० १।१२३)

तथा च तस्य=अनुमितस्य अर्थस्य शब्दार्थसिद्धौ=संकेतग्रहद्वारा अर्थस्य शब्दवाच्यत्वसिद्धौ नोपयोग इति पारिशेष्यात् शब्दैरेव विषयं निरूप्य संकेतः क्रियेत। तथा च निरूपकाणामपि शब्दानां संकेते सैव वार्ता=शब्दैरेव विषयं निरूप्य संकेतः क्रियेत

**व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ।**
**सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥ ३९ ॥**

**व्यपदेशे व्यपदेशनिमित्तं शब्देन प्रत्यायने पदप्रत्याय्यानामर्थानां बाह्यानां वस्तूनां बाह्यविलक्षणा सत्ता बुद्ध्योपचरिता बाह्यार्थसत्ताया हि अन्या बुद्धिसमारूढार्थाकाररूपा सत्ता । अत एवौपचारिकी इयम् । उपचारोऽध्यारोपः प्रयोजनमस्याः**

---

इति तत्रापि शब्दान्तरैरेव निरूपणेऽनवस्था, प्रागकृतसमयैः शब्दैर्निरूपणानुपपत्तेरिति सुदूरपरिधावनपरिश्रान्तैर्भवद्भिरपि अगत्या कस्यचिच्छब्दस्य स्वाभाविकी = नित्या योग्यता = तदाख्यः अर्थे सम्बन्ध एषणीया । तथा च शब्दत्वाविशेषात् तस्मात् शब्दात् पूर्वेषामपि शब्दानां तत्प्रसङ्गः = योग्यताख्यसम्बन्धाऽभ्युपगमप्रसङ्ग इति रीत्या सिद्धः स्वाभाविकः शब्दार्थयोः सम्बन्धः तादात्म्याध्यासरूपो योग्यतापरपर्यायः । समयवशात्= संकेतग्रहवशात्, अभिव्यज्यमानस्वरूपः । एवञ्च शब्दार्थयोः सम्बन्धोऽनादिरनन्तो नित्यः समयवशादभिव्यज्यते, न तु क्रियते, तस्य प्रतियोगिनोः शबदार्थयोरपि नित्यत्वात् । तदुक्तं पस्पशान्ते वार्त्तिके—'सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते'' इति ॥ ३८ ॥

मतुप्सूत्रे 'अस्ति' पदं धत्रर्थकास्तिपदाभिप्रायेण प्रयुक्तम् । मतुप्प्रकृत्यर्थस्य वर्तमानसत्ताया 'अस्ति' पदाभावेऽपि बहुव्रीहिसमास इव औपाधिकत्वेन लाभसंभवात् । अत एव 'बहुव्रीहिसमासेऽस्त्यर्थः प्रकृत्यर्थोपाधिरित्युक्तं कैयटे' इत्युक्तं हलन्त्यसूत्रे शब्दरत्ने । तथा च 'धनवान्' इत्यर्थे 'अस्तिमान्' इत्येतद्रूपसिद्ध्यर्थं मतुप्सूत्रेऽस्तिपदम् । अव्ययेभ्यो विभक्त्यनुत्पत्तेरेव लुकाऽन्वाख्यानमिति 'अस्ति' पदात् तिङन्तप्रतिरूपकाव्ययात् प्रथमान्तत्वाभावेन मतुपो नास्ति संभव इति अस्तिपदं सूत्रे सार्थकम् । तथा च अस्त्यर्थस्यौपाधिकत्वे वर्तमानसत्तायामिव भूतभविष्यत्सत्तयोरपि मतुपः प्रसक्तिरिति तद्वारणपरे मतुप्सूत्रस्थे वार्त्तिके भाष्ये यदुक्तम्—''सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूत्'' इति, तत्र भूतभविष्यतोः पदार्थयोः सत्ताव्याख्यानमिषेण प्रकृतं सम्बन्धनित्यत्वं निर्वाहयितुमिदानीमाह—व्यपदेश इति ।

अयमर्थः—बाह्यानां पदार्थानां व्यपदेशे = शब्देन प्रत्यायने निमित्तभूता, अन्या = बाह्यार्थसत्ताया विलक्षणा बुद्धिसमारूढार्थाकाररूपा सत्ता । अत एवेयमौपचारिकी । उपचारो बाह्यार्थानां बुद्धौ अध्यारोपः प्रयोजनमस्या इति सा तथाभूता । बाह्यार्थसत्ता तु परमार्थवस्तुविषया इति । सा च सर्वावस्थासु = वर्तमानवदतीतानागतास्वप्यवस्थासु, सर्वेषाम् = भावरूपाणां घटादिपदार्थानाम्, अभावरूपाणाञ्च शशविषाणादिपदार्थानाम्, आत्मरूपस्य = स्वरूपस्य दर्शिका । पदार्थानां बाह्यानां बाह्यसत्तातोऽविलक्षणा बौद्धी सत्ता = बुद्धिसमारूढार्थाकाररूपा औपचारिकी यदि न स्यात्, तदा

**सर्वावस्थासु इति अतीतानागतास्ववस्थास्वप्यर्थरूपं दर्शयति, तद्रूपेण बुद्ध्याकारस्य प्रतिभासनात्। एवं चातीतानागतादिशब्दानामप्यर्थसद्भावात् संबन्धनित्यतास्त्येव। विशेषणविशेष्यावस्थायामपीयमेव सत्तार्थानाम्। अन्यथा सदैव विशिष्टस्य निरंशस्य वस्तुनः कथं प्रविवेकः सर्वेषामिति अभावविषयाणां शशविषाणादिशब्दानामप्याकारोल्लेखिनी। तथा हि बुद्ध्या निरूपितवस्तुविषयाः शब्दाः। बुद्धिश्च बहिरसत्यप्यर्थे स्वबीजवासनापरिपाकवशादाकारावग्रहरूपोपजायते वैकल्पिकी। तथैव च शब्दात् प्रतीयत इत्यवधीरितबहिर्गतभावाः शब्दाः बुद्धिप्रतिभासिनमर्थमभिनिविशन्त इत्यलातचक्रशशविषाणादीनामपि शब्दानां नित्यमर्थैरवियोगात् संबन्ध-**

---

सर्वावस्थासु भूतभविष्यद्वर्तमानासु सदसतां पदार्थानां स्वरूपं बहिर्वर्तमानमवर्तमानं वा शब्दतो न प्रतीयेतेति बौद्धार्थ एव कालत्रयेऽपि बुद्धौ समवस्थितः शब्दार्थ इति रीत्या शब्दार्थसम्बन्धस्यापि नित्यत्वं सिद्ध्यति, अर्थविषयकस्य शाब्दव्यवहारस्य कालत्रयेऽपि जायमानत्वादिति निर्गलितार्थः।

अयं भावः—पदार्थानाम् = पदप्रत्ययानामर्थानाम्, बाह्यानां वस्तूनां व्यपदेशे = शब्देन प्रत्यायने निमित्तभूता बाह्यविलक्षणा सत्ता बुद्धिसमारूढार्थाकाररूपा अत एव बुद्ध्योपचरिता = बुद्ध्या अर्थे अध्यारोपिता, बाह्यार्थसत्ताया हि अन्या। अत ऐवेयं सत्ता औपचारिकी। उपचारो बाह्यार्थस्य बुद्धौ अध्यारोपः प्रयोजनमस्या इत्यौपचारिकी। सर्वास्ववस्थासु इति। सैव बुद्धिसत्ता अतीतानागतासु अपि अवस्थासु बहिरविद्यमानमप्यर्थं दर्शयति बुद्धौ। तद्रूपेण = बाह्यार्थरूपेण, बुद्ध्या अर्थाकारस्य प्रतिभासनात्। एवञ्चातीतानागतादिशब्दानामपि बुद्धौ अर्थसद्भावात् शब्दार्थसम्बन्धनित्यताऽस्त्येव। अर्थानां विशेषणविशेष्यावस्थायामपि बुद्धिसत्तैव। तथाहि—वस्तुमात्रं सदैव विशिष्टं निरंशम् = अखण्डं चेति अनुभवोपपत्तिभ्यां सिद्धः सिद्धान्तः। एवञ्च विशेषणविशेष्यावस्थायामर्थानां बुद्धिसत्ताया अनङ्गीकारे कथं सर्वेषामर्थानां विशेषणत्वेन विशेष्यत्वेन च प्रविवेकः = प्रविभाग इति। अभावविषयाणाम् = असदर्थकानाम्, शशविषाणादिशब्दानामपि बुद्धौ अर्थाकारोल्लेखहेतुरर्थानां बुद्धिसत्तैव। तथाहि—सर्वेऽपि शब्दा बुद्ध्या निरूपितवस्त्वभिधायिनः। बुद्धिश्चार्थे बहिरसत्यपि स्वबीजवासनापरिपाकवशात् = स्वस्मिन् बुद्धिस्वरूपे शब्दार्थबीजरूपेण वर्तमाना या वासना = प्राक्तनः शब्दार्थविषयकः संस्कारः, तस्या यः परिपाकः = कालादृष्टादिरूपनिमित्तवशाद् उद्बोधः, तद्बलात् = आकारावग्रहरूपा, अर्थाकारं स्वस्मिन् विद्यमानमुपगृह्णती शशविषाणादिशब्दादुपजायते वैकल्पिकी = विकल्पात्मकवृत्तिरूपा। तदुक्तम्—

अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि। इति।

"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति च विकल्पलक्षणमुक्तं योगभाष्ये वृत्तिनिरूपणावसरे आदावेव। शब्दज्ञानमात्रेण बुद्धौ अनुपतनशीलो वस्तुतो बाह्यार्थरहितो विकल्प इति च तद्व्याख्या। बहिरविद्यमानोऽपि तथैव च = बुद्धिसत्तासमाविष्ट

**नित्यतासिद्धिः। संविदुपारोहे हि व्यवहार इति तन्मय्येवार्थस्य सत्ता न्याय्या। प्राक् तु संविदोऽप्रामाणिकत्वात् श्रद्धामात्रगम्या सा। तत्र च प्रहतः सत्ताभिमान इति तदनुरोधनोपचारसत्तावाचोयुक्तिः। अत एव व्यपदेशे इति, शाब्दे व्यवहार इतीयमपि व्याख्या। तत्र चेयमेव शरणम्, अस्या एव हि अर्थानामात्मालाभ इव शब्दपरामर्शमन्तरेणैषां रूपसंस्पर्शस्याभावात् ॥३९॥**

**एवं चानयैव सत्तया पूरिते व्यवहारे यद्यर्थक्रियाकरणादिना काष्ठबुसप्रायेण केनचिन्निबन्धनेनान्यसत्ता कल्प्यते तद्वर्धतां सा, न तत्र चिन्तास्माकम्, व्यवहारे तु तस्या नास्त्यनुप्रवेशः, यदि परमस्यामेव सा प्रतिबिम्बिता व्यवह्रियत इत्येतत् प्रतिपादयितुं निदर्शनोपक्रममाह—**

---

एव च शब्दात् प्रतीयते शशविषाणादिरूपोऽर्थं इति अवधीरितबहिर्गतभावाः = स्वार्थानां बहिः सत्तामनपेक्षमाणाः शब्दाः बुद्धिप्रतिभासिनमर्थं बहिरविद्यमानमपि अभिनिविशन्ते = अभिनिवेशेन बौद्धार्थमात्रविषयकबोधनाग्रहेण बोधयन्ति, न तु बाह्यार्थमित्यलातचक्रशशविषाणादीनां बहिरसतामप्यर्थानां बोधकानां शशविषाणादिशब्दानां बुद्धौ सामानाधिकरण्येन नित्यमर्थैरवियोगात् सम्बन्धनित्यतासिद्धिः। अर्थानां संविदुपारोहे हि = बुद्धिसत्तासमावेशे हि, शाब्दो व्यवहार इति तन्मय्येव = संविन्मय्येव अर्थस्य = शब्दार्थस्य, सत्ता न्याय्या। संविदः = संविदुपारोहात्, पूर्वन्तु अर्थस्य अप्रामाणिकत्वात् = प्रमाणानधिगतत्वात्, श्रद्धामात्रगम्या सा = अर्थस्य बाह्यसत्ता, तत्र च = बुद्धौ च अर्थानां बाह्यानां सत्ताभिमानः प्रहतः = बाधित इति तदनुरोधेन = अर्थसत्ताया बुद्धावध्यारोपानुरोधेन, बुद्धौ सत्तौपचारिकी इति उपचारसत्तावाचोयुक्तिः = अर्थसत्ताया बुद्धौ अध्यारोपव्यवहारः।

वस्तुतस्तु बुद्धिसत्ता नोपचरितसत्ता, किन्तु परमार्थरूपा कालत्रयाबाध्या, परमार्थपरब्रह्मरूपत्वात् तस्याः। अत एव व्यपदेशे इत्यस्य शब्देन प्रत्यायने इति व्याख्यावत् शाब्दे व्यवहारे इतीयमपि व्याख्या साध्वी। शाब्दे व्यवहारे च अर्थस्य बुद्धिसत्तैव शरणम्। अर्थस्य बुद्धिसत्ताया उपचरिताया बलादेव बुद्धौ अर्थानामात्मलाभ इव। वास्तविकस्य बुद्धिसतोऽर्थस्याभावात्। शब्दपरामर्शमन्तरेण = बुद्धौ वाचकशब्दानां परामर्शं, विना, अर्थानां तत्र रूपसंस्पर्शस्य = रूपसम्बन्धस्य रूपसत्तायाः अभावात् = अनुपपत्तेरिति ॥३९॥

एवञ्चानयैव शब्दार्थयोर्बुद्धिसत्तया पूरिते = पूर्णतां नीते, शाब्दे व्यवहारे यद्यर्थक्रियाकरणादिना केनचिन्निबन्धनेन = बाह्यार्थसत्ताया ज्ञापकेन निमित्तेन व्यवहारानुपयोगित्वात् काष्ठबुसप्रायेण तुच्छेन बाह्यार्थसत्ता कल्प्यते, तर्हि सा सत्ता स्वीकृत्या वर्धतां नाम बुद्धिसत्तातोऽतिरिक्तत्वेन, न तत्र चिन्ता कापि अस्माकम्, शाब्दे व्यवहारे तु नास्ति तस्याः = बाह्यार्थसत्ताया अनुप्रवेशः। एवमपि यदि परमस्ति सा = बाह्यार्थसत्ता,

स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ।
स्वशक्तियोगात् सम्बन्धं ताद्रूप्येणोपगच्छति ॥४०॥
तद्वच्छब्दोऽपि सत्तायामस्यां पूर्वम् व्यवस्थितः ।
धर्मैरुपैति सम्बन्धमविरोधिविरोधिभिः ॥४१॥

**बाह्यस्य वस्तुनो नियतरूपत्वाद् भावाभावसाधारण्यानुपपत्तेर्घट इत्युक्तेऽस्ति नास्तीति शब्दान्तरोपाधीयमानरूपसंसर्गविरोधः स्यादित्युपचारसत्तासमाविष्टः शब्दार्थः। तथा हि—सर्वसाधारण्यात् पदान्तरोपाधीयमानरूपविशेषसहः काचाभ्र-स्फटिकाद्रि (दि) वत् सोऽर्थ इति यथायथमस्ति नास्ति इति भावाभावसमन्वयवशेन (ना) नियतः प्रतीयते। तथा हि—स्वच्छत्वात् स्फटिकादिद्रव्यं नीलादिसंसर्गेऽ-परित्यक्तस्वरूपं तद्रूपमिवाभासते। तथा चोपचारसत्तापि स्फटिकमणिस्थानीया**

---

तदा सा अस्यामेव परब्रह्मरूपायां बुद्धिसत्तायां चिद्रूपायां प्रतिबिम्बिता व्यवह्रियते शाब्दे व्यवहारे बुद्धिसत्ताया समं गोचरीक्रियत इत्येतत् प्रतिपादयितुं निदर्शनस्य = दृष्टान्तस्य, उपक्रममाह—स्फटिकादि यथेति। तद्वच्छब्दोऽपीति च।

पद्यद्वयस्यायमर्थः—यथा स्फटिकादिकं स्वच्छद्रव्यं भिन्नरूपैः = हरितनीलपीता-दिभिः, उपाश्रयैः = उपाधिभिः, उप = समोपस्थितं स्वच्छद्रव्यं प्रतिबिम्बरूपेण आश्रयन्त इत्युपाश्रयाः, उपाधयः = उप-समीपस्थिते स्वच्छे वस्तुनि स्फटिकादौ आदधते स्वगुणान् लौहित्यादीन् इत्युपाधयो जपाकुसुमादयः। क्वचित्तु स्फटिकादावपि उपाधिशब्दप्रयोगो दृश्यते।

उप-समीपस्थितं वस्तु आदधाति स्वगुणं यत्रेति उपाधिपदे, तत्र अधिकरणे क्वि-प्रत्ययः। जपाकुसुमादिभिः सह सम्बन्धं स्वशक्तियोगात्, स्वशक्तिः स्फटिकादेः स्वस्मिन्नु पधीयमानाकारोपयोग्यत्वरूपं स्वच्छत्वं निदर्शनस्य, सत्ताया अपि सामान्यात्मकत्वेन सर्व-विशेषस्वीकारयोग्यत्वम्, तद्योगाद् स्वस्वरूपमपरित्यजदेव ताद्रूप्येण नीललोहितादिरूप-वत्ततया, सम्बधं = नोललोहितादिसंसर्गमुपगच्छति = प्राप्नोति, न तु स्वरूपतः संयोग-सम्बन्धमनुभवति। तद्वत् शब्दोऽपि शब्द्यते = शब्देन बोध्यत इति शब्दोऽत्रार्थ। यद्वा·रूढ एवात्र शब्दपदार्थः, अस्याम् = ज्ञानाकारकत्वेन ब्रह्मरूपायां बुद्धित्तायां सामान्यरूपायां पूर्वम् पदात् प्रतीत्यवसरे आभासावस्थायाम्, प्रत्याय्यत्वेन प्रत्यायकत्वेन वा स्वरूपेण अर्थद्वारेण वाऽवस्थितः, व्यवहारकाले वाक्यावस्थायां वा अविरोधिविरोधिभिः = अस्तिनास्तीत्यादिशब्दान्तरवाच्यैर्भावाभावरूपैर्धर्मैः सम्बन्धमुपैति।

तदयमत्र निष्कर्षः—बुद्धिसत्ता हि ब्रह्मरूपा ज्ञानाकारा, सामान्यरूपा सर्वानुगता, तस्यामेव च स्फटिकादिस्वच्छद्रव्यस्थानीयायां सर्वे बाह्याः शब्दाः, अर्थाश्च प्रतिबिम्बिताः प्रत्यायकत्वेन प्रत्याय्यत्वेन चावस्थिताः पूर्वम् = पदात् प्रतीत्यवसरे ते च व्यवहारकाले

तद्रूपमत्यजन्ती प्रतिषेधादिभिरुपधानैरभिसंबध्यमाना ताद्रूप्यमिवायाति, प्रतिषेधाद्यात्मिकेवाभाति। स्वशक्तिरच्छत्वं स्फटिकादेर्नानाकारोपग्रहयोग्यत्वं सत्ताया अपि सर्वविशेषस्वीकारयोग्यत्वम्, सामान्यात्मकत्वात्। शब्दोऽपीति। शब्दार्थः, शब्द्यत इति कृत्वा। यद्वा शब्दोऽस्यां प्रत्यायकत्वेनावस्थितोऽर्थद्वारेण शब्दान्तरवाच्यैर्धर्मैः सम्बध्यते। विरोधिवचनं साकल्यप्रतिपादनार्थम्। सत्तायामस्याम् इति, ज्ञानाकाररूपायाम्। पूर्वम् इत्याभासावस्थायां पदात् प्रतीत्यवसरे संबन्धं याति, व्यवहारकाले वाक्यावस्थायाम्। आदिग्रहणात् काचाद्यवरोधः। अविरोधिनो धर्मा भावात्मकाः। ते चोपचारसत्तायामनुगुणाः, यथा स्फटिकस्य मल्लिकाकुसुमादय

---

वाक्यावस्थायां तस्यामेव प्रतिबिम्बितैर्भावाभावरूपैरविरोधिविरोधिभिर्धर्मैः सह सम्बन्धमुपयन्ति इति।

एवञ्चार्थानां बाह्यसत्ताया न व्यवहारे उपयोगः कश्चनेति कारिकोपक्रमे प्रतिज्ञातोऽर्थः सिद्धो भवतीति।

अयं भावः—बाह्यस्य वस्तुनो घटादेर्भावत्वेन नियतरूपत्वाद् भावाभावरूपविरोधिधर्मद्वयानुपपत्तेर्घट इत्युक्ते 'अस्ति' इति 'नास्ति' इति वा शब्दान्तरेण अविरोधिधर्मवाचकेन विरोधिधर्मवाचकेन वा उपाधीयमानम् = संसर्गाय सन्निधाप्यमानम्, यद्भावरूपमभावरूपं वा धर्मद्वयं घटस्य तत्संसर्गविरोधः स्यादिति उपचारसत्तासमाविष्टः=बुद्धिसत्तायां ब्रह्मरूपायां ज्ञानाकारायां बाह्यस्य घटस्य य उपचारोऽध्यारोपस्तत्प्रयुक्ता या घटस्य परमार्थस्य व्यावहारिकी, व्यावहारिकस्य प्रातिभासिकी वा सत्ता तत्समाविष्टः। यद्वा उपचारेण ज्ञानाकारायां ब्रह्मसत्तायां समारोपेण बुद्धौ असन्नपि ब्रह्मसत्तासमाविष्टः, घटो बौद्धः शब्दार्थः। तथाहि—बुद्धिसत्ता समाविष्टोऽर्थः सर्वसाधारण्यात् = भावाभावशोभनत्वाशोभनत्वादिसर्वधर्माविरोधित्वात्, अस्ति, नास्ति, शोभनोऽशोभन इत्यादिपदान्तरैरुपाधीयमानाः = उपाधिरूपतया सन्निधाप्यमानाः, रूपविशेषा भावाभावत्वादयस्तेषां समन्वयसहः काचाभ्रस्फटिकादिवत्सोऽर्थ इति यथायथमस्ति नास्ति शोभनोऽशोभन इत्यादिपदप्रतिपाद्यभावाभावसमन्वयवशेन व्यवहारेऽनियतः प्रतीयते।

तथाहि—स्फटिकादिद्रव्यं नीलादिवस्तुसंसर्गेऽपरित्यक्तस्वरूपमेव स्वच्छत्वाद् तद्रूपोपग्राहितया तद्रूपमिव = नीलादिमदिव आभासते। तथा च = तथैव प्रागुक्ता सर्वसाधारणी उपचारसत्तापि स्फटिकमणिस्थानीया तद्रूपम् = स्वरूपम् अत्यजन्ती, निषेधादिभिरुपधानैः = उपाधिभिः अभिसम्बध्यमाना ताद्रूप्यमिव = अभावादिरूपत्वमिव आयाति। प्रतिषेधाद्यात्मिकेवाभाति इति यावत्। निदर्शने स्वशक्तिः स्फटिकादौ स्वच्छत्वं नीलादिरूपनानाकारोपग्रहयोग्यत्वम्, दार्ष्टान्तिके सत्तायां तु सर्वविधविशेषधर्मस्वीकार(समन्वय) योग्यत्वम्, उपचारसत्तायाः सामान्यात्मकत्वात्। सामान्यं हि सर्वैर्विशेषैर्न विरुध्यत इति स्थितेरविप्रतिपन्नत्वात्।

**इति न ते रूपतिरस्क्रियाहेतवः। अत एव तत्सन्निधाने तदात्मनोपचारसत्ताया विश्रान्तिः। अविरुद्धा हि बाह्या सत्ता तस्याः पूर्णरूपतया प्रत्यासन्ना। तथा चोच्यते—"यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपर...." ( म० भा० २।७।१ ) इत्यादि। वर्तमानावस्था च पूर्णत्वोपकारिणीति भवन्तीपर इत्युक्तम्। सत्ता वाऽविरुद्धधर्मसामान्यमिति यथायथं विशेषैस्तस्या एव परिपूरणम्। विरोधिनस्तु धर्मा अभावात्मकाः। ते हि प्रतिषेधात्मका रूपतिरोधानमुपचारसत्ताया जपाकुसुमादय इव स्फटिकस्य कुर्वन्ति। यद्यपि चोपचारसत्तायामुभयेषामपि समन्वयाद् विरोधाभावः, तथापि बाह्यापेक्षयात्रैतदुक्तम्।**

कारिकायां शब्दोऽपीति। अत्र शब्द्यते = शब्देन प्रत्याय्यते इति व्युत्पत्त्या शब्दः शब्दार्थः। यद्वा ब्रह्मसत्तायां समारोपात् प्रत्यायकत्वेनावस्थितः शब्दः स्वार्थद्वारेण 'अस्ति नास्ति' इत्यादिशब्दान्तरवाच्यैर्धर्मैः सम्बध्यते।

कारिकायामविरोधिभिरित्यत्र विरोधिशब्दोपन्यासो धर्मसाकल्यप्रतिपादनार्थः। अविरोधिभिरित्येतावन्मात्रोक्तौ भावरूपस्य नियतस्य घटादेरभावरूपविरोधिधर्मान्तरसम्बन्धो न प्रतीयेत। तदुक्तौ तु तृतीयकोटेरभावात् सकलधर्मसम्बन्धोऽनायासेन प्रतीयत इति।

कारिकायाम्—सत्तायामस्यामिति। ज्ञानाकाररूपायामित्यर्थः। कारिकायाम्—पूर्वं व्यवस्थित इत्यत्र पूर्वमित्यस्य-आभासावस्थायां पदात् प्रतीत्यवसर इत्यर्थः। अविरोधिविरोधिधर्मैः सह सम्बन्धमुपैति = याति। व्यवहारकाले वाक्यावस्थायामित्यर्थः।

कारिकायाम्—स्फटिकादि इत्यत्रादिपदेन काचाद्यवरोधः = काचाभ्रादेः स्वच्छद्रव्यस्य परिग्रहः। कारिकायाम्—अविरोधिविरोधिभिरित्यत्र अविरोधिनो धर्मा भावात्मकाः = अस्तित्वशोभनत्वादयः, ते च उपचारसत्तायाः = अन्तःस्थाया ज्ञानाकाराया ब्रह्मरूपायाः सत्तायाः बाह्यार्थाध्यारोपाधिष्ठानभूतायाः, अनुगुणा = अनुरूपाः यथा स्फटिकस्यानुगुणाः शौक्ल्येन मल्लिकाकुसुमादय इति न ते स्फटिकस्य रूपतिरस्क्रियाहेतवः। मल्लिकाकुसुमादिसन्निधाने स्फटिकस्य सहजेन शुक्लात्मना रूपेणैव प्रतीतेः। एवं भावात्मका धर्मा अपि उपचारसत्ताया अनुगुणाः, न तस्या रूपतिरस्क्रियाहेतवः अत एव तत्सन्निधाने भावात्मकसर्वधर्मसन्निधाने तदात्मना = भावात्मकतत्तद्धर्मात्मना उपचारसत्तायाः = अन्तःस्थाया ब्रह्मरूपाया ज्ञानाकारायाः सत्तायाः, विश्रान्तिः = प्रत्ययावसायः, अविरुद्धा हि उपचारसत्ताया बाह्यानां घटादीनां बाह्या सत्ता तस्याः = उपचारसत्तायाः, पूर्णरूपतया आनुरूप्येण प्रत्यासन्ना। तथा चोच्यते—यत्रान्यत् क्रियापदं न श्रूयते, तत्रास्तिर्भवन्तीपरः प्रयुज्यत इति। अत्रान्यदित्यस्य अस्तिपदातिरिक्तमित्यर्थः। भवन्तीपर इत्यस्य लट्पर इत्यर्थः।

बाह्यवस्तूनां बाह्यसत्तायाश्च वर्त्तमानावस्था च उपचारसत्ताया नित्यत्वेन सदैव

बाह्यस्य नीलोत्पलादेरभिन्नस्य विशिष्टत्वान्नीलमुत्पलमित्युपचारसत्तायामेव विवेकाद् "द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते पृथक्" इत्यादिविशेषणविशेष्यभावे च वक्ष्यमाणा प्रक्रियोपपद्यते।

स्फटिकं विमलं द्रव्यैर्यथायुक्तं पृथक् पृथक्।
नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते ॥

इत्यपरोऽत्रागमपाठः ॥ ४०–४१ ॥

तमेव विरोध्यविरोधिधर्मसंबन्धं क्रमेण व्याचष्टे—

---

वर्तमानत्वात् तस्या वर्तमानत्वव्यवहारे पूर्णरूपेणोपकारिणी इति भवन्तीपर इत्युक्तम्। यद्वा बाह्यवस्तुसत्ताया उपचारसत्तायामध्यस्ताया वर्तमानावस्था उपचारसत्ताया विशेषैः पूर्णत्वे उपकारिणी. अतीतानागतानां बाह्यवस्तूनामसत्वेन तेषां तत्सत्ताया वा तत्रानध्यासेनानुपकारकत्वात्। यद्वा उपचारसत्ता ब्रह्मरूपा सर्वोपादानत्वेन सर्वानुगतत्वेन च सर्वेषाँ विशेषाणामविरुद्धं धर्मसामान्यम् = सर्वेषां भावानामविशेषेण सत्सदिति प्रतीतेरिति यथायथम् = यथास्वम् विशेषैस्तस्या एव परिपूरणम्। विरोधिनस्तु धर्मा अभावात्मकाः। ते हि प्रतिषेधात्मकत्वात् स्वरूपतिरोधानमुपचारसत्तायाः कुर्वन्ति, जपाकुसुमादय इव स्फटिकस्य।

यद्यपि चोपचारसत्तायामुभयेषामपि समन्वयात् = भावरूपाणामभावरूपाणाञ्च धर्माणां समध्यारोपेण समनुगतत्वात् तेषां परस्परं विरोधाभावः, विरोधस्य सामानाधिकरण्याभावरूपत्वात्। तथापि भावाभावयोर्बहिर्विरोधस्य दृष्टत्वादत्रैतदुक्तम्—न तु वस्तुगत्येति।

किञ्च बाह्यस्य नीलोत्पलादेर्द्रव्यस्य नीलादिगुणविशिष्टत्वान्नीलादेः स्वगुणादभिन्नस्यापि नीलमुत्पलमिति भेदव्यवहारदर्शनेन बहिरभेदेऽपि उपचारसत्तायामेव नीलादिगुणसंसर्गप्रयुक्तभेदरूपाद् विवेकाद् एकोऽपि द्रव्यात्मा व्यवहारे पृथग् आश्रीयत इत्यादिका या विशेषणविशेष्यभावे "द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते पृथक्' (वा० का० ३; वृ० १२) इत्यादिकारिकया वक्ष्यमाणा प्रक्रिया साऽपि उपपद्यत इति। किञ्च "स्फटिकादि यथाद्रव्यम्" (वा० का० ३, सं० ४) इत्यादिकस्यात्र पद्यद्वये प्रथमस्य पद्यस्य स्थाने—

स्फटिकं विमलं द्रव्यैर्यथायुक्तं पृथक् पृथक्!
नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते ॥

इत्यपर आगमपाठः। अत्र = वाक्यपदीयस्य द्वितीयकाण्डान्तोक्तरीत्या सम्प्रदायागतत्वेनागमत्वव्यपदेशो हेलाराजीये। निगदव्याख्यातञ्चेदं पद्यमिति न व्याख्यायते ॥४०–४१॥

प्रागुक्तमुपचारसत्तायाः, तमेव विरोध्यविरोधिधर्मसम्बन्धं क्रमेण व्याख्यातुमुपक्रमते—एवञ्चेति।

एवं च प्रतिषेध्येषु प्रतिषेधप्रक्लृप्तये ।
आश्रितेषूपचारेण प्रतिषेधः प्रवर्तते ॥ ४२ ॥

**बुद्ध्याकारस्य नानाविधधर्मसमन्वययोग्यत्वेऽब्राह्मणादिषु नञर्थोपपत्तिः। तथा हि—सत्ताविरोधान्निषेधायोगान्न ब्राह्मणोऽत्र सन्, असत्त्वे तु कथं तत्र शब्दप्रवृत्तिर्बाह्यशब्दार्थवादिनाम् ? तथा च पुनरपि निषेधोऽनुपपन्नः। तदुक्तम्—**

**सताञ्च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।**
**जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥ इति ।**

**यदा तूपचारसत्तासमाविष्टः शब्दार्थः, तदा सामान्येन भावाभावसाधारणतया ब्राह्मणशब्देन क्षत्रियादिषु सादृश्याध्यारोपितो ब्राह्मणार्थः समुल्लिखित इति प्रतिषेध्य ( ध ) विषये दर्शिते नेति निषेधः प्रवर्तते, निर्विषयस्य निषेधस्याप्रवृत्तेः।**

---

अयमर्थः—एवञ्च = उपचारसत्ताया विरोध्यविरोधिधर्मसम्बन्धे च, 'न ब्राह्मणः' इत्यादौ क्षत्रियादिषु भूयसां ब्राह्मणगुणानां सत्यस्वाध्यायतपआदीनां दर्शनेन तेषु ब्राह्मणत्वस्य उपचारेण = अध्यारोपेण, ब्राह्मणत्वेनाश्रितेषु प्रतिषेध्येषु मुख्यब्राह्मणत्वनिषेधस्याश्रयतया विषयेषु क्षत्रियादिषु प्रतिषेधस्य प्रक्लृप्तये प्रसिद्धये। अत्र प्रतिषेधप्रसिद्धिरूपं फलमेव प्रतिषेधप्रवृत्तौ हेतुः। प्रतिषेधः = न ब्राह्मण इति क्षत्रियादिषु अध्यारोपितस्य ब्राह्मणत्वस्य निषेधः प्रवर्त्तत इति। तदयमत्र निर्गलितार्थः। न ब्राह्मण इत्यत्र यदि मुख्य एव ब्राह्मणः प्रतिषेध्यः स्यात्, तदा प्रतिषेधानुपपत्तिः, तस्य सत्यत्वे असत्यत्वे च उभयथापि निषेधायोगात्। अतोऽत्र उपचारसत्तासमाविष्टेषु क्षत्रियादिषु अध्यारोपितस्य ब्राह्मणत्वस्य तद्वत्तां क्षत्रियादीनां वा प्रसज्यप्रतिषेधरूपः पर्युदासरूपो वा प्रतिषेध इति।

अयं भावः—बुद्ध्याकारस्य = ज्ञानाकाराया ब्रह्मसत्तायाः पूर्वमुपचारसत्तापदोदितायाः। नानाविधधर्मसमन्वययोग्यत्वे = विरोध्यविरोधिधर्मसम्बन्धार्हत्वे, अब्राह्मण इत्यादिषु नञर्थस्य = निषेधस्य उपपत्तिः। तथाहि—अब्राह्मण इत्यत्र ब्राह्मणो न सन्' सत्तानिषेधयोः परस्परं विरोधात्, तस्य निषेधानुपपत्तेः। यदि तु 'असन्' तदा न तत्र बाह्यपदपदार्थसत्तावादिनये ब्राह्मणशब्दप्रवृत्तिः संभवति, असत्त्वादेव। तथा च सत्त्वे इवासत्त्वेऽपि निषेधोऽनुपपन्नः। तदुक्तम्—

सताञ्च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥ इति ।

यदा तु न बाह्यः शब्दार्थः, किन्तु उपचारसत्तासमाविष्ट एव सः। बाह्यः सन् भवतु, असन् वा इत्यत्र नाग्रहः। तदा उपचारसत्तायाः सामान्यरूपत्वेन भावाभावसाधारणतया = भावाभावसम्बन्धार्हतया, क्षत्रियादिषु सादृश्येनाध्यारोपितो ब्राह्मणशब्दार्थो ब्राह्मणशब्देनात्र समुल्लिखितः = लक्षणया बोधित इत्येवं प्रतिषेधविषये दर्शिते-

**तत्रापि च बुद्ध्याकारस्य भावैकनियतत्वाद् बुद्धिसत्तयैव सत्त्वान्नास्ति साधारणत्वेन निषेधयोग इति तस्य येयं बहीरूपता व्यावहारिकैर्दृश्यविकल्पैकीकारादध्यवसिता, तत्रैव निषेधः फलति। तथा हि 'योऽयं ब्राह्मणार्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रियेऽध्यवसितः' इति स्वाभाविकब्राह्मणार्थनिवृत्तिरत्र नञा द्योत्यते। तदुक्तं भाष्ये—**

**"यदि पुनरयं निवृत्तपदार्थको ब्राह्मणशब्दः किमर्थं प्रयुज्यते, एवं यथा विज्ञायेत, नेति ह्युक्ते सन्देहः स्यात् कस्य पदार्थो निवर्तते" इति ( म० भा० २।२।६ )। अत्र सर्वथा निवृत्तपदार्थकत्वे प्रयोग एव न स्यादिति बाह्यार्थापेक्षयैव निवृत्तपदार्थकत्वम्। उपचारसत्तापेक्षया तु प्रयोग इति स्फुटमुक्तं भवति। प्रतिषेधविषयप्रकल्पनार्थं च प्रयोग इति तदेवोपचारफलम् ॥ ४२ ॥**

**अविरोधिधर्मसंबन्धमुपचारसत्तासमाविष्टस्यैव प्रतिपादयितुं मुख्यसत्तायां तावदसंभवमाह—**

---

नेति निषेधः प्रवर्तते, निर्विषयस्य निषेधस्य प्रवृत्तेरनुपपत्तेः। तत्रापि च बुद्ध्याकारस्य सत्त्वस्य भावैकनियतत्वात् = भावमात्रेण सहैव अव्यभिचरितसम्बन्धस्य अनुभवात्, बुद्धिसत्तायाश्चाध्यारोपितानां शब्दार्थानां बुद्धिसत्तया सत्त्वस्यैवानुभवाद् नास्ति बुद्धिसत्ताया भावाभावसाधारणत्वेन निषेधयोगसंभव इति कृत्वा तस्य = क्षत्रिये ब्राह्मणगुणानां भूयसां दर्शनेन भ्रान्त्याऽध्यारोपितस्य ब्राह्मणपदार्थस्य = बुद्धिस्थस्य, येयं बहीरूपता दृश्यविकल्पैकीकाराद् = दृश्येन = भ्रान्त्याऽध्यारोपितेन, अत एव विकल्पेन = विकल्पवृत्तिगोचरेण बहिरसता ब्राह्मणार्थेन सह बाह्यस्य ब्राह्मणार्थस्य एकीकारात् = तादात्म्याध्यासात्, अध्यवसिता = भ्रान्त्या निश्चिता, तत्रैव = बहीरूपतायामेव निषेधः फलति। तथाहि—कोऽयं ब्राह्मणार्थो भ्रान्त्या क्षत्रियेऽध्यारोपितो बुद्धिस्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रियेऽध्यवसितः = अध्यारोपित इति स्वाभाविकब्राह्मणार्थनिवृत्तिः = स्वाभाविकस्य मुख्यस्य ब्राह्मणार्थस्य निवृत्तिः, अत्र क्षत्रिये नञा द्योत्यते। तदुक्तं भाष्ये—"यदि पुनरयं निवृत्तपदार्थको ब्राह्मणशब्दः किमर्थं प्रयुज्यते। एवं यथा विज्ञायेत, नेति ह्युक्ते सन्देहः स्यात्, कस्य पदार्थो निवर्तते" इति।

अयमर्थः—यदि पुनरयम् = अब्राह्मणशब्दघटको ब्राह्मणशब्दः, निवृत्तपदार्थकः = निवृत्तम्, निवृत्तिर्निषेधः पदार्थो यस्य स तथाविधः, निषेधार्थक इति यावत्। तदा ब्राह्मणशब्दः किमर्थं प्रयुज्यते, मुख्यस्य ब्राह्मणार्थस्यानुक्तेः, निषेधस्य च नञैव बोधनात्। समाधत्ते—एवं यथा विज्ञायेत इत्यादि। मुख्यस्य ब्राह्मणार्थस्य क्षत्रिये निषेधो यथा विज्ञायेत। हि = यतः, ब्राह्मणशब्दप्रयोगं विना नेत्येतावन्मात्रोक्तौ कस्य शब्दस्य पदार्थो निवर्तते, ब्राह्मणशब्दस्य तदन्यस्य वा इति सन्देहः स्यादिति। अत्र = अब्राह्मण इत्यत्र, ब्राह्मणशब्दस्य सर्वथा निवृत्तपदार्थकत्वे = आन्तरस्य भ्रान्त्या क्षत्रियेऽध्यारोपविषयस्य,

**आत्मलाभस्य जन्माख्या सत्ता (लब्धा) लभ्यं च लभ्यते ।**
**यदि सज्जायते कस्मादथासज्जायते कथम् ॥४३॥**

आत्मलाभो वस्तुनः स्वरूपप्राप्तिर्जन्म कथ्यते । तत्र च त्रितयमन्वयि, लब्धा कर्ता, लभ्यं कर्म, लाभश्च क्रिया । एतच्च त्रितयं सद्विषयम् । तथा च जन्मविरोधः, सत आत्मलाभायोगात् । लब्धात्मा हि सन्नुच्यते । कारणे शक्तिरूपतयाऽवस्थानेऽपि सर्वथा सतो जन्मायोगादवश्यमपूर्वस्य कस्यचिदंशस्य लाभोऽभ्युपगन्तव्य इति येन रूपेण सत्, न तेन रूपेण जन्म, येन च जन्म, न तेन सन्निति 'जायतेऽङ्कुरः' इति प्रयोगानुपपत्तिः । जन्मानुरोधादसत्त्वाभ्युपगमे धात्वर्थ कर्तृत्वानुपपत्तेः प्रत्ययार्थविरोधः । तदनुरोधात् सत्त्वाभ्युपगमे जन्मलक्षणधात्वर्थविरोध इत्यर्थः ॥ ४३ ॥

अत्रैवार्थे सदृशं दृष्टान्तमाह—

---

बाह्यस्य च मुख्यस्य ब्राह्मणार्थस्य निषेधार्थकत्वे अब्राह्मण इत्यत्र ब्राह्मणशब्दस्य प्रयोग एव न स्याद्, अन्तर्बहिश्च तदर्थस्यासत्त्वादिति बाह्यार्थापेक्षयैव निवृत्तपदार्थकत्वम्, बाह्यं मुख्यं बाह्मणार्थंप्रतियोगित्वेनापेक्ष्यैव निषेधार्थकत्वम्, अब्राह्मणशब्दघटकस्य ब्राह्मण शब्दस्य, नञा तु तन्निषेधो द्योत्यते । उपचारसत्तापेक्षया तु = भ्रान्त्या क्षत्रियादौ अध्यारोपितस्य ब्राह्मणार्थस्य आन्तरस्य अध्यारोपविषयां सत्तामपेक्ष्य तु अब्राह्मण इत्यत्र ब्राह्मणशब्दस्य प्रयोग इति स्फुटभुक्तं भवति अनेन भाष्येण । प्रतिषेधविषयस्य ब्राह्मणार्थस्य प्रतियोगित्वेन प्रकल्पनार्थम् = प्रसिद्ध्यर्थम्, अपि अब्राह्मण इत्यत्र ब्राह्मण-शब्दस्य प्रयोग इति । तदेव = अब्राह्मण इत्यत्र प्रतिषेधविषयस्य प्रतियोगित्वेन प्रकल्पन-मपि, उपचारस्य = क्षत्रियादौ ब्राह्मणार्थाध्यारोपस्य फलम् । अन्यथा प्रतियोगिनोऽ-प्रसिद्ध्या प्रतिषेधो नोपपद्येतेति ।

किञ्च, अब्राह्मण इत्यत्र उपचारसत्तया ब्राह्मणशब्दस्य प्रयोगोऽपि उपचारफलम् । अन्यथा अन्तर्बहिश्च सर्वथा ब्राह्मणार्थस्य निवृत्तौ बोध्यार्थाभावेन तत्र तत्प्रयोगानुपपत्ते-रिति । तदेवं यथा ब्राह्मणार्थो भ्रान्त्या क्षत्रियादौ अध्यारोपित उपचारसत्तासमाविष्टः, तदैव तस्य प्रतिषेधरूपविरोधिधर्मसम्बन्ध इत्युपपादितं भवति ॥ ४२ ॥

एवं जन्मादिरूपाविरोधिधर्मसम्बन्धोऽपि उपचारसत्तासमाविष्टस्यैवेति प्रतिपाद-यितुं मुख्यसत्तासमाविष्टस्य तावत्तदसंभवमाह—आत्मलाभस्येति ।

अयमर्थः—उत्पत्तेः पूर्वमसतोऽसत्प्रायस्य वा वस्तुनः कारणकलापव्यापारादात्म-लाभः स्वरूपप्राप्तिर्या तस्य जन्माख्या जन्मसंज्ञा, तत्र च 'जायतेऽङ्कुरः' इत्यादौ लब्धा = तादृशलाभक्रियायाः कर्ता अङ्कुरादिः, लभ्यम् = लाभक्रियाकर्म आत्मा, लाभश्च क्रिया-परस्परमन्वयितया त्रितयं लभ्यते = अनुभूयते । 'जायतेऽङ्कुरः' इत्यादौ आत्मानं लभतेऽ-ङ्कुर इति वाक्यार्थबोधात् । तत्र च पूर्वं सतोऽसतो वा जन्मविरोधः । तथाहि—आत्म-

**सतो हि गन्तुर्गमनं सति गम्ये प्रवर्तते।**
**गन्तृवच्चेन्न जन्मार्थो न चेत् तद्वन्न जायते ।। ४४ ।।**

**स्वरूपप्रसरणलक्षणा गमिक्रिया जनिक्रियासदृशी। तत्र च सत एव गमनं गन्तुर्दृश्यते व्यतिरिक्तसद्रूपकर्मविषयम्। एवमिहापि प्रादुर्भवितुर्गन्तृवद् जन्मानुपपत्तिः। अथ जन्मानुरोधः, तदा सत्त्वाज्जायते क इति कर्तृत्वायोगः। गम्यवच्च लब्धव्योऽप्यत्र व्यतिरिक्तो नास्तीति बाह्यशब्दार्थाभ्युपगमेऽनुपपत्तिः ।। ४४ ।।**

**उपचारसत्ताश्रयेण तूपपत्तिरित्याह—**

---

लाभरूपजन्मनः पूर्वं सतो जन्म तादृशं नोपपद्यते, आत्मलाभादनन्तरं सत्त्वेन व्यवहारात्। तदेतदुक्तम्—यदि सज्जायते, कस्मादिति। यदि जन्मनः प्राक् स्वरूपेण उपादानकारणे शक्तिरूपतयाऽवस्थानेन वा कार्यं सत्, तदा कस्माद् हेतोर्जायते? सतो जन्महेतोः सत्त्वादेवानुपपत्तेः। अथ जन्मनः प्राग् असत्कार्यम्, तदापि कथं जायते? असतो नरश्रृङ्गादेर्जन्मादर्शनादिति।

अयं भावः—स्वोत्पत्तेः पूर्वमसतः, असत्प्रायस्य वा वस्तुनः स्वरूपप्राप्तिर्जन्म कथ्यते। तत्र च 'जायतेऽङ्कुरः' इत्यादौ लब्धा = कर्त्ता, लभ्यम् = लाभकर्म, लाभश्च = क्रिया इत्येतत्त्रितयं वाक्यार्थबोधे परस्परमन्वयि, 'जायतेऽङ्कुरः' इत्यस्य आत्मानं लभतेऽङ्कुर इत्यर्थात्। एतच्च त्रितयमनुभूयमानं यदि सत्कार्यवस्तुविषयकम्, तदा तस्य जन्मविरोधः, सत आत्मलाभरूपजन्मानुपपत्तेः, आत्मलाभानन्तरं सत्वेन व्यवहारात्। उपादानकारणे शक्तिरूपतया अवस्थानेन सत्त्वाभ्युपगमेऽपि सर्वथा = सर्वप्रकारेण = सर्वात्मना, सतः प्रागुक्तरूपजन्मानुपपत्तेरवश्यमपूर्वस्य कस्यचिदंशस्य आत्मलाभोऽभ्युपगन्तव्य इति येन रूपेण = येन अंशेन सत्, न तेन रूपेण जन्म, येन च रूपेण जन्म, न तेन रूपेण सन्निति 'जायतेऽङ्कुरः' इत्यादिप्रयोगानुपपत्तिः। जन्मानुरोधात् कार्यस्य उत्पत्तेः प्रागसत्त्वाभ्युपगमे तु जन्मरूपे धात्वर्थे कारणत्वसमानाधिकरणस्य कर्त्तृत्वस्यानुपपत्तिः। नियतप्राक् सत एव कारणत्वात्। तथा च 'जायते' इति कर्त्तृरूपलट्प्रत्ययार्थविरोधः। प्रत्ययार्थानुरोधात् कार्यस्य पूर्वं सत्त्वाभ्युपगमे तु तस्य जन्मलक्षणधात्वर्थविरोधः। सेयमुभयतस्पाशारज्जुः केवलमुख्यसत्तावादिनः। यदि तु वस्तुनः उत्पत्तेः प्राग् बुद्धौ उपचारसत्ता स्वीक्रियते, तदा उत्पत्तेः प्राक् तया तस्य सत्त्वेन कर्त्तृत्वोपपत्तिः। मुख्यसत्तारूपेण तु प्रागसत्त्वात् कारणव्यापारादात्मलाभ इत्युभयमुपपद्यत इति ।। ४३ ।।

लब्धा = कर्त्ता, लब्धव्यम् = कर्म लाभः = क्रिया इत्येतत्त्रितयसत्त्व एवाङ्कुरो जायते इति प्रयोगोपपत्तिर्नान्यथा इति प्रागुक्तार्थे सदृशं दृष्टान्तं वदन् लब्धुरुपचारसत्तानभ्युपगमे लाभक्रियाऽनुपपत्तिमाह—सतो हि गन्तुरिति।

अयमर्थः—हि = यतः, गम्ये = गमनक्रियायाः प्राग् गमनकर्मणि ग्रामादौ सति

**उपचर्य तु कर्तारमभिधानप्रवृत्तये ।**
**पुनश्च कर्मभावेन तां क्रियां च तदाश्रयाम् ॥ ४५ ॥**
**अथोपचारसत्तैवं विधेयास्तत्र लादयः ।**
**जन्मना तु विरोधित्वान्मुख्या सत्ता न विद्यते ॥ ४६ ॥**

**तुशब्दो बाह्यसत्ताया विशेषमुपचारसत्तायाः सर्वं सद्दत्वेन द्योतयति । इह सर्वात्मना परिनिष्ठतं जायत इति न व्यपदिश्यते, नापि सर्वात्मना असद्रूपम्. अपि तु**

---

ततः प्राक् सत एव गन्तुश्चैत्रादेर्गमनं प्रवर्तते; प्रवर्तमानं दृश्यते । एवं सति लभ्ये आत्मनि अङ्कुरादौ सतो लब्धुरङ्कुरादेर्जननक्रिया प्रवर्तत इति जायतेऽङ्कुरः' इत्यत्र वक्तुमुचितम् ।

तच्च लब्धुरुपचारसत्तानभ्युपगमे बाह्यसत्ताया एव मुख्यायाः केवलायाः स्वीकारे नोपपद्यते, तदाह—गन्तुवच्चेदिति । चेत् = यदि, गन्तृवत् = गमनक्रियायाः प्राक् सिद्धो यथा गन्ता, तद्वद् लाभक्रियायाः प्राक् सिद्धो लब्धा इत्युपेयते तदा तस्य जन्मार्थः = जननक्रियारूपो धात्वर्थः, न सिध्यति, प्राक् सत आत्मलाभायोगात् । तद्वत् = गन्तृवद् लाभक्रियायाः प्राक् सिद्धो न चेद् लब्धा, लाभक्रियायाः प्रागसन्नेव चेल्लब्धा इति यावत् । तदा असत्त्वादेव न जायते । असतो नरशृङ्गादेर्जन्मादर्शनादित्याशय इति ।

अयं भावः—कर्तृस्वरूपप्रसरणलक्षणा गमिक्रिया क्रियात्वेन सकर्तृकत्वेन सकर्मकत्वेन चान्तर्भावितकर्मिकाया जनिक्रियायाः सदृशी । तत्र च गमनक्रियायाः प्राक् सत एव गन्तुर्गमनक्रिया प्रवर्तमाना दृश्यते गन्तृव्यतिरिक्तसद्रूपगम्यविषयिका । एवं 'जायतेऽङ्कुरः' इत्यत्रापि प्रादुर्भवितुरङ्कुरस्य गन्तृवत् स्वक्रियातः प्राक् सतो जन्मानुपपत्तिः सत आत्मलाभायोगात् । अथ जन्मानुरोधः = अङ्कुरस्य कर्तुर्जन्मानुभवाज्जन्माभ्युपगमः, तदा जननात् प्राक् तस्य सत्त्वाद् आत्मलाभायोगेन को जायते ! काक्वा न कोऽपि जायत इति स्थितौ तस्य कर्तृत्वायोगः = कर्तृत्वानुपपत्तिः ।

किञ्च, चैत्रो ग्रामं गच्छति' इत्यत्र यथा गन्तृव्यतिरिक्तं गम्यं ग्रामादि दृश्यते, तथा 'जायतेऽङ्कुरः' इत्यत्र लब्धृव्यतिरिक्तं लब्धव्यमपि नास्ति इत्यपि बाह्यशब्दार्थाभ्युपगमे = शब्दार्थयोरुपचारसत्तामनभ्युपगम्य तयोः केवलाया बाह्यसत्ताया एवाभ्युपगमे, अनुपपत्तिरापतति इत्यपि ध्येयमिति । उपचारसत्तास्वीकारे तु तया लब्धुः प्राक् सत्त्वात् कर्तृत्वोपपत्तिः, उत्पत्तेः प्राग् बहिरसत्त्वेन च कारणव्यापाराद् आत्मलाभोपपत्तिः । लब्धुः सत्त्वासत्त्वोभयस्वीकारेण चात्यन्तासन्नरशृङ्गादिवैषम्यमिति सर्वाः प्रागुक्ता अनुपपत्तयः परिहृता भवन्तीति ॥ ४४ ॥

उपचारसत्ताश्रयेण तु सर्वोपपत्तिरित्याह द्वाभ्याम्—उपचर्य त्विति; अथोपचारसत्तेति च ।

अयमर्थः—इह जगति एकैव ब्रह्मसत्ताऽबाधिता विद्यारूपा ज्ञानाकारा, तस्यां

**सदसद्रूपमाश्रितपूर्वापरावस्थम् सत्तासादनोन्मुखम् वस्तु जायते शब्दविषयः। तथा च तत्रोत्तरमसद्रूपमवस्थाविशेषं पूर्वावस्थायां कारणानां कार्योन्मुख्यलक्षणायाम् उपचर्य अङ्कुर इत्यभिधानस्य प्रवृत्तौ जायत इति कर्तृत्वोपपत्तिः। आश्रितपूर्वावस्थत्वाच्च जन्मार्थोपपत्तिः। एवं च कृत्वा श्रितपूर्वावस्थ उपचरितोत्तरावस्थश्च संमूर्छितोऽर्थात्मा जायत इत्यभिधानस्य विषयः। पूर्वावस्थाश्रयणाच्च लभ्यत्वेन कर्तैवोपचरितः कर्म नान्यदिति बुद्ध्या विवेचनमिदमाश्रित्य तदाश्रयम्, तयोः साधनयोः कर्तृकर्मणोराश्रयमास्पदं क्रिया-**

---

सर्वे भावा जायमाना भ्रान्त्या अध्यारोपिताः संसारस्यानादित्वाद् वासनारूपेण स्थिताः। जायमानस्य च सर्वस्यापि भावस्य द्वे अवस्थे—पूर्वा चैवोत्तरा च। तत्र पूर्वावस्था सती कारणानां कार्योन्मुख्यलक्षणा; उत्तरावस्था तु अवर्तमानत्वाद् सद्रूपा। यद्वा पूर्वावस्था शक्तिरूपा वासनारूपा वा अव्यक्ता सूक्ष्मा, उत्तरा तु व्यक्ता स्थूलरूपा। तत्रोत्तराम-सद्रूपामवस्थामुपलक्षणत्वेनाश्रित्य जायमानं कर्तारं पूर्वावस्थाविशिष्टे सद्रूपे कर्तरि अङ्कुर-इत्यभिधानस्य कर्तृत्वेन प्रवृत्तये उपचर्य तु = अध्यारोप्य तु, जायतेऽङ्कुर इत्यत्र अङ्कुरस्य कर्तृत्वोपपत्तिः। पूर्वावस्थावत्त्वेन सत्त्वात् कर्तृत्वम्। उत्तरावस्थावत्त्वेनासत्त्वाच्च जन्मार्थोपपत्तिः। एवं जायमानं वस्तु सदसद्रूपम्। च=किञ्च, पुनस्तत्रैव कर्तरि अङ्कुरे पूर्वावस्थाविशिष्टे तां क्रियां फलरूपामुत्पत्तिलक्षणामुपचर्य तदाश्रयम् = तस्याः क्रियायाः फलरूपायाः आश्रयम्, तमेव कर्तारमङ्कुरं फलाश्रयत्वेन रूपान्तरेण पूर्वावस्थाविशिष्टे तत्रैवाङ्कुरे कर्मभावेन कर्मत्वेन = लभ्यत्वेन, उपचर्य, अथ=यदि, एवम् = उक्तप्रकारेण, उपचारसत्ता = अङ्कुरस्य कर्तृत्वकर्मत्वयोरुपपादिका उत्तरावस्थस्य असतोऽपि पूर्वावस्थे अध्यारोपप्रयुक्ता सत्ता स्वीक्रियते, तदा तत्र लादयः, जायते इत्यत्र लट्, जात इत्यत्र अकर्मत्वात् कर्तरि क्तः, जातवान् इत्यत्र तत्रैवार्थे क्तवतुः, अङ्कुरस्य जन्म इत्यत्र षष्ठी इत्यादयो विधेयाः। "जायतेऽङ्कुरः" इत्यत्र अङ्कुरस्य मुख्यासत्ता बहिः सत्ता तु तदानीं न विद्यते, सत्ताया मुख्याया जन्मना सह विरोधित्वात्, सत आत्मलाभायोगात्। उपचारसत्तायास्तु न जन्मना सह विरोधः। प्रातीतिकव्यावहारिकयोर्विषमसत्ताकत्वेना-विरोधादिति। तदाश्रयामिति पाठे तु ते कर्तृकर्मणी आश्रयौ निबन्धनत्वेन = निमित्तत्वेन, यस्याः सा तथाभूता ताम् इत्यर्थः। तथा च तदाश्रयां कर्तृकर्मनिबन्धनां क्रियां फलरूपां पूर्वावस्थे कर्तरि उपचर्य तमेव पुना रूपान्तरेण क्रियाफलाश्रयत्वेन तत्रैव कर्मभावेन उपचर्य तत्र लादयो विधेया इत्यर्थः पर्यवस्यति इति। एवञ्चैकस्यैकदैव कर्तृत्वकर्मत्वे न विरुध्येते इत्युक्तं भवतीति।

अयं भावः—वस्तुनो बाह्यसत्ता जन्मविरोधिनी, सत आत्मलाभरूपजन्मायोगात्। उपचारसत्ता तु न तथा उपचारेण बुद्धौ सतोऽपि वस्तुतो बहिरसत्त्वाद् जन्मसंभवात्। एवञ्च उपचारसत्तायाः सर्वंसहत्वेन बाह्यसत्तातो विशेषम्, तस्याः कारिकायां तु शब्दोऽवद्योतयति—उपचर्य तु इति।

इह सर्वात्मना परिनिष्ठितम्=सर्वथा सर्वदा सद्रूपम्, वस्तु जायत इति शब्देन न

**पेक्षत्वात् साधनभावस्य तन्निबन्धनम्, ते वा कर्तृकर्मणी आश्रयो यस्याः साधनाधीन-जन्मत्वादित्युभयथापि पाठः। ताम् जनिक्रियां पूर्वापरीभूतावयवसमाहारात्मिकामध्यारोप्य 'जायतेऽङ्कुरः' इति प्रयोगसमर्थनम्। अथ इत्यभ्युपगमद्योतनाय। एवं च सत्युपचारसत्तैवमाश्रिता भवति। तथा च तत्रैव कर्तर्यय जायत इति लकारो जात इति च क्तः, जातवानिति च क्तवतुः जन्माङ्कुरस्येति षष्ठी। यद्वा कर्तृकल्पनया लकारः कर्तरि प्रत्ययः, क्रियाकल्पनया धातुः प्रकृतिः कर्मकल्पनया कर्मकर्तृव्याख्याने वाक्येऽङ्कुर आत्मानं लभत इति द्वितीया कर्मणि। एवमात्मानमात्मना बिभ्रदस्तीत्यादावपि वाच्यम्। एवंविधो वा सर्वः परिकर उपचारसत्तेति तन्निबन्धनत्वादेवमभेदेन व्यपदेशः।**

---

व्यपदिश्यते। सर्वथा सत आत्मलाभायोगात्। नापि सर्वात्मनाऽसद्रूपम्। अत्यन्तासतः शशविषाणादेर्जन्मादर्शनात्। तथा च जायमानं वस्तु पूर्वावस्थामुपचारसत्तारूपामाश्रित्य सद्रूपम्। उत्तरावस्थां बाह्यसत्तारूपामाश्रित्य चासद्रूपमित्येवं सदसद्रूपम्। तच्च यदा सत्तासादनोन्मुखम् = बहिः सत्ताप्राप्त्युन्मुखं भवति, तदा जायते शब्दस्य विषयः। यदा च तस्य बहिः सत्ता सक्रमा अतीता = प्रध्वस्ता भवति, पूर्णक्रमा वा भवति, तदा जातादिशब्दविषयः सर्वैश्च स्वक्रमैर्भविष्यन्ती जनिष्यते इत्यादिशब्दविषयः। तथा च तत्रोत्तरमसद्रूपमवस्थाविशेषम् = अवर्तमानं बहिः सत्तारूपम्, कारणानाम् = उपचारसत्तासमाविष्टस्योपादानकारणस्य बहिःसत्तासमाविष्टानाञ्चान्येषां कारणानाम्, कार्यौन्मुख्यलक्षणायाम् उपचर्य = आरोप्य, अङ्कुर इत्यभिधानस्य = अङ्कुर इति कर्तृत्वाभिधानस्य, प्रवृत्तौ अङ्कुरे जायत इति जनिक्रिया कर्तृत्वोपपत्तिः। अङ्कुरे पूर्वावस्थामुपचारसत्तया सद्रूपामाश्रित्य च = अपेक्ष्य च बहिःसत्तारूपया उत्तरावस्थयाऽसद्रूपया जन्मार्थोपपत्तिः।

एवञ्च कृत्वा आश्रितपूर्वावस्थः = वर्तमानपूर्वावस्थः, असत्तया पूर्वावस्थायामुपचरितोत्तरावस्थश्च सम्मूर्च्छितः = सम्मिलितः—अवस्थाद्वययुक्त इति यावत्। 'अर्थात्मा जायते' इत्यभिधानस्य विषयः। पूर्वावस्थाश्रयणादेव अङ्कुरे कर्तृत्वोपपत्तिवद् लभ्यत्वेन= आत्मलाभकर्मत्वेन, कर्तैव उपचरितः = समारोपितभेदः, जनिधात्वर्थेऽन्तर्भूतं कर्म, नान्यत्। तथा च पूर्वावस्थात्वेनाङ्कुरः, कर्ता, स एव बहिःसत्तासादनरूपलाभात्मकजनिधात्वर्थफलाश्रयत्वेन कर्म इति औपचारिक एवात्र कर्तृकर्मणोर्भेदः। कर्मणोऽत्र धात्वर्थेऽन्तर्भावाच्च जनिधातुरकर्मक इत्येवं बुद्ध्या विवेचनमाश्रित्य तदाश्रयमिति कारिकायामुक्तम्। क्वचित्तु तदाश्रयामिति पाठः। तत्राद्यपाठे तयोः साधनयोः कर्तृकर्मणोराश्रयमास्पदमिति क्रियाविशेषणत्वेऽपि पुंस्त्वम् 'घञजपाः पुंसि' इति अजन्तानां नित्यपुंस्त्वात्। साधनत्वस्य क्रियापेक्षत्वात् तन्निबन्धनम् = कर्तृकर्मरूपसाधननिमित्तमिति। द्वितीयपाठे तु ते कर्तृकर्मणी आश्रयौ यस्याः सा तदाश्रया ताम्। साधनाधीनजन्मत्वात् क्रियायाः सा साधनयोस्तयोराश्रयत्वेनोपचर्यते। तां तथाभूतां जनिक्रियां पूर्वापरीभूतावयवसमुदायात्मिकामुपचरितसत्तासमाविष्टेऽङ्कुरेऽध्यारोप्य 'जायतेऽङ्कुरः' इति प्रयोगसमर्थ-

मुख्या तु सत्ता पूर्वोक्ताद्विरोधान्न संगच्छते। अतः—"आत्मलाभस्य जन्माख्या" (वा० का० ३, सम्बंध० ४३) इति पूर्वपक्षोऽयम्। सिद्धान्त आत्मलाभोन्मुखता जन्म। तथा च वक्ष्यति—

पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ इति।

तथा—

पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तरम्।
सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ इति।

पुनश्च कर्मभावेन 'तम्' इति क्वचित् पाठः। तत्र तं कर्तारमेव पुनः कर्मभावेनोपचर्येति योजना ॥ ४५, ४६ ॥

इदानीं जन्मोत्तरकालभाविनमस्तित्वं भावविकारमङ्कुरोऽयमस्तीत्ययं शब्द उपचारसत्तासमाविष्टमेव प्रतिपादयति, अन्यथायोगादित्याह—

---

नम्। कारिकायामथेत्यव्ययं यद्यर्थेऽभ्युपगमद्योतनाय। ततश्च अथोपचारसत्तैवम् इत्यस्य एवं यदि कर्तृकर्मणोरुपचारसत्तास्वीक्रियत इत्यर्थः। पुनश्च कर्त्तारमेव लाभरूपफलाश्रयत्वेन अङ्कुरे कर्मभावेन उपचर्य इत्यन्वयः। एवञ्च सति कर्तृकर्मक्रियाणां त्रयस्य उपचारसत्ता एवम् = अनया रीत्या, आश्रिता भवति। तथा च तत्रैव कर्त्तरि = उपचरितसत्तासमाविष्टजनिक्रियाश्रये स्वयञ्च उपचरितसत्तासमाविष्टकर्त्तरि 'अयं जायते' इति लकारो वर्तमाने, जात इति, जातवानिति च क्तक्तवतू भूते अङ्कुरस्य जन्म इति च षष्ठी प्रयुज्यते। यद्वा विधेयास्तत्र लादय इत्यस्यान्या व्याख्या। उपचरितसत्तासमाविष्टे अङ्कुरे कर्तृत्वकल्पनया कर्त्तरि लकारः = प्रत्ययः, उपचरितसत्तासमाविष्टजनिक्रियाकल्पनया तद्वाचकत्वेन धातुत्वाद् जनिधातुः प्रकृतिः, पूर्वोक्तरीत्याऽङ्कुरे कर्मत्वकल्पनया 'जायतेऽङ्कुरः' इत्यस्य कर्मकर्त्तृव्यानरूपे वाक्येऽङ्कुर आत्मानं लभत इत्यत्र "कर्मणि द्वितीया" इति। एवमात्मानमात्मना बिभ्रत्, अस्तीत्यादावेकस्यैव कर्मत्वम्, करणत्वं कर्त्तृत्वञ्च उपचारसत्तयैव वाच्यम्।

अथवा एवं विधः सर्वः परिकरः = कर्तृकर्मक्रियाकल्पनरूपशाब्दसामग्रीरूपः, उपचारसत्ता = उपचारसत्ताप्रयोज्यः, इति कर्तृक्रिययोर्द्वयोरपि तन्निबन्धनत्वात् = उपचारसत्ताप्रयोज्यत्वात्, एवमभेदेन = तां क्रियाञ्च तदाश्रयामित्येवं क्रियाया अभेदेन तथा च तां क्रियाञ्च तदाश्रयाम् = अर्थात् कर्तारम् अङ्कुरे कर्मभावेन आरोप्य इत्यर्थः कर्तृव्यपदेशः फलति। कर्तृकर्मणोर्मुख्या तु सत्ता = बहिः सत्ता तदानीं जन्मना सह विरोधान्नसंगच्छते। अतः = कर्त्तृकर्मक्रियाणामेवमुपपत्तेः, आत्मलाभस्य जन्माख्या इत्ययमर्थः पूर्वपक्षरूपो न तु सिद्धान्तः। सिद्धान्ते आत्मलाभोन्मुखता जन्म। तथा चात्मलाभरूपजन्मना सह द्वयोः सत्तयोर्विरोधेऽपि एतादृशजन्मना सह मुख्यसत्ताया एव विरोधः, नोपचारसत्ताया इति स्थितम्। तथा च वक्ष्यति अत्रैवाग्रे—

**आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।**
**अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ ४७ ॥**

**आत्मनात्मानं धारयतीत्यस्तेरर्थः ।**

**तथा च निरुक्तकारः—"अस्तीत्युत्पन्नस्यात्मधारणमुच्यते" इति ।**

**व्यतिरिक्तकर्तृप्रतिषेधार्थम्** आत्मना **इति वचनम् । तथा च वास्तवस्य कर्तृ-कर्मक्रियाभेदस्याभावो भिन्नरूपत्वाद् वस्तुन इत्यर्थः । आत्मना सकर्मकत्वात् तर्ह्यस्तेः**

---

पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ इति ।

अयमर्थः—पूर्वस्माद् धर्मात् = उपचारसत्तारूपादवस्थाविशेषात्, प्रच्युता, सत्तां समुद्दिश्य स्त्रीत्वव्यपदेशोऽयम् । उत्तरञ्च पदम् = बहिःसत्तारूपमवस्थाविशेषम्. अप्राप्ता, तदन्तराले = तयोरवस्थाविशेषयोरन्तराले, भेदानाम् = कर्तृकर्मादिकारकविशेषाणाम् आश्रयात् = बहिःसत्ताया निमित्तत्वेनाश्रयणात्, अङ्कुरादेर्जन्म कथ्यते, व्यपदिश्यत इति प्रकृतपदार्थसंगतोऽर्थं इति । तथा—

पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तरम् ।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ इति ।

अयमर्थः—पूर्वामवस्थामुपचारसत्तारूपामजहत्, अत्यजन्, उत्तरञ्च धर्ममवस्था-विशेषम्, बहिःसत्तारूपं संस्पृशन् सम्बन्धेनाभ्युपयन्, संमूर्च्छित इव = पूर्वोत्तरावस्था-द्वयेन युक्तत्वादेकलोलीभावापन्न इव अर्थात्मा अङ्कुरादिपदार्थो जायमान इति अभि-धीयते = कथ्यत इति । कारिकायाम्—पुनश्च कर्मभावेन तमिति क्वचित् पुस्तके पुंस्त्व-निर्देशेन पाठः । तत्र तं कर्त्तारमेव पुनः कर्मभावेनोपचर्येति पदयोजना बोध्या ॥४५-४६॥

इदानीं जन्मोत्तरकालभाविनमस्तित्वम् = विद्यमानत्ववर्तमानत्वस्थितिमत्त्वापर-पर्यायम्, आत्मनाऽऽत्मधारणरूपम्, भावविकारम् = अङ्कुरोऽयमस्तीत्ययं शब्दः = एतद्-वाक्यघटकोऽस्तिशब्दः, उपचारसत्तासमाविष्टमेव अयम् अङ्कुर इति शब्दद्वयवत् प्रति-पादयति, अन्यथा बहिःसत्तारूपमुख्यसत्तासमाविष्टस्य तस्य प्रतिपादने अयोगात् = अङ्कुरोऽयमस्तीति वाक्यप्रयोगानुपपत्तेः । तथाहि—यदीदं वाक्यं बहिःसत्ताकसन्निहित-देशकालिकाङ्कुरकर्तृकं बहिःसत्ताकं प्रागुक्तरूपमस्तित्वं प्रतिपादयति, तदा एतत्प्रयोगा-नुपपत्तिः । बहिःसत्ताभिसम्बन्धात् प्राग्बहिरसतोऽङ्कुरस्य तादृशास्तित्वकर्तृत्वानुपपत्तेः, तदानीं कर्तृक्रिययोर्द्वयोरपि बहिरसत्त्वात् । तयोर्द्वयोरपि क्रमवतीमुपचारसत्तां स्वीकृत्य तु संभवति तयोः कार्यकारणभाव इत्येतन्निगूढं वक्तुमुपक्रमते—आत्मानमात्मनेति ।

अयमर्थः—आत्मानम् = स्वस्वरूपम्, आत्मना = आत्मनैव, स्वस्वरूपेणैव असति बाधके सर्वं वाक्यं साधारणं भवतीत्यभ्युपगमात् । अत्रात्मनेति वचनमन्यस्य कर्तुः प्रतिषेधार्थम् । बिभ्रत् = धारयत्, अस्ति इति व्यपदिश्यते = व्यवह्रियते ।

**प्रसिद्धमकर्मकत्वमपावर्ततेत्यत्राह—अन्तर्भावाद् इत्यादि। असौ इत्यसिधातुस्तदर्थो वा। धात्वर्थेन कर्मण उपसंग्रहादकर्मकोऽयं धात्वर्थ इति प्रसङ्गात् व्युत्पादयति जीवताविव प्राणानाम्। अत्रात्मलक्षणस्य कर्मणो धातु (त्व) वाच्यत्वात् क्रियान्तरमेवेदमात्मनात्मानं धारयतीति व्याख्यायते, न त्वत्र भावतः कर्मयोग इत्यर्थः। यथा वक्ष्यति "न तत्र धारिर्न प्राणा जीवतिस्तु क्रियान्तरम्" इति। एवं जायत इत्यत्राप्यात्मानं लभत इत्यर्थनिर्वचनेऽन्तर्भूतकर्मत्वं द्रष्टव्यम्। यो हि धात्वर्थाद् बहिर्भूतः कर्मार्थः, स सकर्मकव्यपदेशहेतुः। धातोरर्थपूरणे हि संपन्ने तस्माद् बाह्यस्य तेनार्थेन संबन्धे भेदाधिष्ठाने सति या कर्मता 'गामानय' इति शाब्दी, 'प्रविश पिण्डीम्' इत्यादौ च सामर्थ्यलब्धा, सा सकर्मकव्यपदेशनिबन्धनम् इति तु क्रियाकारकसंसर्गपर्यन्तो दीर्घो धात्वर्थ इति भेदाभावः॥ ४७॥**

**एवं भेदाभावान्नायं वस्तुतो व्यवहारो युज्यत इति प्रतिपाद्याधुना जायत इतिवत् कर्तृत्वायोगात् स्वरूपाभावादप्यसंभवमुक्तो (क्त्वो) पचारसत्तायामेवोपपत्तिं प्रतिपादयति—**

---

अत्र धारणरूपं भरणं स्थित्यनुकूलव्यापाररूपम्। तत्रैकस्यैवात्मनः स्थितिरूपफलाश्रयत्वप्रयुक्तं भेदमाश्रित्य कर्मत्वम्। तादृशव्यापाराश्रयत्वप्रयुक्तं च भेदमाश्रित्य कर्तृत्वमिति न विरोधः। कारिकायामसौ इति इकानिर्दिष्टस्य अस्धातोः, अदः शब्दस्य च प्रथमान्तस्य श्लिष्टं रूपम्। ततश्चासौ इत्यस्यावृत्त्या असौ-अस्धातौ, तदर्थे = आत्मधारणरूपे आत्मरूपस्य कर्मणः अन्तर्भावाच्च, तु तेन कर्मणा = आत्मरूपेण कर्मणा, असौ = स = अस् धातुः, सकर्मको न भवति, धात्वर्थात् पृथग् उपात्तेनैव कर्मणा धातूनां सकर्मकत्वव्यपदेशस्य व्याकरणशास्त्रे प्रसिद्धत्वादित्यर्थं इति।

अयं भावः—आत्मनाऽऽत्मानं धारयति इत्यस्तेरर्थः। आत्मधारणञ्च स्थित्यनुकूलव्यापाररूपम्। तथा चैकस्यैव फलाश्रयत्वव्यापाराश्रयत्वरूपधर्मद्वयप्रयुक्तं भेदमाश्रित्व कर्तृत्वकर्मत्वयोः, विवक्षाधीनञ्च साधकतमत्वप्रयुक्तं भेदमाश्रित्य करणत्वनिर्वाहः। तथा च निरुक्तकारः—"अस्तीत्युत्पन्नस्यात्मधारणमुच्यते" इति। उत्पन्नस्य = जातस्य वस्तुन आत्मधारणम् अस्ति इति पदेनोच्यते इत्यर्थः। आत्मना इति वचनञ्चात्मव्यतिरिक्तकर्तृनिषेधायोपात्तम्। तथा च ब्रह्मैवैकं वस्तुभूतं तत्त्वम्, कर्तृकर्मक्रियाभेदस्य तु वास्तवस्यात्रेव सर्वत्राप्यभावो भिन्नरूपत्वात् = विचित्रस्वभावत्वाद् वस्तुन इत्यर्थः। वस्तूनां भेदोऽभेदो वा तत्त्वमिति विचार्यमाणे सति लाघवादभेद एव तत्त्वम्, भेदस्तु तत्र कल्पित इत्येवौपनिषदं तत्त्वमिति हृदयम्। नन्वेवमस्तेः सकर्मकत्वाद् व्याकरणशास्त्रप्रसिद्धं तस्याकर्मकत्वं व्याहन्येतेत्याशङ्क्याह—अन्तर्भावाद् इत्यादि।

कारिकायां तृतीयपादान्ते असौ इत्यनेन इका निर्देशाद् अस्धातुस्तदर्थो वा लक्षणया उक्तो भवति। आत्मनाऽऽत्मधारणरूपेण अस्धात्वर्थेन आत्मरूपस्य कर्मणः उपसंग्रहाद् = स्वस्मिन् अन्तर्भावात्, अकर्मकोऽयमस्धात्वर्थनिरूपणप्रसङ्गाद् व्युत्पाद-

**प्राक् च सत्ताभिसंबन्धान्मुख्या सत्ता कथं भवेत् ।**
**असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववत् ॥ ४८ ॥**

**अस्तीति पूर्वापरीभूता सत्ता साध्यमानावस्था प्रतीयते । अस्यां चावस्थायां निष्पन्नरूपः कर्त्ता नास्ति, साधनसंबन्धात् पूर्वमपि सद्भावो नास्ति, न चान्यस्तद्व्य-**

---

यति = बोधयति, जीवतौ जीवधातौ तदर्थे वा प्राणानामिव । प्राणधारणं हि जीव-धातोरर्थः । तत्र हि यथा प्राणानां धात्वर्थेनोपसंग्रहादकर्मकत्वं जीवतेः, देवदत्तो जीवतीति, तथा प्रकृते तेनैव हेतुना अस्तेरकर्मकत्वं देवदत्तोऽस्तीति । असुधातोर्हि सत्तार्थः । एवञ्चात्रात्मलक्षणस्य कर्मणो धात्ववाच्यत्वात् क्रियान्तरमेवेदम् = आत्मधारणरूपक्रियातो भिन्नैवेयं सत्तारूपा क्रिया । 'आत्मनाऽऽत्मानं धारयति' इत्यनेन तु सा कथञ्चिद् व्याख्यायते, यथा गजो महिषरूपप्रमाण इति । न त्वत्रास्तौ स्वभावतः कर्मयोग इत्यर्थः । इदं चात्रैवाग्रे वक्ष्यति—'न तत्र धारिर्न प्राणा जीवतिस्तु क्रियान्तरम्' इति । एवं जायते इत्यत्राप्यात्मानं लभते इत्यर्थव्याख्यानेऽन्तर्भूतकर्मत्वमकर्मकत्वञ्च द्रष्टव्यम् । तदुक्तमभियुक्तैः—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ इति ।

यो हि धात्वर्थाद् बहिर्भूतः कर्मरूपोऽर्थः, स धातोः सकर्मकत्वव्यपदेशहेतुः । यथा 'गामानय' इत्यादौ गवादिः । पूर्वापरीभूतैः स्वावयवैर्धातोरर्थपूरणे हि सम्पन्ने तस्मात् = धात्वर्थाद् बाह्यस्य तेन धात्वर्थेन भेदाधिष्ठाने = भेदालम्बने, भेदनिमित्तके सम्बन्धे सति अभिन्ने सम्बन्धानुपपत्तेर्या कर्मता गामानयेति शाब्दी, 'प्रविश शिण्डीम्' इत्यादौ च सामर्थ्यलब्धा = अर्थापत्तिप्रमाणलब्धा आर्थी, सा धातोः सकर्मकत्वव्यपदेशनिमित्तम् । इह तु = अस्‌जीवजन्यादौ तु क्रियाकर्मकारकसंसर्गपर्यन्तो दीर्घो धात्वर्थ इति कर्मणो धात्वर्थेऽन्तर्भावाद् धात्वर्थाद् भेदाभाव इति तेन कर्मणा न अस्त्यादीनां सकर्मकत्व-मिति ॥ ४७ ॥

एवमात्मप्राणादेः कर्मणोऽस्तिजीवत्यादिधात्वर्थेऽन्तर्भावेण धात्वर्थाद् भेदाभावा-न्नायमस्तिजीवत्यादेः सकर्मकत्वव्यवहारो वस्तुतो युज्यत इति प्रतिपाद्याधुना जायते इतिवद् अस्त्यर्थो यदि मुख्या सत्ता स्यात्, तदा तस्यास्तदानीमसत्त्वेन तन्निरूपितकर्तृत्वा-योगात् तदानीं तस्याः स्वरूपाभावादपि घटोऽस्तीत्यादि प्रयोगासंभवं पूर्वमुक्त्वा उपचार सत्तां धात्वर्थत्वेन कर्तृत्वनिरूपकत्वेन चाश्रित्यैव तादृशप्रयोगोपपत्तिं प्रतिपादयति—प्राक् च सत्ताभिसम्बन्धादिति ।

अयमर्थः—मुख्या सत्ता-बहिःसत्ता । तया सत्तया सहाभिसम्बन्धात् प्राक् च पूर्वं तु असतो घटादेर्मुख्या सत्ता कथं भवेत् = नैव स्यात् ।

असँश्च घटादिर्नास्तेः कर्त्ता स्यात् । कर्त्तुः कारकत्वकारणत्वाभ्यां क्रियारूपात्

**तिरिक्तोऽर्थः साधनमत्र प्रज्ञायत इति सैव सत्ता, साध्यं च साधनं च मुख्यतो न संभवति। तथा हि सिद्धरूपेण साधनेन भवितव्यम्। न च सत्तामनुभवन्नेव सिद्धतया प्रज्ञायते, अनुभूतसत्तासंबन्धश्च न साध्य इति लब्धात्मलाभस्यात्मधारणलक्षणा सत्ता, बुद्धया पूर्वापरीभूततयैवाभिधीयते। तत्र चोपचारसत्तारूढस्य पूर्वभागः कर्ता, तदपरस्तु साध्यः कर्म, तदुभया (यं स्वा) श्रयक्रियास्वरूपान्तर्भूतमिति पूर्वं जायत इति-वदुपचारसत्तया कर्तृत्वमाश्रित्यास्तीति प्रयोगोपपत्तिः। तदेवमस्ति, नास्ति, जायत इति प्रयोग उपचारसत्तासमाश्रयणेन समर्थितः। एत एव त्रयो भावविकाराः। एतेष्वेव चान्ये त्रयोऽन्तर्भवन्ति। तथाहि—जन्मनि वृद्धिरवयवोपचयात्मिकान्तर्भूतेति जायत इतिवद् वर्धत इत्ययमपि प्रयोगः समर्थनीयः। एवं परिणामो धर्मान्तराविर्भावलक्षणोऽत्रैवान्तर्भूत इति परिणमत इत्यनेनैव न्यायेनावगन्तव्यम्। परिक्षयस्तु नास्तीति विनाशेऽन्तर्भवति, तत्राप्युपचारसत्ताश्रयेण परिक्षीयत इति प्रयोगः समर्थनीय इति षड्भावविकारयोनित्वात् सर्वस्य क्रियाप्रपञ्चस्य बौद्धसत्ताश्रयेण प्रयोगः॥ ४८॥**

**क्रियाभिः साधनानामाक्षेपात् तद्वाचिनामपि तथैव प्रयोग इति सार्वत्रिकीमुपचारसत्तायाः शब्दार्थत्वे व्याप्तिं निगमयितुमाह—**

---

कार्यात् प्राङ् नियतसत्त्वस्यावश्यकत्वात्। तु = अतः, पूर्ववत् = पूर्वं सन्निव भ्रान्त्या प्रतीयमाने घटादौ सत्ताया उपचार इति तयैव सत्तया 'घटोऽस्ति' इत्यादिप्रयोगोपपत्तिरिति।

अयं भावः—अस्तीत्यत्र क्रियात्वेन साध्यमानावस्था तेनैव च पूर्वापरीभूता सत्ता प्रतीयते। अस्याञ्चावस्थायाम् = साध्यावस्थायाम्, निष्पन्नरूपः = सिद्धरूपः कर्ता नास्ति, सिद्धत्वसाध्यत्वयोर्विरोधात्। सत्तायाः साधनसम्बन्धात् प्रागपि सद्भावः=बहिः सत्तारूपा मुख्या सत्ता, कर्तुर्घटादेर्नास्ति। न चान्यस्तद्व्यतिरिक्तः=सत्ताव्यतिरिक्त', अर्थः साधनमत्र प्रज्ञायते = विचारजनितेन प्रकृष्टेन ज्ञानेन प्रतीयत इति सैव सत्ता क्रियारूपत्वेन, साध्यञ्च कर्तृरूपत्वेन, साधनञ्च मुख्यतः = वस्तुतो न संभवति। तथाहि—साधनेन सिद्धरूपेण भवितव्यम्। न च क्रियात्वे साध्यरूपां सत्तामनुभवन्नेव = तादृशसत्तायाः पश्चान्निष्पद्यमान एव घटादिः कर्ता सिद्धत्वेन प्रतीयते, किन्तु सत्तासम्बन्धानुभवानन्तरं सिद्धत्वेन प्रज्ञायते। अनुभूतसत्तासम्बन्धस्तु न साध्य इति लब्धात्मलाभस्य = अनुभूतसत्तासम्बन्धस्य, आत्मधारणलक्षणा क्रियारूपा सत्ताऽपौर्वापर्यवत्यपि बुद्धया भ्रान्तिरूपया पूर्वापरीभूततयैव = इव अभिधीयते। तत्र चोपचारसत्तारूढस्य सत्त्वस्य = अस्त्यर्थस्य क्रियारूपस्य बुद्धया पूर्वापरीभूतस्य पूर्वभागः कर्ता सिद्धरूपः, तदपरभागस्तु साध्यरूपः कर्म, तदुभयं स्वाश्रयक्रियास्वरूपान्तर्भूतमिति जायत इतिवदुपचारसत्तया पूर्वम् = उत्तरभागात् पूर्वस्थितम्, कर्तृत्वमाश्रित्य अस्तीति प्रयोगोपपत्तिः। तदेवमस्ति, नास्ति, जायते इति प्रयोग उपचारसत्तासमाश्रयणेन समर्थितः। एषु अस्तीति प्रयोगः प्राक् स्वोपपत्तिसमर्थितः। नास्ति इत्यपि अस्तिपदघटितत्वात् समर्थितप्राय एव। जायत इत्यपि प्रागुपचारसत्तया कर्तृत्वोपपत्त्या समर्थितः। एते एव त्रयो भावविकाराः। एतेष्वेव चान्ये

तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम् ।
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम् ॥ ४९ ॥
अभिन्नकालामर्थेषु भिन्नकालेष्ववस्थिताम् ।
प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम् ॥ ५० ॥
एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते ।
सा च सम्प्रतिसत्तायाः पृथग्भाष्ये निर्दशिता ॥ ५१ ॥

**बाह्यो येषां विरोधो भावादीनां धर्माणां तैरुपचारसत्ताया अविरोधो यथोक्तेन न्यायेन। अत एवाह—'विरोधिख्यापनायैव' इति। विरोधिनां प्रकाशनाय तैस्तैर्ब्राह्मणादिशब्दैरुपगृहीताम्। एतैर्हि शब्दैर्विषय उपदर्श्यते धर्माणाम्। ते च**

---

वृद्धिपरिणामपरिक्षयास्त्रयोऽन्तर्भवन्ति । तथाहि—अवयवोपचयात्मिका बृद्धिर्जन्मनि अन्तर्भूना इति जायते इतिवद् बद्धते इत्ययमपि प्रयोगः समर्थनीयः । एवं पूर्वधर्मविनाशे धर्मान्तराविर्भावलक्षणः परिणामो जन्मन्येवान्तर्भूत इति परिणमत इति प्रयोगो जायत इत्यस्योपपत्तये उक्तन्यायेनैवोपपन्नोऽवगन्तव्यः । परिक्षयस्तु नास्तोति प्रतिपादिते विनाशेऽन्तर्भवति इति तत्रापि=परिक्षयेऽपि उपचारसत्ताश्रयणेन परिक्षोयते इति प्रयोगः समर्थनीय इत्येवं सर्वस्य क्रियारूपस्य प्रपञ्चस्य=अस्ति, नास्ति, जायते, वर्द्धते, परिणमते, परिक्षीयते' इति षण्णां भावविकाराणां यास्कोक्तानां योनित्वाद् बौद्धसत्तासमाश्रयेण=ज्ञानाकारोपचारसत्ताश्रयणेन प्रयोग इति दिक् ॥ ४८ ॥

साधनानामविनाभाविनां क्रियाभिराक्षेपात् क्रियावाचिनां धातूनामिव साधनवाचिनां शब्दानामपि बौद्धसत्तासमाश्रयेणैव प्रयोग इति साध्यसाधनयोरुभयोरपि बौद्धसत्तैव शब्दार्थं इति व्याप्तिमत्रावान्तरप्रकरणान्ते उपसंहर्त्तुमाह—तस्माद् भिन्नेषु इत्यादिभिस्तिसृभिः कारिकाभिः ।

अयमर्थः—तस्मात् साध्यसाधनयोरुभयोरपि उपचारसत्तैव शब्दार्थं इति प्रागुक्तरीत्या व्याप्तिस्वीकारात्, परस्परभिन्नेषु धर्मेषु=भावाभावजन्मरूपेषु त्रिषु वृद्धिपरिणामपरिक्षयानादाय षट्सु वा परस्परं विरोधिष्वपि सर्वत्राधिष्ठानतया स्थिताम्, अत एव तैः सह अविरोधिनीम् । किञ्च विरोधिख्यापनायैव परस्परं विरोधिनां ब्राह्मणादिरूपाणां कर्त्तृकर्मादीनां साधनानां ख्यापनायैव=प्रकाशनायैव प्रयुक्तैस्तैर्ब्राह्मणादिशब्दैरूपाश्रिताम्=उपगृहीताम्, स्वार्थद्वारा परिच्छिद्य बोधिताम् । किञ्च, नित्यतया अभिन्नकालामपि अनित्वत्वाद् भिन्नकालेष्वर्थेषु अधिष्ठानतया अवस्थिताम् । किञ्च, सर्वेषां शब्दानां स्वार्थद्वारा परिच्छिन्नतया तत्तदर्थेषु प्रवृत्तिहेतुम् । अतः प्रातिपदिकार्थः सत्ता इत्युक्तं प्रातिपदिकार्थसूत्रे भाष्ये । किञ्च, औपचारिकोम्—उपचारो बाह्यानामर्थाना बुद्धिसत्तायामध्यारोपः, स एव प्रयोजनं यस्यास्ताम्, औपचारिकीम् । अत एव तामु-

**धर्मा बाह्याद् वस्तुनो भिन्नाः, शब्देनैव भेदस्य परिकल्पनात्। नीलोत्पलादौ विरोधिनो वा भिन्नाद् (भिन्नाः) वर्तमानात् वस्तुनोऽतीतानागतादयः, वीप्सया विशेषणविशेष्य-भावविषयनीलोत्पलादिशब्दैरपि** उपाश्रिताम् **इत्याह। तत्रापि प्रविभज्य मेलनमुप-चारसत्तायां युज्यते, अन्यथा संसृष्टे वस्तुनि नेयं कल्पना घटत इत्युक्तम्। अती-तानागतकालव्यापित्वाच्च नियतकालेष्वपि बाह्येष्वर्थेष्वियमभिन्नकाला सार्वत्रिकी। अत एव सर्वेषामपि शब्दानां प्रवृत्तिहेतुरियम्।**

**चैत्रोऽभूद् भविष्यतीति बुद्धयार्थं निरूप्य, तत्र शब्दप्रवृत्तेः, अनिरूपितेऽर्थे तदयोगात्। तथाहि विद्यमानोऽपि वर्तमानकालिकोऽर्थो यावद् बुद्धया नावधृतः तावदविषयः शब्दानामिति सर्वत्रोपचारसत्तारूढ एव शब्दार्थ इत्युक्तं भवति।**

---

पचारसत्तेति व्यवाहार्षीत् प्राक् तत्र तत्र। एवंविधविशेषणगणविशिष्टाम् एतां सत्तां कश्चिदपि हि पदार्थः क्रियारूपः कारकरूपो वा नातिवर्तते। बाह्यसत्ताया वर्तमानका-लिक्याक्रियाकारकभावस्यानुपपन्नत्वात्। तथाहि—क्रिया खलु क्रमिकावयवसमूहरूपा न कदाचिदपि वर्तमानत्वमवाप्तुमीष्टे। घटादिरूपं साधनमपि स्वोत्पत्तेः प्रागवर्तमानं न न जन्मादिक्रियायाः साधनभावमाप्तुमर्हति, इत्येवं बुद्धिसत्तासमाश्रयेणैव 'घटो जायते' इत्यादिप्रयोगोपपत्तिः। सा च क्रियाकारकयोर्बुद्धिसत्ता, सम्प्रतिसत्तायाः=बाह्याया वर्त्तमानसत्तायाः पृथक्=भिन्नत्वेन, यतो भाष्ये निरूपिता, अतः प्रामाणिकत्वेन स्वीकर्त्तव्येति।

अयं भावः—येषां भावाभावजन्मरूपाणां त्रयाणां वृद्धिपरिणामपरिक्षयसहितानां वा षण्णां धर्माणां बाह्यानां परस्परं विरोधः, तैः सहोपचारसत्तायाः=बुद्धिसत्ताया अवि-रोधः, तेषां सर्वेषामधिष्ठानत्वात् तस्याः। स चाविरोधः प्रागुपदर्शितो यथोक्तेन न्यायेन। किञ्च तेषां बाह्यानां परस्परं विरोधेऽपि उपचारसत्तासमाविष्टानामविरोध इत्यप्यव-गन्तव्यम्। तस्यास्तैः सहाविरोधादेवाह—विरोधिख्यापनायैव इति। विरोधिनां धर्माणां भावाभावादीनां साध्यत्वेन क्रियारूपाणां स्वसाधनपरिच्छिन्नत्वेन प्रकाशनाय तैस्तै-ब्राह्मणादिशब्दैरुपाश्रिताम्=उपगृहीताम्, स्वार्थद्वारा परिच्छिद्य बोधितामित्यर्थः। एतैर्हि ब्राह्मणादिशब्दैर्धर्माणां परस्परविरोधिनां भावाभावादीनां साध्यरूपाणाम्, साधनरूपो ब्राह्मणादिर्विषय उपदर्श्यते। भावाभावादीनां विरोजिनां बुद्धिसत्तायामारोपादेव धर्मत्वेन व्यवहारः, अविरोधश्च परस्परं तेषां तया सह च। यदि च साधनरूपस्वार्थप्रकाशनाय ब्राह्मणादिशब्दा न प्रयुज्येरन्, तदा साध्यरूपा भावाभावादयो विरोधिनो धर्मा न प्रकाशेरन्, साध्यानां साधनसाहचर्यनियमात्, तदभावे तदप्रतीतेः। तेचान्तरा बुद्धिसत्तां समाविष्टा धर्माः=साध्यरूपा भावादयः, परस्परं स्वसाधनेभ्यश्चान्तरेभ्योऽभिन्ना अपि बाह्याद् वस्तुनः साध्यरूपात् साधनरूपाच्च भिन्नाः। शब्देनैव तेषां परस्परं साधनतश्च भेदस्य परिकल्पनात्। अथवा नीलोत्पलादौ वर्तमानाद् वस्तुनो भिन्नाविरोधिनोऽतीता-नागतादयः, तैस्तैरिति वीप्सया न केवलं ब्राह्मणादिशब्दैरेव निर्विशेषणैः, अपि तु

क्रियाकारकभावेनापि चार्थानां निरूपणं बौद्धमेव। तथाहि—भाव्यमानत्वादेव क्रिया सम्प्रति नास्ति, तदभावात् तदपेक्षं साधनत्वमपि कुत इति आख्यातशब्दस्य क्रियावाचिनः सुबन्तस्य च कारकवाचिनः सर्वस्यैव बुद्धिपरिगृहीत उपचारसत्तासमाविष्टो वाच्योऽर्थोऽवतिष्ठत इति सर्वेषां व्याप्तिसिद्धिः। अभावस्य च ज्ञायमानत्वेन सत्त्वादेतामुपचारसत्तां सर्व एव पदार्थो नातिक्रामतीति सर्वेषामेव तद्विषयत्वादभावादिशब्दानामप्यर्थेन नित्यावियोगः सिद्धः। अस्याश्चोपचारसत्ताया न निर्मूलत्वम्, अपितु भाष्यकाराभ्युपगतत्वमेव। मतुब्वार्त्तिके न सत्तां पदार्थो व्यभिचरतीत्यस्तिशब्दार्थाक्षेपे तत्समर्थनाय सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूत् "गावोऽस्यासन्, गावोऽस्य भवितारः" इति भाष्यवचनादुपचारसत्तास्तीति गम्यते। प्रमाणभूतत्वादस्य वचनस्य। न हि भूता भविष्यन्ती वा काचित् सत्ता या अस्तीत्यनेन विचार्येत। भूतभविष्यतोरप्यनुपाख्यत्वान्न काचिन्मुख्या सत्ता। अतीतस्यानुभूतत्वादनागतस्य प्रगुण-

---

विशेषणविशेष्यभावविषयनीलोत्पलादिशब्दैरपि उपाश्रितामित्याह। तत्रापि = नीलोत्पलादौ समासे तत्रापि संसृष्टे नीलोत्पले, विशेष्यविशेषणे बुद्धया प्रविभज्य पुनस्तयोः समासेन मेलनमुपचारसत्तायामेव युज्यते। अन्यथा संसृष्टे एकस्मिन् वस्तुनि नेयं प्रविभागयोग्या विशेष्यविशेषणकल्पना घटते इत्युक्तं प्राक्। अनित्यत्वाद् नियतकालेष्वपि बाह्येष्वर्थेषु इयमुपचारसत्ता नित्यत्वेन अतीतानागतकालव्यापित्वाद् त्वभिन्नकाला सार्वत्रिकी = साध्यसाधनयोः, विशेषणविशेष्ययोश्च स्थिता। अत एव सर्वेषामपि शब्दानां प्रवृत्तिहेतुरियम्।

बुद्धयार्थं निरूप्य तत्र चैत्रोऽभूद् भविष्यतीति अतीतानागतयोरर्थयोः शब्दप्रवृत्तेः। बुद्धयाऽनिरूपितेऽर्थे शब्दप्रवृत्त्ययोगात्। तथाहि—बहिर्विद्यमानोऽपि वर्तमानकालिकोऽर्थो यावद् बुद्धया इदमित्थमिति नावधृतः, तावत् शब्दानामविषय इति सर्वत्रोपचारसत्तारूढ एव शब्दार्थ इत्युक्तं भवति। क्रियाकारकभावेनापि चार्थानां निरूपणं बौद्धमेव। तथाहि—क्रियायाः क्रमिकावयवसमूहरूपत्वेन क्रमेण भाव्यमानत्वादेव क्रिया सम्प्रति = वर्तमानकाले नास्ति। क्रियाया अभावात् तदपेक्षं साधनत्वमपि कुतः कर्तृकर्मादीनामिति आख्यातशब्दस्य = तिङन्तस्य क्रियावाचिनः सुबन्तस्य च, कारकवाचिनः सर्वस्यैव बुद्धिपरिगृहीत उपचारसत्तासमाविष्ट एव वाच्योऽर्थोऽवतिष्ठत इति सर्वेषामर्थानामुपचारसत्ताव्यापित्वसिद्धिः। अभावस्य च निःस्वरूपित्वेऽपि ज्ञायमानत्वेन बुद्धौ सत्त्वादेतामुपचारसत्तां सर्व एव पदार्थो नातिक्रामतीति सर्वेषामप्यर्थानामुपचारसत्ताविषयत्वादभावादिशब्दानामपि अर्थेन सह नित्यमवियोगः सिद्धः। अस्याश्चोपचारसत्ताया न निष्प्रमाणत्वम्, अपि तु भाष्यकाराभ्युपगतत्वेन प्रामाणिकत्वमेव। तदस्यास्त्यस्मिन्निति मतुप् इति मतुप्सूत्रस्थे वार्त्तिके—'न सत्तां पदार्थो व्यभिचरति' इत्यस्तिशब्दार्थस्याक्षेपे तत्समर्थनपरेण—"सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूद् गावोऽस्यासन्

**कारणसांमुख्येन बुद्धचा तु परामर्शे प्रत्ययपरिवर्तिन्यर्थे शब्दप्रयोग इत्युपचारसत्ता भूतभविष्यतोरुपपद्यते। तथा च तद्व्युदासाय बाह्यसत्तापरिग्रहार्थमस्तीति विशेषणं युक्तम्। बाह्या हि सत्ता सम्प्रति वर्तमाने काले भवतीत्यन्या, ततो भूतभविष्यतोः प्रत्ययात्मना सत्तेयम्। यद्यपि वर्तमानावस्थस्यापि बाह्यस्य प्रतीतिग्राह्यत्वेनैव व्यवहार्या सत्ता, तथापि सैव बहिरपि भावादस्तीत्यनेन विशेषणेन विवक्षितवर्तमानकालेन गृह्यते। प्रतीतिमात्रशरणा त्वितरा व्युदस्यते। तदेवमुपचारसत्तायां समर्पितस्वभावानां बाह्यानामेवार्थानामतीतादिभावेन प्रत्यायनाद्यथार्थ एव शाब्दो व्यवहार इति संबन्धनित्यत्वमुपपादितम्॥ ४९, ५०, ५१॥**

**इदानीं सर्वस्यैव शाब्दस्य व्यवहारस्य यथातत्त्वमप्रवृत्तेर्विप्लुतत्वे गवादिशब्दानामविचारसिद्धार्थवत्ताभ्युपगन्तव्या। तथा च सत्यतीताद्यभावविषयाणामपि शब्दानां भावाभिमतवस्तुविषयैर्घटादिशब्दैस्तुल्यतां प्रतिपादयितुमुपक्रमते—**

---

भवितारः" इति भाष्यवचनेन उपचारसत्ता अस्तीति गम्यते। अस्य भाष्यवचनस्य सिद्धान्त्युक्तित्वेन अप्रत्याख्याततत्वेन च प्रमाणभूतत्वात्। नहि भूता भविष्यन्ती वा काचिद् बहिःसत्ता उपपद्यते, या अस्तीत्यनेन सूत्रस्थेन विचार्येत। भूतभविष्यतोरनुपाख्यत्वात् निःस्वरूपत्वाद् न काचिद् मुख्या सत्ता। तयोरुपचारसत्ता तूपपद्यते। अतीतस्यानुभूतत्वेन वासनारूपेण बुद्धिस्थत्वात्, अनागतस्य तु कार्योन्मुखकारणसांमुख्येन बुद्धचा परामर्शे सति बुद्धिपरिवर्तिन्यर्थे शब्दप्रयोगात्। तथा चोपचारसत्तानिरासाय बाह्यसत्तापरिग्रहार्थञ्च मतुप्सूत्रे अस्तीति मतुबर्थविशेषणं युक्तम्।

बाह्या हि सत्ता सम्प्रति वर्तमानकाले भवतीति, ततश्चान्या प्रत्ययात्मना= बुद्धिरूपेण, स्थिता इयं भूतभविष्यतोरुपचारसत्ता। यद्यपि वर्तमानावस्थस्यापि बाह्यस्यार्थस्य प्रतीतिग्राह्यत्वेनैव व्यवहार्या सत्ता इति उपचारसत्ता तस्यापि, तथापि अर्थस्य सत्तायाश्च बहिरपि भावात् सूत्रस्थेनास्तीत्यनेन मतुबर्थविशेषणेन विवक्षितवर्तमानकालेन सैव =बहिःसत्तैव, अन्तर्बहिश्च व्यापकत्वेन सामान्यरूपा गृह्यते। उपचारसत्ता तु प्रतीतिमात्रशरणा =बुद्धावेव वर्तमाना, विशेषणरूपा अव्यापकत्वेन अस्तीति विशेषणेन तात्पर्यतो निरस्यते। तदेवमुपचारसत्तायां समर्पितस्वभावानाम् = प्रत्ययेन समारोपितस्वरूपाणाम्, संस्काररूपेण स्थितानां बाह्यानामेवार्थानामतीतादिरूपेण बोधनाद् यथार्थ एव शाब्दो व्यवहारः, न तु रज्जुसर्पादिवन्निर्विषय इत्येवं शब्दवदर्थस्यापि नित्यत्वात् तयोः सन्बन्धनित्यत्वमत्रोपपादितमिति॥ ४९, ५०, ५१॥

इदानीं सर्वस्यैव शाब्दस्य व्यवहारस्योपचारसत्तासमाश्रयेण प्रवृत्त्या यथातत्त्वमप्रवृत्तेर्विप्लुतत्वे गवादिशब्दानामविचारसिद्धार्थवत्ताऽभ्युपगन्तव्या। तथा च सत्यतीतादिरूपाभावविषयाणामपि शब्दानां भावत्वेनाभिमतवस्त्वर्थकैर्घटादिशब्दैस्तुल्यतां प्रतिपादयितुमुपक्रमते—प्रदेशस्येति।

**प्रदेशस्यैकदेशं वा परतो वा निरूपणम् ।**
**विपर्ययमभावं वा व्यवहारोऽनुवर्तते ॥ ५२ ॥**

इह शाब्दो व्यवहारोऽयथातत्त्वं प्रवृत्तोऽर्वागदृशाम् । तथाहि—पूर्णस्य तत्त्वस्य साक्षाच्छब्दैः स्प्रष्टुमशक्यत्वादविद्यापरिकल्पितप्रतिनियतघटादिप्रदेशगतः शाब्दो व्यवहारः । प्रदेशशब्देन ( प्रदेशैकदेशशब्देन ) घटादेर्ब्रह्मैकदेशत्वादभिधानं कृत्स्नार्थपरिग्रहासामर्थ्यं शब्दानां प्रतिपादयितुम् । तत्रापि च मात्राकलापात्मको न प्रदेशः समस्तः शब्देनाभिधीयते, अपि तु तदेकदेशः । घटशब्देन हि घटत्वजातिरुच्यते । तत्रैव रक्तशब्देन गुणः । एवं शब्दान्तरैरपि प्रतिनियतभावाभिधानमुदाहार्यम् । परेण जात्यादिना च निरूपणम् । संसर्गदर्शने स्वतो गौर्न गौः, गोत्वाभि-

---

अयमर्थः—इह ह्येवं दर्शनस्थितिः, परिपूर्णं तत्त्वं ब्रह्मैवाविद्यापरिकल्पितप्रतिनियतघटादिप्रदेशावच्छिन्नं घटादिशब्दवाच्यमित्येकं दर्शनम् । जातिगुणक्रियाऽऽकृतिसमूहात्मकं द्रव्यम् । तत्र घटशब्देन घटत्वजातिरूपः, आकृतिरूपो वा द्रव्यैकदेश एव निरूप्यते, न समस्तः प्रदेशः । एवं रक्तशब्देन रक्तरूपात्मको गुण एव, चलादिशब्देन क्रियैव इति द्वितीयं दर्शनम् ।

परेण जात्यादीनां द्रव्यस्य शब्देन निरूपणम्, न तु साक्षात् स्वरूपेण । यथा ब्रह्मण उपाधिभिस्तैर्निरूपणम्, न तु साक्षादिति तृतीयं दर्शनम् । ब्रह्मवादिनयेऽभिन्नस्य ब्रह्मणो नानोपाधिवशेन भेदो विपर्ययः, विज्ञानवादिनये तु विज्ञानाकारतयाऽबहीरूपस्य द्रव्यस्य देशकालसंसर्गितया बहीरूपतया भानं विपरीतख्यातिरूपो विपर्ययः । शून्यवादिमते अभाव एव शब्दव्यवहारगोचरः, बाह्यस्य सर्वथैव निषेधात्, विज्ञानस्यापि च निषेधादसत्ख्यातिः । ब्रह्मवादिनये तु ब्रह्मण एव सत्यस्य वागगोचरत्वादसदेवेदं भेदजातं शब्दविषय इत्यनिर्वचनीयख्यातिरित्येतेषु सर्वेषु दर्शनेषु शब्दानामर्थसम्बन्धः, न सर्वात्मना न वा वस्तुत इति अतात्त्विक एव सर्वोऽपि शाब्दो व्यवहार इत्येतदेवानया कारिकयोपदर्शितम् ।

तथाहि—सर्वोऽपि शाब्दो व्यवहारः प्रदेशस्यैकदेशं वा अनुवर्तते । अत्र 'वा' शब्द एवकारार्थकः । किञ्च, अत्र प्रदेशशब्देन माया, तत्कार्योपहितं ब्रह्म, तदेकदेशो घटादिः, तं घटादिशब्दैर्व्यवहारोऽनुवर्तत इत्यर्थः । यद्वा प्रदेशः—जात्याकृतिगुणक्रियासमूहरूपं द्रव्यं तदेकदेशं जातिरूपमाकृतिरूपं वा घटादिशब्दव्यवहारः, गुणरूपं तदेकदेशं रक्तादिशब्दव्यवहारः, क्रियारूपं तदेकदेशं चलादिशब्दव्यवहारोऽनुवर्तत इत्यर्थः । जातिगुणक्रियाधिष्ठानरूपाद् द्रव्याद् परतः—परेण जात्यादिना वा एव द्रव्यस्य स्वाश्रयस्य निरूपणं व्यवहारोऽनुवर्तत इत्यर्थः । विज्ञानवादिनये ब्रह्मवादिनये च विपरीतख्यातिरूपम्, अनिर्वचनीयख्यातिरूपं वा विपर्ययं शाब्दो व्यवहारोऽनुवर्तत इत्यर्थः ।

संबन्धाद् गौरिति ब्रह्मकल्पं साक्षादव्यवहार्यमेव द्रव्यं परोपधीयमानरूपविशेषं व्यवहारमनुपतति। तत्र विपर्ययोऽभिन्नस्य ब्रह्मणो नानोपाधिवशेन भेदः। विज्ञाननये वाऽबहीरूपस्य बहीरूपतया भानं विपरीतख्यातिः। अभावः शून्यवादिमते व्यावहारिकः, बाह्यस्य सर्वथैव निषेधात्। विज्ञानमात्रस्याकारनानात्वायोगादसदेवेदं गन्धर्वनगरतुल्यमाभासत इत्यसत्ख्यातिः। ब्रह्मण एव वा सत्यस्य वाक्पथातीतत्वादविद्यायामसदेवेदं भेदजातं शब्दविषयम्। तदेषु चतुर्षु दर्शनेषु शब्दानामर्थसम्बन्धो न भाविकः। तथाहि—आद्ये दर्शनेऽर्थोऽस्ति गवादिशब्दानाम्, तत्रोपपद्येत सम्बन्धो यदि सोऽर्थभागो ज्ञानस्य गोचरीभवेत्। न च भवति, विवेकेनानवधारणात्। अतीन्द्रिया अपि चान्ये धर्मा अभ्युपेयन्ते। अतोऽत्रापि न संपूर्णोऽर्थसम्बन्धः। इतरेषु पक्षेष्वर्थाभावादेव सम्बन्धासिद्धिः। तथाहि—परतो निरूपणे आधीयमानरूपमेव नोरूपं निरूप्यतेऽभिधीयते चेति न सत्यवस्तुविषयः सम्बन्धः। एवं विपर्ययाभावपक्षयोरपि वाच्यम्॥ ५२॥

एतदेव दृष्टान्तेन साधयति—

---

शून्यवादिनये तु सर्वशून्यत्वाभ्युपगमेनाभावं शाब्दव्यवहारोऽनुवर्तत इत्यर्थः। तथा च न कोऽपि शाब्दो व्यवहारः कस्यापि मते, तत्त्व गोचर इति फलितमिति।

अयं भावः—इह हि लोके सर्वोऽपि व्यवहारोऽर्वाग्दृशामेव प्रवृत्तः, न तु परिपूर्णं ब्रह्मतत्त्वं समाधौ स्वाभेदेन परिपश्यताम्। विद्वांसोऽपि हि व्यवहारदशायामविद्वद्भिरविशिष्टमेव व्यवहरन्ति, पशुभिश्चाविशेषादिति ब्रह्मसूत्रात्। स च विदुषामविदुषां वा व्यवहारोऽयथातत्त्वं प्रवृत्तः, न यथार्थः। तथाहि—परिपूर्णस्य ब्रह्मतत्त्वस्य साक्षाच्छब्दैः स्प्रष्टुमशक्यत्वादविद्यापरिकल्पितघटादिरूपोपाधिपरिच्छिन्नब्रह्मरूपप्रदेशैकदेशघटादिरूपोपाधिविषयकः शाब्दो व्यवहारः।

एवं घटादेः स्वावच्छिन्नब्रह्मैकदेशत्वात् प्रदेशैकदेशशब्देनाभिधानं शब्दानां कृत्स्नार्थपरिग्रहासामर्थ्यं प्रतिपादयितुम्। तत्रापि च = घटादिरूपोपाधावपि च, मात्राकलापात्मकः = जात्याकृतिगुणक्रियारूपविषयकलापात्मकः प्रदेशः समस्तो न घटादिशब्देनाभिधीयते, अपि तु तदेकदेशो जात्यादिरेव। घटशब्देन हि घटत्वजातिरुच्यते। तत्रैव च रक्तशब्देन गुण एवोच्यते। तत्रैव चलशब्देन तस्य चलनक्रियैवोच्यते। एवं शब्दान्तरैरपि प्रतिनियतभावाभिधानमुदाहार्यम्। कारिकायाम् 'परतो वा निरूपणम्' इत्यस्य परेण जात्यादिना निरूपणमित्यर्थः। घटादिशब्दैर्घटत्वजात्यादिसंसर्गाद् घटादेर्द्रव्यस्याभिधानम्, न तु साक्षादित्येवंविधे संसर्गदर्शने च 'गौर्न स्वतो गौः, गोत्वाभिसम्बन्धात् तु गौः' इति साक्षादव्यवहार्यत्वेन ब्रह्मकल्पं द्रव्यं जात्यादिरूपस्वभिन्नभावोपधीयमानस्वरूपविशेषं सद्व्यवहारमनुपतति = व्यवहारगोचरो भवति, इत्येवं तस्य परतो निरूपणं भवति। तत्र = कारिकायाम्, अभिन्नस्य ब्रह्मणो नानोपाधिवशेन भेदो विपर्ययः। यद्वा विज्ञानवादिनये सर्वस्य प्रपञ्चस्य विज्ञानाकारतयाऽबहीरूपस्य बहीरूप-

यथेन्द्रियस्य वैगुण्यात् सत्ताध्यारोपवानिव ।
जायते प्रत्ययोऽर्थेभ्यस्तथैवोद्देशजा मतिः ॥ ५३ ॥

तिमिरोपहतनयनश्चन्द्रमेकमप्यनेकं पश्यति, कामली च शुक्लमपि पीतं शङ्खमिति । इन्द्रियदोषादाकारान्तररूषितार्थावभासो प्रत्ययोऽर्थेभ्यो जायते । अर्थानां तत्रालम्बनत्वान्नियतविषयत्वाद् भ्रान्तीनाम्, प्रत्यये धर्माध्यारोपो न वस्तु प्रचिनोतीति 'इव' शब्दः । एवमुद्दिश्यते प्रतिपाद्यतेऽनेनेति उद्देशः शब्दः । तत उत्पन्ना बुद्धिरसदाकाराध्यारोपवती भवति ॥ ५३ ॥

इन्द्रियवत् किं शब्दे वैगुण्यमित्याह—

---

तया भानं विपरीतख्यातिरूपो विपर्ययः । शून्यवादिमते तु अभाव एव व्यावहारिकः = सर्वव्यवहारगोचरः, तन्मते बाह्यस्य सर्वस्य निषेधात् । विज्ञानमात्रस्याकारनानात्वायोगादसदेव इदं गन्धर्वनगरतुल्यमाभासत इति तन्मते असत्ख्यातिः । वस्तुतस्तु शून्यवादिमते विज्ञानस्यापि निषेधात् । चिन्त्यमेतत् । यद्वा शून्यवादिमते इत्यस्य बाह्यशून्यवादिमते इत्यर्थः ।

बाह्यशून्यवादी च कश्चिद् विज्ञानवादिसयूथ्यः शून्यवाद्येकदेशी भवितुमर्हतीत्यवधेयम् । अथवा ब्रह्मण एव सत्यस्य वाक्पथातीतत्वादविद्यायां निमित्तभूतायां सत्यामसदेवेदं भेदजालं शब्दगोचरीभूतमित्यनिर्वचनीयख्यातिः ।

तदेवं कारिकायाः पादत्रयोक्तेषु चतुर्षु दर्शनेषु शब्दानामर्थसम्बन्धो न भाविकः= न वस्तुस्वभावसिद्धः, किन्तु कल्पितोऽयथार्थः । तथाहि—प्रदेशस्यैकदेशं वा इत्याद्ये दर्शने गवादिशब्दानामर्थोऽस्ति, किन्तु तत्रोपपद्येत शब्दस्यार्थसम्बन्धो भाविको यदि सोऽर्थभागः सकलो ज्ञानस्य गोचरीभवेत् । न च भवति, विचारेण समस्तार्थग्रहणस्यानवधारणात् । यतोऽतीन्द्रिया अपि पतनादिना अनुमेया गुरुत्वादयो घटादिद्रव्यस्य धर्मा अभ्युपेयन्ते । येन घटादिशब्दात् प्रतीयन्ते । अतोऽत्रापि दर्शने न घटादिशब्दानां सम्पूर्णैः स्वार्थैः सह सम्पूर्णः सम्बन्धः । इतरेषु तु त्रिषु दर्शनेष्वर्थासत्त्वादेव तत्सम्बन्धासिद्धिः । तथाहि—परतो निरूपणे वस्तुतो नीरूपं द्रव्यमाधीयमानजात्यादिरूपवत्त्वेन निरूप्यतेऽभिधीयते चेति न सत्यवस्तुविषयः सम्बन्धः, अतः सोऽपि न सत्यः, सदसतोरुपरागायोगात् । एवं विपर्ययाभावपक्षयोरप्यर्थसम्बन्धयोरसत्त्वं वाच्यमिति ॥ ५२ ॥

शब्दस्यासदर्थावभासकत्वमिन्द्रियदृष्टान्तेन साधयति—यथेन्द्रियस्येति ।

अयमर्थः—यथेन्द्रियस्य वैगुण्यात् = गुणस्य विपरीतो विगुणो दोषः, स एव वैगुण्यम् । चातुर्वर्ण्यादिवत् स्वार्थे ष्यञ् । इन्द्रियस्य काचकामलादिरूपाद् दोषादित्यर्थः । अर्थस्य रजतपीतादिरूपस्यारोप्यमाणस्यासत्त्वेऽपि अधिष्ठानरूपार्थसत्ताध्यारोपवानिव प्रत्ययोऽर्थेभ्योऽधिष्ठानभूतेभ्यः शुक्तिशङ्खादिभ्यो जायते । तथैवोद्देशजा शब्दजा मति-

**अकृत्स्नविषयाभासं शब्दः प्रत्ययमाश्रितः ।**
**अर्थमाहात्म्यरूपेण स्वरूपेणानिरूपितम् ॥ ५४ ॥**

**इह कारणानुरूपं कार्यं भवति । शब्दस्य च निरूपितार्थविषयत्वान्निरूपणाप्रत्ययः कारणम् । तदुक्तम्—**

**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते । इति ।**

**निरूपणाप्रत्ययश्च विकल्पः । स चैकैकव्यावृत्तिनिष्ठत्वाद्विकल्पानाम् अकृत्स्न विषयावभासः । न हि विकल्पेन यथातत्त्वं वस्तु स्पृश्यते, प्रदेशैकदेशादिना संस्पर्शादित्युक्तम् । अतश्चाकृत्स्नमेवार्थमध्यारोपितरूपभेदं शब्दः प्रतिपादयति । कार्यकारण-**

---

रसदर्थाकाराध्यारोपवती भवति । उद्दिश्यते प्रतिपाद्यतेऽर्थोऽनेन इति । उद्देश्यः शब्दः, तस्माज्जाता उद्देशजा शब्दजा इत्यर्थं इति ।

अयं भावः—यथा नेत्रदोषादेकमपि चन्द्रमनेकं पश्यति । अत्र नेत्रदोषस्तिमिररूपो दृगन्तचिपिटीकरणञ्च । तदुक्तं नैषधीये पञ्चनलीवर्णने—

अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः ।
स्वच्छोपसर्पणमपि प्रतिभाभिमाने भेदभ्रमे पुनरमीषु न मे निमित्तम् ॥ इति ।

कामलरोगवांश्च शुक्लमपि शङ्खं पीतं पश्यति । तदेवमिन्द्रियदोषादधिष्ठानानवभासे आकारान्तरारूपिताधिष्ठानार्थावभासी प्रत्ययोऽर्थेभ्योऽधिष्ठानभूतेभ्यो निमित्तेभ्यो जायते । अधिष्ठानभूतानामर्थानां भ्रान्तावलम्बनत्वेन निमित्तत्वाद् भ्रान्तीनां नियतविषयकत्वम् । ततश्च भ्रान्तिरूपे प्रत्ययेऽधिष्ठानभूतार्थधर्मस्य सत्त्वस्याध्यारोपः, न स्वाश्रयं भ्रान्तिप्रत्ययरूपं वस्तु प्रचिनोति = प्रचितं करोति, उत्कर्षयतीति सूचयितुमिवशब्दोऽत्र प्रयुक्तः ।

वस्तुतस्तु अध्यारोपस्यासद्रूपत्वं बोधयितुमत्र इव' शब्दः । यथा 'मुखं चन्द्र इवाभाति' इत्यत्र मुखे चन्द्रत्वमसद्रूपमिति बोधयितुम् 'इव' शब्द इति ॥ ५३ ॥

इन्द्रयवैगुण्यतिमिरादिवत् शब्दे किं वैगुण्यम् ? येनासदर्थावभासकः शब्द इति जिज्ञासायामाह—अकृत्स्नविषयाभासमिति ।

अयमर्थः—यन्मनसा मनुते तद् वाचा वदति' इति हि दर्शनस्थितिः । अतो यादृगर्थप्रत्ययः प्राक् तादृगर्थबोधक एव शब्दः प्रवर्तत इति रीत्या शब्दोत्पत्तेः प्राङ् नियमेन जायमानोऽर्थनिरूपणारूपः प्रत्ययो वस्तुशून्यत्वाद् विकल्पात्मकः शब्दस्य कारणम् । विकल्पात्मकश्च प्रत्ययो द्रव्यस्यैकैकविशेषणनिष्ठ इति न कृत्स्नविषयावभासी । तथाहि—घटत्वजातिविषयकः पूर्वप्रत्ययो घटशब्दस्य कारणम् । एवं रक्तगुणप्रत्ययो रक्तशब्दस्य, एवं चलनक्रियाप्रत्ययश्चलशब्दस्येति रीत्या घटरक्तचलशब्दा द्रव्यस्याकृत्स्नविशेषणावभासकं विकल्पात्मकं पूर्वप्रत्ययं स्वकारणत्वेनाश्रिता इति तदनुरूपे कार्ये शब्देऽकृत्स्नविषयावभासकबोधजनकत्वमेव वैगुण्यम् ।

सम्बन्धवशाद्विकल्पात्मको हि प्रत्ययः शब्दाज्जायते। तदुक्तम्—"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।" इति।

तथा—

"कार्योपादानविकल्पपरिगृहीतः शब्दार्थः" इति।

एवमविद्यामान्द्याद्विकल्पानां यथातत्त्वमवसायपाटवाभावात् समारोपितरूपेणावसायस्य सर्ववादिभिरभ्युपगतत्वात्तदुपदर्शितविषयविषयाः शब्दाः सर्व एव बहिरसदर्थविषयाः प्रत्ययोपारूढरूपाभिधायिनः सिद्धा इत्यतीताद्यभावादिशब्दानामप्यर्थसम्बन्धे न विप्रतिपत्तव्यमिति स्थितम् ॥ १४ ॥

तत्रैतत् स्यात्, निरावरणख्यातीनां भावतत्त्वदृशां यथार्थ एव शाब्दो व्यवहारः, ते चास्माकमुपदेष्टार इति नायथार्थः स इत्याशङ्क्याह—

---

किञ्च, स्वरूपेणानिरूपितमर्थमन्यरूपेण जातिगुणक्रियादिनाऽऽह—निरूपयति शब्द इति। स्वरूपेणानिरूपितस्यार्थस्यान्यरूपेण निरूपकत्वमपि शब्देऽपरं वैगुण्यमिति।

इह हि लोके कारणानुरूपमेव कार्यं भवति, न तु विरूपम्। दृष्टञ्चोपादानकारणानुरूपत्वं घटपटादिषु। सर्वत्र कार्येषु पूर्वप्रत्ययश्च शब्दस्योपादानकारणम्। तदुक्तं ब्रह्मकाण्डे—"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते" इति। शब्दस्य च बुद्ध्यापूर्वंनिरूपितार्थविषयकत्वात् प्राग् जायमानो निरूपणारूपः प्रत्ययः कारणम् तदुक्तम्—"तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते" इति। तथा च पूर्वं बुद्धिविषयादर्थाद् बुद्धौ जायमानः शब्दः पूर्वं बुद्ध्या प्रतीयते, पश्चात् श्रवणेन्द्रियेणापि प्रतीयत इत्यर्थः। शब्दोत्पत्तेः प्राग् जायमानोऽर्थनिरूपणारूपः प्रत्ययश्च विकल्परूपः, स च विकल्पानामेकैकव्यावृत्तिनिष्ठत्वात् = द्रव्यस्यैकैकविशेषणविषयकत्वात्, अकृत्स्नविषयावभासः, न सर्वविशेषणावभासी। यतो न विकल्पप्रत्ययेन यथातत्त्वं वस्तु स्पृश्यते = गोचरीक्रियते, प्रदेशैकदेशादिना गोचरीकरणादित्युक्तम्। अतश्चाकृत्स्नमेवार्थं बौद्धमध्यारोपितनानाविधविशेषणविशेषं शब्दः प्रतिपादयति। बाह्यार्थविशेषणानां बुद्धौ समारोपात्। शब्दप्रत्यययोः कार्यकारणभावरूपसम्बन्धवशाच्च विकल्पात्मको हि प्रत्ययः शब्दाज्जायते। तदुक्तम्—विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः" इति।

अत्र योनिरुपादानकारणम्। अत्र विकल्पयोनय इति. शब्दयोनय इति च षष्ठ्यर्थे बहुव्रीहिः। यथा—'कार्योपादानविकल्पपरिगृहीतः शब्दार्थः' इति। कार्यस्य शब्दस्योपादानकारणीभूतो यः प्राक् प्रत्ययरूपो विकल्पः, तेन परिगृहीतो गोचरीकृतो द्रव्यस्य जात्यादिरूपैकैकविशेषणरूपोऽकृत्स्नोऽर्थः शब्दार्थ इति तदर्थः। विकल्पानामसदर्थावभासकत्वेनाविद्याकार्यत्वम्, तेन च विकल्पानामविद्याप्रयुक्तान्मान्द्याद् यथातत्त्वमर्थावग्रहपाटवाभावाद् विकल्पप्रत्ययात् समारोपितरूपेणार्थावग्रहस्य सर्ववादिभिरभ्युपगतत्वाद् विकल्पोपदर्शितविषयविषयकाः शब्दाः सर्व एव बहिरसदर्थविषयाः प्रत्ययोपारूढरूपाभि-

रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ ।
ज्ञानं प्रत्यभिलापं च सदृशौ बालपण्डितौ ॥ ५५ ॥

परस्पराभिप्रायमेलनात्मकत्वाद् व्यवहारस्यावदातदर्शना भावतत्त्वदृशोऽपि व्यवहरन्तो लोकपथवर्तिनः सदृशोऽन्यैरर्वाग्दर्शनैः । रूपणम् । आलोचनम् । आलोच्य-शब्देन प्रापणं व्यपदेशः । आभ्यां व्यवहरन्तो लौकिके मार्गे तुल्याः । क्व विषय इत्याह—ज्ञानं प्रति इत्यादि । बालस्य विपर्यासितमतेर्यज्ज्ञानमर्थविकल्पम्, अभिलापो व्यपदेशरूपश्च ते प्रति तद्विषये । यथा बालो विकल्पत्यर्थमभिधत्ते च, एवं परमार्थदर्शना विद्वांसोऽपि । तथाहि तेऽपि निरूप्य विवक्षित्वा विषयं यथाविवक्षमेव व्यपदिशन्तः परा-भिप्रायमेलनमारभन्त इति । यथापराभिप्रायमेव पूर्वम् निरूपयन्ति । तथा च तेषामपि निरूपणाज्ञानं विकल्पः, तत्पूर्वकश्चाभिलापः शब्दो लौकिकसदृशः । या तु तेषां व्यव-हारातीता दशा, तस्यां शुद्धं ज्ञानं पारमार्थिकमनिरूपकम् ॥५५॥

प्रतिनियतविषयग्राहकमेव ज्ञानं सदैवेति कास्य शुद्धिरित्याह—

---

-धायिनः = विकल्पात्मकप्राक्प्रत्ययगोचरीकृतबहिरसदर्थाभिधायिनः, सिद्धा इति रीत्याऽतीताद्यभावादिशब्दानामपि स्वजन्यविकल्पात्मकप्रत्ययगोचरीकृतार्थसंबन्धे न विप्रति-पत्तव्यम् । बौद्धशब्दशब्दार्थयोः सम्बन्धस्याभ्युपगमादिति स्थितम् ॥ ५४ ॥

तत्रैनत् स्यात्—अर्वाग्दृशां शब्दव्यवहारस्य प्रागुक्तरीत्याऽयथार्थत्वेऽपि निरा-वरणख्यातीनाम् = अविद्याकृतावरणविरहितविज्ञानानाम्, अत एव वस्तुतत्त्वदृशां सर्वोऽपि शाब्दो व्यवहारो यथार्थ एव । ते चास्माकमुपदेष्टार इत्यस्माकमपि नायथार्थः शाब्दो व्यवहार इत्याशङ्क्याह—रूपणव्यपदेशाभ्यामिति ।

अयमर्थः—वाक्यप्रयोगात् प्राग् बुद्ध्या विवक्षितार्थालोचनं रूपणम्, आलोच्य अर्थस्य श्रोतारं प्रति शब्देन प्रापणं व्यपदेशः । रूपणव्यपदेशाभ्यां व्यवहरन्तौ बाल-पण्डितौ द्वावपि लौकिके एव वर्त्मनि स्थितौ, न तु परमार्थमार्गे अलौकिके तत्र तत्त्वभेदा-भावेन व्यवहारासंभवात् । अतस्तौ द्वावप्यसदर्थालोचनरूपं ज्ञानं प्रत्यसदर्थावभासकशब्द प्रयोगरूपमभिलापं च प्रति सदृशौ । तदुक्तम्—पशुभिश्चाविशेषादिति ।

अयं भावः—परस्पराभिप्रायमेलनं हि व्यवहारः, समाधाववदातदर्शना भावतत्त्व-दृशो विद्वांसोऽपि व्यवहरन्तो लोकपथवर्तिनः सदृशा एवान्यैरर्वाग्दृग्भिः, अद्वैते व्यवहारा-संभवात् । कारिकायां रूपणमालोचनं शब्दप्रयोगात् प्रागर्थस्य । व्यपदेशस्तु—आलोच्य-शब्देनार्थस्य श्रोतारं प्रति प्रापणम् । आभ्यां व्यवहरन्तो विद्वांसोऽपि लौकिके मार्गे तुल्या अविद्वद्भिः । कस्मिन् विषये तुल्या इत्याशङ्क्याह—ज्ञानं प्रतीत्यादि । बालस्य विपर्या-सितमतेः = भ्रान्तबुद्धेः, यज्ज्ञानमर्थसंविकल्पम् = विवक्षितार्थविषयक विकल्परूपं शब्दप्रयो-गात् प्राग्भवम् । अभिलापश्च व्यपदेशरूपः, तं प्रति = तद्विषये बालपण्डितौ सदृशौ । यथा

**सर्वार्थरूपता शुद्धिर्ज्ञानस्य निरुपाश्रया ।**
**ततोऽप्यस्य परां शुद्धिमेके प्राहुररूपिकाम् ।।५६।।**

**द्वे दशे शुद्धेरुपक्रमपरिसमाप्तिरूपे । इन्द्रियसन्निकर्षादिरूपोपाश्रयनिरपेक्षतयाशेषार्थावभासखचितं सर्वज्ञज्ञानमुपक्रमे शुद्धमित्युच्यते । इन्द्रियाद्यपेक्षारूपायाः स्वविषयग्रहणेऽशुद्धेरनवगमात् । निष्ठायां चाकारकालुष्यापगमात् प्रभास्वरं प्रशान्तकल्लोलं संविन्मात्रमेकघनं शुद्धं ग्राह्यग्राहकप्रपञ्चशून्यं परं ब्रह्म ।।५६।।**

**नियताकारावग्रहो ह्यशुद्धिरित्याह—**

---

बालः पूर्वम् बुद्ध्यार्थम् विकल्पयति, विकल्प्य च पश्चात् तमेवार्थं शब्देनाभिधत्ते च । एवं परमार्थदर्शना विद्वांसोऽपि । तथाहि—विद्वांसोऽपि वक्तव्यं, विषयं पूर्वं बुद्ध्या निरूप्य विवक्षित्वा च यथाविवक्षमेव व्यपदिशन्तः = व्याहारेण व्यवहरन्तः, पराभिप्रायमेलनम् = परस्मिन् श्रोतरि स्वाभिप्रायस्य शब्दद्वारा संगमनम्, पराभिप्रायस्य स्वाभिप्रायेण सह मेलनं वा आरभन्त इति । ते च विद्वांसः पराभिप्रायमेव = परस्य श्रोतुरभिप्रायमेव, अस्मिन् शब्दे प्रयुक्ते एतदर्थबोधमयं वाञ्छतीत्येवं रूपम्, स्वं प्रति पूर्ववक्तुरभिप्रायमेव वा शब्दप्रयोगात् पूर्वं यथा निरूपयन्ति, तथा तु विदुषामपि अर्थनिरूणारूपं ज्ञानं विकल्प एव । तत्पूर्वकश्च तेषामभिलापः शब्दः लौकिकपुरुषशब्दवदसदर्थावभासक एव । या तु तेषां व्यवहारातीता दशा तस्याम्, तेषां शुद्धं ज्ञानं पारमार्थिकमद्वैतविषयकमर्थानिरूपकमिति ।।५५।।

सदैव ज्ञानं प्रतिनियतविषयग्राहकमेव, न तु किमपि ज्ञानं सर्वार्थग्राहकमिति सर्वार्थविषयकत्वाभावे ज्ञानस्य शुद्धिर्नास्त्येवेत्याशङ्क्याह—सर्वार्थरूपतेति ।

अयमर्थः—निरुपाश्रया उपाश्रीयते कारणत्वेनेति, उपाश्रयो निमित्तमिन्द्रियसन्निकर्षादिः, तद्रहिता सर्वज्ञज्ञानस्य सर्वार्थरूपता = सर्वार्थाकारावग्राहिता शुद्धिः । अस्य ज्ञानस्य ततोऽपि = सर्वार्थरूपत्वादपि परामरूपिकां निर्विषयां शुद्धिमेके प्राहुः । अत्र ज्ञानस्य अरूपकत्वात् शुद्धौ अरूपकत्वोपचार इति ।

अयं भावः—शुद्धेरुपक्रमरिसमाप्तिरूपे द्वे दशे । तत्रेन्द्रियसन्निकर्षादिरूपनिमित्तनिरपेक्षत्वेन योगतपःस्वाध्यायादिशक्तिजमशेषार्थावगाहित्वेन चित्रं सर्वज्ञज्ञानं समाध्युपक्रमे शुद्धमित्युच्यते । स्वविषयग्रहणे इन्द्रियाद्यपेक्षैव हि ज्ञानस्याशुद्धिः, तस्याश्च तत्रानवगमात्, निष्ठायाञ्च = निर्विकल्पसमाधिरूपायां सविकल्पसमाधिपरिसमाप्तौ च ज्ञानस्य विषयाकारत्वसम्पत्तिरूपकालुष्यापगमात् प्रभास्वरं चेतसः सर्वात्मना निरोधात् प्रशान्तविविधविषयग्रहणकल्लोलं संविन्मात्रैकरसं ग्राह्यग्राहकरूपाविद्याप्रपञ्चशून्यत्वाद् शुद्धं परं ब्रह्मैवावशिष्यत इत्यरूपिका परा ज्ञानस्य शुद्धिरत्रोक्ता समाधिप्रकर्षे योगिजनानुभवसिद्धेति ।।५६।।

**उपप्लवो हि ज्ञानस्य बाह्याकारानुपातिता ।**
**कालुष्यमिव तत्तस्य संसर्गे व्यतिभेदजम् ॥५७ ॥**

**स्वच्छज्ञानस्यार्थेन संसर्गे सति यस्तेनैवार्थेन व्यतिभेदः प्रतिबिम्बवशादभेदो व्यामिश्रीभावः, ततो जातोऽयम् उपप्लवो बाह्यविषयप्रावण्यम्, उदकस्येव रजः सम्पर्कादाविलीभावः, तदपगमे क्रमेण स्वस्मिन् स्वच्छरूपेऽवस्थानम्, परा शुद्धिः सर्वदर्शनाभ्युपगता ।**
**तदुक्तम्—**

**"तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति ॥**

**इवशब्देनार्थरूपसम्भेदेऽपि स्वप्रकाशं ज्ञानरूपमनवगतमित्याह ॥ ५७ ॥**

**अर्थस्यापि व्यवहारेऽशुद्धिमाह—**

---

प्रतिनियतविषयाकारावग्रहणं हि इन्द्रियानुमानादिजं ज्ञानस्याशुद्धिः, इन्द्रियादिनिरपेक्षं सर्वार्थकारावग्रहणं वा, सर्वविषयाकारप्रपञ्चशून्यत्वं वा तस्य शुद्धिरिति पूर्वकारिकोक्तमर्थम् जलदृष्टान्तेन प्रसाधयन्नाह—उपप्लवो हीति ।

अयमर्थः—हि = यतो ज्ञानस्य बाह्याकारानुपातिता = बाह्यविषयाकारानुकारिता, उपप्लवः = ज्ञानस्य विषयसमीपे प्लवनम् = उत्प्लुत्य गमनं चाञ्चल्यरूपम् ।

तदेव तस्य = ज्ञानस्य विषयसंसर्गे सति यस्तेनैव विषयेण सह व्यतिभेदः । स्वस्मिन् विषयस्य प्रतिबिम्बवशादभेदः = व्यामिश्रीभावः, तज्जन्यं जलस्य कल्लोलजन्यं कालुष्यमिव प्रागुक्तोपप्लवरूपं कालुष्यमिति ।

अयं भावः—यथा जलं स्वरूपतः स्वच्छम्, तथा ज्ञानमपि स्वरूपतः स्वच्छम् । तस्य रजसा जलस्येवार्थेन संसर्गे सति यस्तेनैवार्थेन व्यतिभेदः = प्रतिबिम्बवशादभेदो व्यामिश्रीभावरूपः, ततो जातोऽयम्, तस्य उपप्लवो बाह्यविषयप्रावण्यरूपः (अत्र प्रावण्यमुन्मुखत्वरूपम् ) । अयञ्चोदकस्य रजःसम्पर्कादाविलीभाव इव । तस्य कालुष्यस्य योगतपः स्वाध्यायादिना क्रमेणापगमे च स्वच्छे स्वस्वरूपे अवस्थानं परा शुद्धिर्ज्ञानस्य सर्वदर्शनाभ्युपगता । तदुक्तम्—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति ।

तदा सर्वथा सर्वचित्तवृत्तिनिरोधे इत्यर्थः । कारिकायां कालुष्यमिव इत्यत्रेवशब्देन ज्ञानस्य प्रागुक्तरीत्या अर्थरूपेण सह संभेदे = व्यामिश्रीभावे सति स्वप्रकाशमपि ज्ञानस्वरूपं नावगतं भवतीत्याहेति ॥ ५७ ॥

शब्दज्ञानयोरिवार्थस्यापि व्यवहारेऽशुद्धिमाह—यथा चेति ।

अयमर्थः—यथा च ज्ञानमालेखात् स्वच्छतया स्वस्मिन् विषयोपरागरूपाद् विषयप्रतिबिम्बादशुद्धौ व्यवतिष्ठते । अशुद्धेराश्रयतया व्यवस्थितं भवति । तथा उपाश्रय-

**यथा च ज्ञानमालेखादशुद्धौ व्यवतिष्ठते ।**
**तथोपाश्रयवानर्थः स्वरूपाद् विप्रकृष्यते ॥ ५८ ॥**

**आलेखो विषयरूपोपरागः । ततोऽशुद्धं ज्ञानमिति प्रसाधितमर्थमर्थाशुद्धौ साध्यायां दृष्टान्तयति । उपाश्रयो जात्यादिरुपधानम्, तेन च द्वारेण यथादर्शनमर्थो व्यवहारपथमवतरति, निरुपाधेस्तस्याव्यवहार्यत्वात् । उपाधिसंसर्गश्चातत्त्वमित्यर्थस्येयमशुद्धिः । जात्याद्युपाधिरूपेण समवेतेन शबलितमर्थवस्तु प्रतीयते अभिधीयते चेति तथा तद्व्यवहारमवतरति—न तु सर्वथा व्यपदेश्यं द्रव्यम् ! एतदेव हि तस्य रूपं यदुपाधिसंसृष्टम्, सदैव तत्संसृष्टस्य प्रत्ययात् ॥ ५८ ॥**

**उक्तमर्थं प्रकृते योजयति—**

---

वान् = उपाश्रीयते व्यवच्छेद्यत्वेनाधारत्वेन च द्रव्यं येनासौ उपाश्रयो जात्यादिरूपोपाधिस्तद्वान् अर्थः । स्वरूपाद निरुपाधिकात् केवलाद् विप्रकृष्यते = विप्रकृष्टं क्रियते । शुद्धं हि द्रव्यस्वरूपमव्यवहार्यं जात्यादिभिरुपाधिभिर्दूरीकृत्य = व्यावर्त्यं दूष्यत इति । उपाधिभूतो जात्यादिरेव शुद्धस्य द्रव्यस्याशुद्धिरिति फलितम् ।

अयं भावः—आलेखो विषयोपरागरूपो विषयप्रतिबिम्बः । तस्माद् ज्ञानं स्वरूपतः शुद्धमप्यशुद्धं भवतीति प्रसाधितमर्थमर्थस्याशुद्धौ साध्यायां दृष्टान्तीकरोति । उपाश्रयो जात्यादिरूपमुपधानम् । जात्यादिरूपमुपाधिं द्वारीकृत्यार्थो विविधदर्शनसरण्या व्यवहारमार्गमवतरति, निरुपाधेर्द्रव्यस्य ब्रह्मवदव्यवच्छेद्यत्वेनाव्यवहार्यत्वात् । अर्थस्योपाधिसंसर्गश्चातत्त्वम् = अर्थस्वरूपाद् बहिर्भूतमित्यर्थस्येयमशुद्धिः । जात्याद्युपाधिरूपेण स्वस्मिन् समवेतेन शबलितम् = चित्रितम्, व्यामिश्रम् । अर्थवस्तु प्रतीयते = ज्ञानेन गोचरीक्रियते, शब्देन चाभिधीयते, न केवलमिति, तथा = जात्याद्युपाधिद्वारेण तदर्थवस्तुव्यवहारपथमवतरति, न तु सर्वथा व्यपदेश्यम् = व्यवहार्यम्, द्रव्यस्वरूपं जात्याद्युपाधिं विना । एतदेव ह्यर्थस्य व्यवहार्यं ज्ञेयञ्च रूपं यदुपाधिसंसृष्टम्, सदैव जात्याद्युपाधिसंसृष्टस्यैव प्रत्ययादभिधानाच्चेति ॥ ५८ ॥

प्राग् व्यवस्थापितमर्थं प्रकृते योजयति—एवमर्थस्येति ।

अयमर्थः—एवम् = प्रागुक्तरीत्या, अर्थस्य जात्याद्युपाधिसंसर्गरूपोपरागरूपाशुद्धिरूपे विपर्यये, शब्दस्याप्यकृत्स्नार्थाभिधानरूपाशुद्धिरूपे तत्तदुपाधिरूपेणार्थाभिधानरूपाशुद्धिरूपे च विपर्यये ज्ञानस्य च बाह्याकारोपरागरूपाशुद्धिरूपे च विपर्यये सिद्धे सति भावाभावौ द्वावपि परेणोपाधिना निरूप्यमाणत्वादभेदेन = भावरूपोपाधिना निरूप्यमाणत्वाद् विना विशेषं व्यवहारानुपातिनौ । यथा हि भावो घटादिर्भावरूपैरेव जात्याद्युपाधिभिर्निरूप्यते । तथाऽभावोऽपि घटाभावादिः प्रतियोगिरूपैर्भावैरेव निरूप्यते इति साम्यमिति

एवमर्थस्य शब्दस्य ज्ञानस्य च विपर्यये ।
भावाभावावभेदेन व्यवहारानुपातिनौ ।। ५९ ।।

जात्यादिसंसर्गरूपोपरागोऽर्थस्याशुद्धिः । शब्दस्याप्यकृत्स्नार्थाभिधानात् तदुपाधिरूपेणाभिधानादशुद्धिः । ज्ञानस्य बाह्याकारोपरागः एवं त्रितयमपि विपर्यस्तम् । तथा च भावस्यापि शब्देनाभिधीयमानस्य ज्ञायमानस्य वा परोपाधिरूपतया(रूपवत्तयाऽ)भावसमकक्ष्यता । अभावोऽपि हि 'घटाभावः पटाभावः' इति परोपाधिरेव शब्दप्रत्ययावनुपततीति साम्यम् । बुद्धया निरूप्यमाणो ह्यभावो भावरूपेणैवावच्छिद्यते । यत्तु परमं रूपं तत्रैव व्यवहारास्पदम् । ननु च विपर्यासः प्रतिपत्तृधर्मः, तेन प्रतिपत्तैव विपर्यस्तः कथ्यताम्, अर्थस्तु कथं विपर्यस्तः ? उच्यते-विपर्यासविषयत्वात् स्वरूपेणाप्रतिभासनादर्थोऽपि तथा, शब्दोऽपि विपर्यासहेतुत्वात् तथोच्यते ।। ५९ ।।

कथमभेदेन व्यवहारानुपात इत्याह—

---

साम्येन व्यवहारानुपातिनावित्येवं भावाभावयोरुभयोरपि स्वरूपेणानिरूप्यत्वात्, परेणोपाधिनैव निरूप्यमाणत्वादसन्तावित्यसदर्थविषयकत्वं सर्वस्य व्यवहारस्य सिद्धमिति ।

अयं भावः—अर्थस्य जात्यादिसंसर्गरूपोपरागोऽशुद्धिः, अर्थतत्त्वाद् बहिर्भूतत्वात् तस्य । शब्दस्यापि प्रागुक्तरीत्या अकृत्स्नार्थाभिधानात् तत्तदुपाधिरूपेणार्थाभिधानाच्च तादृशमभिधानमेवाशुद्धिः । ज्ञानस्य तु शुद्धस्य बाह्याकारोपरागोऽशुद्धिः । एवं त्रितयमपि विपर्यस्तम् = भ्रान्तम् । तथा च भावस्यापि शब्देनाभिधीयमानस्य ज्ञायमानस्य वा परोपाधिरूपवत्तायाऽवभासनादभावसमकक्ष्यता, यतोऽभावोऽपि घटाभावः पटाभाव इत्येवं रूपेण प्रतीतः सन् परोपाधिरेव = प्रतियोगिरूपभावोपाधिक एव, सन् शब्दप्रत्ययावनुपतति = शब्दप्रत्ययविषयत्वमनुभवतीति भावेन सहाभावस्य भावोपाधिकत्वमेव साम्यम् । यतो घटाभावः पटाभाव इत्येवंरूपया बुद्धया निरूप्यमाणोऽभावोऽभाववद्भावरूपेणैवोपाधिनाऽवच्छिद्यते = अवच्छिन्नः, व्यावृत्तः प्रतीयते । यत्तु भावस्य अभावस्य वा परमं रूपम् = विशुद्धं केवलं रूपम्, तदव्यवच्छेद्यत्वेन न व्यवहारास्पदम् ।

ननु विपर्यासो भ्रान्तिज्ञानरूपः प्रतिपत्तृपुरुषधर्मः, तेन तदाश्रयत्वात् । प्रतिपत्तैव विपर्यस्तः = विपर्यासाश्रयः-भ्रान्तिमान्, कथ्यताम्, अर्थस्तु-अचेतनत्वात् कथं विपर्यस्त इति चेत्, उच्यते—विपर्यासविषयत्वात् स्वरूपेणाप्रतिभासनादर्थोऽपि तथा = विपर्यस्तः । शब्दोऽपि विपर्यासरूपज्ञानहेतुत्वात् तथा = विपर्यस्त उच्यत इति ।। ५९ ।।

भावाभावावभेदेन व्यवहारानुपातिनावित्युक्तं प्राक् । तत्र कथमभेदेन व्यवहारानुपात इत्याशङ्कयाह—यथा भावमिति ।

अयमर्थः—यथा भावं प्रतियोगिनं व्यवच्छेदकत्वेन निरूपकत्वेन वाऽऽश्रित्य तस्य प्रतियोगिनो भावरूपस्य अभावोऽनुगम्यते, इतरव्यावृत्ततया स्वरूपमात्रेऽनुगतः पर्य-

**यथा भावमुपाश्रित्य तदभावोऽनुगम्यते ।**
**तथाऽभावमुपाश्रित्य तद्भावोऽप्यनुगम्यते ॥ ६० ॥**

**निरुपाधेरभावस्याविशिष्टत्वाद् भावोपाधेर्व्यवहारावतारः। भावस्यापि मध्यावस्थायामेव सत्त्वात् प्रागभावावच्छिन्नमेव व्यवहारे तत्त्वम्। नित्यानामप्यभिव्यञ्जककालात् प्रागनभिव्यक्तेरसत्तया व्यवहारो न विशिष्यते ॥ ६० ॥**

**एवमन्योन्यापेक्षित्वे भावाभावयोर्व्यवहारे साम्यं भेदमभ्युपगम्य प्रतिपादितम्। इदानीं भावव्यतिरिक्तमभावं निरसितुमाह—**

---

वसितः क्रियते, घटाभावः पटाभाव इति। तथा अभावमनित्यानाम्, प्रागभावंनित्यानामभिव्यक्त्यभावं वोपाश्रित्य परिच्छेदकत्वेनाश्रित्य तद्भावोऽपि तस्य नित्यस्यानित्यस्य वा भावस्य भावः सत्तापि अभावावच्छिन्नैव अनुगम्यते, व्यवहारेणानुश्रीयते। स्वोत्पत्तेः प्राग् असन् घटः, स्वाभिव्यक्तेः प्रागसन्नात्मेति। एवञ्च भावस्योपाधित्वेनाभावपरिच्छेदकत्वम्, अभावस्य चोपाधित्वेन भावपरिच्छेदकत्वमिति भावाभावयोरुभयोरप्युपाधित्वेन परस्परपरिच्छेदकत्वादभेदेन=भेदं विना साम्येन परस्परव्यवहारानुपातित्वमिति।

अयं भावः—निरुपाधेः = प्रतियोगिरूपोपाधिरहितस्य, अभावस्य अविशिष्टत्वात् = अव्यावृत्तत्वात्, व्यवहारावतार इति प्रतियोगितया भावोपाधिकस्याभावस्य व्यवहारेऽवतारः घटाभावः पटाभाव इति। भावस्यापि प्रागभावप्रध्वंसाभावावस्थयोर्मध्यावस्थायामेव सत्त्वात्। ततः पूर्वोत्तरावस्थयोरभावावच्छिन्नमेव व्यवहारे तत्त्वम्। स्वोत्पत्तेः प्रागुत्तरत्र चासन् घट इति। नित्यानामप्यात्मादीनामभिव्यञ्जककालात् प्रागनभिव्यक्तेरसत्तया व्यवहारो न विशिष्यते। देहेन्द्रियादिसम्बन्धात् प्रागसन्नात्मेति ॥६०॥

एवं भावाभावयोर्भेदमभ्युपगम्य व्यवहारे तयोरन्योऽन्यापेक्षित्वेन साम्यं प्रतिपादितम्। इदानीं भावव्यतिरिक्तमभावं निरसितुमाह—नाभावो जायते इति।

अयमर्थः—प्रागभावरूपोऽभावो विनश्यन् भावो न जायते, परस्परविरोधित्वेनाभावस्य भावोपादानत्वायोगात्। भावश्च विनश्यन्ननुपाख्यतां प्रध्वंसाभावरूपतां नैति। अत्रापि परस्परविरोधित्वमेव हेतुः। उपाख्यायते जात्यादिभिरुपाधिभिरिति उपाख्यो भावः, स न भवतीत्यनुपाख्योऽभावः। अत एकस्मात् स्वगतसजातीयविजातीयभेदशून्यादात्मनोऽनन्यौ = अभिन्नौ भावाभावौ। अतस्तदभिन्नाभिन्नयोस्तदभिन्नत्वनियम इति न्यायेन परस्परमप्यभिन्नौ। यत एकस्मिन्नात्मनि विकल्पितौ विशेषेण कल्पितौ, अनादिसंस्काररूपया अविद्यया कल्पिताविति यावत्। एवमभावे भावव्यतिरेकस्य निरासः सुसाध इति।

अयं भावः—द्वैतिनां नैयायिकादीनां नये स्वस्वप्रागभावोपमर्देन भावनिष्पत्तिरुत्पत्तिरूपा। भावोपमर्देन च तत्प्रध्वंससंभवः। अत्रोपमर्दस्तिरोभावरूपस्तिरस्कारः।

नाभावो जायते भावो नैति भावोऽनुपाख्यताम् ।
एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ ॥ ६१ ॥

द्वैतनये प्रागभावोपमर्देन भावनिष्पत्तिः। भावोपमर्देन प्रध्वंससंभवः। द्वयमपि चैतदयुक्तम्, भावाभावयोरन्योन्यस्वभावोपगमसंभवात्, स्वभावस्यानपायात् । अतश्चात्यन्तविवेके भावोपाधितयाभावस्याभावोपाधितया भावस्य प्रतीतिर्न स्यात्। तस्मादेकमेवाद्वयं तत्त्वमात्मशब्दवाच्यं व्यवहारे विकल्पदशायां भावाभावोपाधिरूपप्रविभक्तं चकास्ति। प्रकाशरूपस्य हि परस्य तत्त्वस्य सर्वथाऽविभिन्नस्वभावस्य महासत्तात्मनोऽभावाप्रतियोगिनोऽविद्यावशात् सांवृतलोकयात्रानिर्वर्तनसमर्थस्य बहिरिदन्तया प्रतिभाने वर्तमानकालोपाधितयार्थक्रियाकारिणो भावरूपता, अतीतानागतकालोपाधितया चान्तरेव संस्काररूपतयानुवर्तनाद् बाह्येन्द्रियविषयतानुपगमात् । सर्वप्रमातृसाधारणार्थक्रियाकरणादभावरूपतया व्यवहारः। न च सर्वथा तदानीमसत्ता स्मर्यमाणत्वादुत्प्रेक्ष्यमाणत्वाच्च। तथा च यस्य संस्काररूपास्ते भावास्तस्य स्मृत्युत्प्रेक्षागताः कल्पयन्त्येव काम‌प्यर्थक्रियाम्। अत एव च मध्यावस्थस्य भावस्वभावस्यैव प्रागभावः स्फुटेन रूपेणेन्द्रियापरिच्छेद्यावस्था, प्रध्वंसश्चोत्तरकालमभावो व्यवह्रियते, न तु सर्वथा भावसंस्कारनिवृत्तावभावः कश्चित् सर्वशक्तिविरहलक्षणश्चकास्ति चेतसि। अत एव त्र्यध्विकाः पदार्थाः समुद्घोष्यन्त इति नाभावो नाम कश्चित् ॥ ६१ ॥

तत्रैतत् स्यात्—कथं भावाभावौ विकल्पितौ इत्युच्यते। कारणभेदात् सत्यभूतौ यथावभासं कस्मान्न भवत इत्याशङ्क्य सदसत्पक्षभेदेन कार्यकारणभावानुपपत्तिप्रतिपादनपूर्वकं द्वैतदर्शनमपोह्य विवर्ताश्रयेण द्वैतनयं स्वमतेन सिद्धान्तयितुमुपक्रमते—

---

उपमर्दप्रध्वंसयोरेकत्वे हेतुहेतुमद्भावासम्भवात्। द्वयमपि चैतदयुक्तम्, भावाभावयोरन्योन्यस्वभावोपगमसम्भवात् = भावाभावयोरन्योन्यस्वभावापगमासम्भवात्। स्वभावस्यानपायात्। अतश्च तयोरत्यन्तविवेके भावोपाधिकतया अभावस्याभावोपाधिकतया च भावस्य प्रतीतिर्न स्यात्, भेदाभेदे सत्येव जातिगुणक्रियादिषु उपाधित्वस्य दृष्टत्वात्। तस्मादेकमेवाद्वयं तत्त्वमात्मशब्दवाच्यं व्यवहारे विकल्पापादकाविद्यादशायां भावाभावरूपोपाधिपरिच्छिन्नं प्रविभागेण चकास्ति।

यतः प्रकाशरूपस्य परस्य तत्त्वस्य सर्वथाऽविभिन्नस्वभावस्य सर्वकल्पनाधिष्ठानत्वाद् महासत्तारूपस्याभावाप्रतियोगिनः स्वविषयकाऽविद्यावशात् सांवृत्तलोकयात्रानिर्वर्त्तनसमर्थस्य=संवृत्तिरत्राविद्या बहिरिदंतया प्रतिभाने वर्तमानकालोपाधिकतयाऽर्थक्रियाकारिणो भावरूपता। अतीतानागतकालोपाधिकतया चान्तरेव संस्काररूपतयाऽनुवर्तनाद् बाह्येन्द्रियविषयत्वाऽनुपगमात् सर्वप्रमातृसाधारणार्थक्रियाकरणादभावरूपतया व्यवहारः। न चातीतानागतकालयोः सर्वथाभावस्यासत्ता संभवति। तदवस्थस्य तस्य

**अभावस्यानुपाख्यत्वात् कारणं न प्रसाधकम् ।**
**सोपाख्यस्य तु भावस्य कारणं किं करिष्यति ॥ ६२ ॥**

**इह कार्यस्यात्मलाभमुद्दिश्य कारणं प्रवर्तते । तत्र निःस्वभावस्योद्देश्यत्वायोगात् किमवलम्ब्य कारणस्य पदबन्धः स्यात् । जात्यात्मना सत्त्वे तस्या नित्यत्वात् कार्यतानुपपत्तेः पुनरपि कारणं क्व प्रवर्तेत ? कथञ्चिदभेदो जातिव्यक्त्योरिति चेत्, व्यक्त्यात्मना तर्हि कार्यतेति तदवस्थो दोषः । नियतकारणपरिग्रहश्च न स्यात्, असत्त्वस्याविशेषात् । सिकताभ्योऽपि तैलं स्रवेत् । नियतशक्तिकारणमिति चेत्, कुतोऽवसितमेतत् ? तस्मिन् सति सद्भावादिति चेत्, तदेवेदं पर्यनुयुज्यते 'कथमत्यन्तासतस्तस्मिन्**

स्मर्यमाणत्वादुत्प्रेक्ष्यमाणत्वाच्च । तथा च यस्य पुरुषस्य संस्काररूपास्ते भावाः, तस्य स्मृत्युत्प्रेक्षागताः कल्पयन्त्येव काम्यर्थक्रियां सुखदुःखाद्यनुभवरूपाम् । अत एव च प्रागभावप्रध्वंसयोर्मध्यावस्थस्य भावस्वभावस्यैव स्फुटेन रूपेणेन्द्रियापरिच्छेद्यावस्थाप्रागभावः उत्तरकालञ्च तस्यैव तेन रूपेणेन्द्रियापरिच्छेद्यावस्था प्रध्वंसाभावो व्यवह्रियते, न तु सर्वथा भावसंस्कारस्यापि निवृत्तौ सर्वशक्तिविरहलक्षणोऽभावः कश्चिच्चकास्ति चेतसि । अत एव भूतभविष्यद्वर्तमानरूपैस्त्र्यध्विकाः = मार्गत्रयभवाः, पदार्थाः समुद्घोष्यन्ते, तीर्थकृद्भिरिति नाभावो नाम कश्चित् पदार्थ इति ॥ ६१ ॥

अयं तु पूर्वपक्षः संभाव्यते । कथं भावाभावौ विकल्पितावित्युच्यते—कारणभेदात् सत्याद् यथावभासं सत्यभूतावेव तौ कस्मान्न भवत इति आशङ्कामूलकं द्वैतदर्शनं सदसत्पक्षभेदेन सत्कारणम्, असत्कारणम्, सत्कार्यम्, असत्कार्यमिति पक्षभेदेन कार्यकारणभावानुपपत्तिप्रतिपादनपूर्वकमपोद्य विवर्त्तवादाश्रयेणोपपन्नमद्वैतदर्शनं स्वमतेन सिद्धान्तयितुमुपक्रमते—अभावस्येति ।

अयमर्थः—यदि स्वोत्पत्तेः प्रागसत्कार्यम्, तदाऽभावरूपस्य कार्यस्याऽनुपाख्यत्वात्, निःस्वरूपत्वात् तस्य सत्कारणं प्रसाधकं जनकं न भवति, सदसतोरुपरागाभावेन तयोः कार्यकारणभावानुपपत्तेः । यदि च उत्पत्तेः प्राक् सत्कार्यम्, तदा उत्पत्तेः प्रागेव सोपाख्यस्य = उपाख्यायते इति उपाख्यास्वरूपम्, तत्सहितस्य, लब्धस्वरूपस्य तु भावस्योत्पत्तेः प्रागपि सपद्रूस्य कारणं किं करिष्यति, कार्यस्यात्मलाभस्योत्पत्तेः प्रागेव सिद्धत्वादिति ।

अयं भावः—इह कार्यस्य स्वरूपलाभमुद्दिश्य कारणं प्रवर्तते । तत्र यदि कार्यं स्वोत्पत्तेः प्रागसत् स्यात्, तदा निःस्वभावस्य = निःस्वरूपस्य बन्ध्यापुत्रादिवदुद्देश्यत्वायोगात् किमवलम्ब्य = उद्दिश्य कारणस्य पदबन्धः स्यात् = कार्यानुकूलप्रवृत्त्यर्थं पदन्यासः स्यात् ? तदानीं स्वरूपेणासत्त्वेऽपि जात्यात्मना कार्यस्य सत्त्वे जातेर्नित्यत्वात् कार्यत्वानुपपत्तेः पुनरपि क्व कारणं प्रवर्तते ? यदि तु जातिव्यक्त्योः कथञ्चिदभेदः स्वीक्रियते, तदा जात्यात्मना कार्यत्वाभावेऽपि व्यक्त्यात्मनाभावस्य कार्यता वाच्या । तथा च व्यक्तेस्तदानीमसत्त्वात् प्रागुक्तो दोषस्तदवस्थः ।

**सति भावः' इति। प्रतीतत्वाददोष इति चेत्, प्रतीतिमात्रमस्तु किमयुक्तिकेन कार्य-कारणभावोपवर्णनेन ? तथा च सिद्धान्तयिष्यति—**

**"भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते।" इति।**

**अथ सत् कार्यं कारण इति नैते दोषाः, अत्रापि कृतस्य करणायोगादकिञ्चित्-करं कारणम्। न ह्येतद्युज्यते, कारणं चात्रोपयुज्यते, न चापूर्वं किञ्चित् प्राप्यत इति। अथाभिव्यक्तिः कारणेन कार्यस्य क्रियते, साऽपि ततोऽन्याऽनन्या वा ? अन्यत्वे सती वा स्यादसती वा ? सत्त्वे प्रागिव कारणानुपपत्तिः। अभिव्यक्त्यन्तर-करणत्वेतदेव पुनरावर्ततेऽनवस्था च। असत्त्वे प्राप्तमसतो जन्म। तथा च कार्ये को विद्वेषः ? अभिव्यक्तौ च कारणव्यापारात् कार्यस्य कार्यता न स्यात्। वस्त्वन्त-रोत्पत्तौ च किं तस्य, येनासावशङ्कितमेवोद्भवेत्। तत्संबन्धा (द्धा) भिव्यक्तिकारणादिति**

---

किञ्च, कारणे कार्यस्यासत्त्वाविशेषात्, कार्यार्थं नियतकारणपरिग्रहश्च न स्यादिति सिकताभ्योऽपि तैलं स्रवेत्। यतः कार्यं प्रतिनियतशक्तिकारणम्, अतः कार्यं प्रतिनियत-कारणपरिग्रह इति चेत्, कुतोऽवसितमेतत् ? तस्मिन् कारणे सति तस्य कार्यस्य सद्भाव-रूपादन्वयादिति चेत्, तदेवेदं पर्यनुयुज्यते—"कथमुत्पत्तेः प्रागत्यन्तासतः कार्यस्य तस्मिन् सति भावः" इति ! तस्मिन् सति भावस्य प्रतीयमानत्वान्नायं दोषः, नहि दृष्टेऽनुपपन्नं नामकिञ्चिदिति चेत्, उत्पत्तेः प्रागसतोऽपि भावस्य कारणप्रवृत्त्या भ्रान्तिरूपं प्रतीति-मात्रमस्तु, किमयुक्तिकेन कार्यकारणभावोपवर्णनेन ? तथा च सिद्धान्तं करिष्यत्यग्रे अत्रैव--'भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते' इति।

अयमर्थः—उत्पत्तेः प्रागभूतानामसतां भावानां कार्यरूपाणामात्मतत्त्वं स्वरूपं कारणप्रवृत्त्युत्तरं प्रकाशते, प्रतीयते भ्रान्त्या, न तु जायत इति। यदि उत्पत्तेः प्राक् कार्यं कारणे सदेव इति नैतेऽसत्कार्यवादे उक्तापूर्वदोषा इत्युच्यते, अत्रापि पूर्वमेव कृतस्य करणे फलाभावेन अकिञ्चित्करं कारणम्। यतो नैतद् युज्यते, कारणं चात्रोपयुज्यते, न चापूर्वं किञ्चित् प्राप्यत इति। यदि तु कारणेन कार्यस्याभिव्यक्तिः क्रियत इत्युच्यते तदाभिव्यक्तिरपि कार्यादन्याऽनन्या वेति वाच्यम्। अन्यत्वेऽपि सती वा स्यादसती वा। अभिव्यक्तेः सत्त्वे कार्यस्य सत्त्व इव कारणानुपपत्तिः, अभिव्यक्त्यन्तरस्य कारणेन करणे तु तस्य सत्त्वासत्त्वाभ्यां विकल्पे सत्त्वपक्षोक्तो दोषः पुनरावर्तते, अग्रेऽग्रेऽनुधावनेऽनवस्था च स्यात्। अभिव्यक्तेरसत्त्वे तु प्राप्तमसतो जन्म, तथा चासतः कार्यस्य जन्माऽभ्युपगमे को विद्वेषः ? किञ्चाभिव्यक्तौ कारणव्यापाराभ्युपगमे कार्यस्य कार्यता न स्यात्, अभि-व्यक्तेरेव तथा सति कार्यत्वात् ? कार्यस्य कारणात् कार्यस्यानुत्पत्तौ, ततो वस्त्वन्तरी-भूताभिव्यक्तेरुत्पत्तौ चाभ्युपगम्यमानायां किं तस्य कार्यस्य कारणेन कृतं स्यात्, येन तस्मात् कारणादशङ्कितमेव कार्यमुद्भवेत् ? तत्सम्बन्धाभिव्यक्तिकारणात्=कार्य-सम्बद्धाभिव्यक्तिकारणात्, कार्यस्य जन्माऽभ्युपगम्यते इति चेत्, कोऽयं जन्यजनकयो-रभिव्यक्तिकार्ययोः सम्बन्धः ? कार्यकारणभावरूपस्याभिव्यक्तिकार्ययोः सम्बन्धस्य

**चेत्, कोऽयं जन्यजनकयोः संबन्धः? तत्त्वेऽप्यभिव्यक्तौ तज्जन्यायां तद्विषयः कारणव्यापारो न स्यात्, कार्येणैव तस्या जननात्। तथा कार्यस्य जनने तद्विषयोऽपि कारणव्यापारो न स्यात्। तथा च तस्यासतो जननेऽसत्कार्यप्रसङ्गः। सतोऽप्यभिव्यक्तौ पुनरप्येतदावर्तते। उपकार्योपकारकभावः संबन्धोऽभिव्यक्तिकार्ययोरिति चेत्, केन कस्योपकारः? स च किं व्यतिरिक्त-, उताव्यतिरिक्तः? व्यतिरेके त (क)स्येति कः षष्ठ्यर्थः? उपकारान्तरकल्पनेऽप्येतदेव चोदनीयमनवस्था च। अव्यतिरेके तु जन्यजनकभाव एव पर्यवस्यति। तत्र चोक्तो दोषः। अनन्यत्वेऽभिव्यक्तेः कार्यात् तदेव कृतं स्यादित्यसत्कार्यनयाश्रयः। तत्र चानुपपत्तिरावेदितेति सङ्कटोऽयं पन्थाः॥ ६२॥**

**इत्थं च कार्यतानिषेधात् प्रागभावप्रध्वंसाभावावपि कृतकवस्तुविषयौ न स्त इति पूर्वोक्तमेवावस्थाभेदेन विकल्पितत्वं भावाभावयोर्निगमयति—**

---

सत्त्वेऽपि कार्यजन्यायां स्वाभिव्यक्तौ कार्यविषयकः कारणव्यापारो न स्यात्, कार्येणैवाभिव्यक्तेर्जननात्। तथा कारणेन कार्याभिव्यक्तेरजनने कार्यस्यैव जनने च तद्विषयोऽपि = कार्यविषयक इव तदभिव्यक्तिविषयकोऽपि, कारणव्यापारो न स्यात्। एवञ्चाभिव्यक्तेरजनने कारणेऽसतः कार्यस्य जनने च स्वीक्रियमाणेऽसत्कार्यवादप्रसङ्गः। असत्कार्यवादस्वीकारे च कार्यार्थिं नियतकारणपरिग्रहो न स्यात्, 'सिकताभ्योऽपि तैलं स्रवेत्' इत्यादिप्रागुक्तदूषणगणग्रासप्रसङ्गः। कारणे सतोऽपि कार्यस्य कारणेनाभिव्यक्तौ स्वीक्रियमाणायां पुनरपि एतत् = कार्यस्य कार्यता न स्यादित्यादिकं दूषणजातम्, आवर्तते = आवृत्तं भवति। अभिव्यक्तिकार्ययोरुपकार्योपकारकभावः सम्बन्ध इति चेत्, केन कस्योपकार इति वक्तव्यम्। अभिव्यक्त्या कार्यस्य, कार्येणाभिव्यक्तेर्वा उपकार इति।

किञ्च, स उपकारोऽभिव्यक्तिकार्ययोः स्वरूपाभ्यां व्यतिरिक्तः, अथवा अव्यतिरिक्तः? व्यतिरेके कस्येति कः षष्ठ्यर्थः, उपकारपदेनैव षष्ठ्यर्थस्योक्तत्वात् षष्ठ्यनुपपत्तेः। उपकारान्तरकल्पनेऽप्येष एव दोषः, अग्रेऽग्रेऽनुधावनेऽनवस्था च। ताभ्यां तस्याव्यतिरेके च जन्यजनकभाव एवाभिव्यक्तिकार्ययोः सम्बन्धः पर्यवस्यति, उपकार्योपकारकभावस्य ताभ्यामव्यतिरेकेण जन्यजनकभावस्यैव कस्येति षष्ठ्यर्थत्वात्। तत्र च दोषः पूर्वमुक्त एव। अभिव्यक्तेः कार्यादभिन्नत्वे च कार्यमेवाभिव्यक्तिरूपेण कारणेन कृतं स्यादित्यनभिप्रेतासत्कार्यवादनयाश्रयः स्यात्। असत्कार्यवादोऽपि नियतकारणपरिग्रहाभावापत्त्यादिना पूर्वं दूषित एवेत्येवं संकटोऽयं सत्यकार्यवदासमाश्रयेण असत्कार्यवादसमाश्रयेण वा कार्यकारणभाव उपपाद्य भावाभावयोः सत्यत्वोपपादनरूपः पन्था इति॥ ६२॥

एवं भावस्य प्रागुक्तरीत्या कार्यत्वनिषेधाच्च प्रागभावप्रध्वंसाभावावपि कृतकवस्तुविषयत्वात् तदभावेन स्त इति "एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ" इति कारिकया पूर्वोक्तमेव भावाभावयोरवस्थाभेदेन विकल्पितत्वं निगमयति = उपसंहरति—तस्मात् सर्वमिति।

**तस्मात् सर्वमभावो वा भावो वा सर्वमिष्यते ।**
**न त्ववस्थान्तरं किञ्चिदेकस्मात् सत्यतः स्थितम् ॥ ६३ ॥**

**कार्यकारणभावाभावान्मध्ये जातोऽभिव्यक्तो वासन् पूर्वोत्तरयोरवस्थयोरजातोऽनभिव्यक्तो विनाशकारणयोगाद्विनष्टश्च भावो नोपपद्यत इति भावाभावौ नैकस्यवास्थातुः परिणामदर्शनाश्रयेण सत्यभूतावस्थात्मकौ, अपि तु व्यवहारदशायामविद्याप्रवृत्तिरूपायां सत्यस्याभिन्नसंविन्मात्रस्य तत्त्वस्य यथार्थमनवभासात् परमार्थतः सर्वं प्रपञ्चजातमभाव एवापरमार्थ एव । स च नीरूपो न कश्चिदिति भावव्यतिरेकं न सहते । किञ्चिद्रूपं हि कुतश्चिद् व्यतिरिच्यते । भेदमात्रस्य चाभिन्नतत्त्वाग्रहणरूपस्य शून्यत्वात् । सांवृतेन तु रूपेण सर्वं भावात्मकम्, प्रथमानस्य वस्तुत्वात्, अवस्तुनः प्रथनायोगात् । भावानां हि ज्ञायमानत्वेन ज्ञानोपारूढतया सत्त्वमेव, बहिरध्यवसानाच्चापि सत्त्वम् । केवलं योऽयं भेदोऽवच्छेदो ग्रहणमसौ न किञ्चिदविद्या । तत्र च भिन्नः प्रकाशोऽनुगत इति विद्यावस्थितैव । तथा च—"विद्याविद्याप्रविभागमप्रविभागं ब्रह्म" इति ब्रह्मकाण्ड उक्तम् ॥ ६३ ॥**

**यतश्चैवं सर्वं संवृतिसत्, ततः प्रवादिनां दर्शनविकल्पास्तत्राभिमानमात्रमित्याह—**

---

अयमर्थः—तस्मात् = प्रागुक्तरीत्या कार्यकारणभावाभावात्, व्यवहारदशायामविद्याप्रवृत्तिरूपायां सत्यस्याभिन्नसंविन्मात्रस्य तत्त्वस्य यथार्थमनवभासात्, परमार्थतः सर्वं प्रपञ्चजातमभावो वा—अभाव एवापरमार्थ एवेष्यते । वा = अथवा सांवृतेन = आविद्यकेन तु रूपेण सर्वं भाव एवेष्यते, प्रतीयमानस्य वस्तुत्वात्, अवस्तुनः प्रत्ययायोगात् । एकस्मात् सत्यतः = सत्यादात्मनः पृथग्भूतं कस्यचिदवस्थातुः परिणामरूपं भावात्मकं वा वस्तु इति तु न स्थितमिति । यद्वा—एकस्मात् सत्यतः सत्यरूपादवस्थातुस्तत्परिणामभूतमवस्थान्तरं भावात्मकमभावात्मकं वा सत्यभूतं समुत्पद्य स्थितमिति तु न, कार्यकारणभावानुपपत्तेः प्राग् दर्शितत्वात् । एकस्य सत्यस्य ब्रह्मणो नित्यत्वनिरवयवत्वाभ्यामपरिणामित्वादिति ।

अयं भावः—प्रागभावप्रध्वंसरूपयोः पूर्वोत्तरयोरवस्थयोर्मध्ये जातोऽभिव्यक्तो वा सन् पदार्थः पूर्वोक्तयोरवस्थयोरजातोऽनभिव्यक्तो विनाशकारणयोगाद् विनष्टश्च भाव इति नोपपद्यते, कार्यकारणभावानुपपत्तेः प्राग् दर्शितत्वादिति भावाभावावेकस्यैवावस्थातुः सत्यस्य परिणामभूताविति दर्शनाश्रयेण सत्यभूतावस्थात्मकौ न भवतः, अपि त्वविद्याप्रवृत्तिरूपायां व्यवहारदशायां सत्यस्य स्वगतसजातीयविजातीयभेदशून्यस्य संविन्मात्रस्य तत्त्वस्य यथार्थमनवभासात् परमार्थतः सर्वं प्रपञ्चजातमभाव एवापरमार्थ एव । अभावश्च नीरूपत्वात् = निःस्वरूपत्वात्, शशशृङ्गादिवन्न कश्चित् पदार्थ इति भावव्यतिरेकम् = भावभेदम्, न सहते । किञ्चिद् रूपवद्धि वस्तु कुतश्चिद् व्यतिरिक्तत्वेन व्यवह्रियते प्रतीयते

**तस्मान्नाभावमिच्छन्ति ये लोके भाववादिनः ।**
**अभाववादिनो वापि न भावं तत्त्वलक्षणम् ॥ ६४ ॥**

**आविर्भावतिरोभावमात्रं जन्मनाशौ सत एवेति वदन्तो भाववादिनः परमर्षयः । तेषामभावो नाम भावपृथग्भूतो न कश्चित्, भावस्यैव पूर्वोत्तरयोरवस्थयोरभावव्यवहारात् । तथाहि—मृदवस्था घटस्य प्रागभावः, कपालावस्था च प्रध्वंसाभाव इति वाच्यम् । 'सर्वं शून्यमिदं जगत्' इत्यभाववादिनामप्यभावः पारमार्थिको न कश्चिदिति न भावं तत्त्वलक्षणं परमार्थरूपमिच्छन्ति । एवमपि ब्रुवन्तो व्यवहारे भावाभावभेदमर्थक्रियाकरणाकरणनिमित्तं नापह्नवते । ततश्च संवृत्या सर्वमुपपद्यते साम्येनेत्यभिनिवेशोऽत्र त्याज्यः ॥ ६४ ॥**

**अभावप्रतिक्षेपे तर्हि निर्निबन्धनो भावाभावभेद** इत्यत आह—

---

च । भेदमात्रस्य च=सर्वस्य द्वैतस्य भावात्मकस्याभावात्मकस्य च, अभिन्नब्रह्मतत्त्वाग्रहणरूपस्य शून्यत्वेन न किञ्चिद् रूपवत्ता । आविद्यकेन तु रूपेण सर्वं वस्तु भावात्मकम्, प्रतीयमानस्य वस्तुत्वात्, अवस्तुनः प्रत्ययायोगात् । भावानां हि ज्ञायमानत्वेन ज्ञानोपरागेणैव सत्त्वम्, ज्ञाने कल्पिततयाऽन्तरवस्थितानाञ्च तेषां बहिरध्यवसानाच्चापि आविद्यकं सत्त्वम् । योऽयं तु भावानां परस्परं भेदः, परस्परेणावच्छेदः, ग्रहणं वा अदो न किञ्चित्, अवस्तुत्वात्, अपि तु केवलमविद्यैव । अविद्यया केवलं प्रतीतिमात्रमेव, न सत्त्वमिति यावत् ।

तत्र च = भावेष्वपि, भावस्वरूपात् तुच्छाद् भिन्नः परमार्थो ब्रह्मरूपः प्रकाशोऽनुगत इति रीत्या भावेष्वपि विद्या ब्रह्मरूपा अवस्थितैव । तथा च—"विद्याऽविद्याप्रविभागमप्रविभागं ब्रह्म" इति ब्रह्मकाण्डे प्रथमकारिकाव्याख्यावसरे स्वोपज्ञवृत्तौ स्वयमेवोक्तं टीकाकृता हरिणा । अस्य हरिवाक्यस्यायमर्थः—वस्तुतोऽप्रविभागमपि अखण्डमेकमपि ब्रह्म विद्याऽविद्याभ्यां प्रविभागो यस्य तत्तथाभूतम् । तत्र विद्या ब्रह्मणः, स्वभावभूता, अविद्या तु तत्र स्वत एव कल्पितेत्यवधेयम् ॥ ६३ ॥

यतश्च प्रागुक्तप्रकारेण सर्वस्य आविद्यकमेव सत्त्वम् । ततः सर्वेषां प्रवादिनां तत्र दर्शनविकल्पा अभिमानमात्रम्, न तु वस्तुभूता इत्याह—तस्मान्नाभावमिति ।

अयमर्थः—तस्माद् भावाभावयोरेकस्मिन् आत्मनि कल्पितत्वेन आविद्यकत्वात्, ये लोके भाववादिनः = सर्वं भावात्मकमेवेति वादिनः, तेऽभावं भावव्यतिरिक्तं नेच्छन्ति । ये चाभाववादिनो माध्यमिकाः = सर्वं शून्यमेवेति वादिनः, ते चापि ( अत्र वा शब्दश्चार्थे ) भावं तत्त्वलक्षणम्, यथार्थस्वरूपं नेच्छन्ति ।

अत्र वादद्वये एकस्य सत्यत्वे विनिगमनाविरहाद् भावाभावोभयमपि एकस्मिन्नात्मनि कल्पितमित्येवाद्वैतिनां तदनुयायिनां वैयाकरणानामपि सिद्धान्त इति ।

**अद्वये चैव सर्वस्मिन् स्वभावादेकलक्षणे ।**
**परिकल्पेषु मर्यादा विचित्रैवोपलभ्यते ॥ ६५ ॥**

**सर्वस्मिन् परिदृश्यमानभेदजाते स्वभावात् परमार्थरूपात्, न सामान्यसमावेशवशादेकस्वभावे ब्रह्ममये विचित्रेषु विकल्पेषु भावाभाववादिनानात्वेनानादिनियतिशक्तिनियमितेयमविद्यावशाद् मर्यादा व्यवस्था नानारूपा दृश्यते । असत्यपि वास्तवे भेदेऽविद्यानिमित्तोऽयं भेदो व्यवहारे रूढ इत्यविचारितसिद्धोऽवगन्तव्य इत्यर्थः ॥ ६५ ॥**

**न तु सत्यतोऽयं भावाभावभेद इति निदर्शनेन व्युत्पादयति—**

---

अयं भावः—उत्पत्तेः प्राग् विनाशादुत्तरं च सत एव कार्यस्योत्पादकसामग्र्या आविर्भाव एव जन्म, विनाशकसामग्र्या च तिरोभावमात्रं विनाश इति वदन्तो भाववादिनः = सत्कार्यवादिनः परमर्षयः कपिलादयः । तेषां मतेऽभावो नाम न भावात् पृथग्भूतः कश्चित् पदार्थः, भावस्यैव कार्यरूपस्य पूर्वोत्तरयोरवस्थयोरभावत्वेन व्यवहारः । तथाहि—घटस्य मृद्रूपा प्रागवस्था प्रागभावः, कपालरूपा चोत्तरावस्था प्रध्वंसाभाव इति वाच्यम् । 'सर्वं शून्यमिदं जगत्' इत्यभाववादिनां मतेऽपि सर्वस्य शून्यत्वेन भाववदभावोऽपि न कश्चित् पारमार्थिक इति न अभाववद् भावमपि तत्त्वलक्षणं परमार्थरूपमिच्छन्ति ।

एवं सर्वशून्यत्वं वदन्तोऽपि व्यवहारेऽर्थक्रियाकरणतदकरणनिमित्तकं भावाभावभेदं नापलपन्ति । ततश्च संवृत्या = संव्रियते आच्छाद्यते वस्तु यया सा संवृतिरविद्या तया । सर्वं भावोऽभावो वा कल्पितत्वरूपेण साम्येनोपपद्यत इति । अत्र भावेऽभावे वा एकतरस्मिन्नेतदेव तत्त्वमित्यभिनिवेशस्त्याज्य एवेति ॥ ६४ ॥

भावस्येव अभावस्यापि प्रतिक्षेपे = निरासे, तर्हि निर्निमित्तो भावाभावभेद इत्याशङ्क्याह—अद्वये चैवेति ।

अयमर्थः—सर्वस्मिन् परिदृश्यमाने भेदव्राते परमार्थरूपे ब्रह्मणि कल्पितत्वेनाधिष्ठानरूपतया परमार्थरूपात् स्वभावाद् हेतोरेकस्मिन् अद्वये चैव = स्वगतसजातीयविजातीयभेदशून्ये चैव स्थिते सति भावाभाववादिनानात्वेन परिकल्पेषु विकल्पेषु भावेष्वभावेषु चाविद्यावशाद् विचित्र इव नानारूपा मर्यादा व्यवस्था दृश्यते, न तु वास्तवी, वस्तुभूतस्याधिष्ठानस्यैकत्वादिति ।

अयं भावः–सर्वस्मिन् परिदृश्यमाने भेदसमूहे अधिष्ठानरूपात् स्वभावात् परमार्थरूपाद् ब्रह्मणः कारणात्, न तु स्वस्मिन् जातिविशेषसमावेशवशात् । एकाद्वयस्वभावे ब्रह्ममये स्थिते सति अधिष्ठानरूपे ब्रह्मणि विचित्रेषु भावाभावरूपेषु विकल्पेषु भावाभाववादिनानात्वेन अनादिनियतिशक्तिनियमिता = नियम्यन्ते स्वाश्रयेषु धर्मविशेषा यया सा

**चतस्रो हि यथावस्था निरुपाख्ये प्रकल्पिताः ।**
**एवं द्वैविध्यमप्येतद् भावाभावव्यपाश्रयम् ।। ६६ ।।**

**प्राक्प्रध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन नीरूपस्य रूपभेदायोगाद् यथाऽभावस्य चतुर्धा भेदः काल्पनिकः, तथैव भावाभावलक्षणोऽपि भेदः काल्पनिक एवावगन्तव्य इत्यर्थः। बहिरिन्द्रियगोचरार्थक्रियोपाधिर्ब्रह्मभागः कल्पितो भावः, बहिरर्थक्रियाशून्यस्त्वभाव इति सङ्केतः ।। ६६ ।।**

**वस्तुतस्तु सर्वव्यवहारातीतौ न पृथग् भावाभावावात्मतत्त्वमुद्दर्शयत इत्याह—**

---

नियतिरदृष्टं स्वभावरूपा प्रकृतिर्वा इति काव्यप्रकाशोयमङ्गलपद्यव्याख्यावसरे प्रदीपे। तस्याः शक्तेर्नियमिता। इयमविद्यावशान्मर्यादा व्यवस्था विचित्रैव = नानारूपैव दृश्यते।

अद्वयस्याधिष्ठानस्यैव सत्यस्य—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतिसिद्धत्वादसत्यपि वास्तवे भेदेऽविद्याहेतुकोऽयं भेदो लोकव्यवहारे रूढिमागत इति देहात्मवादादिवदविचारितसिद्धोऽवगन्तव्य इति हृदयमिति ।। ६५ ।।

विचारे तु न सत्योऽयं भावाभावभेद इति निदर्शनेन = दृष्टान्तेन व्युत्पादयति— चतस्रो हीति।

अयमर्थः—यथा हि—अत्र 'हि' शब्दः प्रसिद्धौ, निरुपाख्ये = उपाख्यायते नानाविधान् धर्मान् पुरस्कृत्याभिधीयते शब्दैरिति उपाख्या, अभिधेयस्य स्वरूपम्, तद्रहिते नीरूपेऽभावे प्राक्प्रध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन चतस्रोऽवस्था भेदरूपाः प्रकल्पिताः। एवं भावाभावव्यपाश्रयम् = भावाभावहेतुकम्, एतद् द्वैविध्यमप्यत्र निरुपाख्येऽपि प्रकल्पितमिति।

अयं भावः—निःस्वरूपस्याभावस्य वस्तुतो रूपभेदासंभवेऽपि प्राक्प्रध्वंसात्यन्तेतरेतररूपोपाधिवशेन यथा तस्य चतुर्धा रूपभेदः काल्पनिकः, तथा भावाभावलक्षणोऽपि भेदोऽविद्यया उपाधिकल्पित एवावबोद्धव्यः। एवञ्च इन्द्रियगोचरीभूतबहिरर्थक्रियोपाधिको ब्रह्मभागोऽविद्याकल्पितो भावः, बहिरर्थक्रियाशून्यत्वोपाधिकस्त्वभाव इति संकेतितोऽयमर्थोऽस्यां कारिकायामिति ।। ६६ ।।

वस्तुतस्तु यतो भावाभावौ सर्वव्यवहारातीतौ, अतो न पृथगात्मतत्त्वमुपदर्शयत इति वक्तुमभावस्यैव व्यवहारेऽनुपपद्यमानतां तावदाह—अविरोधीति।

अयमर्थः—अभावो भावस्याविरोधी विरोधी वा युक्तितो नोपपद्यते, अभावस्य निःस्वरूपत्वेन भावविरोधाविरोधयोर्द्वयोरपि धर्मयोस्तत्रासंभवात्।

अभावः स्वरूपतः सन्नसन् वापि युक्तितो नोपपद्यते। तथा हि सत्त्वमभावस्य स्वरूपविरुद्धत्वान्नोपपद्यते। असत्त्वमप्यभावस्य भावस्य सत्त्वमिव स्वस्मात् पृथग्भूतो धर्मो नोपपद्यते, अभावस्य निःस्वरूपत्वेन सर्वधर्मानाश्रयत्वात्। असत्त्वरूपधर्माश्रयत्वस्वीकारे

**अविरोधी विरोधी वा सन्नसन् वापि युक्तितः ।**
**क्रमवानक्रमो वापि नाभाव उपपद्यते ॥ ६७ ॥**

**नीरूपत्वादभावस्य भावेन सह विरोधाविरोधौ युक्त्या न सङ्गच्छेते। न हि भावमभावः समुच्छिनत्ति, अनुगृह्णाति वा, येन तद्विरोधी अविरोधी वा यथासंख्यं भवेत्, सतोऽसत्त्वायोगाल्लब्धरूपस्यातिशयायोगाच्च । सत्त्वमभावस्यात्मविरुद्धम्, असत्त्वमप्यस्य तद्रूपत्वादेव व्यतिरिक्तं भाववन्नोपपद्यते। एवं हि भावताप्रसङ्गः क्रमोऽपि भावधर्मो नाभावस्य युज्यते। भावस्योच्छेत्तुमशक्यत्वाद् हि तदपेक्षो भावस्य क्रमः, नाप्यभावान्तरापेक्षः, तस्यैवासिद्धत्वात्, नीरूपस्य भेदाभावात्। एवमक्रमोऽपि यौगपद्यमर्थान्तरापेक्षत्वादस्य नास्ति, अन्येन सहासमानकालत्वादिति युक्तितो नोपपद्यते ॥ ६७ ॥**

**अभावो नामैवंधर्मो (र्मा) यत एवम्—**

---

च अभावस्य भावताप्रसङ्गात्। एवं क्रमवानक्रमो वापि युक्तितो नाभाव उपपद्यते। तथाहि—क्रमो नाम सावयवस्य भावस्य धर्मो निरवयवेऽभावे नोपपद्यते। एवं यौगपद्यरूपोऽक्रमोऽपि अर्थान्तरापेक्षत्वेन भावधर्मोऽभावे नोपपद्यते। अभावस्यान्येन सहासमानकालत्वेनार्थान्तरानपेक्षत्वादित्येवं युक्तितोऽनुपपत्तिर्द्रष्टव्येति।

अयं भावः—अभावस्य निःस्वरूपत्वाद् भावेन सह तस्य विरोधाविरोधौ युक्त्या न संगच्छेते।

तथाहि—यतोऽभावो न भावं समुच्छिनत्ति, येन भावस्य विरोधी स्यात्, न वा भावमनुगृह्णाति अभावः, येन भावस्याविरोधी स्यात्। अभावस्य निःस्वरूपत्वेन भावसमुच्छेदकत्वभावानुग्राहकत्वरूपयोर्भावधर्मयोस्तत्रासंभवात्। सतो भावस्य समुच्छेदरूपा सत्त्वायोगात्, कारणसामग्र्या लब्धरूपस्य च भावस्यातिशयरूपानुग्रहायोगाच्च। असत्त्वमपि अभावादतिरिक्तमभावस्य धर्मो भावस्य सत्त्वमिव अभावस्यासद्रूपत्वादेव नोपपद्यते। एवं हि=अभावस्यासत्वाधर्माश्रयत्वाभ्युपगमे हि अभावस्यापि भावताप्रसङ्गः। क्रमोऽपि हि सावयवस्य भावस्य धर्मः, न निरवयवस्य अभावस्य धर्म इति युज्यते वक्तुम्। कार्यविनाशकत्वेनाभिमतसामग्र्या भावस्य सत्स्वभावस्य समुच्छेत्तुमशक्यत्वाद् हि तिरोभावानन्तरमपि कारणे सत्त्वं वाच्यम्, तदपेक्षश्च कारणसामग्रीमासाद्याविर्भूयमानस्य भावस्य क्रमो भावधर्म एव अतो नैषोऽभावे संभवति, नाप्यभावान्तरापेक्षोऽभावस्य क्रमः अभावान्तरस्यैवाद्याप्यसिद्धत्वात्। भेदस्य प्रतियोगिसापेक्षत्वेन निःस्वरूपस्य अभावस्य अभावान्तराद् भेदासंभवात्। एवं यौगपद्यरूपोऽक्रमोऽपि अभावस्य नास्ति, यौगपद्यं हि द्वयोः पदार्थयोरेकस्मिन् काले उत्पत्तिः, स्थितिर्ज्ञप्तिर्वा, तच्चापि अर्थान्तरापेक्षत्वादभावस्य नास्ति, अन्येन च भावेनाभावेन वा सहाभावस्य समानकालत्वनियमा-

अविरोधी विरोधो वा सन्नसन्नपि तत्त्वतः ।
क्रमवानक्रमो वापि तेन भावो न विद्यते ॥ ६८ ॥

यतोऽभावस्येत्थमनुपपद्यमानता, तेन भावोऽप्येवं परमार्थतो नोपपद्यते। तथाहि—भावस्यानुच्छेद्यत्वान्निरतिशयत्वाच्चाभावेन सह विरोधिता अविरोधिता च न युक्ता। अथ भावान्तरेण सह भावस्य विरोधित्वादिति (विरोधाविरोधाविति) चिन्त्यते, तत्रापि स्वतोऽनुच्छेद्यस्य निरतिशयस्य च केनचिदुच्छेत्तुमनुग्रहीतुं वाऽशक्तेस्तदनुपपत्तिरेव। एवं क्रमाक्रमावपि भेदाभावान्न पारमार्थिकौ। सत्त्वमपि नियतार्थक्रियानिमित्तमर्थक्रियान्तराकरणान्न तत्त्वतो व्यवतिष्ठते। सत्तासंबन्धस्य चानुपलब्धेर्नतन्निमित्तम्, प्रतिभासनाच्चासत्त्वमप्यपारमार्थिकम्। इत्थं सर्वव्यवहारा विकल्पपरिघटिता एवेति भावाभावावपि तथा विज्ञेयौ। कल्पना चाविद्याशक्तिः, सा च तत्त्वान्यत्वाभ्यामनिर्वाच्येति ब्रह्मकाण्डे निर्णीतम् ॥ ६८ ॥

कालनिमित्तोऽप्यत्र भेदो न पारमार्थिक इत्याह—

---

भावाच्चार्थान्तरापेक्षाऽभावस्य नास्ति, तदभावाच्च तस्य यौगपद्यमपि (तस्य) नास्तीति रीत्याऽभावस्य भावेन सह विरोधोऽविरोधो वा, स्वरूपतः सत्त्वमसत्त्वं वा क्रमोऽक्रमो वा युक्तितो नोपपद्यत इति ॥ ६७ ॥

यतोऽभावो नाम एवंधर्मा = विरोधाविरोधाद्यनुपपत्तिधर्मा। एवं भावोऽपि एवंधर्मा = विरोधाविरोधाद्यनुपपत्तिधर्मा इत्याह—अविरोधोति।

अयमर्थः—यतोऽभावस्येत्थं विरोधादेरनुपपत्त्या अनुपपद्यमानता, तेन भावोऽपि अभावेन सह तावतो विरोधाविरोधादिधर्मा नोपपद्यते। यतो भाव एवंधर्मा, अतो भावोऽपि तत्त्वतः परमार्थतोऽविरोधी विरोधी वा, स्वरूपतः सन्नसन्नपि वा, क्रमवानक्रमो वापि न विद्यते इत्यक्षरयोजना।

अयं भावः—यतोऽभावस्य विरोधाविरोधादेरित्थमनुपपद्यमानता, तेन भावोऽपि एवम् = विरोधाविरोधादिधर्मा परमार्थतो नोपपद्यते। तथाहि—भावस्यानुच्छेद्यत्वान्नाभावेन सह विरोधः, अतिशयरूपानुग्रहशून्यत्वाच्च न तस्य तेन सहाविरोधोऽपि।

यदि तु भावान्तरेण सह भावस्य बिरोधाविरोधाविति चिन्त्यते, तस्यामपि चिन्तायां स्वतोऽनुच्छेद्यस्य निरतिशयस्य च भावस्य केनचिदुच्छेत्तुमनुग्रहीतुं वाऽसामर्थ्याद् विरोधाविरोधयोरनुपपत्तिरेव। एवं क्रमाक्रमावपि भेदाभावान्न पारमार्थिकौ। तथाहि—भेदे सत्येव पदार्थद्वयस्य पौर्वापर्यरूपः क्रमः, तथाभेदे सत्येव पदार्थद्वयस्य यौगपद्यरूपोऽक्रमोऽपि संभवति, नान्यथा। तथा च भेदस्य वस्तुभूतस्याद्वैतश्रुत्या प्रतिषेधाद् भावस्य क्रमाक्रमौ न पारमार्थिकौ, किन्तु कल्पितौ। भावस्य सत्त्वमपि प्रतिनियतार्थक्रियानिमित्तकमित्येकस्या अर्थक्रियाया करणेऽप्यन्यस्या अर्थक्रियाया अकरणात्, न

**अभावे त्रिषु कालेषु न भेदस्यास्ति सम्भवः ।**
**तस्मिन्नसति भावेऽपि त्रैकाल्यं नावतिष्ठते । ६९ ॥**

त्रिषु कालेषु इति। **कालत्रयनिमित्तको भेदोऽभावविषयो नास्ति। तथाहि नीरूपत्वादभावस्य वर्तमानकृतस्तावत् परिच्छेदो नास्ति। तदभावात् तदपेक्षोऽतीतानागतकालयोगोऽपि न भाविकः। एवं च भावस्याप्यभावापेक्षं त्रैकाल्यं नास्ति तथाहि—प्रागभावाश्रयं भविष्यत्त्वम्, प्रध्वंसापेक्षं च भूतत्वमिति प्रागभावप्रध्वंसयोर्भेदाभावादयुक्तं तत्। तदभावाद्वर्तमानत्वमपि नास्ति। नापि स्वापेक्षं पूर्वापरकोट्योरभावात्, भावस्य कालत्रययुक्तत्वम्, भावे तु सांख्यानां पूर्वापरकोट्योर्भावस्यैकत्वमेवाभिन्नरसमिति पुनरपि कालत्रयायोगः। अवस्थास्ततो न व्यतिरिच्यन्त इति तासामपि तदभावः। व्यतिरेकेऽपि वा तद्वतः कालभेदो न भावस्य शक्यते कल्पयितुमित्यसत्यो भेदः ॥ ६९ ॥**

**भवतीति भावो न भावोऽभाव इति लक्षणमनयोर्नोपपद्यत इत्याह—**

---

तत्त्वतः सामान्येन व्यवतिष्ठत इति। सामान्येन प्रतीयमानं भावस्य सत्त्वं न पारमार्थिकम्।

किञ्च, सद्रूपेण ब्रह्मणः सर्वानुगतेन सामान्येन सन्निति प्रतीत्युपपत्त्या भावस्य तथा प्रतीत्या सद्रूपत्वेऽपि सत्तासम्बन्धस्य च तत्रानुपपद्यमानस्यालब्धेर्न सत्तासम्बन्धनिमित्तकमपि भावानां सत्त्वम्, भावानां प्रतिभासनाच्च तेषामसत्त्वमप्यपारमार्थिकम्। असतः शशशृङ्गादेरप्रतिभासनात्। इत्थं सर्वव्यवहाराः।

अयं भावः—अनेन भावेनाभावेन वा सह विरोधी अविरोधी वा, सन्नसन्वा, क्रमवानक्रमो वा इत्येवंरूपाः सर्वे व्यवहाराः, विकल्पपरिघटिताः = अविद्यया तत्तद्विशेषधर्मपुरस्कारेण कल्पिता एवेति रीत्या तद्विषयौ भावाभाववपि तथा = अविद्यया विकल्पितावेव विज्ञेयौ। कल्पना चाविद्यारूपा आत्मनः शक्तिः। सा चात्मनः शक्तिरूपा अविद्या आत्मनस्तत्त्वान्यत्वाभ्याम् = भेदाभेदाभ्यामनिर्वाच्येति ब्रह्मकाण्डे निरूपितमिति ॥ ६८ ॥

भावे विरोधाविरोधादिरिव कालकृतोऽपि परिच्छेदो भूतो भविष्यन् वर्तमान इति न पारमार्थिक इत्याह—अभावे त्रिष्विति।

अथमर्थः—त्रिषु कालेषु विद्यमानेऽभावे यो भेदः कालत्रयकृतः परिच्छेदस्तस्य संभवो नास्ति। तथाहि—अभावस्य निःस्वरूपत्वाद् वर्तमानकालकृतपरिच्छेदाभावे वर्तमानत्वापेक्षयोर्भूतत्वभविष्यत्वयोरपि अभाव इति। तस्मिन्नसति अभावे-कालत्रयकृतपरिच्छेदाभावे, तद्वद्भावेऽपि त्रैकाल्यम् = कालत्रयपरिच्छिन्नत्वं नावतिष्ठते। तथाहि—प्रागभावापेक्षं भावस्य भविष्यत्त्वं प्रध्वंसापेक्षं च तस्य भूतत्वमिति प्रागुक्तरीत्या

**आत्मतत्त्वपरित्यागः परतो नोपपद्यते ।**
**आत्मतत्त्वं तु परतः स्वतो वा नोपकल्पते ॥ ७० ॥**

**कारणाद् भावस्य सतो विनाशो नोपपद्यते। नीरूपस्य कारणसामर्थ्येन जन्यमानतायां नाशस्य रूपवत्त्वप्राप्तेर्भावेन सम्बन्धे प्रागिव तस्योपलब्धिः स्यात्। तेन तस्य विनाशे तत्रापि तथैवेत्यनवस्थापातात् भवनस्वभावस्याभवनविरोधाच्च स्वतोऽपि विनाशाभाव इत्यभावशब्दार्थो न कश्चिदवतिष्ठते। भवनमपि भावसद्भावपरिनिष्ठितस्य कारणान्नोपपद्यते। स्वतोऽपि भवतो भवनायोगः, अभवनशीलस्य भावता विरुद्धेति भावशब्दार्थोऽपि न कश्चित् ॥ ७० ॥**

**न चैवमपि भावाभावावेकं तत्त्वत इत्याह—**

---

निःस्वरूपत्वेन तयोरभावयोस्त्रैकाल्याभावे एतद्भावद्वयापेक्षे = भावस्य वर्तमानत्वेऽपि त्रैकाल्यं नावतिष्ठते इति।

अयं भावः =कालत्रयप्रयुक्तोऽभावविषयकः परिच्छेदो नास्ति। तथाहि–अभावस्य निःस्वरूपत्वाद् वर्तमानकालकृतस्तावत् परिच्छेदो नास्ति वस्तुभूतः। तदभावाच्च वर्तमानकालापेक्षो भूतभविष्यत्कालयोगोऽपि भावस्य न भाविकः=स्वाभाविकः। एवञ्च =प्रागुक्तरीत्या अभावे त्रैकाल्याभावे च, भावस्याप्यभावापेक्षं त्रैकाल्यं नास्ति। तथाहि-प्रागभावापेक्षं भविष्यत्त्वम्, प्रध्वंसप्रयुक्तञ्च भूतत्वमिति प्रागभावप्रध्वंसयोरभावत्वे-नैक्यात् तयोर्भेदाभावादयुक्तं तत् = भूतत्वं भविष्यत्त्वञ्च। भूतत्वभविष्यत्त्वयोरभावाद् वर्तमानत्वमपि तदपेक्षं नास्ति। नापि भावस्य कालत्रययुक्तत्वं स्वापेक्षम्, स्वस्मिन् एकत्वेन पूर्वापरकोट्योरभावात्। सांख्यानान्तु भावस्य आविर्भावात् पूर्वापरकोट्योरे-कत्वमेवाभिन्नरसमिति भावे पुनरपि कालत्रयायोगः। भावस्यावस्था अपि नवत्वपुराण-त्वादिकास्ततो न व्यतिरिच्यन्ते इति भाववत्तासामपि कालत्रययोगाभावः! अवस्थानां भावाद् भेदेऽपि वा—अवस्थावतः कालभेदो न भावस्य केवलस्य शक्यः कल्पयितुमित्येवं भावस्य कालत्रयपरिच्छेदोऽसत्य इति ॥ ६९ ॥

भवति उत्पद्यते इति भावः। भूधातोः कर्त्तरि बाहुलकाद् घञ्। न भावीऽभाव इति व्युत्पत्तिनिमित्तमनयोः = भावाभावयोः, प्रवृत्तिनिमित्तमपि नोपपद्यते। अन्यद् हि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तमित्यस्यापि योगातिरिक्तस्थले दृष्टत्वेन व्युत्पत्तिनिमित्तप्रवृत्तिनिमित्तयोरविनाभावादिति प्रसाधयन्नाह–आत्मतत्त्वपरित्याग इति।

अयमर्थः—सतो भावस्य परतः—विनाशकसामग्र्या आत्मतत्त्वपरित्यागः = स्वरूपविनाशः, नोपपद्यते, स्वभावस्य त्यक्तुमशक्यत्वात्। तदुक्तं गीतायाम्—'नाभावो विद्यते सतः' इति। तथा च, न भावो अभाव इति व्युत्पत्तिः पराहृता। आत्मतत्त्वन्तु उत्पत्तेः प्रागसद्रूपम्, आत्मतत्त्वमपि परतः—कारणसामग्र्या, स्वतो वा नोपकल्प्यते

**तत्त्वे विरोधो नानात्व उपकारो न कश्चन ।**
**तत्त्वान्यत्वपरित्यागे व्यवहारो निवर्तते ॥ ७१ ॥**

**विधिप्रतिषेधयोरेकत्वं विरुद्धम्, नानात्वे तु भावाभावयोः परस्परापेक्षया निरुपकारिणोर्व्यवहारो न स्यात्, तदतद्व्यतिरेकेण विकल्पासंभवो राश्यन्तराभावादिति सर्वव्यवहारातीतं भावाभावादिरूपतया प्रतिभासमानं जगत् सांवृतेन रूपेणाविचारितसिद्धमिति स्थितम् ॥ ७१ ॥**

**परमार्थस्त्वयमत्रेत्याह—**

---

नोत्पद्यते, असतः कयापि युक्त्या सद्रूपत्वापादनायोगात् । एतदप्युक्तं तत्रैव पद्ये गीतायाम् 'नासतो विद्यते भावः' इति । अनेन 'भवतीति भावः' इति व्युत्पत्तिर्निराकृता इति ।

अयं भावः—सद्रूपस्य भावस्य विनाशकारणाद् विनाशो नोपपद्यते । निःस्वरूपस्याभावरूपस्य विनाशस्य स्वकारणसामर्थ्येन जन्यत्वाभ्युपगमे यद् यद् जन्यं तत्तद्रूपवदिति व्याप्त्या विनाशस्य साकारत्वप्राप्तेराकाररूपेण भावेन विनाशस्य सम्बन्धे प्रागिव = प्रतियोगिसत्त्वदशायामिव तस्य = आकारवतो विनाशस्य उपलब्धिः स्यात् । तेन = स्वकारणसामर्थ्येन, तस्य आकारवतो विनाशस्य विनाशे तत्रापि तथैव = जन्यत्वेन रूपवत्त्वप्राप्त्याभावेन सम्बन्धे प्रागिव तस्योपलब्धिः स्यादित्येवं रीत्या अग्रे अग्रे अनुधावने अनवस्था स्यात् ।

किञ्च, भवनस्वभावस्य भावस्य अभवनविरोधान्न स्वतोऽपि विनाशाभाव इति रीत्या अभावशब्दार्थो न कश्चिदवतिष्ठते । भावसद्भावपरिनिष्ठितस्य = भावस्य यः स्वभावेन सर्वदा सद्भावः तेन रूपेण परिनिष्ठितस्य = सर्वदा पर्यवसितस्य, स्वकारणाद् भवनमपि = जन्मापि, नोपपद्यते उत्पत्तेः प्रागपि तस्य सत्त्वात् । किञ्च, भावस्वभावात् स्वतोऽपि भवतो भवनं न संभवति, तस्य सिद्धत्वात् । प्रागभवनशीलत्वे च तस्य जन्माऽभ्युपगमे भावत्वं विरुद्धमिति रीत्या भावशब्दार्थोऽपि न कश्चिदिति ॥ ७० ॥

भावाभावयोः पृथक् पृथक् स्वरूपस्य प्रागुक्तरीत्या विकल्पितत्वेनापारमार्थिकत्वेऽपि भावाभावयोरेकं तत्त्वमित्यपि न संभवतीत्याह—तत्त्वे विरोध इति ।

अयमर्थः—भावाभावयोस्तत्त्वे स्वरूपत एकत्वे विरोधः स्यात् तयोर्नानात्वे तु तयोः परस्परापेक्षाशून्यत्वेन परस्परं कश्चनोपकारो न स्यात् । तदभावे च व्यवहारो न स्यात् । तत्त्वान्यत्वपरित्यागे तु = भावाभावयोरेकत्वनानात्वयोः परित्यागे तु राश्यन्तराभावेन व्यवहारोऽनयोर्निवर्तत इति ।

अयं भावः—भावाभावयोर्विधिप्रतिषेधरूपयोरेकत्वं विरुद्धम् । भावाभावयोर्नानात्वे तु परस्परविरुद्धत्वेन परस्परं निरुपकारिणोः परस्परापेक्षया व्यवहारो न स्यात्, दृश्यते च तयोः परस्परापेक्षया व्यवहारः, तयोः परस्परनिरूपकत्वात् । तदतद्व्यतिरे-

यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥ ७२ ॥

ग्राह्यग्राहकादिप्रपञ्चस्य विकल्पपरिघटितस्यासत्यत्वात् सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीततत्त्वमविकल्पं परं ब्रह्मानादिनिधनं सत्यमिति ब्रह्मविदः प्राहुः। ऋग्यजुःसामात्मको वेदस्त्रयी, तस्या अन्तःसारभूतार्थनिर्णयमय उपनिषद्भागः। तत्र हि समाप्तौ संक्षिप्य शास्त्रार्थसतत्त्वमाख्यायते, तं जानते तच्छीला ये त एवमभेदं परमार्थरूपमाहुः, न कर्मानुष्ठानाक्षिप्तं भेदम्। अविद्यापरिकल्पितो हि भेदो वितथो वैकल्पिकः। अविद्यापि च तत्त्वान्यत्वाभ्यां परस्मादनिर्वाच्यानादिसिद्धजीवात्मगतभेदप्रतिभासकारिणीत्युपपादितं ब्रह्मकाण्डे विस्तरत इति तत एवावधार्यम् ॥ ७२ ॥

तदेवं यथावभासमसत्यार्थनिष्ठः शाब्दो व्यवहार इत्यलब्धाभिन्नतत्त्वविश्रान्तिभेदेष्वत्रोपप्लवत इत्याह—

---

केण = एकत्वनानात्वव्यतिरेकेण, विकल्पासंभवो राश्यन्तराभावादिति। वस्तुतः सर्वव्यवहारातीतं भावाभावादिरूपतया प्रतिभासमानं जगत् सांवृतेन = आविद्यकेन रूपेण अविचारितसिद्धम्, सत्त्वासत्त्वाभ्यां विचारासहत्वेन सिद्धमिति स्थितमिति ॥ ७१ ॥

तदेवं सर्वस्य भेदस्य अविद्यया विकल्पितत्वे सिद्धे परमार्थस्त्वयमत्रेत्याह—यत्र द्रष्टा चेति।

अयमर्थः—यत्र द्रष्टा च = अन्तःकरणावच्छिन्नं चैतन्यम्, अस्यापि अविद्याकार्यान्तः करणोपहितत्वेन अविद्यया विकल्पितत्वं ज्ञेयम्। दृश्यम् = कृत्स्नो भेदप्रपञ्चः। दर्शनम् = अन्तःकरणस्य परिणामविशेषो वृत्तिरूपः। अत्र वाशब्दश्चार्थे। एतत्त्रितयं यस्मिन् अधिष्ठानभूते एकस्मिन् अद्वये ब्रह्मतत्त्वे विकल्पितम् = अविद्यया कल्पितम्, तस्यैवार्थस्यानुपहितब्रह्मरूपस्य शुद्धस्य केवलस्य सत्यत्वम्, त्रय्यन्तवेदिनः = वेदान्तविद्याविद औपनिषदाः, श्रिता = आस्थिता इत्यक्षरयोजना।

अयं भावः—ग्राह्यग्राहकग्रहीत्रादिप्रपञ्चस्य विकल्पपरिघटितस्य = विकल्पविनिर्मितस्य विकल्पगोचरस्य, तत एवासत्यत्वात् तदधिष्ठानभूतं सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीततत्त्वमविकल्पम् = विकल्पाविषयीभूतम्, परं ब्रह्मानादिनिधनं सत्यमिति ब्रह्मविदः प्राहुः। ऋग्यजुःसामात्मको वेदभागस्त्रयी, तस्या अन्तः पूर्वकाण्डसारभूतार्थनिर्णयमय उपनिषद्भागः। तत्र हि समाप्तौ = उपसंहारे, संक्षिप्य शास्त्रार्थसतत्त्वम् = सर्वस्य वेदशास्त्रस्यार्थसतत्त्वम्, अर्थस्य परमार्थरूपम्, आख्यायते। तं जानते तच्छीला ये त एवम् = प्रागुक्तरीत्या भावाभावयोर्विकल्पगोचरत्वप्रयुक्ता यथार्थशाब्दव्यवहारगोचरतया भेदासत्यत्वोपपादनप्रकारेण, अभेदं परमार्थरूपमाहुः, न कर्मानुष्ठानाक्षिप्तं भेदं

**सामान्यं वा विशेषं वा यस्मादाहुर्विशेषवत् ।**
**शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः ॥ ७३ ॥**

**सामान्यमपि सामान्यान्तराद् व्यावृत्तं शब्दैरुच्यते । तथा विशेषो विशेषान्तराद् व्यावृत्त इत्यसत्येषु भेदेष्वेव शब्दाः कृतपदबन्धा नाभिन्नमद्वयं तत्त्वं संस्प्रष्टुं शक्ता इति वितथ एव शाब्दो व्यवहारः । सन्नित्यपि व्यवहारोऽभावप्रतियोगी । एवं ज्ञेयं प्रमेयमित्यादयोऽपि शब्दाः परिकल्पिताज्ञेयादिव्यावृत्तविषया इति सर्वं भेदोपनिपाति शब्दजातम् । तदुक्तं भाष्ये—"सामान्यमपि यथा विशेषस्तद्वत्" इति ।**

**विशेषवदित्यर्हार्थे वतिः । विशेषमर्हति यदभिधानं तद्विशेषवत्, विशेषो वा यत्रास्तीति मत्वर्थीयः । सामान्योपहितस्य विशेषस्याभिधानं संभाव्येतेति तन्निवृत्तये विशेषणमेतदिति विशेषेणापि संबध्यते ॥ ७३ ॥**

**एवं तावन्नीरूपमवस्त्वभावमाश्रित्य भावाभावयोर्विरोधाद्युक्तम् । इदानीं वैशेषिकनयेन सप्तमं पदार्थमभावमाश्रित्याह—**

---

परमार्थमाहुः । अविद्यापरिकल्पितत्वाद् हि भेदो वितथो वैकल्पिकः = विकल्पगोचरः । अविद्याऽपि च परस्माद् ब्रह्मणस्तत्त्वान्यत्वाभ्याम् = भेदाभेदाभ्याम्, अनिर्वाच्यानादिसिद्धजीवात्मगतभेदप्रतिभासकारिणीत्युपपादितं ब्रह्मकाण्डे आदावेव विस्तरत इति तत एवावधार्यमिति ॥ ७२ ॥

तस्मात् प्रागुक्तप्रकारेण कृत्स्नस्य द्वैतप्रपञ्चस्य विकल्पगोचरतया तत्प्रयुक्तः सर्वोऽपि शाब्दो व्यवहारोऽसत्यार्थनिष्ठ इति येन पुंसा अभिन्नात्मसाक्षात्काराभावेन अद्वैतब्रह्मतत्त्वे सर्वद्वैतप्रपञ्चोपशमरूपा विश्रान्तिर्न लब्धा, सोऽत्र जगति भेदेष्वेव विकल्परूपं तत्प्रयुक्तायथार्थव्यवहाररूपञ्चोपप्लवम् = उपसर्गम्, उपद्रवमासादयतीत्याह—सामान्यं वेति ।

अयमर्थः—सर्वे शब्दा विशेष्यविशेषणभावापन्नत्वेन व्यावृत्तार्थगोचरा इति नाभिन्नमव्यावृत्तमात्मतत्त्वं संस्प्रष्टुं क्षमा इति सर्वोऽपि शाब्दो व्यवहारोऽसत्यार्थनिष्ठ एव । तदेतद्दर्शयति—यस्मात् सर्वे शब्दाः सामान्यं वा सामान्यान्तराद् व्यावृत्तम्, विशेषं वा विशेषान्तराद् व्यावृत्तं विशेषवदेव = विशेषणवदेव, व्यावर्तकधर्मवदेव आहुः । तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः, न त्वभिन्नेऽव्यावृत्ते आत्मतत्त्वे इति ।

अयं भावः—सामान्यमपि = साधारणधर्मोऽपि, सामान्यान्तरात् = साधारणधर्मान्तरात्, व्यावृत्तमेव शब्दैरुच्यते । विशेषोऽपि, = असाधारणधर्मोऽपि, विशेषान्तरात् = असाधारणधर्मान्तराद् व्यावृत्त एवाभिधीयते शब्दैरित्यसत्येषु भेदेष्वेव शब्दाः कृतपदबन्धाः = स्थिरा इति नाभिन्नमद्वयं ब्रह्मतत्त्वं गोचरीकर्तुं शक्ता इति ब्रह्मेतरविषयकत्वाद् वितथ एव सर्वोऽपि शाब्दो व्यवहारः । सन्नित्यपि व्यवहारोऽभावप्रतियोगी = अभाव-

**न ह्यभावस्य सद्भावे भावस्यात्मा प्रहीयते ।**
**न चाभावस्य नास्तित्वे भावस्यात्मा प्रसूयते ।। ७४ ।।**

**भावादर्थान्तरमभाव इति प्रध्वंसस्योपजने किमिति भावो विनश्यति; प्रागभावस्य च व्यावृत्तौ किमिति भावो जायते ।। ७४ ।।**

**एतदेव दृष्टान्तेन द्रढयति--**

---

प्रतियोगिभावविषयकः, तेन व्यावृत्तार्थविषयकतया वितथ एव । एवं ज्ञेयं प्रमेयमित्यादयोऽपि शब्दाः परिकल्पिता ज्ञेयाः, प्रमेयादिव्यावृत्तविषया इति सर्वं भेदोपनिपाति = भेदाभिधायकं शब्दजातम् । तदुक्तं भाष्ये—"सामान्यमपि यथाविशेषस्तद्वत्" इति ।

यथाविशेषो विशेषवान् तद्वत् सामान्यमपि विशेषवदित्यर्थः । अत्र विशेषा घटादयो धर्मिणः, सामान्यं तु तेषां साधारणो धर्मो घटत्वादिरूपः । प्रकृतकारिकायाम्—विशेषवदित्यत्र विशेषं धर्ममर्हति इति "तदर्हति" इति सूत्रेण अर्हार्थे वतिः । विशेषमर्हति यदभिधानं तद्विशेषवदिति वचनक्रियाविशेषणम् । विशेषो वा यत्रास्ति सामान्ये, विशेषे वा तद्विशेषवदिति मत्वर्थीयो वा वतिः । विशेषवदिति विशेषणस्य सामान्यं वा इत्येनेनैव केवलेन सम्बन्धे सामान्योपहितस्य विशेषस्याभिधानं सम्भाव्येतेति तन्निवृत्तये विशेषवदिति विशेषणं विशेषमित्यनेनापि सम्बध्यत इति ।। ७३ ।।

एवं तावन्निःस्वरूपत्वाद् वस्तु = तुच्छम्, अभावमाश्रित्य भावाभावयोर्विरोधाविरोधादिकमुक्तम् ।

इदानीं वैशेषिकमतेन अभावं सप्तमं पदार्थमाश्रित्य भावाभावयोर्विरोधव्यवहारस्य अनुपपन्नतामाह—न ह्यभावस्येति ।

अयमर्थः—अभावस्य सद्भावे सत्त्वे, भावस्यात्मा = स्वरूपम्, न हि प्रहीयते, प्रहीणं विनष्टं भवति, अर्थान्तरत्वात् सम्बन्धानुपपत्त्या विरोधानुपपत्तेः । अभावस्य नास्तित्वे असत्त्वे च भावस्यात्मा न च प्रसूयते = प्रसूतमुत्पन्नं भवति । अत्रापि पूर्वोक्त एव हेतुरिति ।

अयं भावः—भावादर्थान्तरमभावो वैजात्यादिति पृथग्भूतयोस्तयोः सम्बन्धाभावे विरोधाभावादिति भावप्रध्वंसस्योपजने = उत्पत्त्यासत्त्वे कस्मात् कारणाद् भावो विनश्यति; भावप्रागभावस्य च व्यावृत्तौ = निवृत्तौ सत्यां भावो जायत इत्यत्र किं कारणमिति ।। ७४ ।।

पूर्वकारिकोक्तमर्थं दृष्टान्तेन द्रढयति—न शाबलेयस्येति ।

अयमर्थः—शाबलेयस्य = शबला चित्रा गौस्तदपत्यं शाबलेयः तस्य अस्तित्वं सत्त्वम्, बाहुलेयस्य = बहुला बहुदुग्धप्रदा गौस्तदपत्यं बाहुलेयः, तस्य बाधकं न भवति । तयोः पृथग्भूतयोः परस्परमसम्बन्धेनाविरोधित्वात् । किञ्च, शाबलेयो नास्ति—शाबलेय-

**न शाबलेयस्यास्तित्वं बाहुलेयस्य बाधकम् ।**
**न शाबलेयो नास्तीति बाहुलेयः प्रकल्पते ॥ ७५ ॥**

पृथग्भूतयोर्भावयोरसंबन्धयोर्यथा परस्परस्य सत्तासत्ते न प्रयोजिके, तथा भावाभावयोरपि तथाभूतयोः स्यादित्यर्थः ॥ ७५ ॥

तदेतद्भावादर्थान्तरस्याभावस्य वस्तुत्वेऽभ्युपगम्यमाने दोषजातमित्युपसंहरति—

**अभावो यदि वस्तु स्यात् तत्रेयं स्याद्विचारणा ।**
**ततश्च तदभावेऽपि स्याद्विचार्यमिदं पुनः ॥ ७६ ॥**

सप्तमपदार्थरूपेऽभावस्य वस्तुत्वेऽभ्युपगम्यमाने तत्सन्निधानासन्निधानाभ्यां भावस्यासन्निधानसन्निधाने न युज्येते इतीयं चिन्ता युज्यते । तथा च वस्तुत्वेऽभावस्य, तत्राप्यभावान्तरस्य व्यतिरिक्तस्योदयास्तमययोरभावस्य यथायोगं तौ न स्याताम्, तत्राप्यभावान्तरमि (स्ये)त्यनवस्था च स्यादित्यपि वाच्यम् ॥ ७६ ॥

यदा पुनर्भावप्रच्युतिर्नीरूप एवाभावो बौद्धदृष्ट्याभ्युपगम्यते, तदा—

---

स्याभाव इति कृत्वा बाहुलेयो न प्रकल्पते, न प्रसिध्यति न उत्पद्यत इति यावत् । अत्रापि स एव हेतुरिति ।

अयं भावः—वैजात्येन पृथग्भूतयोस्त एव सम्बन्धरहितयोर्भावयोर्द्वयोर्यथा सत्त्वासत्त्वे परस्परस्य यथार्हं सत्त्वासत्त्वयोर्न प्रयोजके, तथा भावाभावयोरपि तथाभूतयोः = पृथग्भूतयोरसम्बन्धयोः स्यादिति ॥ ७५ ॥

तदेतत्—न ह्यभावस्य सद्भावे इत्यादिकं दोषजातं भावादर्थान्तरस्याभावस्य वस्तुत्वेऽभ्युपगम्यमाने, न त्वभावस्यावस्तुत्वे इत्युपसंहरति—अभावो यदीति ।

अयमर्थः—अभावो यदि वैशेषिकादिनयानुसारेण वस्तु स्यात्; तत्रेयम्, नह्यभावस्य सद्भावे इत्यादिका विचारणा स्यात् । ततश्च = तत एव, अभावस्य वस्तुत्वादेव; तदभावेऽपि = अभावस्याभावेऽपि इदम्—न ह्यभावस्य सद्भावे इत्यादिकं पुनरपि विचार्यं स्यादित्यनवस्था च स्यादिति ।

अयं भावः—सप्तमपदार्थरूपस्याभावस्य वस्तुत्वेऽभ्युपगम्यमाने अभावस्य सत्त्वासत्त्वाभ्यां यथासंख्यं भावस्यासत्त्वसत्त्वे न युज्येते इतीयं चिन्ता युक्ता भवति । तथा च = तथैव अभावस्य वस्तुत्वे स्वीक्रियमाणे तत्राप्यभावान्तरस्य = तदभावस्य प्रतियोगिरूपादभावाद् व्यतिरिक्तस्य उदयास्तमययोः = सत्त्वासत्त्वयोः सतोरभावस्य प्रतियोगिरूपस्य यथार्हं तौ = उदयास्तमयौ न स्याताम्; तत्राप्यभावान्तरस्येत्यनवस्था च स्यादित्यपि अभावस्य वस्तुत्वे वक्तव्यमिति ॥ ७६ ॥

अवस्तुत्वादतीतं यद् व्यवहारस्य गोचरम् ।
तत्र वस्तुगतो भेदो न निर्वचनमर्हति ।। ७७ ।।

तिरोभवति भावो न त्वभावो नाम कश्चिद् व्यतिरिक्तो ज्ञायत इति नये नेदं विचारणीयं न ह्यभावस्य सद्भाव इत्यादि । भावप्रच्युतिरूपत्वादभावस्य कथमवतिष्ठेत भाव इति नेदं दूषणमवतरति । प्रागभावव्यावृत्तौ च न भावो जायते, अपितु (आविर्भवति सदा) भवितृरूपत्वादिति तुच्छरूपोऽभावो वास्तवं नानात्वं नार्हति । इत्थं च सर्वव्यवहारातीतोऽसत्त्वान्नीरूपत्वादभावो वास्तवभेदादिनिरूपणासह इति प्रागेवोक्तमुपसंहृतम् ।। ७७ ।।

इदानीं कार्यकारणभावानुपपत्तिं पूर्वोक्तामनूद्य स्वदर्शने विवर्त्तं सिद्धान्तयितुमाह—

---

यदा तु भावप्रच्युतिः = भावस्य स्थूलत्वात् प्रच्युतिः सूक्ष्मतया तिरोभावरूपा एवाभावपदेन व्यवह्रियते, तद्व्यतिरेकेण त्वभावो निःस्वरूप एव वैभाषिकबौद्धदृष्ट्याऽभ्युपगम्यते, तदा अभावस्य वास्तवभेदविरोधादिनिरूपणासहत्वमाह-अवस्तुत्वादिति ।

अयमर्थः—यद् = अभावस्वरूपम्, बौद्धदृष्ट्याऽवस्तुत्वाद् व्यवहारस्य गोचरम् = गोचरत्वम् = भावप्रधानो निर्देशः विषयत्वमतीतम्, तत्र = अभावे वस्तुगतो भेदः प्रतियोगितया भाववस्तुनिष्ठो भेदः = निर्वचनम्, निरूपणं नार्हति । अभावस्येव तद्गतस्य भावप्रतियोगिकभेदस्यापि अवस्तुत्वादिति हृदयम् ।

अयं भावः—भावो विनाशकसामग्रीमासाद्य तिरोभवति = स्थूलत्वात् प्रच्युत्य सूक्ष्मरूपतामापद्येन्द्रियगोचरत्वमतिक्रामति, न त्वभावो नाम कश्चित् तिरोभूतभावाद् व्यतिरिक्तः पदार्थोऽनुभूयत इति बौद्धनये सत्कार्यवादे च न ह्यभावस्य सद्भावे इत्यादिकं नेदं विचारणीयम् । अभावस्य भावप्रच्युतिरूपत्वात् तिरोभूतभावव्यतिरिक्ततया अभावः कथमवतिष्ठेतेति न ह्यभावस्य सद्भावे इत्यादिकमिदं दूषणं नावतरति । एवं प्रध्वंसवत् प्रागभावव्यावृत्तौ च न भावो जायते, अपित्वाविर्भवति, सदा भवितृरूपत्वात्—सदा विद्यमानरूपत्वादिति तुच्छरूपोऽभावो वास्तवं नानात्वं नार्हति, सदसतोरुपरागासंभवात् । इत्थं च सर्वव्यवहारातीतो भावोऽवस्तुत्वनिःस्वरूपत्वाभ्यां वास्तवभेदविरोधाविरोधादिनिरूपणासह इति प्रागेवोक्तमत्रोपसंहृतमिति ।। ७७ ।।

इदानीं कार्यकारणभावानुपपत्तिं पूर्वोक्तामनूद्य स्वदर्शनेऽतात्त्विकोऽन्यथाभावो विवर्त इति लक्षणलक्षितं विवर्त्तं सिद्धान्तयितुमाह—अपदेऽर्थे इति ।

अयमर्थः—उत्पत्तेः प्राग् यतोऽर्थः अपदः = असत्त्वादविद्यमानप्रत्यायकपदः, अतस्तत्रार्थेऽसद्रूपे कारणस्य पदन्यास उत्पत्त्यनुकूलो व्यापारो न विद्यते । अथ च किञ्चोत्पत्तेः

**अपदेऽर्थे पदन्यासः कारणस्य न विद्यते।**
**अथ च प्रागसद्भावः कारणे सति दृश्यते ॥ ७८ ॥**

**उत्पत्तेः पूर्वं कार्यलक्षणोऽर्थोऽपदोऽविद्यमानप्रत्यायकोऽसत्त्वादिति तत्र कारणस्य पदन्यासो व्यापारो नोपपद्यते। जननक्रियावेशयोग्यवस्तुभूतकार्यनिष्ठो हि कारणानां व्यापारः पदन्यासः। स चासति कार्ये नास्ति। न ह्यकिञ्चिद् रूपमुद्दिश्य कारणानि प्रवर्तितुमुत्सहन्ते, असत उद्देश्यत्वायोगात्। सत्त्वे तु कारणानुपपत्तिरित्युक्तम्। अथ विनियोक्तृबुद्ध्यनुसंधानं कार्ये कारणस्य पदन्यासः सोऽप्यसत्यसम्भवी। जडस्य च कारणस्य सुतरां कार्ये पदन्यासोऽयं नास्ति। दृश्यते च कस्मिश्चिद्धेतो सति कार्यमिति तत्रैव यदेव तत्त्वमेवं प्रतिभासमानम्, न तु वास्तवो हेतुफलभावः कश्चिदित्यर्थः ॥ ७८ ॥**

**अथोत्पत्तेः पूर्वं प्रागवस्था भावस्येति नापदस्तदानीमसावर्थ इत्युच्यते, तत्राप्याह—**

---

प्राक्कारणे विद्यमाने सति कार्यस्य प्रागसद्भावो दृश्यते, अतः अपदेऽर्थे पदन्यासः कारणस्य न विद्यते इत्येवं पूर्वार्द्धं प्रत्युत्तरार्द्धस्य हेतुत्वात् काव्यलिङ्गमिति।

अयं भावः—उत्पत्तेः पूर्वं कार्यरूपोऽर्थोऽपदोऽविद्यमानप्रत्यायकपदोऽसत्त्वादिति हेतोस्तत्र तथाविधेऽर्थे कारणस्य पदन्यासो व्यापारो न विद्यते = नोपपद्यत इत्यर्थः। धातूनां शक्त्या लक्षणया चानेकार्थत्वात्। जननक्रियासम्बन्धयोग्ये वस्तुभूते कार्ये हि कारणानां सतां व्यापारः पदन्यासः। स चोत्पत्तेः प्रागसद्रूपे कार्ये नास्ति। न हि निःस्वरूपमुद्दिश्य कारणानि सद्रूपाणि प्रवर्त्तितुमुत्सहन्ते। सदसतोरुपरागायोगेन, असत उद्देश्यत्वायोगात्। कार्यस्योत्पत्तेः पूर्वं सत्त्वे तु कारणस्य व्यापारानुपपत्तिः, फलाभावादित्युक्तं प्राक्। यदि तु विनियोक्तृबुद्ध्यनुसंधानम् = विनियोक्तुः कार्ये कारणस्य प्रयोक्तुः पुरुषस्य यत्कार्यविषयकं बुद्ध्याऽनुसन्धानम्, तदेवारोपात् कार्ये कारणस्य पदन्यास इत्युच्यते, सोऽप्युत्पत्तेः प्रागसद्रूपे कार्ये कारणस्य सतोऽसंभवी। किञ्च, जडस्य कारणस्य विनियोक्तृबुद्धेरनुसंधानरूपः पदन्यासो सुतरां न संभवति, अनुसंधानस्य चेतनधर्मत्वात्। दृश्यते च कस्मिश्चिद् हेतौ उत्पत्तेः प्राक् सति उत्पद्यमानं कार्यमिति तत्रैव यदेव तत्त्वं कार्यकारणभावस्य नियामकम्, एवं प्रतिभासनम् = कार्यतया कारणतया च प्रतिभासनम्, तेनैव प्रातिभासिकस्य कार्यकारणभावस्योपपत्तिः, न तु वास्तवो हेतुफलभावः = कार्यकारणभावः कश्चिदित्यर्थ इति ॥ ७८ ॥

अथोत्पत्तेः पूर्वं चाभावस्य प्रागवस्था सूक्ष्मत्वेनानभिव्यक्ता, सैव 'घटो जायते' इत्यादौ घटादिपदेन कर्त्तृतया अभिधीयते जनिक्रियायाः पूर्वं वर्तमाना इति तदानीं नासावर्थोऽपद इत्युच्यते, तदाप्याह—का तस्येति।

**का तस्य प्रागवस्थेति वस्त्वाश्रितमिदं पुनः ।**
**प्रागवस्थेति न ह्येतद् द्वयमप्यस्त्यवस्तुनि ॥ ७९ ॥**

**उत्पत्तेः पूर्वं कार्यस्य** का प्रागवस्था **इतीदं चोद्यं** वस्त्वाश्रितं **वस्त्वालम्बनमेतत् पर्यनुयोगरूपमित्यर्थः । तथा हि प्रागिति चावस्थेति चैतद् द्वयमत्र पर्यनुयोगे, न चैतद्** द्वयमप्यवस्तुनि । **देशतः कालतो वा पूर्वं त्वस्याभावे नीरूपे देशकालयोगायोगिन्यसम्भवात् । अवस्थेति चावस्थात्रपेक्षम् । न चावस्थाता कश्चिदन्वयी विद्यते पूर्वमित्यसत्त्वमेव तत्र । एवमसत्कार्यनये प्रागसत्त्वादेतन्न युज्यते । सत्कार्यनयेऽपि प्रागर्थानुपपत्तिः, इदानीमपि सत्त्वाद् भावस्य । अत एव च जन्मायोगादवस्थातृरूपाभावः । केनचिद् रूपेण जनने तदपेक्षया प्राप्तमसतो जन्म । तथा च तत्राप्यपदोऽर्थः ॥ ७९ ॥**

**विनाशेऽप्यसत्त्वमेव नीरूपमगोचरो वाचो भावस्येत्याह—**

---

अयमर्थः—यत इदं पुनः—इदं तु प्रागिति पूर्वकालः, अवस्थेति चेदं द्वयं वस्त्वाश्रितम्, अत उत्पत्तेः प्रागसतस्तस्य भावस्य का प्रागवस्थेति उच्यते । पूर्वार्धोक्तमर्थमुत्तरार्धेन विशदीकरोति, हि = यतः, प्रागिति पूर्वकालः कालान्तरापेक्षः, अवस्थेति चावस्थात्रपेक्षा, अत एतद् द्वयमपि अवस्तुनि = उत्पत्तेः प्राङ्निःस्वरूपे भावे नास्ति इति । यद्वा पूर्वार्धस्यान्या व्याख्या । का तस्य भावस्य प्रागवस्था इतीदं पुनः—इदं तु पर्यनुयोगरूपं वस्त्वाश्रितम्, भावस्तु उत्पत्तेः प्रागवस्तु, अतस्तत्र नायं प्रश्नः सम्भवतीति भाव इति ।

अयं भावः—उत्पत्तेः पूर्वं कार्यस्य का प्रागवस्था इतीदं चोद्यं पर्यनुयोगरूपम् = प्रश्नरूपम्, वस्त्वाश्रितम् = वस्तुविषयकम् । तथाहि—अत्र पर्यनुयोगे प्रागिति अवस्थेति चैतद् द्वयमस्ति । न चैतद्द्वयमपि उत्पत्तेः प्रागवस्तुनि कार्ये संभवति । देशतः कालतो वा पूर्वंत्वस्योत्पत्तेः प्रागभावे नीरूपे = असद्रूपे कार्ये, देशकालायोगिन्यसंभवात् । अवस्थेति चावस्थातारमाश्रयत्वेनापेक्ष्यते । न चावस्थाता कश्चिदुत्पत्तिपूर्वकालान्वयी विद्यत इत्यसत्त्वमेव तदानीं कार्यस्य । एवमसत्कार्यवादिवैशेषिकादिनये कार्यस्य प्रागसत्त्वाद् एतत् = का कार्यस्य प्रागवस्थेति प्रश्नरूपं न युज्यते । सत्कार्यवादिसांख्यादिनयेऽपि प्रागित्यस्य प्रश्नघटकस्यार्थानुपपत्तिः । इदानीमपि = उत्पत्तेः पूर्वमपि, भावस्य शाश्वतिकत्वेन सत्त्वात् । अत एव च = शाश्वतिकत्वादेव च, जन्मायोगादवस्थातृरूपाभावः, शाश्वतिकत्वेन परिणामाभावाच्च । केनचिद्रूपान्तरेण जनने तु तदपेक्षया = प्रागवस्थाया आश्रयत्वेनावस्थात्रपेक्षया, अवस्थातुश्च तदानीमभावात् प्राप्तमुत्पत्तेः प्रागसतो भावस्य जन्म । तथा च सत्कार्यवादेऽपि उत्पत्तेः प्रागपदोऽर्थ इति ॥ ७९ ॥

स्थित्यनन्तरं भावस्य विनाशाभ्युपगमेऽपि निःस्वरूपमसत्त्वमेव तस्य तदानीमिति । तदानीं वाचामगोचरो भाव इत्याह—न चोर्ध्वमस्तीति ।

**न चोर्ध्वमस्ति नास्तीति वचनायानिबन्धनम् ।**
**अलं स्यादपदस्थानमेतद्वाचः प्रचक्षते ॥ ८० ॥**

**प्रच्युतेरूर्ध्वं निरन्वयध्वंसादसति भावभागेऽस्ति नास्तीत्यभिधानाय न समर्थं वस्तु । सांख्या हि तदानीमप्यस्तीति व्यवहरन्ति, तच्च न युक्तम् । कुतः ? अनिबन्धनं यतः । वचने निबन्धनमुपलभ्यमानता । सा च ध्वस्तस्य नास्तीति शब्दागोचरमनिबन्धनमसत्त्वमिति पूर्वापरावस्थयोरव्यवहार्यो भावः ॥ ८० ॥**

---

अयमर्थः—जातस्य भावस्य स्थितेरूर्ध्वं विनष्टं वस्तु अस्ति नास्तीति वचनायालं न च स्यात्, यतस्तदानीमनिबन्धनं तत् । न निबन्धनमनिबन्धनमिति तत्पुरुषः । उपलभ्यमानत्वानुपलभ्यमानत्वयोर्निबन्धनं कर्मरूपं निमित्तं न भवति, असत्त्वात् । अत एतत् = विनष्टं वस्तु वाचोऽपदस्थानम् = पदन्यासस्यागोचरम्, प्रचक्षते त्रय्यन्तविदः = मायामयं जगदिति वादिन इति ।

अयं भावः—भावस्य सूक्ष्मरूपात् प्रच्युतेरूर्ध्वम्, = उत्पत्तेरूर्ध्वम्, स्थितिव्यवधानेन निरन्वयध्वंसात् = उपादानकारणे सूक्ष्मात्मना स्थित्यसमानाधिकरणात् स्थूलरूपध्वंसात्, सर्वासु क्रियासु भावोपहितस्य कर्त्तृरूपस्य ब्रह्मणो भावभागे तदानीमसति अस्ति नास्ति इत्यभिधानाय न समर्थं वस्तु । सांख्या हि तदानीमपि अस्तिभाव इति व्यवहरन्ति, सत्कार्यवादाभ्युपगमात् । तच्च न युक्तम्, यतोऽनिबन्धनम् । वचने निबन्धनमुपलभ्यमानता, तस्याश्च निबन्धनमसत्त्वमिति पूर्वपरावस्थयोरस्तित्वनास्तित्वाभ्यामव्याहार्यो भाव इति ॥ ८० ॥

मध्यावस्थायामेव केवलं भावो दृश्यते, तथा च "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" इति न्यायेन मध्येऽप्याविद्यकत्वादसन्नेव भाव इत्याह—अत्यद्भुता इति ।

अयमर्थः—प्रागभूतानाम् = प्रागसताम्, भावानां कार्यभूतानां यदभागम् = यदनंशम्, यदक्रमम् = यत्क्रमरहितम्, आत्मतत्त्वं स्वरूपम्, उत्पादविनाशयोर्मध्ये प्रकाशते इतीयं त्वद्भुताया अविद्याया अद्भुता वृत्तिः, व्यापारः । यद्वा = अन्तःकरणस्याद्भुतविकल्पाख्या वृत्तिः । अत्र च वृत्तेरद्भुतत्वमसदर्थप्रकाशनमेवेति ।

अयं भावः—सत्कार्यमिति सांख्यानां पक्षः, असत्कार्यमिति नैयायिकवैशेषिकयोरिति पक्षभेदमाश्रित्य वास्तवस्य कार्यकारणभावस्य प्राङ्निराकृतत्वादुपपत्तिरहितया आश्चर्यभूतयाऽविद्यावृत्त्या अन्तःकरणवृत्त्या वा विकल्पाख्यया वृत्त्या व्यापारे प्रागदृष्टं निरंशं कार्यं कस्मिञ्चिन्नियते, तत्कारणे सति दृश्यते इति प्रतिभासमात्रसारः कार्यकारणभावोऽसत्यो विकल्पविनिर्मितः । अविद्यावशगैर्यथायथं विकल्पनात् । एकस्य तत्त्वादप्रच्युतस्य = कूटस्थस्यभेदानुकाररूपा असत्यविभक्तान्यरूपोपग्राहिता = असत्यमविभक्तञ्च यदन्यरूपमधिष्ठानाद् भिन्नरूपं तदुपग्राहिता, तदुपादानं तद्रूपेण भानं विवर्त्त इत्येवात्र

**अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम् ।**
**भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते ॥ ८१ ॥**

**सदसत्पक्षभेदेन वास्तवस्य कार्यकारणभावस्य निराकृतत्वादुपपत्तिशून्ययाऽऽश्चर्यभूतया वृत्त्या व्यापारेण कार्यं प्रागदृष्टं निरंशं झटित्येवाक्रमं कस्मिंश्चिन्नियते सति दृश्यत इति प्रतिभासमात्रसारः कार्यकारणभावो वितथो वैकल्पिकोऽविद्यानेत्रैर्यथायथं विकल्पनात् । एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिताख्पविवर्तः परमार्थ इत्यर्थः । अत्यद्भुतेयं वृत्तिः ! कासावित्याह-यदभागमित्यादि । इत्येवं पदसमन्वयः यद्वा यस्यां वृत्तौ सत्याम् अभागं निरंशम्, अत एव अक्रमं तत्त्वं भावानां प्रकाशत इति सम्बन्धः । सांशत्वे सति क्रमेणोपजने बिलम्ब्य वृत्तेः कारणसामर्थ्यावधारणान्नाश्चर्यमिदं भवेत् । यतस्तु झटित्यपदक्रममेव सर्ववादिमतेऽपि कार्यमाजायते, अतः कारणव्यापारस्य विचार्यतानुपपत्तेः, तथा प्रकाशोऽविद्यावशादाश्चर्यभूतो रूढः ॥ ८१ ॥**

**तथा हि—**

---

परमार्थः । अत्यद्भुता कासौ वृत्तिरित्याशङ्क्याह=यदभागमित्यादि । यद्वा यस्यां वृत्तौ सत्यामभागम्=अनंशम्, अतएवाक्रमं भावानामात्मतत्त्वं प्रकाशत इति सम्बन्धः । कार्यरूपस्य भावस्य सांशत्वे सति क्रमेणोपजने कारणस्य विलम्बेनोत्पत्त्यनुकूले व्यापारे सति कारणसामर्थ्यादिदं जायत इत्यवधारणान्नाश्चर्यमिदं भवेत् ।

यतस्तु सर्ववादिमतेऽपि अपदम्=अभागत्वाद् युगपदेव, अभागत्वादक्रममेव कार्यमाजायते, अतः कारणव्यापारस्य विचारागोचरत्वात् । तथा=अभागमक्रमञ्च, प्रकाशोऽविद्यावशादाश्चर्यभूतो रूढः=पूर्वपूर्वतथाप्रकाशजनितवासनावशादिदानीमपि प्रसिद्ध इति ॥ ८१ ॥

तदेव दर्शयति··· विकल्पोत्थापितेनैवेति ।

अयमर्थः—विकल्पोत्थापितेनैव असत्त्वाद् विकल्पात्मिकया=अन्तःकरणवृत्त्या उत्थापितेनैव=उपस्थापितेनैव, प्रतिभासितेनैव, न तु वास्तवेन भावेन मुख्येन पदार्थनेव, वस्तुभूतेन पदार्थनेव, सर्वो लौकिको व्यवहारो विधीयत इति । वैदिकस्त्वौपनिषदोऽद्वितीयब्रह्मविषयको वाग्व्यवहारो मुख्येन पदार्थेन ब्रह्मणा विधीयत इत्यौपनिषदो वाग्व्यवहारोऽत्र दृष्टान्ततयोपात्तः । कर्मकाण्डीयस्तु वाग्व्यवहारो वैदिको न लौकिको भेदविषयकत्वाच्चासद्वस्तुविषयक एव, यद्यपि=तथापि सोऽपि लौकिकपदेनात्र विवक्षितः, लोकसिद्धक्रियाकारकादिभेदमादाय प्रवृत्तत्वादिति ।

अयं भावः—मध्यावस्थाभाविदृश्यमानम्, भावस्य स्वरूपमपेक्ष्य पूर्वपरावस्थापरिकल्पनया भावस्य क्रमिकत्वमाश्रित्य कार्यकारणभावपरिकल्पनया, एकस्मिन्नेवाद्वये

विकल्पोत्थापितेनैव सर्वो भावेन लौकिकः ।
मुख्येनेव पदार्थेन व्यवहारो विधीयते ॥ ८२ ॥

मध्यावस्थाभावि दृश्यमानं रूपमपेक्ष्य पूर्वापरावस्थापरिकल्पनया क्रमिकत्वे सति कार्यकारणभावेन भावाभावरूपतया वाऽविचारितसिद्धो लोकव्यवहारो रूढः। एवमन्योऽपि यः कश्चिद् व्यवहारः, स सर्वस्तत्त्वतो बहिर्विद्यमानस्य वस्तुनो भिन्नस्याभावादनादिमिथ्याभ्यासवासनावशोपजात एव सांवृतस्तत्त्वाध्यवसायादसांवृत इवाविद्याप्रवृत्तिरूपे जगति प्ररूढः परमार्थतस्तु न भेदो नाम परिदृश्यमानः सत्यः, अपि त्वद्वयमेव तत्त्वम् ॥ ८२ ॥

अविद्यानेत्रैरेवमविद्याख्यतच्छक्तिवशादवधार्यत इत्याह—

भावशक्तिमतश्चैनां मन्यन्ते नित्यवादिनः ।
भावमेव क्रमं प्राहुर्न भावादपरः क्रमः ॥ ८३ ॥

नित्यमद्वयं ब्रह्मतत्त्वं ये वदन्ति, ते भावस्य परस्याद्वयस्य ब्रह्मण एवैवंविधामनादिजीवात्मगतां शक्तिं मन्यन्ते । यद्वशात्तिरोधाय तत्त्वमतत्त्वेन भेदेन व्यवहारः क्रमिकः अक्रमेऽपि ब्रह्मणि भेदावभासनमविद्याकृतम् । तत्रैव क्रमाभासनं कालाख्यस्वातन्त्र्यशक्तिकृतम् । ते च शक्ती न ब्रह्मणो भावात् परमार्थतो भिन्ने इति स एव तत्त्वत एवं चकास्ति, अन्यस्य तदतिरेकिणो भासमानतानुपपत्तेः। भासमानस्य प्रकाशाव्यतिरेकादप्रकाशस्य तदयोगादित्यन्यत्र निर्णीतम् । तथा च ब्रह्ममयभावोपधानेन क्रमस्यावभासनाद् व्यवहारे भावव्यतिरिक्तं तस्य न किञ्चिद् रूपमिति हेतुहेतुमद्भावेन योजनादपौनरुक्त्यम् ॥ ८३ ॥

अत्र क्रमप्रतियोगि यौगपद्यमपि तथा प्रतिभानमात्रमित्याह—

---

वस्तुभूते अधिष्ठाने ब्रह्मणि विवर्त्तगोचरीकृतभावाभावभेदरूपतया वा अविचारितसिद्धो लोकव्यवहारोऽनादिवासनावशात् रूढः। एवमन्योऽपि यः कश्चिद् व्यवहारः, स सर्वस्तत्त्वतो वहिर्विद्यमानस्य वस्तुनो भिन्नस्याभावादनादिमिथ्याप्रत्ययाभ्यासजनितवासनावशोपजात एव सांवृत्तः = आविद्यकः तत्त्वभूतेन ब्रह्मणाऽधिष्ठानेन सह तादात्म्याध्यासादसांवृत्त इव = अनाविद्यक इव, तात्त्विक इव अविद्याकार्यरूपे जगति प्ररूढः। परमार्थतस्तु विकल्पे परिदृश्यमानो भेदो न सत्यो नाम, अपित्वद्वयं ब्रह्मैव तत्त्वमिति ॥ ८२ ॥

नित्यमद्वयं ब्रह्मैव अविद्याख्यब्रह्मशक्तिवशादविद्यानेत्रैः पुरुषैः एवम् = भावाभावभेदेन, अवधार्यते इत्याह—भावशक्तिमिति ।

अयमर्थः—अतश्च = अत एव, कार्यकारणभावेन भावाभावरूपतया वा लोकव्यवहारस्याविचारितसिद्धत्वादेव, ये नाम अद्वये ब्रह्मणि भावाभावप्रतिभासरूपां भावशक्तिम् = भावस्य ब्रह्मणोऽविद्याख्यां शक्तिं नित्यवादिनः = नित्याद्वयब्रह्मवादिनो मन्यन्ते ।

**क्रमान्न यौगपद्यस्य कश्चिद् भेदोऽस्ति तत्त्वतः ।**
**यथैव भावान्नाभावः कश्चिदन्योऽवसीयते ।। ८४ ।।**

**एकमेव तत्त्वमविद्यानेत्राणामपारमनवच्छिन्नमशक्यप्रतिभासमिति स्वगतदेश-कालपौर्वापर्याध्यारोपेण सक्रममाभाति । पदार्थान्तरसाचिव्येन चाक्रममिति भावतः क्रमाक्रमौ न स्तः । यथा भावाभावावित्युक्तम् । क्रमाभावो यौगपद्यम् । क्रमश्चोक्तदिशा नान्यो भावादित्यभावस्य पूर्वं भावाद् भेदस्य वस्तुत्वस्य च निषेधाद् यौगपद्यमपि तदात्मकं न किञ्चिदित्यभावदृष्टान्तेन ध्वनयति । भावोपधानेन च प्रतीयमानत्वाद् भावान्तरसाहित्यं भावस्यात्मैव । तन्न्याय्यम्, न हि साहित्यं नाम सहितावन्यद् विवेकेनावधार्यते ।। ८४ ।।**

**ननु क्रमेण कृतं युगपत् कृतमिति भेदेन प्रतीयेते क्रमाक्रमावित्याशङ्क्याह—**

---

यद्वशात् तिरोधाय तत्त्वमतत्त्वेन भेदेन व्यवहारः । अक्रमेऽपि ब्रह्मणि अविद्यया कल्पित-भावानां क्रमिकत्वव्यवहारोऽपि ब्रह्मणः कालाख्यस्वातन्त्र्यशक्तिकृत एव ।

ते च शक्ती वस्तुतो ब्रह्मणो न भिद्येते तदाह—भावमेव क्रमं प्राहुरिति । क्रमं भावमेव ब्रह्मरूपं प्राहुः । यतो न ब्रह्मरूपाद् भावादपरोऽन्यः क्रमो नाम पदार्थः । अद्वये ब्रह्मणि सर्वस्य कल्पितत्वादिति ।

अयं भावः—"एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन" इत्यादिश्रुतिशतवशाद् नित्यमद्वयं ब्रह्मतत्त्वं ये वदन्ति, ते भावस्य परस्याद्वयस्य ब्रह्मण एवैवं विधामनादिब्रह्मा-भिन्नजीवात्मगतां शक्तिं मन्यन्ते, यद्वशात् तिरोधायतत्त्वमद्वयं ब्रह्मरूपम्, अतत्त्वेन भेदेन क्रमिको व्यवहारः । नित्यत्वादद्वयत्वाच्च अक्रमेऽपि ब्रह्मणि भेदावभासनमनाद्यविद्यारूप-ब्रह्मशक्तिकृतम् । तत्रैव = अद्वये ब्रह्मण्येवकृतम्, क्रमाभासनं ब्रह्मणः कालाख्यस्वातन्त्र्य-शक्तिकृतम्, ते च शक्ती न ब्रह्मरूपाद् भावाद् परमार्थतो भिन्ने इति । ब्रह्मरूपो भाव एव भेदेन क्रमवत्तया च चकास्ति, ब्रह्मातिरिक्तस्यान्यस्य जडतया भासमानत्वानुपपत्तेः । भासमानस्य प्रकाशानतिरेकादप्रकाशस्य = जडस्य; भासमानत्वायोगादित्यन्यत्राद्वैतवादि-ग्रन्थेषु निरूपितम् । तथा च ब्रह्मरूपभावस्य उपाधिरूपतया व्यवहारे क्रमस्यावभासनाद् ब्रह्मरूपभावव्यतिरिक्तं व्यवहारस्य तद्गोचरस्य क्रमस्य च तत्रैवाविद्याख्यब्रह्मशक्ति-कल्पितस्य न वास्तवं किञ्चिद्रूपमिति हेतुहेतुमद्भावेन = कारिकायाः, तृतीयपादार्थस्य हेतु-मत्त्वेन चतुर्थपादार्थस्य च हेतुत्वेन, योजनादपौनरुक्त्यमिति ।। ८३ ।।

अत्र = व्यवहारे क्रमप्रतियोगि = क्रमविरोधि यौगपद्यमपि तथा यौगपद्येन प्रति-भानमात्रम्, न तु वस्तुसदित्याह—क्रमान्नेति ।

अयमर्थः—यौगपद्यस्य पदार्थान्तरसाहित्यरूपस्य, तत्त्वतः = वस्तुतः, क्रमात्

**कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।**
**न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥ ८५ ॥**

**अद्य भवोऽद्यतनः कालः, श्वो भवः श्वस्तनः काल इति लोके व्यपदेशादविद्यमानोऽद्यतनोऽनद्यतनोऽद्यतनेऽप्यद्यतनोऽस्तीति लङ्विधौ भाष्ये वचनादित्येवं समुदायावयवभेदपरिकल्पनया कालतत्त्वस्यैकस्यैवाधाराधेयभेदेन निर्देशो दृष्टः। न चैतावता वस्तुतः कालो भिद्यते, वैकल्पिकत्वाद् भेदस्य। एवं क्रमाक्रमयोर्व्यतिरेकेण निर्देशेऽपि न तत्त्वतो भावात् परस्परतश्च भेद इत्यर्थः ॥ ८५ ॥**

**एतदेव पोषयति—**

---

स्वविरोधिनः कश्चिद् भेदो नास्ति। यथैव = यथाहि भावादन्योऽभावो नाम कश्चित् पदार्थो नावसीयते = न निश्चयेनाधिगम्यत इत्युपपादितं प्रागिति।

अयं भावः—एकमेव तत्त्वमपारमपरिच्छिन्नञ्च दिग्देशकालवस्तुभिरविद्यानेत्राणां पुंसां न शक्यप्रतिभासमिति। स्वाध्यारोपितदेशकालपौर्वापर्याध्यारोपेण सक्रममाभाति। पदार्थान्तरसाहित्येन च तदेवाक्रममाभातीति भावतः = वस्तुतः, क्रमाक्रमौ न स्तः अविद्यया ब्रह्मण्यध्यारोपितत्वात्, यथा भावाभावावित्युक्तं प्राक्। क्रमाभावो यौगपद्यम्। क्रमश्चोक्तदिशा = समनन्तरकारिकोक्तदिशा, भावरूपाद् ब्रह्मणो नान्य इत्यभावे पूर्वं भावाद् भेदस्य वस्तुत्वस्य च निषेधाद् यौगपद्यमपि क्रमाभावात्मकं न किञ्चिद् भावव्यतिरिक्तमित्यभावदृष्टान्तेत ध्वनयति, भावोपाधिरूपतया च प्रतीयमानत्वात् भावान्तरसाहित्यरूपं यौगपद्यं भावस्यात्मैव। उपाध्युपाधिमतोरव्यतिरेकात्। एतच्च न्याय्यमेव। नहि साहित्यं नाम सहितादन्यद्विवेकेनावधार्यत इति ॥ ८४ ॥

नन्विदं क्रमेण कृतम्, इदं युगपत्कृतमिति भेदेन प्रतीयेते क्रमाक्रमाविति, कुतस्तयोरभेद इत्याशङ्क्याह कालस्यापीति।

अयमर्थः—लौकिकाः पुरुषाः कालस्याप्याधेयत्वेन सम्बन्धिनमपरं कालं निर्दिशन्त्येव, अद्य भवोऽद्यतनः कालः, श्वो भवः स्वस्तनः काल इति। किन्त्वनेन निर्देशमात्रेण व्यतिरेकः, द्वयोः कालयोर्भेदो वस्तुभूतो नानुगम्यते, न प्रमेयत्वानुगतः प्रतीयते। अत्र भेदस्य 'राहोः शिरः' इतिवद् वैकल्पिकत्वादिति।

अयं भावः—अद्य भवोऽद्यतनः, कालः, श्वो भवः, श्वस्तनः काल इति लोके व्यवहारात्, अविद्यमानोऽद्यतनोऽनद्यतन इति, अद्यतनेऽप्यद्यतनोस्तीति च लङ्विधौ भाष्ये वचनादित्येवं कालतत्त्वस्यैकस्यैव समुदायावयवभेदपरिकल्पनयाऽऽधाराधेयभेदेन निर्देशो दृष्टः। न च तेन वस्तुतः कालो भिद्यते, प्रागुक्तरीत्या ब्रह्मणः स्वातन्त्र्यशक्तिरूपस्य कालस्यैकत्वेन तद्भेदस्य चेतसो विकल्पवृत्तिप्रभवत्वात्। एवं क्रमाक्रमयोर्व्यतिरे-

आधारं कल्पयन् बुद्धचा नाभावे व्यवतिष्ठते ।
अवस्तुष्वपि नोत्प्रेक्षा कस्यचित् प्रतिबध्यते ॥ ८६ ॥

शत्रोरभावे सुखम्, सुहृदभावे दुःखम्, अरातिवर्गस्य रागादिक्लेशराशेरनुत्पत्तावभावे निर्वाणं मोक्ष इत्येवमादौ व्यवहारे सप्तम्यन्यथानुपपत्त्या अभावे परिकल्प्याधारशक्ति सुखाद्याधेयं न कश्चिदवतिष्ठते । अन्तर्भावितण्यर्थत्वान्नकश्चिदवस्थापयितुमुत्सहत इत्यर्थः । कल्पयन्नपि वाधारभावं न कश्चिदभावेऽधिकरणभूते स्थितिमाधेयत्वं लभते । न तत्रास्य पदबन्धो वस्तुतः, अथ च कल्पयन्तीत्यर्थः । नीरूपस्य सर्वसामर्थ्यविरहलक्षणस्याभावस्याधेयं प्रति स्थित्याधारभावायोगात् । उत्प्रेक्ष्य त्वाधारभावमेवं व्यपदेशः प्रवर्तते । एवमङ्गुल्यग्रे करियूथशतमास्त इत्यादि चोत्प्रेक्षयाभिधीयमानं दृश्यत इति नास्ति विकल्पानामभूमिः ॥ ८६ ॥

यत एवम्--

---

केण निर्देशोऽपि न तत्त्वतः = ब्रह्मणः, भावात् = घटादितः, परस्परतश्च भेद इत्यर्थ इति ॥ ८५ ॥

भेदस्य वैकल्पिकत्वमेव पोषयति—आधारं कल्पयन्निति ।

अयमर्थः—शत्रोरभावे सुखम् सुहृदभावे दुःखम्, रागादिक्लेशपञ्चकस्याभावे निर्वाणं मोक्षरूपमित्यादिव्यवहारे कश्चिदभावं सुखाद्याधारं कल्पयन्नप्यभावे सुखाद्याधेयं नावतिष्ठते = नावस्थापयितुमीष्टे । अत्रावतिष्ठतेरन्तर्भावितण्यर्थत्वात् । यद्वा अभावे शत्रुसुहृदोःसुखदुःखाद्याधारं तदाधारत्वम् । अत्र भावप्रधानो निर्देशः ।

कल्पयन्नपि कश्चिदभावेऽधिकरणभूते नावतिष्ठते = सुखादेरवस्थितिमाधेयत्वं न लभते । अत्र पक्षेऽवतिष्ठतेरवस्थितिकर्मके लाभे लक्षणा । किञ्च, कस्यचिदपि पुरुषस्यावस्तुष्वपि शशशृङ्गादिषूत्प्रेक्षा = विकल्पपूर्वको व्यवहारो न प्रतिबध्यते, तथा च व्यवहृतं नैषधीये कविनिबद्धवक्तृप्रौढोक्तिसिद्धं कविभिः—

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन बन्ध्योदराद्,
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोदसि ॥ इति ।

नै० स० १२, १०६

अयं भावः—शत्रोरभावे सुखम्, सुहृदभावे दुःखम्, रागादिक्लेशराशिरूपस्य जीवारातिवर्गस्य आत्यन्तिकनिवृत्तिरूपेऽभावे मोक्षरूपं निर्वाणमित्येवमादौ व्यवहारेऽभावे आधाररूपकारकशक्ति विना सप्तम्यन्यथानुपपत्त्या तत्राधारशक्ति परिकल्प्यापि कश्चित् तत्र सुखादिरूपमाधेयं नावतिष्ठते = नावस्थापयितुमुत्सहते इत्यर्थः । अत्रावतिष्ठ-

**तस्माच्छक्तिविभागेन नित्यः सदसदात्मकः ।**
**एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते ।। ८७ ।।**

**सर्वपरिकल्पातीतं तत्त्वं समाविष्टं सर्वाभिः शक्तिभिर्ब्रह्म यथायथं व्यवहारे भावाभावरूपतया तत्तदुपाधिखचितं शब्दाः प्रतिपादयन्तीत्यभावाभिधायिनामपि भावशब्दैस्तुल्यः सम्बन्धोऽविशेषाच्छब्दानामिति प्रकरणतात्पर्यमुपसंहृतम् । एक इति । भेदस्याभावनिरासेन प्रतिषिद्धत्वात् । अत एव नित्यः, अभावाभावात् कार्यकारणभावस्य च निषेधात् ।** शब्दवाच्यत्वे इति । **शब्दव्यवहारार्थं निमित्तसप्तम्या प्रयोजनकथनात् बहुरूपः इति क्रमाक्रमादिरूपतयाप्रागुक्तयाऽद्वयस्यैव तत्त्वस्य प्रकाशनात् ॥ ८७ ॥**

**इत्थं च सांवृतोऽयं लोकयात्रासु पदार्थप्रयोगो निरूढ इति तथैवास्मिम् शास्त्रेऽनुगम्यत इत्यविषयास्तार्किकविकल्पा इत्याह—**

---

तेरन्तर्भावितण्यर्थत्वात् । यद्वा कश्चित् प्रागुक्तप्रकारकेऽभावेऽधिकरणभूते आधारम्, भावप्रधाननिर्देशादाधारभावम्, कल्पयन्नपि = विकल्पयन्नपि तत्र सुखादेः स्थितिमाधेयत्वं न लभते । अत्र लक्षणा प्रागुक्तरीत्या । तत्राभावे आधेयतया सुखादेर्न पदन्यासो वस्तुतः, तथापि लोकाः कल्पयन्तीत्यर्थः । निःस्वरूपस्य सर्वसामर्थ्यविरहितस्याभावस्याधेयं प्रति स्थित्याधारत्वायोगात् । तथात्वभावस्य सुखाद्याधारत्वमुत्प्रेक्ष्य = विकल्प्य, एवं व्यवहारः प्रवर्तते 'शत्रोरभावे सुखम्' इत्यादिरूपम् । एवम् 'अंगुल्यग्रे करियूथशतमास्ते' इत्यादिकमपि विकल्प्याभिधीयमानं दृश्यत इति नास्ति अभूमिर्विकल्पानामसतोऽपि गोचरयतामिति ॥ ८६ ॥

सर्वस्य वैकल्पिकत्वं प्रसाधितुमुपसंहरति = तस्मादिति ।

अयमर्थः—तस्मात् = सर्वव्यवहाराणां पूर्वोक्तरीत्या विकल्पप्रभवत्वेनासद्विषयकत्वात्, नित्यः कूटस्थो निर्विकारः = सदसदात्मकः स्वस्मिन्नविद्याकल्पितभावाभावतादात्म्याध्यासापन्नः, एकः सर्वविधभेदशून्यः, अर्थो ब्रह्मरूपः शब्दवाच्यत्वदशायां शक्तिविभागेन स्वाश्रितानन्तशक्तिभेदेन बहुरूपः = अनन्तभावाभावरूपः, प्रकाशते = प्रतीयते । 'इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतेरिति ।

अयं भावः—सर्वविकल्पगोचरतामतिक्रान्तं सर्वकार्यानुकूलाभिः सर्वाभिः शक्तिभिः समाविष्टं तत्त्वम् = परमार्थरूपं ब्रह्मघटत्वभेदत्वादिरूपैरुपाधिविशेषैर्भावत्वाभावत्वाभ्याञ्च सामान्यरूपाभ्यामुपाधिभ्यामुपहितं व्यवहारे यथायथं भावाभावरूपतया शब्दाः प्रतिपादयन्तीत्यभावाभिधायिनामपि शब्दानां भावाभिधायकैः शब्दैस्तुल्यः सम्बन्धः, स्वार्थैः सह शब्दत्वाविशेषादित्येवमेतत्प्रकरणतात्पर्यमुपसंहृतम् । प्रागुक्तरीत्याऽभावस्य निरासेन तदवान्तरभेदस्य प्रतिषिद्धत्वात्क इत्युक्तम् । अभावस्य पूर्वं निराशात् प्रध्वंसाभावेन कार्यकारणभावानुपपत्तेश्च दर्शितत्वाद् नित्य इत्युक्तम् । शब्दवाच्यत्वे निमित्तभूते सती-

**व्यवहारश्च लोकस्य पदार्थैः परिकल्पितैः ।**
**शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते ॥ ८८ ॥**

**विचारितमपि तर्कविकल्पैर्भावतत्त्वं न यथाविचारं लोके व्यवहारमवतरति । न हि दर्शनान्तरव्यवस्थितविरुद्धभावरूपानुगमो व्यवहारे । न चाविचारेण यथातत्त्वं पार्यते निश्चयः कर्तुम् । 'रूपणव्यपदेशाभ्यां सदृशौ बालपण्डितौ' परस्पराभिप्रायमेलने प्रवर्त्तेते इति गजनिमीलितेनावधार्य पदार्थयाथातथ्यं व्यवहरन्तो लौकिका दृश्यन्ते । इदं च लौकिकानामेव शब्दानामनुशासनं शास्त्रम् । तदत्र लोकप्रसिद्धैव पदार्थप्रक्रिया समाश्रयणीयेत्यखण्डाद् वाक्यार्थात् क्रियावचनो धातुः सत्त्व-**

---

त्यस्य शब्दव्यवहारार्थमित्यर्थः । निमित्तसप्तम्या प्रयोजनकथनात् । फलस्यापि हेतुत्वात् । प्रागुक्त्या = क्रमाक्रमादिरूपतयाऽद्वयस्यैव तत्त्वस्याविद्यया स्वशक्त्या प्रकाशनाद् बहुरूपः प्रकाशत इत्युक्तमिति ॥ ८७ ॥

एवञ्चानाद्यविद्यापरिकल्पित एवायं लोकव्यवहारेषु पदार्थप्रयोगोऽनादिवासनया निरूढ इत्याविद्यक एवास्मिन् शास्त्रे कार्यार्थमनुश्रियत इति सन्तोऽसन्तो वाऽर्था इत्यादितार्किककृतविविधविकल्पानां नास्त्यवसर इत्याह—व्यवहारश्चेति ।

अयमर्थः—चकारोऽवधारणार्थकः परिकल्पितैरित्यस्योत्तरत्र द्रष्टव्यः । एवं परिकल्पितैरेव पदार्थैर्लोकस्य व्यवहारो भवति । लौकिक एव च पदार्थः शास्त्र = व्याकरणशास्त्रे कार्यार्थम् = प्रकृतिप्रत्ययादिरूपकार्यविधानार्थं प्रविभज्यते = प्रविभागेण प्रकृत्यर्थप्रत्ययार्थापोद्धाररूपेण अनुशिष्यते उपदिश्यते वा इति ।

अयं भावः—विविधैः कल्पनारूपैस्तर्कैर्विचारितमपि भावस्वरूपं न लोके यथाविचारं व्यवहारगोचरो भवति । नहि दर्शनान्तरे व्यवस्थितमेतच्छास्त्रविरुद्धं यद्भावस्वरूपं तदनुगमो लोकव्यवहारे दृश्यते । न ह्युत्पत्तिस्थितिविनाशक्षणत्रितयमात्रानुगतत्वेन न्यायनये निर्धारितं शब्दस्वरूपम्, बौद्धानां नये च क्षणिकत्वेन विज्ञानाकारत्वेन च निर्धारितं सर्वेषां भावानां स्वरूपं लोके व्यवहारपथमवतरद् दृश्यते । स एवायमिति प्रत्यभिज्ञायमानत्वात् । न च विचारं विनाभावस्य तत्त्वम् = यथार्थरूपं, निश्चेतुं शक्यते । लोके च व्यवहारावसरे पदार्थानां रूपणव्यपदेशाभ्यां रूपणं पदार्थतत्त्वस्य विचारेण निर्धारणं तत्प्रभवश्च व्यपदेशो व्यवहारस्ताभ्याम्, बालपण्डितौ सदृशौ । तदुक्तम्—रूपणव्यपदेशाभ्यां सदृशौ बालपण्डितौ' इति । लोके बालस्येव पण्डितस्यापि तर्ककुशलस्य शास्त्रनिर्धारितभावस्वरूपविरुद्धेनैव भावस्वरूपेण व्यवहारदर्शनात् । अहं स्थूलः कृशः, काणः, कुब्जः, वामन इत्यादयो व्यवहारा अत्र शास्त्रविरोधिन उदाहर्त्तव्याः । बालपण्डितावुभावपि शास्त्रविरुद्धमेव पदार्थस्वरूपं निर्धार्य परस्पराभिप्रायमेलने प्रवर्तेते इति । लौकिका अपि गजनिमीलिकयैव पदार्थयाथातथ्यमवधार्य तेनैव व्यवहरन्तो

**प्रधानानि नामानि, प्रत्यायकः प्रत्यय इत्यादिः शास्त्रीयकार्यप्रसिद्ध्यर्थं लौकिक एव क्रियाद्रव्यगुणादिलक्षणोऽपोद्धारपदार्थः प्रविभज्यत इति लोकयात्रायामेकयोगक्षेमाः सर्वे शब्दा भावाभावाभिमतार्थविषया इत्यर्थस्य प्रवाहनित्यत्वाच्छब्दोदाहारमात्रत्वाच्च प्रतीतेर्नित्यः शब्दार्थसम्बन्ध इति सिद्धम् ॥ ८८ ॥**

**॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे सम्बन्धसमुद्देशस्तृतीयः ॥**

---

दृश्यन्ते । इदं शास्त्रं च लौकिकानामेव शब्दानामनुशासनम्, वैदिकास्तु शब्दा यथाकथञ्चिदनुगता एव "बहुलं छन्दसि" इत्यादिना सूत्रशतेन बोध्यन्ते; न तु तेषामनुगमः शास्त्रेण कर्त्तुं शक्यः । तस्मादत्र शास्त्रे लोकप्रसिद्धैव पदार्थप्रक्रिया समाश्रयणीया, अस्य शास्त्रस्य लौकिकशब्दानुशासनत्वादित्यखण्डाद् वाक्यार्थात्—क्रियावचनो धातुः, सत्त्वप्रधानानि नामानि, अर्थप्रत्यायकः प्रत्यय इत्यादिलक्षणलक्षितः क्रियाद्रव्यगुणादिलक्षणो लौकिक एवापोद्धारपदार्थ एतच्छास्त्रीयकार्यप्रसिद्ध्यर्थं प्रविभज्यत इति लोकव्यवहारे भावत्वाभावत्वाभ्यामभिमतार्थविषयाः सर्वे शब्दा एकयोगक्षेमाः = भावाभिधायिनोऽभावाभिधायिनश्च सर्वे शब्दा भावत्वाभावत्वोपाधिखचितस्य ब्रह्मतत्त्वस्यैव बोधका इत्यर्थस्य स्वरूपेणानित्यत्वेऽपिप्रवाहनित्यत्वात् । अर्थप्रतीतेश्च शब्दोदाहरणमात्रत्वात् = अर्थस्य भावाभावरूपस्यासत्त्वेन विकल्परूपाया अर्थप्रतीतेरर्थाजन्यत्वेन शब्दोच्चारणमात्रजन्यत्वाच्च प्रवाहरूपेण शब्दार्थसम्बन्धोऽपि नित्य इति सिद्धमिति ॥ ८८ ॥

**या सौधसागरगता करुणारससागरा ।**
**सा गराङ्कगले बद्धभावा माता प्रसीदतु ॥**

**॥ इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथकृतौ अम्बाकर्त्र्यां सम्बन्धसमुद्देशस्तृतीयः ॥**



## श्लोकानुक्रमणिका

— ● —

